श्री आनन्दहंसशिष्य-श्री दानशेखरसूरिकृतटीकया समलंकृतं गणभृद् भगवत्सुधर्मस्वामिसूत्रितं

# श्रीभगवतीसूत्रम् ।

मुद्रणकारिका—जामनगरवास्तव्यश्रेष्ठि 'पोपटलाल धारशीभाइ' समर्पितद्रव्य साहाय्येन
जैनश्वेताम्बर श्रीमालवदेशान्तर्गतश्रीरत्नपूरीय (रतलाम) श्रेष्ठि रुषभदेव केशरीमलनाम्नी संस्था।

—•••••••—

इदं पुस्तकं 'श्री जैन विजयानन्द प्रीन्टींग प्रेस' इति मुद्रणालये फकीरचन्द मगनलाल बदामी इत्यनेन मुद्रितं।

वीरसंवत २४६२ | विक्रमसंवत १९९२ | सन १९३५

पण्यम् रू. ३—४—० [ Rs. 3-4-0

આ ગ્રન્થ આચાર્ય શ્રી સાગરાન [illegible]
પં. શ્રી અજિતવિજયજી ગણિ, તથા પં. શ્રી પદ્મવિજયજી ગણિના આચાર્યપદાર્પણ મહોત્સવ પ્રસંગે, સાધ્વીજી
શ્રીજીના સદુપદેશથી જંબુસર નિવાસી શા. પુરુષોત્તમદાસ પાનાચંદ તરફથી ભેટ.—



# श्रीभगवतीजीसूत्रस्य

## श्रीदानशेखरसूरिसंकलिताविशेषवृत्तिः



श्रीवीरं नमस्थित्वा तत्त्वावगमाय सर्वसत्त्वानाम्। व्याख्या दुर्गपदानामुद्ध्रियते भगवतीवृत्तेः ॥१॥ श्रीपद्त्रिंशत्सहस्रग्रंथप्रगणिकृतप्रश्नयुक्तयुत्तरङ्गश्चत्वारिंशच्छतान्तःस्थितततविविधोद्देशहंसासरङ्गः। दंडप्रोदंडनालाद्भुतचरितसरोजन्मलक्ष्मीविवाहप्रज्ञप्तिश्रीतडागः प्रथयतु सुमनोमानसानां विनोदम् ॥ २ ॥ अथ शास्त्रस्यादावेव पञ्चपरमेष्ठिनमस्कारं कुर्वन्नाह—

नमो अरिहंताणमित्यादि (सू० १) सुगमं

एवं तावत् परमेष्ठिनो नमस्कृत्य आधुनिकजनानां श्रुतज्ञानस्यात्युपकारित्वात् तस्य च द्रव्यभावश्रुतरूपत्वाद् भावश्रुतस्य च द्रव्यश्रुतहेतुकत्वात् संज्ञाक्षररूपं द्रव्यश्रुतं नमस्कुर्वन्नाह—भास्वच्छ्रीभगवत्यङ्गवृहद्वृत्तिसमुद्धृतौ। श्रीब्राह्मीसंस्मृतिं कुर्यामहार्यानन्दवानहम् ॥३॥

नमो बंभीए लिवीएत्ति (सू० २)

लिपिः—अक्षरविन्यासः, सा चाष्टादशविधापि श्रीआदिजिनेन स्वसुताया ब्राह्मीनाम्न्या दर्शिता ततो ब्राह्मीत्यभिधीयते, आह च— "लेहं लिवीविहाणं जिणेण बंभीए दाहिणकरेणं" त्यतो ब्राह्मी विशेषणं लिपेरिति, शिष्यमतिमङ्गलार्थं मङ्गलोपादानमिति प्रोक्तमेव, तदे-

चमस्य शास्त्रस्यैकश्रुतस्कंधरूपस्य सातिरेकाध्ययनशतमितस्य उद्देशकदशसहस्रीभूतस्य षट्त्रिंशत्सहस्रप्रश्नप्रमितस्य अष्टाशीतिसहस्राधिकलक्षद्वयप्रमाणपदराशेर्मङ्गलादीनि दर्शितानि, अथ प्रथमशते ग्रन्थान्तरपरिभाषया अध्ययने च दशोद्देशकाः स्युः, तत्संग्रहगाथामाह-

रायगिह चलण१ दुक्खे२ कंखपओसे३ य पगइ४ पुढवीओ५। जावंते६ नेरइए७ बाले८ गुरुए९ य चलणाओ १०।१।

'रायगिहे'त्ति लुप्तसप्तम्येकवचनत्वात् राजगृहे नगरे वक्ष्यमाणोद्देशकदशकस्यार्थो वीरेण दर्शित इति व्याकरणीयम्, एवमन्यत्रापि ज्ञेयम्, 'चलण'त्ति चलनविषयः प्रथमोद्देशकः, 'चलमाणे चलिए' इत्याद्यर्थनिर्णयार्थः १, 'दुक्खे'त्ति दुःखविषयो द्वितीयः 'जीवा भदंत! स्वयंकृतं दुःखं वेदयन्ति?' इति प्रश्ननिर्णयार्थः २, 'कंखपओसे'त्ति कांक्षा-मिथ्यात्वमोहनीयोदयसमुत्थोऽन्यान्यदर्शनाभिलाषरूपो जीवपरिणामः स एव प्रकृष्टो दोषो जीवदूषणं कांक्षाप्रदोषः तद्विषयस्तृतीयः, 'जीवेन भदन्त! कांक्षामोहनीयं कर्म कृत'मित्यादिनिर्णयार्थः ३, 'पगइ'त्ति प्रकृतयः-कर्मभेदाः, 'कति भदंत! कर्मप्रकृतयः?' इत्यादिनिर्णयार्थश्चतुर्थः ४, 'पुढवीओ'त्ति 'कति भदंत! पृथिव्यः?' इत्यादिविषयवाच्यः पञ्चमः ५, 'जावंते'त्ति 'यावतो भदंत! आकाशान्तरात् सूर्य उदेति' इति षष्ठः ६, 'नेरइए'त्ति 'नैरयिको भदंत! निरये उत्पद्यमान' इति सप्तमः ७, 'बाले'त्ति 'एकान्तबालो भदंत मनुष्य' इति अष्टमः ८, 'गुरुए'त्ति 'कथं भदंत! जीवा गुरुकत्वमागच्छन्ति' इति नवमः ९, च समुच्चयार्थः 'चलणाओ'त्ति बहुवचननिर्देशाच्चलनाद्या दशमोद्देशकस्यार्थः, तत्सूत्रं चैवं-"अन्ययूथिका भदंत! एवमाख्यान्ति 'चलत् अचलित'मिति, सूत्रम्। प्रथमशतोद्देशकसंग्रहणीगाथार्थः ॥ तदेवं कृतमङ्गलादिकृत्योऽपि प्रथमशतादौ विशेषात् मङ्गलमाह—

**नमो सुयस्सत्ति ( सू० ३ )**

नमोऽस्तु श्रुताय-द्वादशाङ्गीरूपायार्हत्प्रवचनाय ।

वण्णओत्ति ( सू० ४ )

इह स्थानके नगरवर्णको वाच्यः, ग्रन्थगौरवभयादिह तस्यालिखितत्वात्, स चैवं-रिद्धत्थिमियसमिद्धे, रिद्धं-पुरभवनादिभिर्वृद्ध, स्तिमितं—स्थिरं, स्वचक्रादिभयवर्जितत्वात्, समृद्धं—धनधान्यादिविभूतियुक्तत्वात्, ततः पदत्रयस्य कर्मधारयः, 'पमुइयजणजाणवए' प्रमुदिता-हृष्टा जना-नगरवास्तव्याः जानपदाश्च-जनपदभवास्तत्रायाताः सन्तो यत्र तत् प्रमुदितजनजानपदमित्यादिरौपपातिकात् सव्याख्यानोऽत्र दृश्यः, 'तस्स णं'ति षष्ठ्याः पञ्चम्यर्थत्वात् तस्माद्राजगृहान्नगरात् 'बहिय'त्ति बहिस्तात् 'उत्तरपुरच्छिमे'त्ति उत्तरपौरस्त्य दिग्भाग ईशानकुणिविदिग्भागे गुणशिलकं नाम चैत्यं-व्यन्तरायतनं 'होत्थ'त्ति बभूव, इह च यन्न व्याख्यास्यते तत्प्रायः सुगमत्वादित्यवसेयमिति ॥

तेणं कालेणं तेणं समएणं समणेत्ति ( सू० ५ )

"श्रमु तपसि खेदे चे'ति वचनात् श्राम्यति-तपस्यतीति श्रमणः, अथवा सह शोभनेन मनसा वर्तत इति समनाः, शोभनत्वं च मनसो व्याख्यातं स्तवप्रस्तावात्, 'भगवं'ति भगवान्-ऐश्वर्यादियुक्तः, पूज्य इत्यर्थः, 'महावीरे'त्ति महांश्चासौ दुर्जयान्तररिपुतिरस्करणाद्वीरश्चेति महावीरः 'आदिकरे'त्ति आदितो धर्मम्-आचारादिश्रुतं करोतीत्यादिकरः 'सहसंबुद्धे'त्ति सह-आत्मनैव संबुद्धो, नान्योपदेशत इत्यर्थः 'धम्मवरचाउरंत'त्ति त्रयः समुद्राश्चतुर्थश्च हिमवान् एते चत्वारोऽन्ताः-पृथिव्यन्ताः तेषां स्वामी यथा चक्रवर्ती तथा भगवान् चतुर्धर्मचक्रवर्ती इति, 'तेण'मित्यादि शक्रस्तवव्याख्यानं सुगमत्वान्न विव्रियते ।

'तेण'मित्यादि (सू० ७)

तेन कालेन तेन समयेन श्रमणस्य भगवतो महावीरस्य 'जेट्ठे'त्ति प्रथमः 'अंतेवासी'त्ति शिष्यः 'इंदभूइ'त्ति इन्द्रभूतिरिति मातापितृकृतनामा 'नामं'ति विभक्तिविपरिणामात् नाम्नेत्यर्थः, 'सत्तुस्सेहे'त्ति सप्तहस्तोच्छ्रयः 'वज्जरिसहनारायसंघयणे'त्ति संहननं-अस्थिसञ्चयविशेषः, इह वज्रादीनां लक्षणमिदम्-'रिसहो य होइ पट्टो वज्जं पुण कीलियं वियाणाहि। उभओ मक्कडबंधो नारायं तं वियाणाहि ॥१॥'त्ति वचनात् वज्रर्षभनाराचसंहननः, 'कणग'त्ति कनकं-सुवर्णं तस्य यः पुलको-लवः तस्य यो निकषः-कषपट्टके रेखालक्षणः 'पम्हले'त्ति पद्मपक्ष्माणि-केसराणि तद्वद्गौरो यः स तथा, 'उग्गतवे'त्ति उग्रं अप्रधृष्यं तपः-अनशनादि यस्य सः उग्रतपाः, 'दित्ततवे'त्ति दीप्तं-जाज्वल्यमानदहन इव कर्मवनगहनदहनसमर्थतया ज्वलितं तपो-धर्मध्यानादि यस्य स तथा, 'तत्ततवे'त्ति तप्तं तपो येनासौ तप्ततपाः, 'ओराले'त्ति उदारः-प्रधानः, 'घोरे'त्ति घोरो-निर्घृणः, परीषहेन्द्रियादिरिपुगणविनाशमाश्रित्य निर्दय इत्यर्थः, 'घोरगुणे'त्ति घोरा-अन्यैर्दुरनुचरा गुणा-मूलगुणादयो यस्य स तथा, 'उच्छूढसरीरे'त्ति उच्छूढं-उज्झितं रज इव वपुर्येन तत्संस्कारत्यागात् स तथा, 'संखित्त'त्ति संक्षिप्ता-शरीरान्तर्लीनत्वेन ह्रस्वतां गता विपुला-अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वाद्विपुला विस्तीर्णा-अनेकयोजनमाना तेजोलेश्या-तीव्रतपोलब्धिप्रभवा तेजोज्वाला यस्य स तथा, 'सव्वक्खर'त्ति सर्वे अक्षरसंनिपाता-वर्णाकाररूपास्ते यस्य ज्ञेयतया सन्ति, अदूरसामंते विहरतीति योगः, तत्र दूरं-विप्रकृष्टं सामंतं च-संनिकृष्टं तन्निषेधाददूरसामंतं, नातिदूरे नातिनिकट इत्यर्थः, स किंभूत इत्याह 'उड्ढंजाणु'त्ति ऊर्ध्वे जानुनी यस्य सः उत्कटुकासन इति, 'झाणकोट्ठ'त्ति ध्यानं धर्मध्यानादिकं तदेव कोष्ठः-कुशूलस्तत्र प्रविष्ट इति, 'उड्ढाए'त्ति

उत्थानं उत्था-ऊर्ध्ववर्तनं तया उत्तिष्ठति 'आयाहिण'त्ति आदक्षिणात्-दक्षिणहस्तादारभ्य प्रदक्षिणं परितो भ्रमणं आदक्षिणप्रदक्षिणं करोति 'वंदइ'त्ति वन्दते वाचा स्तौति 'नमंसइ'त्ति नमस्करोति 'पज्जुवास'त्ति पर्युपासीनः-सेवमानः श्रीगौतम एवं-वक्ष्यमाणप्रकारं वस्तु अवादीत्, 'से'इति तत् यदुक्तं पूज्यैः 'चलच्चलित'मित्यादि 'नूणं'ति निश्चितं 'चलमाणे चलिए'त्ति (सू० ९) चलत्— स्थितिक्षयादुदयमागच्छत् विपाकाभिमुखीभवदुदयत् कर्म तच्चलितं प्रोक्तम् १ 'उदीरिज्ज'त्ति उदीरणा नाम अनुदयप्राप्तं चिरेणागामिना कालेन यद्वेदयितव्यं कर्मदलिकं तदाकृष्योदये प्रक्षेपणमुदीरणा तया उदीर्यमाणं प्रथमसमयादिना कालेनोदीरितमुक्तं २ 'वेइज्जमाणे'त्ति वेद्यमानं-स्थितिक्षयादुदयं प्राप्तं उदीरणाकरणेन चोदयमुपनीतं आद्यसमयादिकालेन यत् कर्मदलिकं तद्वेदितं स्यात् ३ 'पहिज्ज'त्ति प्रहाणं तु जीवप्रदेशेभ्यः, पतनसमये प्रहीयमाणं कर्म प्रहीणं स्यात् ४ 'छिज्जमाणे'त्ति छेदनं दीर्घकालकर्मस्थितिकानां ह्रस्वतापादनं अपवर्तनाकरणेन कुर्यात्, तत् समये समये छिद्यमानं छिन्नं स्यात् ५ 'भिज्जमाणे'त्ति भेदस्तु शुभाशुभकर्मणस्तीव्ररसस्यापवर्तनाकरणेन मन्दताकरणं, समये समये रसतो भिद्यमानं कर्म्म भिन्नम् ६ 'डज्झमाणे'त्ति दाहस्तु कर्मदलिकदारुणां ध्यानाग्निना तद्रूपापनयनं कर्माभावजननं, तस्याप्यन्तर्मुहूर्तत्वेनासंख्यसमयस्यादिसमये दह्यमानं दग्धं ७ 'मिज्जमाणे'त्ति म्रियमाणं आयुःकर्म मृतं, मरणं ह्यायुःपुद्गलानां क्षयः, तच्चासंख्येयसमयवर्ति स्यात्, तस्य च जन्माद्यसमयादारभ्य आवीचिकमरणेन क्षणे क्षणे मरणसद्भावात् म्रियमाणं मृतम् ८ 'निज्जरिज्ज'त्ति नितराम्-अपुनर्भावेन क्षीयमाणं कर्म निर्जीर्णमिति, निर्जरणस्यासंख्यसमयभावित्वेन तत्प्रथमसमय एव निर्जीर्यमाणं निर्जीर्णम् ९, तदेवमेतान्नव प्रश्नान् गौतमेन वीरः पृष्टः सन्नुवाच-'हंता गोयम'त्ति हंत इति एवमेतदिति अभ्युपगमवचनं, एवमेतानि नव पदानि कर्माधिकृत्य वर्तमानातीतकालसामानाधिकरण्यजिज्ञा-

सया पृष्टानि निर्णीतानि, अथैतानि चलनादीनि मिथः किं तुल्यार्थानि भिन्नानि वा इति पृच्छानिर्णयं दर्शयितुमाह—'एए णं भंते' त्ति इति व्यक्तम्, 'एगट्ठ' त्ति एकप्रयोजनानि च 'नाणाघोस' त्ति इह घोषा—उदात्तादयः 'नाणावंजण' त्ति व्यंजनानि—अक्षराणि 'उदाहु' त्ति उताहो निपातो विकल्पार्थः 'नाणट्ठ' त्ति नानार्थानि, इह चतुर्भङ्गी पदेषु दृष्टा, तत्र कानिचिदेकार्थानि एकव्यञ्जनानि, यथा क्षीरं क्षीरं १ तथा अन्यानि एकार्थानि नानाव्यञ्जनानि यथा क्षीरं पय इति २ तथा अन्यानि अनेकार्थानि एकव्यञ्जनानि यथा अर्कगव्यमाहिषाणि क्षीराणि ३ तथा अन्यानि नानार्थानि नानाव्यञ्जनानि यथा घटपटमुकुटलकुटशकटादीनि ४, एवं चतुर्भङ्गीसंभवेऽपि द्वितीयचतुर्थभङ्गकौ अत्र प्रश्नसूत्रे गृहीतौ, चलनादीनि चत्वारि पदान्याश्रित्य द्वितीयः, छिद्यमानादीनि पञ्च पदान्याश्रित्य चतुर्थः, कथं आद्यानि चत्वारि पदान्येकार्थानीत्याशंक्याह—'उप्पन्नपक्खस्स' त्ति इह च षष्ठ्यास्तृतीयार्थत्वात् उत्पन्नपक्षेण, उत्पादपर्यायो विशिष्टः केवलोत्पाद एव, यतः कर्मक्षये फलद्वयं—केवलज्ञानमोक्षप्राप्ती, तत्रैतानि पदानि केवलोत्पादपक्षविषयत्वादेकार्थान्युक्तानि, तत् कथं ?—चलितं सत् उदीरयति, उदीरितं सत् वेद्यते, विदितं सत् अनुभूयते, (अनुभूतं सत्) प्रहीयते, तस्मादेकार्थान्येतानि, केवलोत्पादपक्षसाधकानीत्यर्थः, अथ शेषाणि अनेकार्थानि पञ्च पदानि प्रतिपादयितुमाह—'छिज्जमाणे' त्ति छिद्यमानं छिन्नमितिपदं स्थितिबन्धाश्रयं, यतः सयोगिकेवली योगनिरोधं कर्तुकामो वेदनीयनामगोत्राख्यानां तिसृणां प्रकृतीनां दीर्घस्थितिकानां सर्वापवर्तनया अन्तर्मुहूर्तकं स्थितिबन्धं कुर्यात्, भिद्यमानं भिन्नमितिपदमनुभागबन्धाश्रयं, तत्र यस्मिन् काले स्थितिघातं करोति तस्मिन्नेव काले रसघातमपि करोति अतो रसघातकरणेन पूर्वस्माद्भिन्नार्थं पदमेतत्, दह्यमानं दग्धमिति पदं प्रदेशबन्धाश्रयं, अनन्तानां प्रदेशानां कर्मदलिकानां पञ्चह्रस्वाक्षरोच्चारणकालपरिमाणयाऽसंख्यातसमयया गुणश्रेणीरचनया पूर्व

रचितानां शैलेशीकरणावस्थाभाविसमुच्छिन्नक्रियध्यानाग्निना प्रथमसमयादारभ्य यावदन्त्यसमयस्तावत् प्रतिसमयमसंख्येयगुणवृद्धानां कर्मपुद्गलानां दहनं दाह इति दहनार्थेनेदं पूर्वस्माद्भिन्नार्थं, तथा म्रियमाणं मृतम् एतत्पदं आयुःकर्मविषयं, यतः आयुःपुद्गलानां प्रतिसमयं क्षयो मरणं, अनेन च मरणार्थेन पूर्वस्माद्भिन्नपदं, तथा निर्जीर्यमाणं निर्जीर्णम् एतत् पदं सर्वकर्माभावविषयं निर्जरणार्थेन पूर्वपदेभ्यो भिन्नम्, अथैतानि पदानि नानार्थानि कस्य पक्षस्याभिधायकतया प्रवृत्तानि इत्याशंक्याह-'विगयपक्खस्स'त्ति विगतं विगमो-वस्तुनोऽवस्थान्तरापेक्षया विनाशः स एव पक्षो-वस्तुधर्मः तस्य वा पक्षः-परिग्रहो विगतपक्षः तस्य विगतपक्षस्य, वाचकानीति शेषः, विगमत्वं त्विहाशेषकर्माभावोऽभिमतो, जीवेन तस्याप्राप्तपूर्वतयाऽत्यन्तमुपादेयत्वात्, तदर्थत्वाच्च पुरुषप्रयासस्येति, एतानि त्वेवं विगमार्थानि भवन्ति-छिद्यमानपदे हि स्थितिखंडनं विगम उक्तः, भिद्यमानपदे त्वनुभावभेदो विगम उक्तः, दह्यमानपदे त्वकर्मभवनं विगम उक्तः, म्रियमाणपदे पुनरायुःकर्माभावो विगम उक्तः, निर्जीर्यमाणपदे त्वशेषकर्माभावो विगम उक्तः, तदेवमेतानि विगतपक्षप्रतिपादकानि केवलोत्पत्तौ सर्वकर्मविगमाभिधानरूपसूत्राभिप्रायव्याख्यानेन निर्णीतानि ।

इहाद्यप्रश्नोत्तरसूत्रद्वये मोक्षतत्त्वं चिन्तितं, मोक्षः पुनर्जीवस्य, तेन जीवाश्च नारकादयश्चतुर्विंशतिविधा उक्ताः, यदाह-"नेरइया १ असुराई १० पुढवाई ५ बेंदियादओ ३ चेव । पंचिंदियतिरिय १ नरा १ वंतर १ जोइसिय १ वेमाणी १ ॥१॥" तत्र नारकान् स्थित्यादिभिर्निरूपयन्नाह-'नेरइयाणं'ति, निर्गतमयम्-इष्टफलं येषां ते निरयाः तेषु भवा नैरयिकाः तेषां नैरयिकाणां, 'दस वाससहस्स'त्ति प्रथमपृथिवीप्रथमप्रस्तटापेक्षया, 'तेत्तीसं'ति सप्तमपृथिव्यपेक्षया उत्कृष्टा, शेषा सर्वापि कालस्थितिर्मध्यमा ज्ञेया १। 'केवइकालस्स'त्ति प्राकृतशैल्या कियता कालेन 'आनमंति'त्ति 'अन श्वस प्राणने' इतिधातुपाठात् मकारस्यागमिकत्वात्, एवं प्राणमंति, एतदेव

पदद्वयमर्थतः स्पष्टयन्नाह-'ऊससंति नीससंति व'त्ति, यदेवोक्तमानमंति तदेवोक्तमुच्छ्वसंति यदेवोक्तं प्राणंति तदेव निःश्वसन्ति, 'जहा ऊसासपए'त्ति एतत् प्रश्नोत्तरं प्रज्ञापनासप्तमपदे यथा तथा वाच्यं, तच्चेदं 'गोयमा ! सययं संतयामेव आणमंति वा पाणमं० उस० नीस०', 'सययं'ति-सततं निरन्तरमेव 'संतयामेव'त्ति नैकसमयेऽपि तद्विरहोऽस्तीतिभावः २ । अथ तेषामाहारं प्रश्नयन्नाह-'आहारट्ठि'त्ति आहारमर्थयन्ते-प्रार्थयन्ते इत्येवंशीलाः आहारार्थिनः 'जहा पन्नवणाए'त्ति यथा प्रज्ञापनायाः आहारपदस्याष्टाविंशतितमस्योद्देशकः, पदशब्दलोपात्; प्रथमे आहारोद्देशके तथा वाच्यो, नैरयिकाणां स्थित्यादिद्वारगाथामाह—'ठिति उस्सासाहार'त्ति स्थित्युच्छ्वासावुक्तावेव 'आहार'त्ति आहारविधिर्वाच्यः, स चैवं-नेरइयाणं भंते ! केवइकालस्स आहारट्ठे समुप्पज्जइ ?; आहारार्थः—आहारप्रयोजनम्, गोयमा ! नेरइयाणं दुविहे आहारे पन्नत्ते, तंजहा—आभोगणिव्वत्तिए अणाभोगणिव्वत्तिए, आभोगनिर्वर्त्तितः—आहारयामीतीच्छापूर्वकनिष्पन्नः, अनाभोगस्त्वेवमाहारयामीतीच्छामन्तरेण, प्रावृट्काले प्रचुरतरप्रश्रवणाद्यभिव्यङ्ग्यशीतपुद्गलाहारवत्, तत्थ णं जे से अणाभोगणिव्व० से णं अणुसमयमविरहिए आहारट्ठे समुप्पज्जइ, अनुसमयं-प्रतिक्षणं अविरहितं (प्रति) समयं क्षुद्वेदनीयकर्मोदयत ओजाहारादिना प्रकारेण, तत्थ णं जे आभोगणिव्वत्तिए से णं असंखेज्जसमइए अंतोमुहुत्तिए आहारट्ठे समुप्पज्जइ, आहारयामीत्यभिलाप एषामसंख्यसामयिकान्तर्मुहूर्तान्निर्वर्तितः ४। 'किं वाहारेंति'त्ति किंस्वरूपं वा वस्तु नारका आहारयन्ति, गोयमा ! दव्वओ अणंतपएसियाइं-अनन्तप्रदेशवन्ति पुद्गलद्रव्याणि, तदन्येषामयोग्यत्वात्, खेत्तओ असंखेज्जपएसावगाढाइं-असंख्यातप्रदेशावगाढानि, तन्न्यूनतरप्रदेशावगाढानि तु तेषां न ग्रहणप्रायोग्यानि, अनन्तप्रदेशावगाढानि तु न भवन्त्येव, सकललोकस्याप्यसंख्येयप्रदेशपरिमाणत्वात्, कालओ अण्णतरट्ठिइयाइं-जघन्यमध्यमोत्कृष्टस्थितिकानि, स्थितिश्चा-

ग्रहणयोग्यस्कंधपरिणामेनावस्थानं इत्यर्थः, भावओ वण्णमंताइं गंधमंताइं रसमंताइं फासमंताइं आहारेंति, जाइं भावओ वण्णमंताइं आहारेंति ताइं किं एगवण्णाइं आहारेंति जाव किं पंचवण्णाइं आहारेंति? गोयमा! ठाणमग्गणं पडुच्च एगवण्णाइंपि आहारेंति जाव पंचवण्णाइंपि आहारेंति, विहाणमग्गणं पडुच्च कालवण्णाइंपि आहारेंति जाव सुक्किल्लाइंपि आहारेंति, तत्र 'ठाणमग्गणं पडुच्च'त्ति तिष्ठन्त्यस्मिन्निति स्थानं—सामान्यं यथैकवर्णमित्यादि, 'विहाणमग्गणं पडुच्च'त्ति विधानं—विशेषः कालनीलादिरिति ६, जाइं वण्णओ कालवण्णाइं आहारेंति ताइं किं एगगुणकालाइं आहारेंति जाव दसगुणकालाइं आहारेंति? संखेज्जगुणकालाइं० असंखेज्जगुणकालाइं० अणंतगुणकालाइं आहारेंति?, गोयमा! एगगुणकालाइंपि आहारेंति जाव अणंतगुणकालाइंपि आहारेंति ७, एवं नीलवण्णाइं ८, पीयवण्णाइं ९, रत्तवण्णाइं १०, सुक्किल्लाइं ११, एवं गंधओऽवि सुब्भिगंधाइं १२ दुब्भिगंधाइं १३, रसओवित्ति जाइं भावओ रसमंताइं किं तित्त १ कडुय २ अंबिल ३ महुर ४ कसाय ५ परिणयाइं आहारेंति १८, एवं जाइं भावओ फासमंताइं ताइं ठाणमग्गणं पडुच्च णो एगफासाइं आहारेंति णो दुफासाइं आहारेंति नो तिफासाइं आहारेंति, एकस्पर्शानामसंभवात्, अन्येषां चाल्पप्रादेशिकतासूक्ष्मपरिणामाभ्यां ग्रहणायोग्यत्वात्, चउफासाइंपि आहारेंति जाव अट्ठफासाइंपि आहारेंति, बहुप्रदेशताबादरपरिणामाभ्यां ग्रहणयोग्यत्वादिति, यथा एकस्मिन् मकारे गुरुत्वं १ मृदुत्वं २ शीतत्वं ३ स्निग्धत्वं ४ एवं चत्वारः स्पर्शाः, एतद्विपरीतास्त्वन्ये चत्वारः स्पर्शाः ज्ञेयाः, विहाणमग्गणं पडुच्च कक्खडाइंपि आहारेंति जाव लुक्खाइंपि आहारेंति १९, जाइं फासओ कक्खडाइं आहारेंति ताइं किं एगगुणकक्खडाइं आहारेंति जाव अणंतगुणकक्खडाइंपि आहारेंति?, गोयमा! एगगुणकक्खडाइंपि जाव अणंतगुणकक्खडाइंपि आहारेंति २०-२७, एवं अट्ठवि फासा भाणियव्वा जाव अणंतगुणलुक्खाइं आहारेंति, ताइं किं पुट्ठाइं आहारेंति अपुट्ठाइं आहारेंन्ति?, गोयमा!

पुट्ठाइं आहारेंति, नो अपुट्ठाइं आहारेंति २८, पुट्ठाइंति-आत्मप्रदेशस्पर्शवन्ति, तत् पुनरात्मप्रदेशस्पर्शनमवगाहक्षेत्राद् बहिरपि भवति अत उच्यते—जाइं भंते ! पुट्ठाइं आहारेंति ताइं किं ओगाढाइं आहारेंति अणोगाढाइं आहारेंति ?, गोयमा ! ओगाढाइं, नो अणोगाढाइं अवगाढानीति—आत्मप्रदेशैः सह एकक्षेत्रावगाढानीत्यर्थः २९, जाइं भंते ! ओगाढाइं आहारेंति ताइं किं अणंतरोगाढाइं आहारेंति परंपरोगाढाइं आहारेंति ?, गोयमा ! अणंतरोगाढाइं आहारेंति, नो परंपरोगाढाइं आहारेंति, अनन्तरावगाढानीति—येषु प्रदेशेषु आत्मा अवगाढस्तेष्वेव यानि अवगाढानि तानि अनन्तरावगाढानि, अन्तराभावेनावगाढत्वात्, यानि च तदनन्तरवर्तीनि तानि अवगाढसंबंधात् परंपरावगाढानीति ३०, जाइं भंते ! अणंतरोगाढाइं ताइं किं अणूइं आहारेंति ? बायराइं आहारेंति ?, गोयमा ! अणूइंपि आहारेंति बायराइंपि आहारेंति, तत्राणुत्वं बादरत्वं चापेक्षिकं तेषामेव आहारयोग्यानां स्कंधानां प्रदेशवृद्ध्या वृद्धानामवसेयम् ३१, जाइं भंते ! अणूइंपि आहारेंति बादराइंपि आहारेंति ताइं किं उड्ढं आहारेंति ? एवं अहोऽवि तिरियंपि ?, गोयमा ! उड्ढंपि आहारेंति एवं अहोवि० तिरियंपि० ३२, जाइं भंते ! उड्ढंपि आहारेंति अहेवि० तिरियंपि आहारेंति ताइं किं आदिं आहारेंति मज्झे आहारेंति पज्जवसाणे आहारेंति ?, गोयमा ! तिहावि, अयमर्थः—आभोगनिर्वर्तितस्याहारस्यांतर्मौहूर्तिकस्यादिमध्यावसानेषु सर्वत्राहारयन्तीति ३३, जाइं भंते ! आई मज्झे अवसाणेवि आहारेंति ताइं किं सविसए आहारेंति ? अविसए आहारेंति ?, गोयमा ! सविसए, नो अविसए आहारेंति, तत्र स्वः—स्वकीयो विषयः स्पृष्टावगाढानंतरावगाढाख्यः स्वविषयः तस्मिन् आहारयन्ति ३४, जाइं भंते ! सविसए आहारेंति ताइं किं आणुपुव्विं आहारेंति ? अणाणुपुव्विं आहारेंति ?, गोयमा ! आणुपुव्विं आहारेंति, तत्रानुपूर्व्या यथाऽऽसन्नं, नातिक्रम्य ३५, जाइं भंते ! आणुपुव्विं आहारेंति ताइं किं तिदिसिं आहारेंति ? जाव छदिसिं आहारेंति ?, गोयमा ! नियमा

छद्दिसिं आहारेंति, इह नारकाणां लोकमध्यवर्तित्वेन षण्णामप्यूर्ध्वादिदिशामलोकेनानावृतत्वात् षट्सु दिक्षु आहारग्रहणमस्ति, तत उक्तं-नियमात् षड्दिशि, दिक्त्रयादिविकल्पास्तु लोकान्तवर्तिषु पृथिवीकायिकादिषु दिशां त्रयस्य द्वयस्य एकस्याश्चालोकेनावरणे भवंतीति, यद्यपि वर्णतः पंचवर्णानीत्याद्युक्तं तथापि प्राचुर्येण यद्वर्णगंधादियुतानि द्रव्याण्याहारयन्ति तद्दर्शयति-'उस्सण्णकारणं पडुच्च'त्ति बाहुल्यलक्षणं कारणमाश्रित्य, तत्र च प्रकृत्यशुभानुभाव एव कारणमिति, वण्णओ कालनीलाइं, गंधओ दुब्भिगंधाइं, रसओ तित्तकडुयरसाइं, फासओ कक्खडगुरुयसीयलुक्खाइं, एतानि च प्रायो मिथ्यादृष्टय एवाहारयन्ति, न तु भविष्यत्तीर्थकरादय इति, अथ तानि यथास्वरूपाण्येव नारका आहारयन्ति अन्यथा वेत्यस्यामाशङ्कायामभिधीयते-तेसिं पोराणे वण्णगुणे गंधगुणे रसगुणे फासगुणे विप्परिणमइत्ता परिपीलइत्ता परिसाडइत्ता परिविद्धंसइत्ता, विपरिणामादयो विनाशार्थत्वेनैकार्था एव ध्वनयः, अण्णे य अपुव्वे वण्णगुणे गंधगुणे रसगुणे फासगुणे उप्पाएत्ता आयसरीरोगाढे पोग्गले सव्वप्पणयाए आहारेंति, सव्वप्पणयाएत्ति सर्वात्मना, सर्वात्मप्रदेशैरित्यर्थः २६, व्याख्यातं सूत्रसंग्रहगाथायाः किंवाऽऽहारेंतीतिपदम्, अथ 'सव्वओ वावी'ति व्याख्यायते, तत्र सर्वतः प्रदेशैः किं चापिशब्दात् अभीक्ष्णं नारका आहारयन्ति, तच्चेवं-नेरइया णं भंते ! किं सव्वओ आहारेंति सव्वओ परिणामेंति सव्वओ ऊससंति सव्वओ नीससंति वा अभिक्खणमाहारेंति, एवं पूर्ववत् सर्वत्र योज्यं, आहच्च आहारेंति ४ ?, हंता गोयमा ! नेरइया सव्वओ आहारेंति. 'सव्वओ'त्ति सर्वात्मप्रदेशैः, 'अभिक्खणं'ति अनवरतं पर्याप्तत्वे सति 'आहच्च'ति कदाचित्, न सर्वदा, अपर्याप्तकावस्थायामिति २७, 'कइभागं'ति आहारतयोपात्तपुद्गलानां कतिभागं आहारयन्ति ?, तच्चेवं-नेरइया० जे पोग्गले आहारत्ताए गिण्हंति ते णं तेसिं पोग्गलाणं सेयालंसि कतिभागमाहारेंति ? कइभागमासाएंति ?, गोयमा ! असंखेज्जइभा-

गमाहारेंति, अणंतभागमासाएंति, 'सेयालंसि'त्ति एष्यत्काले, ग्रहणकालोत्तरकालमिति, 'असंखेज्ज'त्ति अत्र केचिदाहुः—गवादिप्रथमबृहद्ग्रासग्रहणमिव कश्चिद् गृहीतासंख्येयभागमात्रान् पुद्गलानाहारयति, तदन्ये तु पतन्ति, अन्ये पुनराहुः असंखिज्जइभागमाहारेंतित्ति शरीरतया परिणमयन्ति, शेषास्तु किट्टीभूय मनुष्याभ्यवहृताहारवन्मलीभवन्ति, न शरीरत्वेन परिणमन्तीत्यर्थः, 'अणंतभागं'ति आहारतयाऽऽत्तपुद्गलानामनन्तभागमाखादयन्ति, तद्रसादीन् रसनादीन्द्रियद्वारेणोपलभन्ते ३८, 'सव्वाणि व'त्ति सर्वाण्येवाहारद्रव्याणि आहारयन्ति, तच्चैवं—नेरइया णं भंते! जे पोग्गला आहारत्ताए परिणमंति ते किं सव्वे आहारेंति णो सव्वे आहारेंति ?, गोयमा! सव्वे अपरिसेसिए आहारेंति, इह विशिष्टग्रहणगृहीता आहारपरिणामयोग्या एव ग्राह्याः,उज्झितशेषा इत्यर्थः, अन्यथा पूर्वापरसूत्रयोर्विरोधः स्यात्, दृष्टा चैवं व्याख्या, यदाह—"जं जह सुत्ते भणियं तहेव जइ तं वियालणा णत्थि। किं कालियाणुओगो दिट्ठो दिट्ठिप्पहाणेहिं ? ॥१॥ ३९, 'कीस व'त्तिपदे पदसमुदायोपचारात् कीसत्ताएत्ति दृश्यं, स्वभावतया कीदृशतया—केन प्रकारेण किंरूपतया 'भुज्जो'त्ति भूयो भूयः परिणमन्ति आहारद्रव्याणि, नेर० जे पोग्गले आहारत्ताए गिण्हंति ते णं तेसिं पोग्गला कीसत्ताए भुज्जो २ परिणमंति ?, गोयमा! सोइंदियत्ताए जाव फासिंदियत्ताए, अणिट्ठत्ताए अकंतत्ताए अप्पियत्ताए अमणुन्नत्ताए अमणामत्ताए अणिच्छियत्ताए अभिज्झियत्ताए अहत्ताए नो उड्ढत्ताए दुक्खत्ताए नो सुहत्ताए एएसिं भुज्जो २ परिणमंति, तत्रानिष्टतया—सामान्येनावल्लभतया, अकांततया सदा सद्भावेनाकमनीयतया, अप्रियतया सर्वेषामेव द्वेष्यतया, अमनोज्ञतया कथयाऽप्यमनोरमतया, अमनोगम्यतया चिन्तयाऽपि अमनोगम्यतया, अनीप्सिततया आप्तुमनिष्टतया, एकार्थाश्चैते शब्दाः, अभिज्झियत्ताए—अभिध्येयतया, तृप्तेरनुत्पादकत्वेन पुनरप्यभिलापनिमित्ततया, अहत्ताएत्ति गुरुपरिणामतया, नो उड्ढत्ताए, नो

त्पपरिणामनयेति संग्रहगाथार्थः ४०॥ अथ नारकाहारविषयं प्रश्नचतुष्टयमाह—

'नेरइयाणं'मित्यादि० (सू. १२)

'पुव्वाहारिय'त्ति ये पूर्वकाले आहृताः—संगृहीता अभ्यवहृता वा 'पोग्गल'त्ति पुद्गलस्कंधाः ते 'परिणय'त्ति परिणता वपुष्परिणतिं गता इति प्रथमः प्रश्नः १, 'आहारिय'त्ति आहृताः पूर्ववत् 'आहरिज्जमाण'त्ति ये वर्तमानकाले आह्रियमाणाः—संगृह्यमाणाः पुद्गलाः परिणताः इति द्वितीयः प्रश्नः २, 'अणाहारिय'त्ति ये अतीतकाले अनाहृताः, 'आहरिज्जिस्समाण'त्ति येऽनागते काले आहरिष्यमाणाः पुद्गलास्ते परिणताः इति तृतीयः प्रश्नः ३, तथा अणाहारिया अणाहरिज्जिस्समाणत्ति अतीतानागताहरणक्रियानिषेधाच्चतुर्थः ४, इह च यद्यपि चत्वार एव प्रश्ना उक्ताः तथाप्येते त्रिषष्टिः संभवन्ति, यतः पूर्वाहृताः आह्रियमाणा आहरिष्यमाणाः ३ अनाहृता अनाह्रियमाणा अनाहरिष्यमाणाः ३ इतीह षड् भङ्गाः सूचिताः, तदेकैकपदाश्रयणेन षट् ६ द्विकयोगे १५ त्रिकयोगे २० चतुष्कयोगे १५ पंचकयोगे ६ षड्योगे एक १ इति, अथैतद्व्यक्तिर्विशेषतो विविच्यते, यथा आहृताः १ आह्रियमाणाः १ आहरिष्यमाणाः १ अनाहृताः १ अनाह्रियमाणाः १ अनाहरिष्यमाणाः १ अतीतवर्तमानानागतकालभेदैरेककयोगा जाताः षट्, अथ द्विकयोगाः पञ्चदश, ते चैवं—यथा आहृता आह्रियमाणाः १ आहृता आहरिष्यमाणाः २ आहृता अनाहृताः ३ आहृता अनाह्रियमाणाः ४ आहृता अनाहरिष्यमाणाः ५ आह्रियमाणा आहरिष्यमाणाः ६ आह्रियमाणा अनाहृताः ७ आह्रियमाणा अनाह्रियमाणाः ८ आह्रियमाणा अनाहरिष्यमाणाः ९ आहरिष्यमाणा अनाहृताः १० आहरिष्यमाणा अनाह्रियमाणाः ११ आहरिष्यमाणा अनाहरिष्यमाणाः १२ अनाहृता अनाह्रियमाणाः १३ अनाहृता अनाहरिष्यमाणाः १४ अनाह्रियमाणा अनाहरिष्य-

माणाः १५, अथ त्रिकयोगाः, आहृता आह्रियमाणा आहरिष्यमाणाः १ आहृता आह्रियमाणा अनाहृताः २ आहृता आह्रियमाणा अनाह्रियमाणाः ३ आह्रियमाणा अनाहरिष्यमाणा अनाहृताः ४ आहृता आहरिष्यमाणा अनाहृताः ५ आहृता आहरिष्यमाणा अनाह्रियमाणाः ६ आहृता आहरिष्यमाणा अनाहरिष्यमाणाः ७ आहृता अनाहृता अनाह्रियमाणाः ८ आहृता अनाहृता अनाहरिष्यमाणाः ९ आहृता अनाह्रियमाणा अनाहरिष्यमाणाः १० आह्रियमाणा आहरिष्यमाणा अनाहृताः ११ आह्रियमाणा आहरिष्यमाणा अनाह्रियमाणाः १२ आह्रियमाणा आहरिष्यमाणा अनाहरिष्यमाणाः १३ आह्रियमाणा अनाहृता अनाह्रियमाणाः १४ आह्रियमाणा अनाहृता अनाहरिष्यमाणाः १५ आह्रियमाणा अनाह्रियमाणा अनाहरिष्यमाणाः १६ आहरिष्यमाणा अनाहृता अनाह्रियमाणाः १७ आहरिष्यमाणा अनाहृता अनाहरिष्यमाणाः १८ आहरिष्यमाणा अनाह्रियमाणा अनाहरिष्यमाणाः १९ अनाहृता अनाह्रियमाणा अनाहरिष्यमाणाः २० एवं त्रिकयोगे जाता विंशतिः, अथ चतुष्कयोगाः—आहृता आह्रियमाणा आहरिष्यमाणा अनाहृताः १ आहृता आह्रियमाणा आहरिष्यमाणा अनाह्रियमाणाः २ आहृता आह्रियमाणा आहरिष्यमाणा अनाहरिष्यमाणाः ३ आहृता आहरिष्यमाणा अनाहृता अनाह्रियमाणाः ४ आहृता आहरिष्यमाणा अनाहृता अनाहरिष्यमाणाः ५ आहृता आहरिष्यमाणा अनाह्रियमाणा अनाहरिष्यमाणाः ६ आहृता आह्रियमाणा अनाहृता अनाह्रियमाणाः ७ आहृता आह्रियमाणा अनाहृता अनाहरिष्यमाणाः ८ आहृता आह्रियमाणा अनाह्रियमाणा अनाहरिष्यमाणाः ९ आह्रियमाणा आहरिष्यमाणा अनाहृता अनाह्रियमाणाः १० आह्रियमाणा आहरिष्यमाणा अनाहृता अनाहरिष्यमाणाः ११ आह्रियमाणा आहरिष्यमाणा अनाह्रियमाणा अनाहरिष्यमाणाः १२ आहरिष्यमाणा अनाहृता अनाह्रियमाणा अनाहरिष्यमाणाः १३ आहृता अनाहृता अनाह्रियमाणा अनाहरिष्यमाणाः १४ आह्रियमाणा अनाहृता अना-

ह्रियमाणा अनाहरिष्यमाणाः १५, एवं चतुष्कयोगे जाताः पञ्चदश, अथ पञ्चकयोगाः षट्–आहृता आह्रियमाणा आहरिष्यमाणा अनाहृता अनाह्रियमाणाः १ आहृता आह्रियमाणा आहरिष्यमाणा अनाहृता अनाहरिष्यमाणाः २ आहृता आह्रियमाणा आहरिष्यमाणा अनाह्रियमाणा अनाहरिष्यमाणाः ३ आहृता आहरिष्यमाणा अनाहृता अनाह्रियमाणा अनाहरिष्यमाणाः ४ आहृता आह्रियमाणा अनाहृता अनाह्रियमाणा अनाहरिष्यमाणः ५ आह्रियमाणा आहरिष्यमाणा अनाहृता अनाह्रियमाणा अनाहरिष्यमाणाः ६, एवं पञ्चकयोगे जाताः षट्, आहृता आह्रियमाणा आहरिष्यमाणा अनाहृता अनाह्रियमाणा अनाहरिष्यमाणाः १ षड्योगे तु एक एव भङ्गः, एवमेककद्विकत्रिकचतुष्कपञ्चकषड्योगैर्जाताः सर्वेऽपि मिलितास्त्रिषष्टिभेदाः, अत्रोत्तरं 'गोयमे'त्यादि व्यक्तम् ॥ अथ नपुंसकलक्षणपरिणामात् पुद्गलानां परिणामादयो भवन्ति तद्दर्शनार्थं प्रश्नयन्नाह—

नेरइयाणंति (सू. १२)

जहा परिणया तहा चियत्ति, तत्र चिताः–कायेन चयं गताः, उपचिताः पुनर्बहुशः प्रदेशसामीप्येन शरीरे चिता एव, उदीरिताः स्वभावेनाऽनुदितान् पुद्गलान् उदयप्राप्ते कर्मदलिके करणविशेषेण प्रक्षिप्य यान् वेदयते, उदीरणालक्षणं त्विदं–'जं करणेणाकड्ढिय उदए दिज्जइ उदीरणा एसा'। तथा वेदिताः स्वरसविपाकेन प्रतिसमयमनुभूयमाना अपरिसमाप्ताशेषानुभावाः, निर्जीर्णाः कात्स्न्र्येनानुसमयं संपूर्णहानिं गताः, एतत्पदसंग्रहगाथा व्याख्यानार्था ॥ पुद्गलानाश्रित्येमामष्टादशसूत्रीमाह—

नेरइयाणं० (सू० १३)

कइविहा पोग्गला भिज्जंतित्ति, तीव्रमंदमध्यमभेदेन भेदवन्तः स्युः उद्वर्तनापवर्तनाकरणाभ्यां, 'कम्मदव्व'त्ति समानजाती-

यकर्मद्रव्यराशिर्वर्गणा; तामधिकृत्य आश्रित्य, कर्मद्रव्यवर्गणासत्का इत्यर्थः, 'अणू चेव'त्ति सूक्ष्माश्च बादराश्चेति, यत औदारिकादिद्रव्याणां मध्ये कर्मद्रव्याण्येव सूक्ष्माणि, एवं चयादयः शब्दार्थभेदेन वाच्याः, किंतु चयोपचयसूत्रयोः 'आहारदव्व'त्ति आहारद्रव्यवर्गणामधिकृत्योक्तं तत्रायमभिप्रायः–वपुराश्रित्य चयोपचयौ प्रागुक्तौ आहारद्रव्येभ्य एव स्यातां, नान्यतः, अत आहारद्रव्यवर्गणामाश्रित्योक्तमिति, उदीरणादयस्तु कर्मद्रव्याणामेव स्युः अतः तत्सूत्रेषूक्तम्–कर्मद्रव्यवर्गणामधिकृत्येति, 'उव्वट्टिंसु'त्ति ३ अपवर्तितवन्तः, इहापवर्तनं कर्मस्थित्यादेरध्यवसायविशेषेण हीनताऽऽपादनम्, एतदुपलक्षणत्वादुद्वर्तनमपि दृश्यं, तत्र स्थित्यादेर्वृद्धिकरणं, 'संकामिंसु'त्ति ३ संक्रमितवन्तः, तत्र संक्रमणं मूलप्रकृत्यभिन्नानामुत्तरप्रकृतीनामध्यवसायविशेषेण परस्परं संचारणं; तथा चाह–"मूलप्रकृत्यभिन्नाः संक्रमयति गुणत उत्तराः प्रकृतीः। नन्वात्माऽमूर्तत्वादध्यवसायप्रयोगेण ॥१॥" अन्यस्त्वेवमाह–"मोत्तूण आउयं खलु दंसणमोहं चरित्तमोहं च। सेसाणं पगईणं उत्तरविहिसंकमो भणिओ ॥१॥" एतदेव निदर्श्यते–यथा कस्यचित् सद्वेद्यमनुभवतोऽशुभकर्मपरिणतिरेवंविधा संजाता येन तदेव सद्वेद्यमसद्वेद्यतया संक्रामतीति, एवं वर्तमानानागतयोरपि वाच्यं, 'निहत्तिंसु'त्ति३ निधत्तान् कृतवन्तः, इह विश्लिष्टानां मध्ये मिथःपुद्गलानां निचयं कृत्वा धारणं रूढिशब्देन निधत्तमुच्यते; उद्वर्तनापवर्तनव्यतिरिक्तकरणानामविषयेण कर्मणोऽवस्थानमिति, 'निकाइंसु'त्ति ३ निकाचितवंतो–नितरां बद्धवन्तः, निकाचनं चैषामेव पुद्गलानां मिथोविश्लिष्टानामेकीकरणमन्योऽन्यावगाहिताग्निप्रतप्तप्रतिहन्यमानसूचीकलापवत्सकलकरणानामविषयत्वेन कर्मणां व्यवस्थापनं, भेदयेतिपदसंग्रहगाथा गतार्था। अथ पुद्गलाधिकारादिदं सूत्रचतुष्कमाह–

नेरइयाणमिति व्यक्तं (सू० १४)

'तेयाकम्मत्ताए'त्ति तेजःशरीरकार्मणशरीरतया तद्रूपतया वा 'तीतकालसमए'त्ति कालः-समयः अतीतकालस्योत्सर्पिण्यादेः परमनिकृष्टोंऽशो तीतकालसमयः 'पडुप्पण्ण'त्ति प्रत्युत्पन्नो-वर्तमानः एवं त्रिकालस्वरूपं वाच्यं,उत्तरमध्येयं, अतीतानागतयोर्विनष्टानुत्पन्नत्वेन असत्त्वात् तद्विषयग्रहणप्रतिषेधः, प्रत्युत्पन्नत्वेऽप्यभिमुखान् गृह्णाति, नान्यान्, 'गहणसमयपुरक्खडे'त्ति ग्रहणसमयः पुरस्कृतो-वर्तमानसमयस्य पुरोवर्ती येषां ते ग्रहणसमयपुरस्कृताः ग्रहीष्यमाणा इतियावत्, उदीरणा च पूर्वगृहीतानामेवातो तीतकालसमयगृहीतानुदीरयन्ति, वर्तमानगृह्यमाणानां ग्रहीष्यमाणानां वा निषेधः, तत उक्तं-'नो पडुप्पण्णे'त्यादिपदद्वयं. वेदनानिर्जरासूत्रयोरप्येवमेवोपपत्तिरिति। अथ कर्माधिकारादेवेदमष्टसूत्री—

नेरइयाणं भंते ! जीवाओ किं चलियंति (सू० १५)

जीवप्रदेशेभ्यश्चलितं-अनवस्थानशीलं यदितरच्चाचलितं तदेव बध्नाति, एवमुदीरणावेदनापवर्तनासंक्रमनिधत्तनिकाचनानि भाव्यानि, निर्जरा च पुद्गलानां निरनुभावीकृतानामात्मप्रदेशेभ्यः शातनं, सा नियमाच्चलितस्य कर्मणो, नाचलितस्य, इह सङ्ग्रहणीगाथा गतार्था, कालमुदयशब्देनोदीरणा गृहीतेति। उक्ता नारकवक्तव्यता,अथ चतुर्विंशतिदंडकक्रमागतामसुरकुमारवक्तव्यतामाह-असुरकुमारवक्तव्यता नारकवक्तव्यतावन्नेया, यतः 'ठिइऊसासाहारे'त्यादिगाथोक्तानि ४० सूत्राणि 'परिणयचिए' इति गाथोक्तानि ६ 'भेइयचिए' इति गाथोक्तानि १८ 'बंधोदये' इति गाथोक्तानि ८, तदेवं च द्विसप्ततिः सूत्राणि नारकप्रकरणोक्तानि त्रयोविंशतावसुरादिप्रकरणेषु समानि. नवरं-विशेषोऽयं-उक्कोसेणं साइरेगं सागरोवमंति इत्युक्तं बलीन्द्रमाश्रित्य, यतः—"चमर बलि सारमहियं"ति, 'सत्तण्हं थोवाणं'ति सप्तानां स्तोकानामुपरीति गम्यते, स्तोकलक्षणं चेदं-"हट्ठस्स अणवगल्लस्स निरुवकिट्ठस्स जंतुणो। एगे ऊसासनी-

सासे एस पाणुत्ति वुच्चइ ॥१॥ सत्त पाणूणि से थोवे, सत्त थोवाणि से लवे । लवाणं सत्तहत्तरिए, एस मुहुत्ते वियाहिए ॥२॥" इदं जघन्यमुच्छ्वासादिमानं जघन्यस्थितिकानां,उत्कृष्टं चोत्कृष्टस्थितिकानां, 'चउत्थभत्तस्स'त्ति चतुर्थभक्तमित्येकोपवासस्य संज्ञा, एकत्र दिने भुक्त्वाऽहोरात्रमतिक्रम्य तृतीये भुङ्क्ते इति भावः, नागकुमारवक्तव्यतायां 'उक्कोसेणं दो देसूणाइं पलिओवमाइं'ति यदुक्तं तदुत्तरश्रेणिमाश्रित्य, यतः-"दाहिण दिवड्ढ पलियं दो देसूणुत्तरिल्लाण"मिति, 'मुहुत्तपुहुत्तस्स'त्ति मुहूर्तः-उक्तलक्षण एव, पृथक्त्वं द्विप्रभृतिरानवभ्यः संख्याविशेषः, एवं 'सुवण्णकुमाराणवि'त्ति नागकुमाराणामिव सुपर्णकुमाराणामपि स्थित्यादि वाच्यं, जाव थणियकुमाराणंति यावत् स्तनितकुमाराणां । अथ पृथिव्यादिस्थित्यादीन्याह-'पुढवी'त्यादि व्यक्तमावनस्पतिसूत्रात्, नवरं 'अंतोमुहुत्तं'ति मुहूर्तसान्तरन्तमुहूर्तं, भिन्नमुहूर्तमित्यर्थः 'उक्कोसेणं बावीसं वाससहस्साइं'ति तत् खरपृथिवीमाश्रित्योक्तं,यदाह-"सण्हा य १ सुद्ध २ वालु०" 'वेमायाए'त्ति विषमा विविधा वा मात्रा-कालविभागो विमात्रा तया, इदमुक्तं स्यात्-विषमकाला पृथिवीकायिकानामुच्छ्वासादिक्रिया, इयत्कालादिति या न निरूपयितुं शक्या, 'जहा नेरइयाण'मित्यतिदेशात् 'खेत्तओ असंखेज्जपएसोगाढाइं कालओ अण्णयरठिइयाइं' इत्यादि दृश्यं, 'निव्वाघाए'त्ति व्याघातः आहारस्य लोकान्तर्निष्कुटेषु कोणेषु स्यात्, नान्यत्र, षट्सु दिक्षु, कथं ?, चतसृषु पूर्वादिदिक्षु ऊर्ध्वमधश्च पुद्गलग्रहणं करोति, तत्स्थापना चैवं 'वाघायं' व्याघातं 'पडुच्च'त्ति प्रतीत्य, व्याघातो लोकान्तकोणेषु स्यात् तत्र च 'सिय तिदिसिं'ति स्यात्-कदाचित् तिसृषु दिक्षु आहारग्रहणं स्यात्, कथं ?, यदा पृथ्वीकायिकोऽधस्तने उपरितने वा कोणे स्थितः स्यात् तदाऽधस्तादलोकः पूर्वदक्षिणयोश्चालोकः, एवं तिसृणा-

| | | |
|---|---|---|
| | पू. | |
| उ. | उर्ध्व अध | द. |
| | प. | |

मलोकावृतत्वात् तदन्यासु तिसृषु दिक्षु पुद्गलग्रहणं स्यात्, एवमुपरितनकोणेऽपि पुद्गलग्रहणं वाच्यं, यदाऽध उपरि वाऽलोको न स्यात्तदा चतसृषु, यदा पूर्वादीनां षण्णां दिशामन्यतरस्यामलोकः स्यात् तदा पञ्चस्वपि, 'सेसं'ति शेषं भणितावशेषं तथैव यथा नारकाणां तथा पृथिवीकायिकादीनामपि, तच्चेदं–'जाइं भंते! लुक्खाइं आहारेंति ताइं किं पुट्ठाइं अपुट्ठाइं ओगाढाइं अणोगाढाइं' इत्यादि, 'नाणत्तं'ति नानात्वं–भेदः पृथिव्यादीनां नारकापेक्षयाऽऽहारं प्रतीदं–कतिभागमाहारेंति इति, एवं फासाइंति आहारपुद्गलान् स्पर्शयन्ति, स्पर्शनेन्द्रियेण आहारपुद्गलानां कतिभागं स्पृशन्तीत्यर्थः, 'सेसं जह'त्ति, तच्चैवं–'पुढविकाइयाणं भंते! पुव्वाहारिया पोग्गला परिणया' इत्यादि प्राग्वद्व्याख्येयं, पृथ्वीवदप्तेजोवायूनां स्वरूपं ज्ञेयं, नवरं 'ठिई'त्ति (१६ सू.)'जा जस्स'त्ति जघन्यमन्तर्मुहूर्तं सर्वेषां, उत्कृष्टं तु त्रयाणां अपां सप्त वर्षसहस्राणि, तेजसामहोरात्रत्रयं वायूनां त्रीणि वर्षसहस्राणि जाव वणस्सइत्ति वनस्पतीनां दश, इत्युक्ता पृथिव्यादिपञ्चकस्थितिः 'बेंदियाणं'ति द्वीन्द्रियाणां द्वादश वर्षाणि, द्वीन्द्रियाहारसूत्रं चैवं 'तत्थ णं'ति तस्यायमर्थः-असंख्यातसामयिक आहारकालः स्यात्, स चावसर्पिण्यादिरूपोऽप्यस्ति अत उच्यते–आन्तर्मौहूर्तिकः, तत्रापि विमात्रया अंतर्मुहूर्तसमयासंख्यातत्वस्यासंख्येयभेदत्वादिति 'बेंदियाणं दुविहे'त्ति लोमाहार ओघतो वर्षादिषु यः पुद्गलप्रवेशः, प्रक्षेपाहारस्तु कावलिकः, तत्र प्रक्षेपाहारे बहवः अस्पृष्टा एव शरीरादन्तर्बहिश्च विध्वंसन्ते, स्थौल्यसौक्ष्माभ्यां, अत एव आह--जे पोग्गले पक्खेवाहारत्ति, 'असंखिज्जभागं'ति, असंख्यातभागं 'अणेगाइं'ति असंख्येयभागाः अणासाइंति रसनेन्द्रियतः अफासाइंति स्पर्शनेन्द्रियतः, सव्वत्थोवत्ति सर्वस्तोकाः, अनास्वाद्यमानानां अस्पृश्यमानानां चानंतभागवर्तिनो रसनेन्द्रियविषया इति, ये त्वस्पृश्यमानास्तेऽनन्तगुणाः रसनेन्द्रियविषयेभ्यः सकाशात्, 'तेंदिय'त्ति त्रिचतुरिन्द्रिययोः स्थितिः एकोनपञ्चाशद् दिनानि षण्मासाश्च, तथाऽऽहारेऽपि नानात्वं अणाघाइंति अनाघ्रायमाणानि, अत्रैतदतिरिक्तं

घ्राणेन्द्रियं, चतुरिन्द्रियाणां चक्षुरधिकं, एतन्नानात्वं ज्ञेयं, पञ्चेन्द्रियतिरश्चां स्थितिं जघन्यतोऽन्तर्मुहूर्ता उत्कृष्टतस्त्रिपल्योपमां च भणित्वा उच्छ्वासो विमात्रया वाच्यः, 'छट्ठभत्तस्स'त्ति तद्देवकुरूत्तरकुरुतिर्यक्षु लभ्यते, मनुष्यसूत्रे 'अट्ठमभत्तस्स'त्ति देवकुर्वादिमिथुनकनरानाश्रित्य ज्ञेयमिति, 'वाणमंतराणं'ति व्यन्तराणां स्थितौ नानात्वं, स्थितेरवशेषं प्रागुक्तमाहारादि वस्तु यथा नागकुमाराणां, व्यन्तराणां नागकुमाराणां च प्रायः साधर्म्यात्, तत्र व्यन्तरस्थितिर्जघन्येन दश वर्षसहस्राणि उत्कर्षेण तु पल्योपममिति, 'जोइसियाणं'ति तत्र ज्योतिष्कस्थितिर्जघन्येन पल्योपमाष्टभागः, उत्कर्षेण वर्षलक्षाधिकं पल्योपमं, 'उस्सासो'त्ति उच्छ्वासश्च तेषां 'जहण्णेणं'ति पृथक्त्वं द्विप्रभृतिरानवभ्यः, तत्र यत् जघन्यं मुहूर्तपृथक्त्वं तद्द्वित्रा मुहूर्ताः, उत्कृष्टं तदष्टौ नव च, आहारस्तथैव ज्ञेयः, 'वेमाणि'त्ति वैमानिकानां 'ओहिय'त्ति औधिकी सामान्या, सा च पल्योपमादिका त्रयस्त्रिंशत्सागरोपमान्ता, जघन्यमुच्छ्वासप्रमाणं जघन्यस्थितिकदेवान् इतरत्तूत्कृष्टस्थितिकदेवांश्चाश्रित्य ज्ञेयं, अत्र गाथा 'जस्स जइ सागराइं तस्स ठिई तत्तिएहिं पक्खेहिं। ऊसासो देवाणं वाससहस्सेहिं आहारो ॥१॥ ग्रन्थेनैवं चतुर्विंशतिर्दण्डा उक्ताः, एवमुक्ता नारकादिकर्मवक्तव्यता, सा आरंभपूर्विका इत्यारंभनिरूपणायाह—

जीवा णं भंते किमायारंभत्ति(१७सू.)आरंभो-जीवोपघातः;तत्र आत्मानं आत्मना वा स्वयमारभन्ते इत्यात्मारंभाः परमारभन्ते परेण वाऽऽरंभयन्तीति परारंभाः तदुभयं—आत्मपररूपं तदुभयेन वाऽऽरभन्ते इति तदुभयारंभाः,आत्मपरोभयारंभवर्जितास्त्वनारंभाः इति प्रश्नाः ४, नवरं अस्तिशब्दस्याव्ययत्वेन बहुत्वार्थत्वादस्ति—विद्यन्ते सन्तीत्यर्थः, 'एगइय'त्ति एकका:—एके केचन जीवाः कदाचिदात्मारंभाः कदाचित् परारंभाः कदाचिदुभयारंभाः, एते एव नोऽनारंभाः, भिन्नार्थत्वं त्वेवम्—एके जीवा असंयताः आत्मारंभाः परारंभा वा इति, 'से केणट्ठेणं'ति अथ केन कारणेन ?, 'दुविहा पण्णत्त'त्ति मयाऽन्यैश्च केवलिभिः, अनेन सर्वसर्वविदां

मत(ता)भेदमाह, प्रमत्तसंयतस्य हि शुभोऽशुभश्च योगः स्यात्, संयतत्वात् प्रमादपरत्वाच्च, तत आह–'सुहं जोगं पडुच्च'त्ति शुभं-योगं–उपयुक्ततया प्रत्युपेक्षणादिक्रियाकरणं, अशुभयोगं तु तदेवानुपयुक्ततया, आह च–"पुढवीआउकाए तेऊवाऊवणस्सइतसाणं। पडिलेहणापमत्तो छण्हंपि विराहओ होइ ॥१॥" "सव्वे पमत्तजोगा समणस्स उ होइ आरंभो" अतः शुभाशुभयोगौ आत्मारंभादिकारणं, 'अविरइं पडुच्च'त्ति, इहायं भावः–यद्यप्यसंयतानां सूक्ष्मैकेन्द्रियादीनामात्मारंभादित्वं साक्षान्नास्ति तथाऽप्यविरतिं प्रतीत्य तदस्ति तेषां, न हि ते ततो निवृत्ताः, अतोऽसंयतानामविरतिस्तत्र कारणं, निवृत्तानां च कथंचिदात्मारंभाद्यारंभकत्वे[ना]-प्यनारंभकत्वं, यदाह–"जा जयमाणस्स भवे०"त्ति, 'से तेणट्ठेणं' अथ तेन कारणेनेति। अथात्मारंभकादित्वं नारकादिचतुर्विंशतिदंडकेषु भावयन्नाह–'नेरइयाणं'ति व्यक्तं, नवरं मनुष्येषु संयतासंयतप्रमत्ताप्रमत्तभेदाः पूर्वोक्ताः सन्ति ततस्ते यथा जीवास्तथाऽध्येतव्याः, किन्तु संसारसमापन्ना इतरे च ते न वाच्याः, भवव्रर्तित्वात्तेषामिति, व्यन्तरादयो यथा नारकास्तथाऽध्येतव्याः, असंयतत्वसाधर्म्यादिति। अथ सलेश्यांस्तान् तैरात्मारंभादिदंडकैरेव निरूपयन्नाह, तत्र 'सलेस्स'त्ति लेश्यावन्तो जीवाः 'जहा ओहिय'त्ति यथा ओघिकाः–सामान्या जीवा नारकाद्यभिधानविशेषरहिता (स्तथा) वाच्याः, तच्चेदं–सलेसा णं भंते! जीवा किमायारंभा०, इति एको दंडकः सामान्यः प्रथमः, कृष्णादिलेश्याभेदादन्ये षट्, एवं सर्वे सप्त, नवरं कृष्णादिलेश्यात्रये प्रमत्ताप्रमत्तविशेषणे न वाच्ये, यतः कृष्णादिलेश्यासु अप्रशस्तभावरूपासु संयतत्वं नास्ति, यच्चोच्यते–'पुव्वपडिवन्नओ पुण अण्णयरीए उ लेसाए'त्ति तद् द्रव्यलेश्यामाश्रित्येति ज्ञेयं, ततस्तासु प्रमत्ताद्यभावः, तत्र सूत्रं चेदं–'कण्हलेसा णं भंते! जीवा किं आयारंभा ४?, गोयमा! आयारंभा जाव नो अणारंभा, से केण०, गोयमा! अविरइं पडुच्च'त्ति, एवं नीलकापोतलेश्यादंडकौ वाच्यौ, तथा तेजोलेश्यादे३-

जीवस्थानस्य दंडकाः ३ वाच्याः, यथा औघिकदंडकस्तथैतेऽपि, नवरं तेषु सिद्धा न वाच्याः, सिद्धानामलेश्यत्वात्, तच्चैवं—तेउलेस्सा णं भंते ! जीवा किं आया०? ४, गोयमा ! अत्थेगइया आयारंभावि जाव नो अणारंभा ४, अत्थेगइया नो आयारंभा जाव अणारंभा ४, से केणट्ठेणं०?, गोयमा ! दुविहा तेउलेस्सा पन्नत्ता, तंजहा—संजया य असंजया य'इत्यादि ॥ अथ भवाभावहेतुकं ज्ञानादिधर्मकदम्बमाह—

इहभविए त्ति ( सू० १८ )

इह भवे—वर्तमानजन्मनि यद्वर्तते तदैहभविकं ज्ञानं, एवं परभवेऽनंतरमनुगामितया यद्वर्तते तत्पारभविकं ज्ञानं,'तदुभय'त्ति इहपरलक्षणयोर्भवयोर्यदनुगामितया स्यात्तदुभयभविकं ज्ञानमिति प्रश्नः, 'इहभविए'त्ति उत्तरं तथैव, 'दंसणंपि एवमेव'त्ति दर्शनं—सम्यक्त्वमवसेयं, मोक्षाधिकारात्, चरित्रसूत्रं व्यक्तं, तत्र विशेषः पुनरयं—चारित्रमैहभविकमेव, नहि चारित्रवानिह भूत्वा तेनैव चारित्रेण पुनश्चारित्री स्यात्, यावज्जीवावधिकत्वात्तस्य, अनुष्ठानरूपत्वाच्च चारित्रस्य शरीराभावे तदयोगात्, अत एवोच्यते—'सिद्धे नो चरित्ती नो अचरित्ती' नो अचरित्तीति अविरतेरभावादिति, एवं तपस्संयमावपि वाच्यौ, चारित्ररूपत्वात्तयोरिति ।

असंवुडे णं ( सू० १९ )

असंवृतोऽनगारः—अविद्यमानगृहः, साधुरित्यर्थः, सिज्झइत्ति सिध्यति सिद्धियोग्यः स्यात् 'बुज्झइ'त्ति उत्पन्नकेवलज्ञानतया सर्वजीवादिपदार्थान् जानाति, त(य)दाऽर्थान् जानाति तदा बुध्यते इत्युच्यते,'मुच्चइ'त्ति स एव केवली कर्मभिः प्रतिसमयं विमुच्यमानो मुच्यते इति भण्यते, 'परिनिव्वाइ'त्ति स एव यथा यथा समयं समयं कर्मक्षयमाप्नुयात् तथा तथा शीतीभवन् परि-

निर्वातीति प्रोच्यते, स एव आयुरन्त्यसमये सर्वदुःखानामन्तं कुर्यादिति प्रश्नः, उत्तरं च कण्ठ्यं, 'नो इणट्ठे समट्ठे'त्ति नायमर्थः समर्थो–बलवान्. 'आउयवज्जाओ'त्ति यस्मादेकत्र भवग्रहणे सकृदेवान्तर्मुहूर्तमात्रकाले एवायुषो बन्धः तत उक्तमायुर्वर्ज्जा इति, 'सिढिलबंधणबद्धाओ'त्ति श्लथबन्धनं स्पृष्टता वा बद्धता वा निधत्तता वा तेन बद्धाः–आत्मप्रदेशेषु सम्बन्धिताः पूर्वावस्थायाम(संवृतत्वाद)शुभतरपरिणामस्य च कथंचिदभावादिति शिथिलबंधनबद्धाः, एताश्च शुभा एव द्रष्टव्याः, असंवृतभावस्य निन्दाप्रस्तावात्, ताः किमित्याह–'धणियबंधणबद्धाओ'त्ति गाढतरबंधना बद्धावस्था वा निधत्तावस्था वा निकाचितावस्था वा प्रकरोति–कर्तुमारभते, असंवृतत्वस्याशुभयोगरूपत्वेन गाढतरप्रकृतिबंधहेतुत्त्वाद्, आह च–"जोगा पयडिपएसं"ति, पौनःपुन्यभावे त्वसंवृतत्वस्य ताः करोत्येवेति, तथा 'हस्सकाल'त्ति ह्रस्वकालस्थितिकाः दीर्घकालस्थितिकाः प्रकरोति, तत्र स्थितिः–उपात्तस्य कर्मणोऽवस्थानं तामल्पकालां महतीं करोतीत्यर्थः, असंवृतत्वस्य कषायरूपत्वेन स्थितिबंधहेतुत्वाद्, आह च–"ठिइमणुभागं कसायओ कुणइ"त्ति, तथा 'मंदाणुभावे'त्यादि, इहानुभावो विपाको रसविशेष इत्यर्थः, ततश्च मन्दानुभावाः–परिपेलवरसाः सतीर्गाढरसाः प्रकरोति, असंवृतत्वस्य कषायरूपत्वादेव, अनुभागबंधस्य च कषायप्रत्ययत्वादिति, 'अप्पपएसे'त्यादि, अल्पं–स्तोकं प्रदेशाग्रं–कर्मदलिकपरिमाणं यासां ताः तथा ता बहुप्रदेशाग्राः प्रकरोति, प्रदेशबंधस्यापि योगप्रत्ययत्वादसंवृतस्य च योगरूपत्वादिति, 'आउयं चे'त्यादि, आयुः पुनः कर्म स्यात्–कदाचिद् बध्नाति स्यात्–कदाचित् न बध्नाति, यस्मात् त्रिभागाद्यवशेषायुषः परभवायुः प्रकुर्वन्ति इति, तेन यदा त्रिभागादिः तदा बध्नाति अन्यदा न बध्नातीति, तथा 'असाये'त्यादि, असातवेदनीयं च–दुःखवेदनीयं कर्म पुनर्भूयो भूय उपचिनोति–उपचितं करोति, ननु कर्मसप्तकान्तर्वर्त्तित्वादसातवेदनीयस्य पूर्वोक्तविशेषणेभ्य एव तदुपच-

यप्रतिपत्तेः किमेतद्ग्रहणेनेति, अत्रोच्यते, असंवृतोऽत्यन्तदुःखितो भवितेतिप्रतिपादनेन भयजननादसंवृतत्वपरिहारार्थमिदमित्यदुष्टमिति, 'अणाइयं'ति अविद्यमानादिकं, अज्ञातिकं वा-अविद्यमानस्वजनं, ऋणं वाऽतीतं, ऋणजनितदुःस्थता(तिक्रान्तदुःस्थता)निमित्ततयेति ऋणातीतं, 'अणवयग्गं'ति अवयग्गंति देशीवचनोऽन्तवाचकस्तन्निषेधात् अणवयग्गं, अनन्तमित्यर्थः, 'दीहमद्धं'ति दीर्घाद्धं-दीर्घकालं दीर्घाध्वं वा-दीर्घमार्गं 'चाउरंत'ति चतुरंतं देवादिगतिभेदात् पूर्वादिदिग्भेदाच्च चतुर्विभागं, 'अणुपरियट्टइ' पुनः पुनर्भ्राम्यति, 'संवुडे णं'ति संवृतः-साधुः प्रमत्ताप्रमत्तादिः, स चरमशरीरोऽचरमशरीरश्च स्यात्, तत्र यः चरमशरीरस्तमाश्रित्येदं सूत्रं-'संवुडे णं'त्ति, अनगारः संवृतत्वात् सिध्यति इत्युक्तं, यस्तु तदन्यः स विशिष्टगुणविकलः सन् किं देवः स्यान्नवेति प्रश्नयन्नाह-

जीवे ण मिति (सू० २०)

व्यक्तं, नवरं असंयतः-असाधुः संयमरहितो वा 'अविरए'त्ति प्राणातिपातादिविरतिरहितः, विशेषात्तपसि योऽनायुक्तः स्यात् सोऽप्यविरतश्च, 'अपडिहए'त्ति अतीतापेक्षया अप्रतिहतं-न निषिद्धं अनागतापेक्षया न प्रत्याख्यातं पापकर्म-प्राणातिपातादि येन सः अप्रतिहतप्रत्याख्यातपापकर्मा, 'इओ'त्ति इतो-मनुष्यभवाच्युत्वा-मृतः ''पेच्च'त्ति प्रेत्य-जन्मान्तरे देवः स्यात् ?, 'जे इमे'त्ति ये इमे प्रत्यक्षाः पञ्चेन्द्रियतिर्यञ्चो मनुष्या वा 'गामागर'त्ति तत्र ग्रामो—जनपदप्रायजनाश्रितः, आकरो-लोहाद्युत्पत्तिस्थानं, नकरं-कररहितं, निगमो-वणिग्जनप्रधानं स्थानं, राजधानी-यत्र राजा स्वयं वसति, खेटं-धूलीप्राकारं, कर्वटं-कुनगरं, मडंबं-सर्वतो दूरवर्तिसंनिवेशान्तरं, द्रोणमुखं-जलस्थलपथोपेतं, पत्तनं-विविधदेशागतवस्तुस्थानं, तच्च द्विधा-जलपत्तनं स्थलपत्तनं च, आश्रमः-तापसादिस्थानं, सन्निवेशो-घोषादिः, 'अकामतण्हाए'त्ति अकामानां-निर्जराद्यनभिलाषिणां सतां तृष्णा-तृड् अकामतृष्णा तया, एव-

मकामक्षुधा, 'अकामबंभचेरवासेण'त्ति अकामो वा-निरभिप्रायो ब्रह्मचर्येण-स्त्र्यादिभोगशून्येन वासो-रात्रौ शयनमकामब्रह्मचर्यवासोऽतस्तेन, 'अकाम'त्ति अकामा येऽस्नानकादयस्तेभ्यो यः परिदाहः तेन, तत्र स्वेदः-प्रस्वेदः याति च लगति चेति जल्लो-रजो मलः-कठिनीभूतं रजः पङ्को-मल एव स्वेदेनार्द्रीभूतः 'भुज्जतरं वा' भूयस्तरं वा-बहुतरं कालं यावदात्मानं 'परिकिलेसंति' विबाधयन्ति, 'कालमासे'त्ति कालो-मरणं तस्य मासः कालमासः तस्मिन् कालं कृत्वेति 'उववत्ता'त्ति उपपत्तारो भवन्ति, 'कुसुमिय'त्ति संजातपुष्पं 'मोयरिय'त्ति संजातकुसुमविशेषं 'लवइय'त्ति लवकितं-संजातपल्लवलवमंकुरवदिति 'थवइय'त्ति स्तबकितं-जातपुष्पस्तबकं 'गुलइय'त्ति जातगुल्मकं, गुल्मकं-लतासमूहः, 'गुच्छिय'त्ति संजातगुच्छं, गुच्छश्च पत्रसमूहः, 'जमलिय'त्ति यमलतया-समश्रेणितया तत्तरूणां व्यवस्थितत्वात् यमलितं 'जुगलिय'त्ति युगलतया तत्तरूणां युगलितं 'विणमि'त्ति विनमितं पुष्पफलभरेण, सुविभक्ताः सुनिष्पन्नतया पिण्ड्यो लुम्ब्यो मञ्जर्यस्ता एवावतंसकाः-शेखरकास्तान् धारयतीति यत्तत्सुविभक्तपिण्डीलुम्बीमञ्जर्यवतंसकधरं 'सिरीए'त्ति श्रिया वनलक्ष्म्या 'आइण्णे'त्ति आकीर्णाः—स्वस्व देवदेवीवृन्दैर्व्याप्ताः, क्वचित्तु 'विइन्न'त्ति विकीर्णा-विशेषेण पूर्णाः, 'उवत्थड'त्ति उत्पतद्भिर्निपतद्भिः क्रीडासक्तैरुपर्युपरिच्छादिताः उपस्तृताः 'संथड'त्ति समंततश्चरद्भिराच्छादिताः संस्तृताः 'फुड'त्ति स्पृष्टा आसनशयनादिना, स्फुटा वा निरन्तर व्यन्तरसुरनिकरकिरणोद्योतेन 'अवगाढ'त्ति गाढं-बाढमवगाढाः सकलक्रीडाकारणस्थानभोगादिनाऽधोऽपि व्याप्ताः, प्राकृतत्वादवगाढा इति, इह च देवत्वयोग्यजीवाभिधाने तदयोग्यः सामर्थ्यादवसीयते, 'अत्थेगइए नो देवे सिय'त्ति 'सेवं भंते'त्ति यत् मया पृष्टं तद् भगवद्भिः प्रतिपादितं तदेवं-इत्थमेव भदन्त!, नान्यथा, अनेन भगवद्वचने बहुमानं दर्शयति, एवं कृत्वा श्रमणं० गौतमो वंदते नमस्यति चेति ॥

इति प्रथमशते प्रथमोद्देशकदुर्गपदविवरणं समाप्तम् ॥ अथ द्वितीय आरभ्यते—

'जीवे णं भंते! सयंकडं दुक्खं'ति (सू० २१)

स्वयंकृतं दुःखं, न परकृतं, वेदयतीति प्रश्नः, उत्तरं तु यदुदीर्णं तद्वेदयति, अनुदीर्णस्य कर्मणो वेदनमेव नास्ति, तत उदीर्णं वेदयति, नानुदीर्णं च, 'एवं जाव वेमाणिए'इत्यनेन चतुर्विंशतिदंडकः सूचितः, 'नेरइया णं भंते! सयंकडं दुक्ख'मित्यादि। अथायुःप्रधानत्वान्नारकादिव्यपदेशस्यायुराश्रित्य दंडकद्वयं, तत्र 'एगत्तपोहत्तिय'त्ति क्वचिद्वस्तुनि एकत्वबहुत्वार्थयोर्विशेषो दृष्टो, यथा सम्यक्त्वादेरेकं जीवमाश्रित्य षट्षष्टिः सागराणि साधिकानि स्थितिकालः प्रोक्तः, नानाजीवानाश्रित्य पुनः सर्वाद्धा, 'नेरइए०' इति व्यक्तं, 'महासरीरा य अप्पसरीर'त्ति तत्र जघन्यमल्पत्वमंगुलासंख्येयभागमात्रत्वं, उत्कृष्टं तु महत्त्वं पञ्चधनुःशतमानत्वं, एतच्च भवधारणीयवपुरपेक्षया, उत्तरवैक्रियापेक्षया वा जघन्यमंगुलसंख्यातभागमात्रत्वं इतरत्तु धनुःसहस्रमानत्वं, वपुर्वैपम्याभिधाने सति आहारोच्छ्वासयोर्वैषम्यं सुखप्रतिपाद्यं स्यात् तेन आहारोच्छ्वासप्रश्नयोरुत्तरमाह—'तत्थ णं'मिति, तत्र ये महाशरीरास्ते बहुतरान् पुद्गलानाहारयन्ति, दृश्यते हि लोके बृहच्छरीरो बह्वाशी लघुशरीरश्चाल्पभोजी हस्तिशशकवत्, इदं व्यवहारत उक्तं, कोऽपि स्थूलवपुरल्पमश्नाति कोऽपि लघुवपुर्भूरि भुङ्क्ते (तथाविध)मनुष्यवत्, उस्ससंति उच्छ्वासतया गृह्णन्ति निस्ससंति निःश्वासतया मुञ्चन्ति, 'अभिक्खं'ति अभीक्ष्णं—पौनःपुन्येनेति, 'आहच्च'त्ति कदाचिदाहारयन्ति कदाचिन्न, 'नेरइया णं भंते! सव्वे समकम्म'त्ति समकर्मसूत्रे 'पुव्वोववण्णगा य पच्छोववण्णग'त्ति तत्र पूर्वोत्पन्नानामायुषस्तदन्यकर्मणां च बहुतरवेदनादल्पकर्मत्वं, पश्चादुत्पन्नानां च नारकाणामायुष्कादीनामल्पतराणां वेदितत्वात् महाकर्मत्वं, एतच्च

सूत्रं समानस्थितिनारकानाश्रित्योक्तं, एवं वर्णसूत्रे पूर्वोत्पन्नस्याल्पकर्मतया विशुद्धो वर्णः, पश्चादुत्पन्नस्य च बहुकर्मत्वादविशुद्धतरो वर्ण इति, एवं लेश्यासूत्रेऽपि, इह च लेश्याशब्देन भावलेश्या ग्राह्या, बाह्यद्रव्यलेश्या वर्णद्वारेणैवोक्तेति, 'समवेयण'त्ति समवेदनाः, 'सण्णिभूय'त्ति संज्ञा–सम्यग्दर्शनं तद्वन्तः संज्ञिनः संज्ञिनो भूताः संज्ञिभूताः, तद्विपरीता असंज्ञिभूता–मिथ्यादृष्टयः, 'तत्थ णं'ति तत्र मिथ्यादर्शनमपहाय सम्यग्दर्शनजन्मना समुत्पन्ना इति अहो महद्दुःखसंकटमिदमकस्मादस्माकमापतितं न कृतो जैनधर्मः सर्वकर्मक्षयकृत् अतो महावेदनास्ते, अन्ये त्वसंज्ञिभूता–मिथ्यादृष्टयः ते कृतकर्मफलमिदमित्येवमविजानन्तोऽनुपतप्तचित्ता अल्पवेदनाः स्युरिति, 'समकिरिय'त्ति समाः–तुल्याः क्रियाः–कर्मबन्धनिबन्धनभूता आरंभिक्यादिका येषां ते समक्रियाः, 'आरंभिय'त्ति आरंभः–पृथिव्याद्युपमर्दः स कारणं यस्याः सा आरंभिकी 'पारिग्गहिय'त्ति परिग्रहो–धर्मोपकरणवर्जवस्तुस्वीकारो धर्मोपकरणमूर्च्छा वा स हेतुर्यस्याः सा पारिग्रहिकी, 'मायावत्तिय'त्ति माया–अनार्जवं क्रोधादिरपि च स प्रत्ययो–निमित्तं यस्याः सा मायाप्रत्यया, 'अप्पच्च'त्ति अप्रत्याख्यानेन–निवृत्त्यभावेन क्रिया–कर्मबंधादिकरणमप्रत्याख्यानक्रिया, 'मिच्छादंसण'त्ति मिथ्यादर्शनं प्रत्ययो–हेतुर्यस्याः सा मिथ्यादर्शनप्रत्यया, ननु मिथ्यात्वाविरतिकषाययोगाः कर्मबंधहेतव इति प्रसिद्धिः, इह तु आरंभादयस्तेऽभिहिता इति कथं न विरोधः?, उच्यते, आरंभपरिग्रहशब्दाभ्यां योगपरिग्रहो, योगानां तद्रूपत्वात्, शेषपदैस्तु शेषबंधहेतुपरिग्रहः प्रतीयते एवेति, तत्र सम्यग्दृष्टीनां चतस्र एव, मिथ्यात्वाभावात्, शेषाणां तु पञ्चापि, सम्यग्मिथ्यात्वस्य मिथ्यात्वेनैवेह विवक्षितत्वादिति। 'सव्वे समाउय'त्ति प्रश्नोत्तरं चतुर्भङ्ग्या स्यात्, निबद्धदशवर्षसहस्रप्रमाणायुषो युगपच्चोत्पन्नाः १ भङ्गः, तेष्वेव दशवर्षसहस्रस्थितिषु नरकेषु प्रथमसमुत्पन्नाः अपरे तु पश्चादिति २ भङ्गः, अन्यैर्निबद्धं कैश्चिद्दशवर्षस-

हस्वस्थितिकेषु केश्चित् पञ्चदशवर्षसहस्रस्थितिषु च उत्पत्तिः पुनर्युगपदिति ३ भङ्गः, केचित् सागरोपमस्थितयः केचिद्दशवर्षसहस्रस्थितयः एवं विषमायुषो विषममेव चोत्पन्ना इति ४ भङ्गः, इह संग्रहगाथा–आहाराईसु समा कम्मे वन्ने तहेव लेसाए। वियणाए किरियाए आउयउववत्तिचउभंगी॥१॥ 'असुरकुमाराणं'ति असुरकुमारप्रकरणमिदमाहारादिपदनवकोपेतं सूचितं 'जहा नेरइय'त्ति, तत्राहारसूत्रे नारकसमानेऽपि विशेष उच्यते, असुराणामल्पशरीरत्वं भवधारणीयापेक्षया जघन्यतोऽङ्गुलासंख्येयभागमानत्वं महाशरीरत्वमुत्कर्षतः सप्तहस्तमानत्वं, उत्तरवैक्रियापेक्षयाऽल्पशरीरत्वं जघन्यमङ्गुलसंख्येयभागं, महाशरीरत्वं उत्कर्षतो योजनलक्षमानं, तत्रैते महाशरीरा बहुतरपुद्गलान् आहारयन्ति, मनोभक्षणलक्षणाहारापेक्षया, देवानां ह्यसौ स्यात्, एवं सौधर्मदेवानां सप्तहस्तमानतया महाशरीराणामनुत्तरसुराणां च हस्तमानतयाऽल्पशरीराणां क्रमेण वर्षसहस्रद्वयेनाहारः पक्षद्वयेनोच्छ्वासः त्रयस्त्रिंशद्वर्षसहस्राण्याहारः त्रयस्त्रिंशत्पक्षैरुच्छ्वासः 'कम्मवण्णलेसाओ परि(वण्णे)(छिल्ले)यव्वाओ'त्ति पर्यस्तयितव्याः, कर्मादीनि नारकापेक्षया विपर्ययेण वाच्यानि इत्यर्थः, तत्र ये नारकाः पूर्वोत्पन्नास्तेऽल्पकर्मकशुद्धतरवर्णशुद्धतरलेश्या उक्ताः, असुरास्तु ये पूर्वोत्पन्नास्ते महाकर्माणोऽशुद्धवर्णलेश्याश्चेति, कथम्?, ये हि पूर्वोत्पन्ना असुरास्ते कंदर्पाध्मातचित्तत्वात् प्रभूतमशुभं कर्म संचिन्वन्ति अतोऽभिधीयन्ते ते महाकर्माणः, अथवा बद्धायुषो ये ते तिर्यगादिप्रायोग्यकर्मबन्धनात् महाकर्माणः, तथा अशुद्धवर्णलेश्यास्ते, तेषां पूर्वोत्पन्नानां हि क्षीणत्वाच्छुभकर्मणः, पश्चादुत्पन्नास्त्वबद्धायुषोऽल्पकर्माणो बहुतरकर्मणामबन्धनात् शुभकर्मणामक्षीणत्वाच्च शुभवर्णादयः स्युरिति, वेदनाविशेषश्चायम्–ये संज्ञिभूतास्ते महावेदनाः इतरे त्वल्पवेदनाः, एवं नागकुमारादयोऽपि वाच्याः, 'पुढविकाइयाण'मिति 'आहारकम्मवण्णलेस्सा जहा णेरइयाणं'ति चतुःसूत्राणि नारकसूत्राणीव पृथ्वीकायिकाभिलापेनाधीयन्ते, आहार-

भावना चैवं–पृथ्वीकायिकानामंगुलासंख्येयभागमात्रशरीरत्वेऽप्यल्पवपुस्त्वमितरच्चेतः प्रज्ञापनादवसेयं, यतः 'पुढविकाइए पुढविकाइयस्स ओगाहणट्ठयाए चउट्ठाणवडिए'त्ति, ते च महाशरीरा लोमाहारतो बहुतरान् पुद्गलानाहारयन्ति, उच्छ्वसन्ति अभीक्ष्णं महाशरीरत्वादेव, अल्पशरीराणामल्पाहारोच्छ्वासत्वमल्पशरीरत्वादेव, कादाचित्कं तयोः पर्याप्तकेतरावस्थापेक्षमवसेयं, तथा कर्मादिसूत्रेषु पूर्वपश्चादुत्पन्नानां पृथ्वीकायिकानां कर्मवर्णलेश्याविभागो नारकवद्वाच्यः, वेदनाक्रिययोस्तु नानात्वमित्याह–पुढविकाइयाणं सव्वे समवेयणत्ति, 'असण्णि'त्ति असंज्ञिनो–मिथ्यादृष्टयोऽमनस्का वा 'असण्णिभूयं'ति असंज्ञिभूतां, असंज्ञिनां या जायते तामित्यर्थः, एतदेव व्यनक्ति–'अणिदाए'त्ति अनिर्द्धारणया वेदनां वेदयन्ति, वेदनामनुभवन्तोऽपि न पूर्वोपात्ताशुभकर्मपरिणतिरियमिति मिथ्यादृष्टित्वादवगच्छन्ति, अमनस्कत्वाद्वा मत्तमूर्च्छितादिवदिति भावना, 'माईमिच्छ'त्ति मायावन्तो हि तेषु प्रायेणोत्पद्यन्ते, यदाह–"उम्मग्गदेसओ मग्गणासओ गूढहियय माइल्लो। सढसीलो य ससल्लो तिरियाउं बंधए जीवो ॥१॥" ततस्ते मायिन उच्यन्ते, अथवा इह माया अनन्तानुबन्धिकषायोपलक्षणमतोऽनन्तानुबन्धिकषायोदयवन्तोऽत एव मिथ्यादृष्टयो–मिथ्यात्वोदयवर्तिन इति, 'ताणं णियइयाओ'त्ति तेषां–पृथ्वीकायिकानां नियताः पञ्चैव, नतु त्रिप्रभृतयः इति निगमनं, 'जाव चउरिंदिय'त्ति इह महाशरीरत्वमितरच्च स्वस्वावगाहनानुसारेणावसेयं, आहारश्च द्वीन्द्रियादीनां प्रक्षेपलक्षणोऽपीति। 'पंचिंदियतिरिक्खजोणिया जहा णेरइ'त्ति प्रतीतं, नवरमिह महाशरीरा अभीक्ष्णमाहारयन्त्युच्छ्वसन्ति चेति यदुच्यते तत् संख्यातवर्षायुषोऽपेक्ष्य, नासंख्यातवर्षायुषः, तेषां प्रक्षेपाहारस्य षष्ठस्योपरि प्रतिपादितत्वात्, अल्पवपुषां यत् कादाचित्कं तदपर्याप्तकत्वे लोमाहारोच्छ्वासयोरभवनेन पर्याप्तकत्वे च तद्भावेन ज्ञेयमिति, तथा कर्मसूत्रे यत् पूर्वोत्पन्नानामल्पकर्मत्वमितरेषां महाकर्मत्वं च (तत) तद्भववेद्यायुष्कादिकर्मापेक्षया,

तथा वर्णलेश्याद्यन्नयोर्यत् पूर्वोत्पन्नानां शुभवर्णाद्युक्तं तत्तारुण्यात्, पश्चादुत्पन्नानां चाशुभवर्णलेश्यादि बाल्यादनसेयं, लोके तथैव दर्शनादिति। तथा 'संजयासंजय'त्ति संयतासंयता—देशविरताः,'मणुस्सा णं भंते! ते सव्वे समाहारग'त्ति १,'नो इणट्ठे'इत्युत्तरं, नानात्वं, ते 'आहच्च आहारेंति', आहृत्य, कादाचित्कत्वं महाशरीरदेवकुर्वादिमिथुनकनरानाश्रित्य, अल्पशरीरा अभीक्ष्णम् अल्पं च, बालानां तथैव दर्शनात्, संमूर्च्छिममनुष्याणामल्पवपुषां नित्यमाहारसंभवात्, यच्चेह पूर्वोत्पन्नानां शुद्धवर्णादि तत्तारुण्यात् संमूर्च्छिमापेक्षया वेति, 'सरागसंजय'त्ति अक्षीणानुपशान्तकषायाः, 'वीयरागसंजय'त्ति उपशान्तकषायाः क्षीणकषायाश्च, 'अकिरिय'त्ति वीतरागत्वेनारंभादीनामभावादक्रियाः, 'एगा मायाव'त्ति अप्रमत्तसंयतानामेकैव मायाप्रत्यया, 'कज्जइ'त्ति क्रियते भवति, कदाचिदुड्डाहरक्षणप्रवृत्तानामक्षीणकषायत्वादिति, 'आरंभिय'त्ति प्रमत्तसंयतानां सर्वः प्रमत्तयोग आरंभ इतिकृत्वा आरंभिकी स्याद् अक्षीणकषायत्वाच्च मायाप्रत्ययेति, 'वाणमंतर'त्ति व्यन्तरा अल्पवेदनाः स्युरसंज्ञित्वात् तेषामसुरकुमारवत्, इतरे संज्ञिनो व्यन्तरा महावेदनाः संज्ञित्वादेव, यतोऽसुरादिषु व्यन्तरान्तेष्वसंज्ञिनः संज्ञिनश्च उत्पद्यन्ते तेनैवमुक्तं-'वाणमन्तरा सण्णिभूया असण्णिभूया ये'ति, नवरं ज्योतिष्कवैमानिकेषु त्वसंज्ञिनो नोत्पद्यन्ते अतो वेदनापदे तेषां ज्योतिष्कवैमानिकानामेवमधीयते, नवरं वेयणाए दुविहा जोईसिया माईमिच्छ० अमाईसम्मद्दिट्ठिउव०, तत्र मायिमिथ्यादृष्टयोऽल्पवेदनाः इतरे महावेदनाश्च शुभवेदनामाश्रित्येति। अथ(स)लेश्यलेश्याभेदविशेषणमाहारादिपदैर्निरूपयन् दंडसप्तकमाह—'सलेस्सा णं भंते! नेरइया सव्वे समाहारग'त्ति अनेन पदेनाहार १ शरीरो २ च्छ्वास ३ कर्म ४ वर्ण ५ लेश्या ६ वेदना ७ क्रियो ८ पपाता ९ स्व्यपूर्वोक्तनवपदोपेतनारकादिचतुर्विंशतिदंडको लेश्यापदविशेषितः सूचितः, तदन्ये च कृष्णलेश्यादिविशेषिताः पूर्वोक्तनवपदोपेता एव यथासंभवं नार-

कादिपदात्मकाः षट् दंडकाः सूचिताः, तदेवं च एतेषां ७ दंडकानां यो यथाऽध्येतव्यस्तं तं तथा दर्शयन्नाह—'ओहियाणं'ति तत्रौघिकानां—पूर्वोक्तानां सामान्यानां नारकादीनां तथा सलेश्यानामधिकृतानां २ शुक्ललेश्यानां तु ३ सप्तमदंडकवाच्यानामेषां त्रयाणामेको गमः—सदृशः पाठः, सलेश्यः शुक्ललेश्यश्चेत्येवंविधविशेषणकृत एव तत्र भेदः, औघिकदंडकवदनयोः सूत्रमितिहृदयं 'तत्थ जस्सत्थि' इति वक्ष्यमाणपदस्येह संबंधाद्यस्य शुक्ललेश्याऽस्ति स एव तद्दंडकोऽध्येतव्यः, तेनेह पञ्चेन्द्रियतिर्यञ्चो मनुष्या वैमानिकाश्च वाच्याः, नारकादीनां शुक्ललेश्याया अभावात्, 'किण्हलेसनीललेसाणंपि एको गमो' औघिक एवेत्यर्थः, विशेषमाह—'नवरं वेयणाए मायिमिच्छ० अमायिसम्म०' कृष्णलेश्यनीललेश्यदंडके वेदनासूत्रे च 'दुविहा णेरइया पण्णत्ता—सण्णिभूया असण्णिभूया य'त्ति औघिकदंडकाधीतं नाध्येतव्यम्, असंज्ञिनां प्रथमपृथिव्यामेवोत्पादात् 'असण्णी खलु पढमं' इतिवचनात्, प्रथमायां तु कृष्णनीललेश्ययोरभावात्, तर्हि किमध्येतव्यं?, 'मायित्ति अमायित्ति' एते मायिनो मिथ्यादृष्टयश्च महावेदनाः स्युः, यतस्तेऽशुभामुत्कृष्टस्थितिं कुर्युः, प्रकृष्टायां तस्यां महती वेदना स्यात्, इतरेषां तु विपरीता। 'मणुस्सा किरियासु'त्ति मनुष्यपदे क्रियासूत्रे सरागवीतरागत्वे पठिते, ते तु कृष्णनीललेश्यदंडकयोर्नाध्येतव्ये, कृष्णनीलोदये संयमस्य निषिद्धत्वात्, तथा मनुष्याणां 'काउलेस्साए'त्ति कापोतलेश्याया दंडको नीलादिलेश्यादंडकवदध्येतव्यः, णवरं णेरइएत्ति नवरं नारका वेदनासूत्रे औघिकदंडकवद्वाच्याः, ते चैवं—नेरइया दुविहा पं०, तं०—संनिभू० असण्णिभूया यत्ति, असंज्ञिनां प्रथमपृथिव्युत्पादेन कापोतलेश्यासंभवात् इति, 'तेउलेस्सापम्हलेस्स'त्ति तेजःपद्मलेश्ये यस्य स्यातां तमाश्रित्य यथौघिकदंडकः तथैतौ दंडकौ भणितव्यौ, नारकविकलेन्द्रियाणां तेजोवायूनां चाद्यास्तिस्र एव, भवनपति(पृथ्व्यम्बु)वनस्पतिव्यन्तराणामाद्याश्चतस्रः, पञ्चेन्द्रियतिर्यङ्मनुष्याणां

षट् ज्योतिषां तेजोलेश्या वैमानिकानां तिस्रः प्रशस्ताः, आह च—"किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया। जोइससोहम्मी-साण तेउलेसा मुणेयव्वा ॥१॥ कप्पे सणंकुमारे माहिंदे चेव बंभलोगे य। एएसु पम्हलेसा तेण परं सुक्कलेस्सा उ ॥२॥ पुढवी आउ वणस्सइ बायर पत्तेय लेस चत्तारि· तेजोलेश्यान्ताः। गब्भयतिरियनरेसुं छल्लेस्सा तिन्नि सेसाणं ॥३॥" 'सरागवीयरागा य भाणियव्व'त्ति क्रियासूत्रे मनुष्याः सरागवीतरागाः अधीताः इह तु तथा न वाच्याः, तेजःपद्मलेश्ययोर्वीतरागत्वासंभवेन, शुक्ल-लेश्यायामेव वीतरागत्वसंभवात् 'सरागा वीतरागा य' इति न वाच्यं, प्रमत्ताप्रमत्तास्तूच्यन्ते, 'गाह'त्ति उद्देशकादितः संग्रह-गाथा गतार्था ज्ञेया ॥

'लेस्साणं बीओ उद्देसो'त्ति ( सू० २३ )

प्रज्ञापनायाश्चतुरुद्देशकाल्लेश्यापदाद् द्वितीयोद्देशकः सुखावबोधाय भणितव्यः, 'जाव इड्ढि'त्ति ऋद्धिवक्तव्यता यावत्, तत्रैवं-'कइ णं भंते! लेस्सा पण्णत्ता?, गोयमा! छल्लेस्सा' एवं सर्वत्र प्रश्नोत्तरं वाच्यं, यथा नेरइयाणं तिण्णि लेस्सा ३ तेरिक्खिआणं ६ एगिंदियाणं ४ पुढविआउवणस्सईणं ४ तेउवाउबितिचउरिंदियाणं ३ पंचिंदियतिरियमणुयाणं ६ इत्यादि बहु वक्तव्यं यावत् 'एएसि णं भंते! जीवाणं कण्हलेस्साणं जाव सुक्कलेस्साणं कयरे२हिंतो अप्पड्ढिया वा महड्ढिया वा?, गोयमा! कण्हलेस्सेहिंतो नील-लेसा महड्ढिया, नीललेसेहिंतो काउलेसा महि०२'इत्यादि ॥ अथ पशवः पशुत्वमश्नुवते इति यो मन्यते अनादावपि भवे एकधैव जीवावस्थानं(च) इति तद्बोधनार्थं प्रश्नयन्नाह—

जीवस्स णं भंते! तीतद्धाए'त्ति ( सू० २४ )

अनादावतीतकाले 'आदिट्ठस्स'त्ति आदिष्टस्य—अमुष्य नारकादेरित्येवंविशेषितस्य कतिविधः संसारत्ति—संसारसंस्थानकालः, अमुष्य जीवस्य अतीतकाले कस्यां गतावस्थानमासीदिति प्रश्नः, गौतम ! चतुर्विधो, नारकादिगतिभेदात्, नारकानुगतसंसारावस्थानकालस्त्रिधा—शून्यकालः १ अशून्यकालः २ मिश्रकालश्च ३, तिरश्चां शून्यकालो नास्ति, तेषां द्वौ भेदौ स्तः, मनुष्यदेवानां तु त्रिविधोऽप्यस्ति, आह च—"सुन्नोऽसुन्नो मीसो तिविहो संसारचिट्ठणाकालो । तिरियाण सुन्नवज्जो सेसाणं होइ तिविहोऽवि ॥१॥" तत्राशून्यकालस्तावदुच्यते, अशून्यकालस्वरूपपरिज्ञाने सतीतरौ सुज्ञानौ स्यातां, तत्र वर्तमानकाले सप्तपृथिवीषु ये नारका वर्तन्ते तेषां मध्याद्यावन्न कश्चिदुद्वर्तते न वाऽन्य उत्पद्यते तावन्मात्रा एव ते आसते स कालस्तान्नारकानङ्गीकृत्याशून्य इति पठ्यते, आह च—"आइट्ठसमइयाणं नेरइयाणं न जाव एकोऽवि । उव्वट्टइ अन्नो वा उववज्जइ सो असुन्नो उ ॥२॥" मिश्रकालस्तु तेषामेव नारकाणां मध्यादेकादय उद्वृत्ताः यावदेकोऽपि शेषस्तावन्मिश्रकालः, शून्यकालस्तु यदा त एवादिष्टसमयिका नारकाः सामस्त्येनोद्वृत्ताः नैकोऽपि तेषां शेषोऽस्ति स शून्यकाल इति, आह च—"उव्वट्टे एक्कंमिवि ता मीसो धरइ जाव एक्कोऽवि। निल्लेविएहिं सव्वेहिं वट्टमाणेहिं सुन्नो उ ॥३॥" इदं मिश्रनारकसंसारावस्थानकालसूत्रं न तमेव नारकभवमङ्गीकृत्य प्रवृत्तं, अपि तु वार्त्तमानिकनारकजीवानां गत्यन्तरगमनेन तत्रैवोत्पत्तिमाश्रित्योक्तं, यदि पुनस्तमेव नारकभवमङ्गीकृत्येदं सूत्रं स्यात् तदाऽशून्यकालापेक्षया मिश्रकालानन्तगुणता सूत्रोक्ता न स्यात्, आह च—"एवं ते पुण जीवे पडुच्च सुत्तं न तब्भवं चेव । जइ होज्ज तब्भवं तो अणंतकालो न संभवइ ॥४॥" कस्मादिति चेत्, उच्यते, ये वार्त्तमानिका नारकाः ते स्वायुष्ककालस्यान्ते उद्वर्त्तन्ते, असङ्ख्यातमेव च तदायुः, अत उत्कर्षतो द्वादश मौहूर्त्तिकाशून्यकालापेक्षया मिश्रकालस्यानन्तगुणत्वाभावप्रसङ्गादिति, आह च—"किं कारणमादिट्ठा नेरइया ? जे

इमंमि समयंमि ?। ते ठितिकालस्संतो जम्हा सव्वे खविज्जंति ॥५॥" 'सव्वत्थोवे असुण्ण'त्ति, नारकाणामुत्पादोद्वर्त्तनाविरहकालस्योत्कर्षतोऽपि १२ मुहूर्त्तप्रमाणत्वात्, 'मिस्सकाले अणंतगुण'त्ति मिश्राख्यो विवक्षितनारकजीवनिर्लेपनाकालोऽशून्यकालापेक्षया अनन्तगुणः स्यात्, यतोऽसौ नारकेतरभवेष्वागमनगमनकालः, स च त्रसवनस्पत्यादिस्थितिकालमिश्रितः सन्ननन्तगुणः स्यात्, वनस्पत्यादिगमनागमनानामनन्तत्वात्, स च नारकनिर्लेपकालो वनस्पतिस्थितेरनन्तभागे वर्त्तते, उक्तं च—'थोवो असुन्नकालो सो उक्कोसेण बारसमुहुत्तो। तत्तो य अणंतगुणो मीसो निल्लेवणाकालो ॥६॥ आगमणगमणकालो तसाइतरुमीसिओ अणंतगुणो। अह निल्लेवणकालो अणंतभागे वणद्धाए ॥७॥" 'सुण्णकाले अणंतगुणे'त्ति सर्वेषां विवक्षितनारकजीवानां प्रायो वनस्पतिष्वनन्तानन्तकालावस्थानात्, एतदेव वनस्पतिष्वनन्तकालावस्थानं नारकभवान्तरकाल उत्कृष्टो देशितः समये, उक्तं च—"सुण्णो य अणंतगुणो सो पुण पायं वणस्सइगयाणं। एयं चेव य नारयभवंतरं देसियं जेट्ठं ॥८॥"ति, 'तिरिक्खजोणियाणं सव्वत्थोवे'त्ति, स चान्तर्मुहूर्त्तः, अयं यद्यपि सामान्येन तिरश्चामुक्तस्तथापि विकलेन्द्रियसम्मूर्च्छिमानामवसेयः, तेषामेवान्तर्मुहूर्त्तविरहकालस्योक्तत्वात्, यदाह—'भिन्नमुहुत्तो विगलिंदिएसु संमुच्छिमेसुवि स एव" एकेन्द्रियाणां उद्वर्त्तनोपपातविरहाभावेन शून्यकालाभाव एव, आह—"एगो असंखभागो वट्टइ उव्वट्टणोववायम्मि। एगनिगोए निच्चं एवं सेसेसुवि स एव ॥९॥" पृथिव्यादिषु पुनः—"अणुसमयमसंखिज्जा एगिंदिय इंति य चयंति'त्तिवचनाद्विरहाभावः, मिस्सकालोऽणंतगुणो नारकवत्, शून्यकालस्तु तिरश्चां नास्त्येव, यतो वार्त्तमानिकसाधारणवनस्पतीनां तत उद्वृत्तानां स्थानमन्यत्रास्ति, 'मणुस्सदेवा जहा णेरइया' तेषामशून्यकालस्य द्वादशमुहूर्त्तप्रमाणत्वात्, आह च—"एवं नरामराणवि तिरियाणं णवरि णत्थि सुण्णद्धा। जं निग्गायाण तेसिं भायणमण्णं तओ नत्थि

॥१०॥" किं संसार एव जीवस्थानं उत मोक्षेऽपि इत्याशङ्कायां पृच्छामाह—'अंतकिरियं'ति (सू०२५) कर्मणामन्तो—विनाशस्तस्य क्रिया अन्तक्रिया तां, मोक्षप्राप्तिलक्षणामिति, 'अंतकिरियापयं'ति, तच्च प्रज्ञापनाविंशतितमं पदं नेतव्यं, तच्चेदम्—'जीवे णं भंते! अंतकिरियं करेज्जा?, गो०! अत्थेगइए करिज्जा, अत्थेगइए नो०, एवं णेरइए जाव वेमाणिए' भव्यः कुर्यात्, नेतर इति, 'नेरइए णं भंते! णेरइएसु वट्टमाणे अंतं करेज्जा?, गो०! नो इणमट्ठे समट्ठे' इत्यादि, नवरं 'मणुस्सेसु अंतं करेज्जा,' मनुष्येषु वर्त्तमानो, नारको मनुष्यीभूत इत्यर्थः। कर्मवशादन्तक्रियाया अभावे केचिज्जीवा देवेषूत्पद्यन्ते अतस्तद्विशेषमाह—'अह भंते!' इत्यादि (सू०२६) व्यक्तं, नवरमथेति परिप्रश्नार्थः, 'असंजयभवियदव्वदेवाणं'ति, इह प्रज्ञापनाटीका लिख्यते—असंयताः—चारित्रशून्याः भव्या—देवत्वयोग्याः अत एव द्रव्यदेवाः, ते मिथ्यादृष्टयः अभव्या भव्या वा असंयतभव्यद्रव्यदेवाः श्रमणगुणसामाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणो गृह्यन्ते, ते ह्यखिलक्रियाप्रभावादेवोपरिमग्रैवेयकेषु उत्पद्यन्ते इति, असंयताश्च ते सत्यप्यनुष्ठाने चारित्रपरिणामशून्यत्वात्, ननु ते कथमभव्या भव्या वा श्रमणगुणधारिणः स्युः?, अत्रोच्यते, तेषां महामिथ्यादर्शनमोहप्रादुर्भावे सत्यपि चक्रवर्त्तिप्रभृतिपूजासत्कारसन्मानदानान् साधूनवलोक्य तदर्थं प्रव्रज्याक्रियाकलापानुष्ठानं प्रति श्रद्धा स्यात्, ततश्च ते यथोक्तक्रियाकारिण इति, तथा 'अविराहियसंजमाणं'ति, अभग्नचारित्राणां, सञ्ज्वलनकषायचतुष्कसामर्थ्यात् प्रमत्तगुणस्थानकाद्वा स्वल्पमायादिदोषसम्भवेऽप्यनाचरितचारित्रघातानामित्यर्थः, तथा 'विराहियसंजमाणं'ति, तद्विपरीतानां, 'अविराहियसंजमासंजमाणं'ति, अभग्नदेशविरतिश्राद्धानां, 'विराहियसंजमासंजम'त्ति तद्विपरीतानां, 'असण्णीणं' असंज्ञिनां दर्दुरमत्स्योरगादीनां सम्मूर्च्छिमानां—मनोलब्धिरहितानामकामनिर्जरावतां, 'तावसाणं'ति तापसानां पतितपत्राद्युपभो-

गवतां बालतपस्विनां, 'कंदप्पिय'त्ति, कन्दर्पः–परिहासः स येषामस्ति ते कान्दर्पिकाः तेषां कान्दर्पिकाणां, व्यवहारतश्चरणवतां कन्दर्पकौत्कुच्यादिकारकाणामित्यर्थः, आह च—"सुमनयणवयणदसणच्छदेहिं करपायकण्णमाईहिं। तं तं करेइ जह जह हसइ परो अप्पणा अहसं ॥१॥" 'चरग'त्ति चरकपरिव्राजका धाट्यादिभैक्ष्योपजीविनस्त्रिदण्डिन इत्यर्थः, अथवा चरकाः–कच्छोटादयः परिव्राजकाः—कपिलमुनिसूनवोऽतस्तेषां, 'किब्बिसियाणं'ति किल्बिषं- पापं तदस्ति येषां ते किल्बिषिकाः तेषां, व्यवहारतश्चरणवतां ज्ञानाद्यवर्णवादिनां चेत्यर्थः, 'तेरिच्छियाणं'ति तथा तिरश्चां–गवाश्वादीनां देशविरतिभाजां, 'अजीव'त्ति आजीविकानां–पाखण्डिनां,नाग्न्यधारिणां गोशालकशिष्याणामित्यन्ये,आजीवन्ति वा अविवेकिलोकतो लब्धिपूजाख्यात्यादिभिस्ते (ये ते) आजीविकास्तेषां,'आभिओगि'त्ति अभियोगः–परेषां वशीकरणादि रूपविद्यामन्त्रादिभिः, स च द्विधा, यदाह–"दुविहो खलु अभिओगो, दव्वे भावे य होइ नायव्वो। दव्वम्मि होइ जोगो, विज्जा मंता य भावम्मि॥१॥" ते व्यवहारतश्चरणवन्त एव मन्त्रादिप्रयोक्तारः, यदाह–"कोऊय भूइकम्मे पसिणापसिणे निमित्तमाजीवी। इड्ढिरससायगुरुओ अभिओगं भावणं कुणइ ॥१॥" कौतुकं–सौभाग्याद्यर्थं स्नपनकं, भूतिकर्म्म ज्वरितादिभूतिदानं, प्रश्नाप्रश्नं स्वप्नविद्यादि, 'सलिंगाणं'ति रजोहरणादिसाधुलिङ्गवतां, किंविधानामित्याह–'दंसणवावण्णाणं'ति दर्शनं–सम्यक्त्वं व्यापन्नं–भ्रष्टं येषां ते दर्शनव्यापन्नास्तेषां, निह्नवानामित्यर्थः, 'देवलोएसु उववज्जमाणाणं'ति, अनेन देवत्वादन्यत्रापि केचिदुत्पद्यन्ते इति प्रतिपादितं,'विराहियसंजमाणं जहन्नेणं भवणवासीसु, उक्कोसेणं सोहम्मकप्पे'त्ति इह कश्चिदाह–विराधितसंयमानामुत्कर्षेण सौधर्म्मे कल्पे इति यदुक्तं तत्कथं घटते ?, द्रौपद्याःसुकुमारिकाभवे विराधितसंयमाया ईशानोत्पादश्रवणात् इति, अत्रोच्यते, तस्याः संयमविराधना उत्तरगुणविषया बकुशत्वमात्रकारिणी, न स्थूल-

गुणविराधनेति, सौधर्म्मोत्पादश्च मूलगुणविराधनायां स्यात्, यदि पुनर्विराधनामात्रमपि सौधर्म्मोत्पत्तिकारणं स्यात् तदा बकुशादीनामपि उत्तरगुणादिप्रतिसेवावतां कथमच्युतादिषूत्पत्तिः स्यात् ?, कथञ्चिद्विराधकत्वात् तेषां, तेनोत्तरगुणविराधनाया ईशानोत्पादो युक्त एव, 'असन्नीणं जहन्नेणं भवणवासिसु, उक्कोसेणं वाणमंतरेसु'त्ति, इह यद्यपि 'चमरबलि सारमहिय'मित्यादिवचनादसुरादयो महर्द्धिकाः, 'पलिओवममुक्कोसं वंतरियाणं'ति वचनाच्च व्यन्तरा अल्पर्द्धिकाः, तथाऽप्यत एव वचनादवसीयते-सन्ति व्यन्तरेभ्यः सकाशादल्पर्द्धयो भवनपतिदेवाः। असंज्ञी देवेषूत्पद्यत इत्युक्तं, स चायुषा इति तदायुर्निरूपयन्नाह-'कइविहे णं'ति, 'असण्णि'त्ति (सू० २७) असंज्ञी सन् यत् परभवप्रायोग्यं कर्म बध्नाति तदसंज्ञ्यायुः, 'नेरइयअसण्णियाउए'त्ति नैरयिकप्रायोग्यमसंज्ञ्यायुर्नैरयिकासंज्ञ्यायुः, एवमन्यान्यपि। एतच्चासंज्ञ्यायुः सम्बन्धमात्रेणापि स्यात्, यथा भिक्षोः पात्रमिति, 'दसवास'त्ति १० वर्षसहस्राणि, रत्नप्रभाप्रथमप्रतरमाश्रित्य, 'उक्कोसेणं पलिओवमस्स असंखिज्जइभागं'ति, रत्नप्रभा ४ प्रस्तटे मध्यस्थितिकं नारकमाश्रित्य, कथं ?, यतः-प्रथमप्रस्तटे १० वर्षसहस्रा जघन्या, उत्कृष्टा तु नवतिसहस्राणि, २ प्र० १० लक्षाणि जघन्या उ० ९० लक्षाणि स्थितिः, एषैव ३ प्र० जघन्या उ० पूर्वकोटी, एषैव ४ प्र० जघ० इतरा तु सागरोपमस्य १० भागः, एवं पल्योपमासङ्ख्येयभागो मध्यमा स्थितिरत्र स्यात्, 'तिरिक्खजोणि'त्ति तिर्यक्सूत्रे यदुक्तं 'पलिओवमस्स'त्ति तन्मिथुनकतिरश्चोऽधिकृत्येति, 'मणुस्साउए'त्ति जघन्या अन्तर्मुहूर्त्तं, उत्कर्षतः पल्योपमासङ्ख्येयभागो मिथुनकनरानाश्रित्य, 'देवा जहा णेर०' यथा असंज्ञिविषयं नारकायुः तच्च प्रतीतमेवं देवविषयं, तदपि भवनपतिव्यन्तरानाश्रित्यावसेयं, 'एयस्स णं भंते !' इत्यादिना यदसंज्ञ्यायुषोऽल्पबहुत्वमुक्तं तदस्य असङ्ख्यातायुषः असङ्ख्यातभेदत्वात् ह्रस्वदीर्घत्वमाश्रित्य ज्ञेयमिति ॥

## ॥ प्रथमशते द्वितीयोद्देशकविवरणम् ॥ १—२ ॥

यदुक्तं 'कंखपओसे'त्ति एतद्दर्शयन्नाह—'कंखामोहणि०' (सू०२८) काङ्क्षामोहनीयं—मिथ्यात्वमोहनीयं कृतं—क्रियानिष्पादितमिति प्रश्नः, इह चतुर्भङ्गी दृष्टा, 'से भंते'त्ति तस्य कर्मणो हे भदन्त ! किमिति प्रश्ने, 'देसेणं'ति देशेन- जीवस्यांशेन देशः—काङ्क्षामोहनीयकर्मणोऽशः कृतः १ भङ्गः, देशेन- जीवांशेन सर्वं काङ्क्षामोहनीयं कृतं २ भङ्गः, सर्वेण—सर्वात्मना देशः काङ्क्षामोहनीयस्य कृतः ३ भङ्गः, सर्वेण सर्वं कर्म्म कृतं ४ भङ्गः, अत्रोत्तरम्—"सव्वेणं सव्वे कडे'त्ति, यत्किञ्चित्काङ्क्षामोहनीयं तत् सर्वात्मना सर्वजीवप्रदेशांशैः कृतं, न देशेनेति। तत्क्रिया च त्रिकालविषया, तां दर्शयन्नाह—"कारिंसु' (सू०२९) अतीतकाले कृतवन्तः ?, हंता ! अकार्षुः, 'करेंति' सम्प्रति कुर्वन्ति, 'करिस्संति' करिष्यन्ति च॥ कृतस्य कर्मणश्चयादयः स्युस्तान् दर्शयन्नाह—'कडचिय'त्ति गाठा, 'आदितिए'त्ति आदित्रिके कृतचितोपचितलक्षणे च, 'उभय'त्ति सामान्यक्रियया कालत्रिकक्रियाभेदाच्च चतुर्भेदाः,'तिभेया पच्छिम'त्ति पश्चिमा उदीरितवेदितनिर्जीर्णा मोहपुद्गलास्त्रिभेदाः, सामान्यक्रियाविरहात्, 'तिन्नि'त्ति त्रयस्त्रिविधा इति, नन्वाद्ये सूत्रत्रये कृतचितोपचितान्युक्तानि उत्तरे तु कस्मान्नोदीरितवेदितनिर्जीर्णानीति, उच्यते, कृतं चितमुपचितं च कर्म्म चिरमप्यवतिष्ठते इति करणादीनां त्रिकालक्रियामात्रातिरिक्तं चिरावस्थानलक्षणं कृतत्वाद्याश्रित्य कृतादीन्युक्तानि, उदीरणादीनां तु न चिरावस्थानमस्तीति त्रिकालवर्त्तिना क्रियामात्रेणैव तान्यभिहितानि इति उदीरितादीनां तात्कालत्वात् त्रिकालविषयतैवास्ति, 'तेहिं'ति (सू०३०) तैस्तैः शङ्कादिहेतुभिः, किमित्याह—शङ्किता जिनोक्तपदार्थान् प्रति सर्वतो देशतो वा सञ्जातसंशयाः, काङ्क्षिताः—सञ्जातान्यान्यदर्शनग्रहाः, विचिकित्सिताः—सञ्जातफलशङ्काः, भेदसमापन्नाः शैवं जैनं वा शासनं प्रशस्तं इति च मतेर्द्वैधीभावं

गताः, कलुसिए–नैतदेवमिति मतिविपर्यासं गताः, जीवानां काङ्क्षामोहनीयवेदनमिदमवसेयं, 'से नूणं'ति, (सू०३१) तदेवं नूनं सत्यं निःशङ्कं यज्जिनैः प्रवेदितं इति मनो धारयन् स्थिरीकुर्वन् प्रकुर्वन् 'चिट्ठ'त्ति चेष्टमानो विधेयतपोध्यानादिषु 'संवरे'त्ति संवृण्वन् अन्यमतेभ्यो निवर्त्तयन्, सर्वत्र मनो योज्यं। 'अत्थित्तं'ति (सू०३२) अस्तित्वमङ्गुल्यादेरङ्गुल्यादिभावेन सत्त्वं, उक्तं च–"सर्वमस्ति स्वरूपेण, पररूपेण नास्ति च। अन्यथा सर्वभावानामेकत्वं संप्रसज्यते ॥१॥" यथा मृद्द्रव्यस्य पिण्डप्रकारेण सत्ता घटरूपतया सत्तायां 'नत्थित्तं नत्थित्ते'त्ति नास्तित्वमङ्गुल्यादेरङ्गुष्ठादिभावेनासत्त्वं, यथा मृदो नास्तित्वं तन्त्वादिरूपं मृन्नास्तित्वरूपे पटे इति परिणमति तथा स्यात्, 'पओगस'त्ति सकारस्यागमिकत्वात् प्रयोगेण–जीवव्यापारेण 'वीसस'त्ति विश्रसाशब्दोऽत्र स्वभावार्थो दृश्यः, 'पओगसावि'त्ति प्रयोगेणापि तदस्तित्वादि, यथा कुलालव्यापारात् मृत्पिण्डो घटतया परिणमति, अङ्गुलिऋजुता वा वक्रतयेति, 'वीससावि'त्ति यथा शुभ्राभ्रमशुभ्राभ्रतया इति नास्तित्वस्य नास्तित्वपरिणामे प्रयोगविश्रसयोरेवामून्युदाहरणानि, वस्त्वन्तरापेक्षया मृत्पिण्डादेरस्तित्वस्य नास्तित्वात्, 'जहा ते' ते इति तव मतेन अस्तित्वं, शेषं तथैव, 'अत्थित्तं अत्थित्ते गमणिज्ज'मिति अस्तित्वमस्तित्वेनैव गमनीयं, सद्वस्तु सत्त्वेनैव प्रज्ञापनीयमिति द्वावालापकौ, 'जहा ते'(सू०३४)ते–तव भदन्त! 'एत्थं'ति एतस्मिन् मयि सन्निहितस्वशिष्ये गमनीयं, 'तहा ते इहं गमणिज्जं'ति तथा–तेनैव समतालक्षणप्रकारेणोपकारधिया वा 'इहं'ति इह अस्मिन् गृहिपाखण्डिकादौ जने गमनीयं, वस्तु प्रकाशनीयमिति प्रश्नः, उत्तरं व्यक्तं 'पमायपच्चयं जोगनिमित्तयं'ति (सू०३५) पमायो य मुणिंदेहिं, भणिओ अट्ठभेयओ। अन्नाणं संसओ चेव, मिच्छानाणं तहेव य ॥१॥ रागो दोसो मइब्भंसो, धम्मंमि य अणायरो। जोगाणं दुप्पणीहाणं, अट्ठहा वज्जियव्वओ ॥२॥" एवंविधप्रमादप्रत्ययं, योगो–

मनःप्रभृतिव्यापारस्ते निमित्तं—हेतुर्यत्र तत्तथा प्रज्ञाति, 'पमाए'त्ति प्रमादः कस्मात् प्रवहति—प्रवर्त्तते इति किंप्रवहः, पाठान्तरेण किंप्रभवः, योगप्रभवः मनोवचःकाययोगप्रभवः, स किंप्रभवो ?, वीर्यप्रभवः, वीर्यं द्विधा—सकरणमकरणं वा, तत्र अलेश्यकेवलिनो यत्केवलज्ञानं तदकरणं, तदिह नाधिक्रियते, यस्तु मनःप्रभृतिसाध्यः सलेश्यो जीवप्रदेशपरिस्पंदात्मको व्यापारः स सकरणं वीर्यं, किंप्रभवं ?, शरीरप्रभवं, शरीरं किंप्रभवं ? 'एवं सति'त्ति एवं जीवस्य काङ्क्षामोहनीयकर्मग्रन्थत्वे सति, 'अत्थि'त्ति अस्ति—विद्यते, न तु नास्ति, यथा गोशालकमते नास्ति जीवानां उत्थानादि, पुरुषार्थासाधकत्वात्, नियतित एव पुरुषार्थसिद्धेः, यदाह—"प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा। भूतानां महति कृतेऽपि हि प्रयत्ने, नाभाव्यं भवति नो भाविनोऽस्ति नाशः॥१॥" एवमप्रामाणिकाया नियतेरभ्युपगमः कृतः स्यात्, तेन 'उट्ठाणे'त्ति उत्थानं—ऊर्ध्वीभवनं 'कम्मे'त्ति कर्म्म—उत्क्षेपणावक्षेपणादि, 'बले'त्ति बलं—शारीरः प्राणः 'वीरिए'त्ति वीर्यं उत्साहः 'पुरिस'त्ति पुरुषकारपराक्रमः पौरुषाभिमानः ॥ 'अप्पणा चेव'त्ति (सू० ३६) आत्मनैव—स्वयमेव जीवः, उदीरयति, करणविशेषेणाकृष्य भविष्यत्काले वेद्यं क्षपणायोदयावलिकायां प्रवेशयति, तथैव गर्हते अतीतकर्म्म, संवृणोति वार्त्तमानिकं कर्म्म, 'तं तं भंते !' अत्र प्रश्नाः ४, तत्रोत्तरम्—नोदीर्णं, तदुदीरणाऽभवनात्, नानुदीर्णं, कथं ?, चिरेण भविष्यदुदीरणं अभविष्यदुदीरणं च कर्म नोदीरयति, उदीरणाभविकं उदीरणायोग्यतां प्राप्तत्वात् अनुदीर्णं शीघ्रभविष्यदुदीरणं कर्मोदीरयति, उदयेनानन्तरसमये पश्चात्कृतं—अतीततां नीतं यत्तदपि नोदीरयति। इत्थं काङ्क्षामोहनीयस्योदीरणोक्ता, तस्यैवोपशमनमाह—'अप्पणा चेव उवसामेइ'त्ति, उपशमनं मोहनीयस्यैव, यदाह—"मोहस्सेवोवसमो खाओवसमो चउण्ह घाईणं। उदयक्खयपरिणामा, अट्ठण्हवि होंति कम्माणं॥१॥" उपशमः

को नाम ?, उदीर्णस्य क्षयोऽनुदीर्णस्य च विपाकतः प्रदेशतश्चाननुभवनं, सर्वथैव विष्कम्भितोदयत्वमित्यर्थः, अयं चानादिमिथ्यादृष्टेरौपशमिकसम्यक्त्वलाभे उपशमश्रेणिगतस्य वा, 'अणुदिण्ण'ति, उदीर्णस्य त्ववश्यंवेदनादुपशमनाभावः, उदीर्णं संवेद्यत इति वेदनासूत्रं 'उदिण्णं वेएइ' अनुदीर्णस्य वेदनाभावात्, वेदितं सन्निर्जीर्यते इति निर्जरासूत्रं, तत्र 'उदयाणंतर'त्ति उदयेनानंतरसमये यत्पश्चात्कृतं-अतीतताङ्गमितं तन्निर्जरयति-प्रदेशतः शातयति, अत्र सङ्ग्रहगाथा-"तइएण उदीरेंति, उवसामिंति य पुणोवि बीएणं । वेदेंति निज्जरेंति य पढमचउत्थेहिं सव्वेहिं ॥१॥" अथ काङ्क्षामोहनीयवेदनादिनिर्जरांतसूत्रं२४ दण्डकेषु योज्यं, तच्चैवम्-'कहण्णं भंते! णेरइया णं कंखामोहणिज्जं कम्मं वेदेंति ?, गो०! तेहिं तेहिं कारणेहिं० हंता! वेएंति', यावत्स्तनितकुमाराः, तेषु च यत्र २ जीवपदं आगतं तत्र २ नारकादिपदमध्येयमिति, पञ्चेन्द्रियाणामेव शङ्कितत्वादयः नैकेन्द्रियादीनामतस्तेषां तद्विशेषमाह-'णो तक्काइ व'त्ति, तर्को-विमर्शः, स्त्रीत्वं प्राकृतत्वात्, 'सन्ना इ'त्ति संज्ञा-अर्थावग्रहरूपं ज्ञानं, 'पन्ना इ'त्ति प्रज्ञा-अशेषविषयं ज्ञानं, 'मणे'त्ति मनः स्मृत्यादि विशेषमतिभेदरूपं, 'वायाइ'त्ति वाक्-वचनं, पृथ्वीकायवदप्कायादिचतुरिन्द्रियान्तसूत्राण्यध्येयानि, तिर्यक्पञ्चेन्द्रियादीनि वैमानिकान्तसूत्राणि ओघिकजीवाभिलापेनैवाध्येयानि । अथ श्रमणानाश्रित्य काङ्क्षामोहनीयवेदनं प्रश्नयन्नाह-'अत्थि णं भंते!'त्ति(सू०३८)निर्ग्रन्थाः-साधवः,'नाणंतरेहिं'न्ति एकस्मात् ज्ञानादन्यानि ज्ञानान्तराणि तैस्तैर्ज्ञानान्तरैः शङ्किताः, कथं ज्ञानविषयाशङ्का स्यात् ?, मनःपर्यायज्ञानविषयभूतानां मनोद्रव्याणामवधिनैव दृष्टत्वात् मनःपर्यायज्ञानं पृथग् किमुक्तं ? इति ज्ञानतः शङ्का, अत्रोत्तरम्-मनःपर्यायज्ञानं मनोमात्रग्राहकमदर्शनपूर्वकञ्च, अवधिज्ञानं तु किञ्चिद् मनोव्यतिरिक्तद्रव्यग्राहकं किञ्चिच्चोभयग्राहकं दर्शनपूर्वकं च । 'दंसण'त्ति सामान्यार्थविबोधो दर्शनं, तत्र यदि नामेन्द्रियानि-

न्द्रियनिमित्तसामान्यार्थविबोधो दर्शनं, तदा किमेकश्चक्षुर्दर्शनं, अन्यस्त्वचक्षुर्दर्शनम्, अथेन्द्रियानिन्द्रियभेदाद्भेदः तदा चक्षुष इव श्रोत्रादीनामपि दर्शनभावात् षडिन्द्रियनोइन्द्रियजानि दर्शनानि स्युः, न द्वे एवेति, अत्र समाधिः--सामान्यविशेषात्मकत्वात् वस्तुनः क्वचिद्विशेषतः कस्मिंश्च सामान्यतः, तत्र चक्षुर्दर्शनमिति विशेषतः, अचक्षुदर्शनमिति सामान्यतः, यत्र प्रकारान्तरतोऽपि निर्देशस्य सम्भवे चक्षुर्दर्शनमचक्षुर्दर्शनं चेत्युक्तं तदिन्द्रियाणामप्राप्तकारित्वप्राप्तकारित्वविभागात्, मनसस्त्वप्राप्तकारित्वेऽपि प्राप्तकारीन्द्रियवर्गस्य तदनुसरणीयस्य बहुत्वात् तद्दर्शनस्याचक्षुर्दर्शनस्याचक्षुर्दर्शनशब्देन ग्रहणं, अथवा दर्शनं--सम्यक्त्वं, तत्र शङ्का 'मिच्छत्तं जमुदिण्णं तं खीणं अणुदियं च उवसंत'मिति क्षायोपशमिकलक्षणं, औपशमिकलक्षणमप्येवं, यदाह- "खीणंमि उइण्णंमी अणुदिज्जंते य सेसमिच्छत्ते । अंतोमुहुत्तमित्तं उवसमसम्मं लहइ जीवो ॥१॥" ततोऽनयोः को विशेष उक्तः ?, अत्र समाधिश्च--क्षयोपशमे हि उदीर्णस्य क्षयः अनुदीर्णस्य च विपाकानुभवापेक्षया उपशमः, प्रदेशानुभवतस्तूदयोऽस्त्येव, उपशमे तु प्रदेशानुभवोऽपि नास्तीति, उक्तं च--"वेएइ संतकम्मं खओवसमिएसु नाणुभावं से। उवसंतकसाओ उण वेदेइ न संतकम्मंति ॥१॥" 'चरित्तं'ति तत्र चारित्रं द्विधा--सामायिकं छेदोपस्थापनीयं च, तत्र प्रथमं सर्वसावद्यविरतिरूपं ततूदयोऽ(०पव्रतादिरूपम)न्यदपि तल्लक्षणमेव, ततोऽनयोर्भेदः इति शङ्का, अत्र समाधिः--ऋजुवक्रजडानां प्रथमचरमजिनसाधूनामाश्वासनाय छेदोपस्थापनीयमुक्तं, व्रतारोपणे हि मनाक् सामायिकाशुद्धावपि व्रताखण्डनाच्चारित्रिणो वयं, चारित्रस्य व्रतरूपत्वादिति बुद्धिः स्यात्, सामायिकमात्रे तु तदशुद्धौ भग्नं नश्चारित्रं, चारित्रस्य सामायिकमात्रत्वादित्यनाश्वासस्तेषां स्यादिति, आह--"रिउवंकजडा पुरिमेयराण सामाइए वयारुहणं । मणयमसुद्धेऽवि जओ सामइए हुंति हु वयाइं ॥१॥" लिङ्गं--साधुवेषः, तत्र मध्यमजिनैर्यथालब्धवस्त्ररूपं लिङ्गं साधूनामुक्तं, तदा किमिति प्रथम-

चरमजिनैरचेलत्वं शुभ्रवस्त्रत्वं चोक्तमिति शङ्का, अत्र समाधिः—ऋजुजडवक्रजडऋजुप्राज्ञशिष्यानाश्रित्य भगवदुपदेशः, प्रवचनं—आगमस्तत्र शङ्का—मध्यमजिनैश्चतुर्यामो धर्मः प्रथमान्तिमजिनैश्च पंचयामः प्रोक्त इति, अत्र समाधिः सुगमः, 'पावयणं'ति प्रवचनमधीते वेत्ति वेति प्रावचनिकः, तत्रैक एवं कुर्यादन्यस्त्वेवमिति किमत्र तत्त्वमिति शङ्का, समाधिश्चात्र—मोहनीयक्षयोपशमविशेषेणोत्सर्गापवादव्यवहारनिश्चयादिविविधत्वेन प्रावचनिकानां विचित्रा प्रवृत्तिरिति, 'कप्पं'ति, कल्पो द्विधा—जिनकल्पः स्थविरकल्पश्च, तत्र प्रथमो नाग्न्यादिमहाकष्टरूपः, इतरो वस्त्रपात्रादिपरिभोगरूपः, ततो द्वावेतौ कथं कर्म्मक्षयाय ?, अत्रोत्तरम्—अवस्थाभेदेन जिनोक्तत्वात् द्वावपि कर्म्मक्षयकरौ, 'मग्ग'ति मार्गः—पूर्वपुरुषसामाचारीरूपः, स च केषांचिदनेकविधकायोत्सर्गकरणाद्यावश्यकसामाचारीरूपः, तदन्येषां तु न तथेति शङ्का, अत्रोत्तरम्—गीतार्थाशठप्ररूपिताऽसौ सर्वाऽपि न विरुद्धा, आचरितलक्षणोपेतत्वात्, उक्तं च—"असढाइण्णत्तऽणवज्ज, गीयत्थअवारियंति मज्झत्था । आयरणाऽवि हु आणत्ति वयणओ सुबहु मन्नंति ॥१॥" इति, 'मतं'ति आचार्याणामागमेऽसमानोऽभिप्रायः, कथं ?, सिद्धसेनः केवलिनो युगपज्ज्ञानं दर्शनं च, जिनभद्रगणिस्तु भिन्नसमये तौ द्वावपि केवलिनो मन्यते, जीवस्वरूपत्वात्, यथा तदावरणक्षयोपशमे समानेऽपि क्रमेणैव मतिश्रुतोपयोगौ, न च एकतरोपयोग इतरक्षयोपशमाभाव इति वाच्यं, तत्क्षयोपशम उत्कृष्टतः षट्षष्टिसागराणि, कथं ?, "दोवारे विजयाइसु गयस्स"त्ति वचनात् इति शङ्का, इहैवं समाधिः—"जुगवं दो नत्थि उवओगा,' तत्त्वं जिनप्रणीतमेव, आह च—'अणुवकयपराणुग्गह०'त्ति, 'भंगं'ति भङ्गा—ध्यादिसंयोगभङ्गकाः, तत्र द्रव्यतो नामैका हिंसा न भावत इत्यादि चतुर्भङ्गी उक्ता, तत्र प्रथमोऽत्र भङ्गो न युज्यते, यतः किल द्रव्यतो हिंसा ईर्यासमित्या गच्छतः साधोः पिपीलिकादिव्यापादनं, नेयं हिंसा, तल्लक्षणायोगात्, तथोक्तं च—"जो उ पमत्तो पुरिसो

तस्स उ जोगं पडुच्च जे सत्ता । वावज्जंती नियमा तेसिं सो हिंसओ होइ ॥१॥" उक्तैवं हिंसा इति शङ्का, अत्रोत्तरं–एतद्गाथोक्तहिंसालक्षणस्य द्रव्यभावहिंसाश्रयत्वात्, द्रव्यहिंसायास्तु मरणमात्रतया रूढत्वात् इति, तथा 'नये'त्ति नयाः—द्रव्यास्तिकादयः, यदेव द्रव्यतो नित्यं वस्तु तदेव पर्यायतोऽनित्यं कथं इति शङ्का, अत्रोत्तरम्–द्रव्यापेक्षया नित्यं, पर्यायापेक्षया अनित्यं, जनकापेक्षया य एव पुत्रः स एव पौत्रापेक्षया पितेति, 'नियम'त्ति, नियमः–अभिग्रहः, स चानेकधा, कथं ?, यदि नाम सर्वविरतिसामायिकं तदा किमन्येन पौरुष्यादिना ?, सामायिकेनैव सर्वगुणावाप्तेरिति शङ्का, अत्रोत्तरम्–यतः सत्यपि सामायिके युक्तः पौरुष्यादिनियमः अप्रमादहेतुत्वात् 'पमाणं'ति प्रमाणं–प्रत्यक्षादि, तत्रागमप्रमाणं–आदित्यो भूमेरुपरि योजनशतैरष्टाभिः राञ्चरति, चक्षुःप्रत्यक्षं च तस्य भुवो निर्गच्छतो ग्राहकमिति किं तत्त्वं ?, अत्रोत्तरम्–न हि सम्यक् प्रत्यक्षमिदं, दूरतरदेशतो विभ्रमादिति ॥

## ॥ १ शते ३ तृतीयोद्देशकविवरणम् ॥

अनन्तरोद्देशके कर्मोदीरणवेदनाद्युक्तं, तस्यैव भेदादीन् दर्शयितुं द्वारगाथोक्तमभिधातुमाह–'कम्मपयडीए'त्ति (सू० ३९) प्रज्ञापना २३ कर्म्मप्रकृतिपदे प्रथम उद्देशको ज्ञेयः, तद्व्याख्यानामत्र सङ्ग्रहगाथाऽस्ति, सा चेयं–'कइ पगडी'ति द्वारम्, तत्रैवम्—'कइ णं भंते ! कम्मपगडीओ पं० ?, गो० ! अट्ठ, 'किह बंधइ'त्ति, 'कहण्णं भंते ! जीवे अट्ठ कम्मपगडीओ बंधइ ?, गो० ! नाणावरणिज्जस्स उदएणं दंसणावरणिज्जं कम्मं नियच्छइ' विशिष्टोदयावस्थं जीवस्तदासादयतीत्यर्थः, दरिसणावरणिज्जस्स उदएणं दंसणमोहणिज्जं कम्मं निग्गच्छइ, विपाकावस्थं करोति, दरिसणमोहणिज्जस्स कम्मस्स उदएणं मिच्छत्तं नियच्छइ, मिच्छत्तेण उदिन्नेणं एवं खलु जीवे अट्ठ कम्मपगडीओ बंधइ', न चैवमिहेतरेतराश्रयदोषः, कर्मबन्धप्रवाहस्यानादित्वादिति, 'कइहिं ठाणेहिं' ति,

'जीवे णं भंते ! णाणा० कम्मं कइहिं ठाणेहिं बंधइ ?, गो० ! दोहिं, तं०--रागेण य दोसेण य' । 'कइ वेएइ व'त्ति, 'जीवे णं भंते ! कइ क० वेएइ ?, गो०! अत्थेगइए वेएइ, अत्थेगइए नो वेएइ, जो वेएइ से अट्ठ, जीवे णं भंते ! नाणावरणिज्जं कम्मं वेएइ ?, गो० ! अत्थेगइए वेएइ, अत्थेगइए नो वेएइ, केवलिनोऽवेदनात्, 'णेरइए णं भंते ! णाणावरणिज्जं वेएइ ?, गो ! णियमा वेएइ', 'अणुभागो कइविहो'त्ति, कस्य कर्मणः कतिविधो रस इति, तच्चैवम्—'णाणावरणिज्जस्स कम्मस्स कइविहे अणुभागे पण्णत्ते ?, गो० ! दसविहे पण्णत्ते, तं०—सोयावरणे सोयविन्नाणावरणे' इत्यादि, द्रव्येन्द्रियावरणो भावेन्द्रियावरणश्चेति । अथ कर्म्मचिन्ताधिकारात् मोहनीयमाश्रित्याह—"जीवे णं'ति (सू०४०)'मोहणिज्जेणं'ति मिथ्यात्वमोहनीयेन 'उइएणं'ति उदितेन 'उवट्ठाएज्जा' उपतिष्ठेत्, उपस्थानं परलोकक्रियां कुर्यात्, म्रियत इत्यर्थः, 'वीरियत्ताए'त्ति वीर्याणां भावो वीर्यता तया, 'अवीरिय'त्ति वीर्याभावेन अविद्यमानवीर्यतया, इति प्रश्नः ?, 'नो अवीरि'त्ति, वीर्यहेतुकत्वादुपस्थानस्येति, 'बालवीरिय'त्ति बालः—सम्यगर्थानवबोधाद्विरत्यभावाच्च मिथ्यादृष्टिः तस्य या वीर्यता—परिणतिविशेषस्तया, 'पंडियवीरि'त्ति पण्डितः—सर्वविरतः, 'बालपंडियवीरिय'त्ति बालपण्डितो—देशविरतो विरत्यविरतिसद्भावात्, अत्र मिथ्यात्वे वेदिते मिथ्यादृष्टित्वाज्जीवस्य बालवीर्येणैवोपस्थानं स्यात्, नेतराभ्यां, उपस्थानविपक्षोऽपक्रमणमतस्तदाह—'अवक्कमेज्ज' अपक्रमेद्—अवसर्पेत्, उत्तमगुणस्थानकात् हीनतरं गच्छेत्, 'बालवीरिय'त्ति मिथ्यात्वमोहोदये सम्यक्त्वात् संयमात् देशसंयमाद्वा अपक्रामेत्, मिथ्यादृग् स्यादिति, 'नो पंडिय'त्ति न पण्डितवीर्यतया, यतः—पण्डितवीर्येण प्रधानतरं गुणस्थानकं व्रजेत्, नापक्रामेत्, 'सिय बालवीरिय'त्ति स्यात्—कदाचिच्चारित्रमोहनीयोदयेन संयमादपगत्य बालपण्डितवीर्येण देशविरतः स्यात्, वाचनान्तरं त्वेवम्—'बालवीरियत्ताए, नो पंडियवीरियत्ताए नो

बालपंडियवीरियत्ताए' तत्र च मिथ्यात्वमोहोदये बालवीर्यस्यैव भावादन्यवीर्यनिषेध इति। उदीर्णविपक्षत्वादुपशान्तस्येत्युपशम-सूत्रद्वयम्, 'उवट्ठाएज्ज पंडिय'त्ति, उदीर्णालापकापेक्षयोपशान्तालापकयोरयं विशेषः-प्रथमालापके सर्वथा मोहनीयेनोपशान्तेन सता उपतिष्ठेत क्रियासु पण्डितवीर्येण, उपशान्तमोहावस्थायां पण्डितवीर्यस्यैव भावात्, इतरयोरभावात्, वृद्धैस्तु काश्चिद्वाचनामाश्रित्येदं व्याख्यातं-मोहनीयेनोपशान्तेन (न मिथ्यादृक्,) साधुः श्राद्धो वा [मिथ्यादृक्] स्यात् इति, द्वितीयालापकः 'अवक्कमेज्ज बालपंडियवीरिय'त्ति, उपशान्तमोहनीयेन संयतत्वात् बालपण्डितवीर्येणापक्रामन् देशविरतः स्यात्, देशतस्तस्य मोहोपशमसद्भावात्, नतु मिथ्यादृग्, मोहोदय एव तस्य सद्भावात्, मोहोपशमस्य चेहाधिकृतत्वात् इति। 'से णं भंते'त्ति, सः असौ जीवः 'आयाए'त्ति आत्मना, 'अणायाए'त्ति अनात्मना परतः अपक्रामति-अपसर्पति ?, पूर्वं पण्डितरुचिर्भूत्वा पश्चान्मिथ्यारुचिर्मिश्ररुचिर्वा स्यात्, 'वेएमाणे'त्ति मोहनीयं मिथ्यात्वमोहनीयं चारित्रमोहनीयं वा वेदयन् सः, उदीर्णमोह इत्यर्थः, 'से कहमेयं'ति, अथ कथं ?-केन प्रकारेण एतद् अपक्रमणं, एवंति मोहनीयं वेदयमानस्येति, इहोत्तरम्-'गोयमे'त्यादि, 'पुव्विं से एयं'ति पूर्वं अपक्रमणकालात् प्राग् असौ अपक्रमणकारी जीवः, एतज्जीवादि अहिंसादि वा वस्तु, 'एवं' यथा जिनैरुक्तं रोचते श्रद्धत्ते कुर्याद्वा, इदानीं—मोहनीयोदयकाले स जीवः, एतत्-जीवादि अहिंसादि वा एवं-यथा जिनैरुक्तं न रोचते न श्रद्धत्ते न कुर्याद्वा, 'एवं खलु'त्ति एवं-उक्तप्रकारेण एतद्-अपक्रमणं एवं-मोहनीयवेदने इति। मोहनीयाधिकारात् सामान्यकर्म्म चिन्तयन्नाह-'से नूणं'ति 'पएसकम्मे'त्ति प्रदेशाः-कर्म्मपुद्गला जीवप्रदेशेष्वन्तर्भूतास्तद्रूपं कर्म प्रदेशकर्म, 'अणुभागकम्मे'त्ति अनुभागः-तेषामेव कर्म्मप्रदेशानां संवेद्यमानताविषयो रसस्तद्रूपं कर्म्म अनुभागकर्म्म, 'तत्थ णं'ति तत्र यत् प्रदेशकर्म्म तन्निय-

माद्वेदयति, विपाकस्याननुभवनेऽपि कर्म्मप्रदेशानामवश्यंक्षपणात्, प्रदेशेभ्यः प्रदेशानियमाच्छातयतीत्यर्थः, अनुभागकर्म च तथा संवेदयति वा न वा, यथा मिथ्यात्वं तत्क्षयोपशमकालेऽनुभागकर्मतया न वेदयति,प्रदेशकर्मतया तु वेदयत्येव,इह च प्रदेशानुभागरूपे द्विविधे कर्म्मणि वेदयितव्ये प्रकारद्वयमस्ति॥ कर्म्मस्वरूपमर्हतैव ज्ञायते इति दर्शयन्नाह–'णायमेयं'ति ज्ञातं–सामान्येनावगतं एतद्–वक्ष्यमाणं वेदनाप्रकारद्वयं अर्हता जिनेन १, 'सुयं'ति स्मृतं–प्रतिपादितमनुचिन्तितं वा 'विन्नायं'ति विविधैः देशकालादिविभागरूपैर्ज्ञातं विज्ञातं, 'इमं कम्मं'ति 'अयं जीवे'त्ति, अनेन द्वयोरपि प्रत्यक्षतामाह, केवलित्वादर्हतः, 'अज्झोवगमियाए'त्ति प्राकृतत्वात् अभ्युपगमः–प्रव्रज्याप्रतिपत्तितो भूमिशयनब्रह्मचर्यकेशलुञ्चनादीनामङ्गीकारः तेन निर्वृत्ता आभ्युपगमिकी तया वेदनया वेदयिष्यति, भविष्यत्कालनिर्देशः भविष्यद्वस्तुविशिष्टज्ञानतामेव द्योतयति, अतीतो वर्त्तमानश्च पुनरनुभवद्वारेणान्यस्यापि ज्ञेयः सम्भवति, 'उवक्कमि'त्ति उपक्रम्यतेऽनेनेत्युपक्रमः–कर्मवेदनोपायस्तत्र भवा औपक्रमिकी–स्वयमुदीर्णस्योदीरणाकरणेनोदयं नीतस्य वा कर्मणोऽनुभवस्तया औपक्रमिक्या वेदनया वेदयिष्यति, 'अहाकम्मं'ति यथाकर्म्म–बद्धकर्मानतिक्रमेण 'अहानिकरणं'ति निकरणानां–नियतानां देशकालादीनां करणानां–विपरिणामहेतूनां (अनति) क्रमेण यथा २ तत् कर्म्म भगवता दृष्टं तथा २ विपरिणंस्यति इत्युक्तं। अनन्तरं कर्म्म चिन्तितं, तच्च पुद्गलात्मकं इति परमाण्वादिपुद्गलांश्चिन्तयन्नाह—'एस णं भंते! पोग्गले'त्ति (सू०४२) एषः–परमाणुः, उत्तरत्र स्कन्धग्रहणात्, 'अतीतं'ति अतीतं अनन्तं शाश्वतं समयं कालं 'भुवी'ति अभूत्, इत्येतद् वक्तव्यं स्यात्?, सद्भूतार्थत्वात्, 'पडुप्प'न्ति प्रत्युत्पन्नं–वर्त्तमानं, वर्त्तमानस्यापि शाश्वतत्वसद्भावाद्, एवमनागतस्यापीति, खंधेणेति इति वचनात् स्कन्धग्रहणं, तेन स्कन्धे त्रय आलापका वाच्याः, एवं जीवपदेनापि ॥ जीवाधिकारात्

छद्मस्थवक्तव्यतामुद्देशकान्तं यावदाह–'संजमेण'त्ति (सू०४३) संयमेन–पृथिव्यादिरक्षणरूपेण संवरेण–इन्द्रियकपायनिरोधेन, एतच्च गौतमेनानेनाभिप्रायेण पृष्टं, यदुत उपशान्तमोहावस्थायां सर्वविशुद्धाः संयमादयः स्युः, विशुद्धसंयमसाध्या च सिद्धिरिति, सा न छद्मस्थस्य स्यादिति, 'अंतं करें'ति भवान्तकारिणः, 'अंतिमसरीरि'त्ति अन्तिमवपुषः—चरमदेहाः, 'आहोहिय'त्ति 'आहोहिए णं भंते ! मणूसे तीतमणंतं सासय'मिति दण्डकत्रयं, तत्र अधः–परमावधेरधस्ताद्योऽवधिः सः अधोऽवधिस्तेन यो व्यवहरत्यसावधोऽवधिकः, परिमितक्षेत्राधिक इति, 'परमोहिय'त्ति परमाधोऽवधिकः, स द्रव्यतः सर्वरूपिद्रव्याणि क्षेत्रतोऽलोकेऽसङ्ख्यातलोकमात्रालोकखण्डानि कालतोऽसङ्ख्याताचसर्पिणीः पश्येद्, असौ परमावधिकज्ञानविषयः, तस्मान्तर्मुहूर्त्तात्परतः केवलोत्पत्तिः 'अलमत्यु'त्ति अलमस्तु–पर्याप्तं भवतु ॥

## इति प्रथमशते चतुर्थोद्देशकविवरणम्

अनन्तरोद्देशकान्ते अर्हदादय उक्ताः, ते पृथिव्यां स्युः अथवा पृथिवीत उद्धृत्ता मनुजत्वमवाप्ताः सन्तस्ते स्युरिति पृथिवीस्वरूपमाह–'छण्हंपि जुयलाणं' (११०गाथा), तत्र दक्षिणोत्तरदिग्भेदतोऽसुरादिनिकाये षट्सु युगलेषु षट्सप्ततिर्भवनलक्षमिति, षड्युगलानामयं विभागः–'चउतीसा चउचत्ता अट्ठत्तीसं च सयसहस्साओ । पण्णा चत्तालीसा दाहिणओ हुंति भवणाइं ॥१॥ चउचउलक्खविहूणा तावइया चेव उत्तरदिसाए ।' 'पुढवि'त्ति 'जीवावाससयसहस्स'त्ति पृथिव्यादिषु जीवावासानां–जीवावस्थानस्थानानां शतसहस्राः–असङ्ख्याताः स्युः, 'पुढविठिई ओगाहण'त्ति, गाहा (१५) 'पुढवि'त्ति पृथिव्यादिषु जीवावासेषु इति द्रष्टव्यं, 'ठिइ'त्ति 'सूचनात् सूत्र'मिति न्यायात् स्थितिस्थानानि वाच्यानि, 'ओगाहण'त्ति अवगाहनास्थानानि, शरीरादिपदानि व्यक्ता-

न्येव, एवं स्थितिस्थानादीनि दश द्वाराणि इहोद्देशके वाच्यानि इति गाथासमासार्थः, विस्तरार्थस्त्वेवम्—'एगमेगंसि णिरयावासंसि' एकैकस्मिन्नरकावासे 'ठिइठाण'त्ति आयुषो विभागाः, 'असंखेज्ज'त्ति सङ्ख्यातीतानि, कथं ?, प्रथमपृथिव्यपेक्षया जघन्या स्थितिर्दशवर्षसहस्राणि उत्कृष्टा तु सागरोपमं, एतस्यां चैकैकसमयवृद्ध्या असङ्ख्यातानि स्थितिस्थानानि स्युः, असङ्ख्येयत्वात् सागरोपमसमयानामिति, नरकावासापेक्षयाऽप्यसङ्ख्येयान्येव तानि, तेषु च जघन्योत्कृष्टविभागश्चैवम्—प्रथमप्रस्तटे जघन्या १० वर्षसहस्राणि उत्कर्षतो नवतिरिति प्रतिनरकं भिन्नरूपं सैवैकसमयाधिका द्विसमया० एवं यावदसङ्ख्यातसमयाधिका जघन्या स्थितिः, 'तप्पाउग्गुक्कोसिय'त्ति तस्य—विवक्षितनरकावासस्य प्रायोग्या—उचिता उत्कर्षिका तत्प्रायोग्योत्कर्षिका, इदमपि स्थितिस्थानं विचित्रं, विचित्रत्वादुत्कर्षस्थितेः, एवं स्थितिस्थानानि निरूप्य क्रोधाद्युपयुक्तत्वं नारकाणां विभागेन दर्शयन्नाह—'किं कोहोवउत्ता ४' इति प्रश्ने सर्वेऽपि, तत्र प्रतिनरकं जघन्यस्थितिकानां सदैव भावात् तेषु च क्रोधोपयुक्तानां बहुत्वात् सप्तविंशतिर्भङ्गाः स्युः, 'समयाहियाए'त्ति एकादिसङ्ख्यातसमयाधिकजघन्यस्थितिकानां तु कादाचित्कत्वात् तेषु क्रोधाद्युपयुक्तानां एकत्वानेकत्वसम्भवादशीतिर्भङ्गकाः, एकेन्द्रियेषु तु सर्वकषायोपयुक्तानां बहूनां भावादभङ्गकमाहेति "सम्भवति जहिं विरहो असीती भंगा तहिं करेज्जाहि । जहियं न होइ विरहो, अभंगयं सत्तवीसा वा ॥१॥" अयं च तत्सत्त्वापेक्षो विरहो द्रष्टव्यः, न तूत्पादापेक्षया, यतो रत्नप्रभायां २४ मुहूर्त्ता उत्पादविरहकालः, ततश्च यत्र सप्तविंशतिर्भङ्गाः तत्रापि विरहभावादशीतिं प्राप्नोति, सप्तविंशतेश्चाभाव एव, 'सव्वेऽवि ताव हुज्ज'त्ति प्रतिनरकं जघन्यस्थितिकानां नारकाणां सदैव बहूनां सद्भावात् नारकभवस्य बहुक्रोधवत्त्वात् सर्वे एव क्रोधयुक्ताः स्युरित्येको भङ्गः, 'अहवे'त्यादि, अत्र द्वित्रिचतुसंयोगभङ्गा दर्शिताः, तत्र

द्विकसंयोगे बहुवचनं अमुंचता षड् भङ्गाः, त्रिकसंयोगे १२ भङ्गाः, क्रोधे नित्यं बहुवचनं, मानमाययोरेकवचनमिति प्रथमः, मानै-
कत्वे मायाबहुत्वे द्वितीयः, माने बहुत्वे मायैकत्वे ३ मानमाययोर्बहुत्वे ४, क्रोधमानलोभैरित्थमेव चत्वारः, क्रोधमायालोभै-
रित्थमेव चत्वारः, एवं जाताः १२, चतुष्कसंयोगे त्वष्टौ, कथं ?, क्रोधे बहुत्वेन मानमायालोभैकत्वेनैकः, एवं लोभे बहुत्वेन २
एवमेतावेकवचनान्तमायया जातौ, एवं बहुवचनान्तमायया द्वौ, एवं जाताश्चत्वारः एकवचनान्तमानेन, एवं बहुवचनान्तमानेन,
जाता एवमष्टौ, जघन्यस्थितिनारकेष्वेव सप्तविंशतिर्भङ्गा उक्ताः, जघन्यस्थितिनारका बहवः स्युस्तेन क्रोधे बहुवचनमेव, अथाशीति-
भङ्गा उच्यन्ते—क्रोधाद्येकत्वेन ४ बहुत्वेनापि ४, द्विकसंयोगे २४, तथाहि—क्रोधमानयोरेकत्वबहुत्वाभ्यां चत्वारः, क्रोधमाययोः
४ क्रोधलोभयोः ४ मानमाययोः ४ मानलोभयोः ४ मायालोभयोः ४ इति द्विकयोगे २४, त्रिकसंयोगे ३२, तथाहि—क्रोधमा-
नमायास्वेकत्वेन १ एष्वेव मायाबहुत्वेन द्वितीयः, एवमेतौ मानैकत्वेन द्वावेव, अन्यौ तद्बहुत्वेन ४, क्रोधैकत्वेन ४ क्रोधबहुत्वेन
४, एवमष्टौ क्रोधमानमायास्विति जाताः, तथैवाष्टौ क्रोधमायालोभेषु, तथैवाष्टौ मायामानलोभेषु, एवं जाताः ३२, चतुष्कसंयोगे
१६, क्रोधादिष्वेकत्वेनैकः, लोभस्य बहुत्वेन द्वितीयः, एवमेतौ मायैकत्वेन, तथाऽन्यौ मायाबहुत्वेन, एवमेते चत्वारो मानैकत्वेन,
चत्वारो मानबहुत्वेन च, एवमष्टौ क्रोधैकत्वेन, अन्ये अष्टौ क्रोधबहुत्वेन चेति जाताः षोडश, सर्वे मिलिता एवमशीतिर्भङ्गाः, एते
च जघन्यस्थितावेकादिसङ्ख्यातान्तसमयाधिकायां भवन्ति, अत्र सप्तविंशत्यशीतिभङ्गकव्यक्तिर्ज्ञेया, यथा—इमीसे णं भंते ! रय-
णप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु एगमेगंसि णिरयावासंसि जहन्नियाए ठिइए वट्टमाणा णेरइया किं कोहोव-
उत्ता माणोवउत्ता मायोवउत्ता लोभोवउत्ता ?, गोयमा ! सव्वेऽवि ताव होज्ज कोहोवउत्ता, अहवा कोहोवउत्ता य माणोवउत्ते य,

१ अहवा कोहोवउत्ता य माणोवउत्ता य २ अहवा कोहोवउत्ते य मायोवउत्ता य ३ अहवा कोहोवउत्ता य मायोवउत्ता य, एवं सत्तावीसं भंगा णेयव्वा, भावना चैवं, यथा—सर्वेऽपि क्रोधोपयुक्ताः इत्येकः प्रथमो भङ्ग १, अथ द्विकयोगाः—क्रोधोपयुक्ताः मानोपयुक्तः १ क्रोधोपयुक्ता मानोपयुक्ताः २ क्रोधोपयुक्ता मायोपयुक्तः३ क्रोधोपयुक्ता मायोपयुक्ताः४ क्रोधोपयुक्ता लोभोपयुक्तः ५ क्रोधोपयुक्ता लोभोपयुक्ताः ६ द्विकयोगे जाताः षट्, अथ त्रिकयोगाः–क्रोधोपयुक्तः मानोपयुक्तो मायोपयुक्तः १ क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्ताः २, क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्तः ३ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्ताः ४ क्रोधोपयुक्ता मानोपयुक्तो लोभोपयुक्तः ५ क्रोधोपयुक्ता मानोपयुक्तो लोभोपयुक्ताः ६ क्रोधोपयुक्ता मानोपयुक्ता लोभोपयुक्तः ७ क्रोधोपयुक्ता मानोपयुक्ता लोभोपयुक्ताः ८, क्रोधोपयुक्ता मायोपयुक्तो लोभोपयुक्तः ९ क्रोधोपयुक्ता मायोपयुक्तो लोभोपयुक्ताः १०, क्रोधोपयुक्ता मायोपयुक्ता लोभोपयुक्तः ११ क्रोधोपयुक्ताः मायोपयुक्ता लोभोपयुक्ताः १२, एवं त्रिकयोगे जाता द्वादश, अथ चतुष्कयोगाः–क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्तो लोभोपयुक्तः १, क्रोधोपयुक्ताः मानोपयुक्तो मायोपयुक्तो लोभोपयुक्ताः २, क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्ता लोभोपयुक्तः ३ क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्ता लोभोपयुक्ताः ४ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्तो लोभोपयुक्तः ५ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्तो लोभोपयुक्ताः ६, क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्ता लोभोपयुक्तः ७ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्ता लोभोपयुक्ताः ८, एवं चतुष्कयोगा जाता अष्टौ इत्येकषड्द्वादशअष्टयोगमीलने सर्वे जातास्सप्तविंशतिमिताः । 'इमीसे' णं भंते ! इयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु एगमेगंसि णिरयावासंसि समयाहियाए जहण्णट्ठितीए वट्टमाणा णेरइया किं कोहोवउत्ता माणोवउत्ता मायोवउत्ता लोभोवउत्ता ?, गो०! कोहोवउत्ते य १ माणो

वउत्ते य २ मायोवउत्ते य ३ लोभोवउत्ते य ४ कोहोवउत्ता य ५ माणोवउत्ता य ६ मायोवउत्ता य ७ लोभोवउत्ता य ८, अहवा कोहोवउत्ता य माणोवउत्ते य, एवं असीति भंगा भणियव्वा, अथाशीतिर्भङ्गा उच्यन्ते—यथा क्रोधोपयुक्तो मानोपयुक्तो मायोपयुक्तो लोभोपयुक्तः, एकत्वेन चत्वारो जाताः, क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्ता लोभोपयुक्ताः, बहुत्वेनापि चत्वारः, सर्वे एकक-योगा अष्टौ, अथ द्विकयोगे चतुर्विंशतिभङ्गा यथा—क्रोधोपयुक्तो मानोपयुक्तः १ क्रोधोपयुक्ता मानोपयुक्तः २ क्रोधोपयुक्तो मानो-पयुक्ताः ३ क्रोधोपयुक्ता मानोपयुक्ताः ४ एवं क्रोधोपयुक्तो मायोयुक्तः ५ क्रोधोपयुक्ता मायोपयुक्तः ६ क्रोधोपयुक्तो मायोपयुक्ताः ७ क्रोधोपयुक्ता मायोपयुक्ताः ८ क्रोधोपयुक्तो लोभोपयुक्तः ९ क्रोधोपयुक्ता लोभोपयुक्तः १० क्रोधोपयुक्तो लोभोपयुक्ताः ११ क्रोधो-पयुक्ताः लोभोपयुक्ताः १२ एवं मानोपयुक्तो मायोपयुक्तः १३ मानोपयुक्ता मायोपयुक्तः १४ मानोपयुक्तो मायोपयुक्ताः १५ मानो-पयुक्ता मायोपयुक्ताः १६ एवं मानोपयुक्तो लोभोपयुक्तः १७ मानोपयुक्तो लोभोपयुक्ताः १८ मानोपयुक्ता लोभोपयुक्तः १९ मानो-पयुक्ता लोभोपयुक्ताः २०, एवं मायोपयुक्तो लोभोपयुक्तः २१ मायोपयुक्ता लोभोपयुक्तः २२ मायोपयुक्तो लोभोपयुक्ताः २३ मायो-पयुक्ता लोभोपयुक्ताः २४, एवं क्रोधमानाभ्यां ४ क्रोधमायाभ्यां ४ क्रोधलोभाभ्यां ४ मानमायाभ्यां ४ मानलोभाभ्यां ४ मायालो-भाभ्यां ४ द्विकसंयोगा एकत्वबहुत्वाभ्यां ४ चत्वारो भवन्ति, सर्वे मीलिता जाताश्चतुर्विंशतिमिताः, त्रिकसंयोगे द्वात्रिंशद् भवन्ति, यथा क्रोधोपयुक्तो मानोपयुक्तो मायोपयुक्तः १, क्रोधोपयुक्तो मानोपयुक्तो मायोपयुक्ताः २ क्रोधोपयुक्तो मानोपयुक्ता मायोपयुक्ताः ३ क्रोधोपयुक्तो मानोपयुक्ता मायोपयुक्तः ४, क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्तः ५, क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्ताः ६ क्रोधो-पयुक्ता मानोपयुक्ता मायोपयुक्तः ७ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्ताः ८ क्रोधोपयुक्तो मानोपयुक्तो लोभोपयुक्तः ९ क्रोधोपयुक्तो

मानोपयुक्तो लोभोपयुक्ताः १० क्रोधोपयुक्तो मानोपयुक्ताः लोभोपयुक्तः ११ क्रोधोपयुक्तो मानोपयुक्ता लोभोपयुक्ताः १२ क्रोधोपयुक्ता मानोपयुक्तो लोभोपयुक्तः १३ क्रोधोपयुक्ता मानोपयुक्तो लोभोपयुक्ताः १४ क्रोधोपयुक्ताः मानोपयुक्ता लोभोपयुक्तः १५ क्रोधोपयुक्ता मानोपयुक्ता लोभोपयुक्ताः १६ क्रोधोपयुक्तो मायोपयुक्तो लोभोपयुक्तः १७ क्रोधोपयुक्तो मायोपयुक्तो लोभोपयुक्ताः १८ क्रोधोपयुक्तो मायोपयुक्ता लोभोपयुक्तः १९ क्रोधोपयुक्तो मायोपयुक्ता लोभोपयुक्ताः २० क्रोधोपयुक्ता मायोपयुक्तो लोभोपयुक्तः २१ क्रोधोपयुक्ता मायोपयुक्तो लोभोपयुक्ताः २२ क्रोधोपयुक्ता मायोपयुक्ता लोभोपयुक्तः २३ क्रोधोपयुक्ता मायोपयुक्ता लोभोपयुक्ताः २४ मानोपयुक्तो मायोपयुक्तो लोभोपयुक्तः २५ मानोपयुक्तो मायोपयुक्तो लोभोपयुक्ताः २६ मानोपयुक्तो मायोपयुक्ता लोभोपयुक्तः २७ मानोपयुक्तो मायोपयुक्ता लोभोपयुक्ताः २८ मानोपयुक्ता मायोपयुक्तो लोभोपयुक्तः २९, मानोपयुक्ता मायोपयुक्तो लोभोपयुक्ताः ३०, मानोपयुक्ता मायोपयुक्ता लोभोपयुक्तः ३१, मानोपयुक्ताः मायोपयुक्ता लोभोपयुक्ताः ३२, क्रोधमानमायात्रिकेऽष्टौ क्रोधमानलोभेष्वष्टौ क्रोधमायालोभेष्वष्टौ मानमायालोभेष्वष्टौ, एवं त्रिकसंयोगैर्जाता ३२ भेदाः, चतुष्कसंयोगे षोडश भवन्ति, यथा क्रोधोपयुक्तो मानोपयुक्तो मायोपयुक्तो लोभोपयुक्तः १, क्रोधोपयुक्तो मानोपयुक्तो मायोपयुक्तो लोभोपयुक्ताः २ क्रोधोपयुक्तो मानोपयुक्तो मायोपयुक्ता लोभोपयुक्तः ३, क्रोधोपयुक्तो मानोपयुक्तो मायोपयुक्ताः लोभोपयुक्ताः ४, क्रोधोपयुक्तो मानोपयुक्ता मायोपयुक्तः लोभोपयुक्तः ५ क्रोधोपयुक्तो मानोपयुक्ताः मायोपयुक्तो लोभोपयुक्ताः ६, क्रोधोपयुक्तो मानोपयुक्ता मायोपयुक्ताःलोभोपयुक्तः ७, क्रोधोपयुक्तो मानोपयुक्ता मायोपयुक्ता लोभोपयुक्ताः ८, क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्तो लोभोपयुक्तः ९, क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्तो लोभोपयुक्ताः १० क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्ता लोभोपयुक्तः ११

क्रोधोपयुक्ता मानोपयुक्तो मायोपयुक्ता लोभोपयुक्ताः १२, क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्तो लोभोपयुक्तः १३ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्तो लोभोपयुक्ताः १४ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्ता लोभोपयुक्तः १५ क्रोधोपयुक्ता मानोपयुक्ता मायोपयुक्ता लोभोपयुक्ताः १६, एवं सर्वे जाताः अशीतिर्भङ्गाः, भगवतीप्रथमशते पञ्चमोद्देशके भङ्गकसङ्ख्या ॥

॥अथ अवगाहनाद्वारम् ॥ तत्र 'ओगाहणठिति'त्ति अवगाहन्ते-आसते यस्यां सा अवगाहना तनुः, तदाधारभूतं च क्षेत्रं, तस्याः स्थानानि-प्रदेशवृद्धा विभागा अवगाहनास्थानानि, तत्र 'जहण्णि'त्ति जघन्या अङ्गुलासङ्ख्येयभागमात्रा सर्वनरकेषु 'तप्पाउग्गु'त्ति तत्प्रायोग्योत्कर्षिका, यथा त्रयोदशप्रस्तटे धनुस्सप्तकं हस्तत्रयमङ्गुलषट्कं च, 'जहण्णियाए'त्ति एकादिसङ्ख्यातान्तप्रदेशाधिकजघन्यावगाहनायां वर्त्तमानानां नारकाणां स्तोकत्वात् क्रोधाद्युपयुक्त एकोऽपि लभ्यते अतोऽशीतिर्भङ्गाः, 'असंखेज्जपएस'त्ति असङ्ख्यातप्रदेशाधिकायां तत्प्रायोग्योत्कृष्टायां च नारकाणां बहुत्वात् क्रोधे बहुत्वसद्भावान्मानादिष्वेकत्वबहुत्वसम्भवात् २७ भङ्गाः, शरीरद्वारे सत्तावीसं भङ्गाः, वैक्रियतैजसकार्मणवपुःषु सप्तविंशतिर्वाच्येति, ननु विग्रहगतौ केवले-तैजसकार्मणशरीरे स्याताम्, तयोरल्पत्वेनाशीतिर्भङ्गानां सम्भवति, कथमुच्यते तयोः सप्तविंशतिरेवेति, अत्रोच्यते, सत्यमेतत्, केवलं वैक्रियवपुरनुगतयोस्तयोरिहाश्रयणं, केवलयोस्तयोश्चानाश्रयणमिति सप्तविंशतिरेव, 'छण्हं संघयणाणं असंघयणी'ति षण्णां संहननानां मध्यादेकतरेणापि संहननेनासंहननी, कस्मादित्याह—'नेवट्ठी'ति, नैवास्थ्यादीनि तेषां सन्ति, अस्थिसञ्चयरूपं च संहननमुच्यते अतोऽसंहननी, 'अणिट्ठ'त्ति इष्यन्ते स्मेतीष्टाः तन्निषेधादनिष्टाः अकान्ताः 'अमणुण्ण'त्ति न मानसिकसंवेदनेन शुभतया ज्ञायन्ते इत्यमनोज्ञाः, 'अमणाम'त्ति न मनसा अम्यन्ते—गम्यन्ते पुनः २ स्मरणतो ये ते अमनोऽमाः 'संघायत्ताए'त्ति सङ्घाततया शरीर-

रूपसश्रयतयेत्यर्थः, संस्थानद्वारे 'किंसंठिय'त्ति किं संस्थितं-संस्थानं येषां तानि किंसंस्थितानि, 'भवधारणि'त्ति भवधारणं-निजजन्मातिवाहनं प्रयोजनं येषां तानि भवधारणीयानीति, 'उत्तरवेउव्व'त्ति पूर्ववैक्रियापेक्षया उत्तरकालभावीनि वैक्रियाणि, 'हुंडसंठिय'त्ति सर्वत्रासंस्थितानि, दृष्टिद्वारे 'सम्मामिच्छादंसणे असीइ'त्ति(सू०४७)मिश्रदृष्टीनामल्पत्वात्, तद्भावस्यापि च कालतोऽल्पत्वादेकोऽपि लभ्यते इत्यशीतिर्भङ्गाः। ज्ञानद्वारे 'तिन्नि नाणाइं नियम'त्ति ये ससम्यक्त्वा नरक उत्पद्यन्ते तेषां प्रथमसमयादारभ्य भवप्रत्ययस्यावधिज्ञानस्य भावात् त्रिज्ञानिन एव ते, ये तु मिथ्यादृष्टयस्ते संज्ञिभ्योऽसंज्ञिभ्यश्चोत्पद्यन्ते, तत्र ये संज्ञिभ्यस्ते भवप्रत्ययादेव विभङ्गस्य भावात्त्र्यज्ञानिनो, ये त्वसंज्ञिभ्यस्तेषामाद्यादन्तर्मुहूर्त्तात् परतो विभङ्गोत्पत्तिरिति तेषां पूर्वमज्ञानद्वयं, पश्चाद् विभङ्गोत्पत्तावज्ञानत्रिकमित्युच्यते—'तिण्णि अण्णाणाइं भयणाए'त्ति, भजनया—विकल्पनया, कदाचित् द्वे कदाचित्त्रीणि इत्यर्थः, अत्रार्थे गाथे स्याताम्—"अस्सन्नी नरएसुं पज्जत्तो जेण लहइ विब्भंगं। नाणा तिन्नेव तओ अन्नाणा दोण्णि तिण्णेव ॥१॥ सन्नी नेरइएसुं उरलपरिच्चायणंतरे समए। विब्भंगं ओहिं वा अविग्गहे विग्गहे लहइ ॥२॥" आभिनिबोधिकज्ञानवत् सप्तविंशतिभङ्गोपेतानि आद्यानि त्रीणि ज्ञानानि अज्ञानानि वा, इह च त्रीणि ज्ञानानि इति यदुक्तं तदाभिनिबोधिकस्य पुनर्गणनेन, अन्यथा द्वे एव ते वाच्ये स्यातां, 'तिण्णि अण्णाणाइं' इत्यत्र यदि मतिश्रुताज्ञाने विभङ्गात् पूर्वकालभाविनी विवक्ष्येते तदाऽशीतिर्भङ्गा लभ्यन्ते, अल्पत्वात्तेषां, किन्तु जघन्यावगाहनास्ते, ततो जघन्यावगाहनाश्रयेणैवाशीतिर्भङ्गास्तेषां ज्ञेयाः, योगद्वारे 'एवं कायजोए'त्ति इह यद्यपि केवलकार्मणकाययोगेऽशीतिर्भङ्गाः सम्भवन्ति तथापि तस्याविवक्षणात् सामान्यकाययोगाश्रयणाच्च सप्तविंशतिरुक्ताः। उपयोगद्वारे 'सागरोवउत्त'त्ति आकारो—विशेषांशग्रहणशक्तिस्तेन सहेति साकारः, तद्विपक्षो निराकारः,

सामान्यग्राहीत्यर्थः, 'णाणत्तं लेसासु'त्ति रत्नप्रभावच्छेषपृथिवीप्रकरणान्यध्येयानि, केवलं लेश्यासु विशेषः, तासां भिन्नत्वात्, तद्दर्शनायाह—'तइयाए मीसिय'त्ति वालुकप्रभायां उपरितननरकेषु कापोता, अधस्तनेषु नीललेश्या स्यादिति यथासम्भवं प्रश्नसूत्रे उत्तरसूत्रे चाध्येतव्ये, गाथानुसारतः सूत्राभिलाप एवं कार्यः 'सक्करप्पभाए णं भंते! पणवीसाए नरयावाससयसहस्सेसु एकमेकंसि णिरयावासंसि कइ लेसाओ पं०?, गो०!, एगा काउलेस्सा पण्णत्ता, सक्करप्पभाए णं भंते! जाव काउलेसाए वट्टमाणा णेरइया किं कोहोवउत्ता इत्यादि जाव सत्तावीसं भङ्गाः, असुरकुमारप्रकरणे 'पडिलोमा भंग'त्ति(सू०४८)नारकप्रकरणे हि क्रोधमानादिना क्रमेण भङ्गकनिर्देशः कृतः, असुरकुमारप्रकरणेषु तु लोभमायामानक्रोधादयः प्रतिलोमतो वाच्याः, अत एवाह—"सव्वेऽवि ताव होज्जा लोभोवउत्ता, देवा हि प्रायो लोभवन्तः स्युः तेनासुरकुमाराः सर्वेऽपि लोभोपयुक्ताः १, द्विकसंयोगे तु लोभोपयुक्तत्वे बहुत्वं मायोपयुक्तत्वे एकत्वबहुत्वाभ्यां द्वौ भङ्गौ, एवं सप्तविंशतिर्भङ्गाः 'णाणत्तं जाणियव्वं'ति, नारकाणामसुरादीनां संहनन-संस्थानलेश्यासु नानात्वं ज्ञातव्यमिति, 'चउसट्ठीएणं भंते! असुरकुमारावाससयसहस्सेसु एगमेगंसि असुरकुमारावासंसि असुरकुमाराणं सरीरा किंसंघयणी?, गो०! असंघयणी, जे पोग्गला इट्ठा कंता ६ ते तेसिं संघायत्ताए परिणमंति, एवं संठाणेवि, नवरं भवधारणिज्जा समचउरंससंठिया, उत्तरवेउव्विया अन्नयरसंठाणसंठिया, एवं लेसासुवि, कति लेस्साओ पं०?, गो०! चत्तारि तं० किण्हा नीला काउ तेउलेसा, चउसट्ठीए णं जाव किण्हलेस्साए वट्टमाणा किं कोहोवउत्ता ४?, गो०! सव्वेऽवि ताव होज्जा लोहोवउत्ता, एवं नीला काउ तेउएवि, नागकुमारादिषु चुलसीए नागकुमारावाससयसहस्सेसु इत्येवं प्रश्नसूत्रेषु नानात्वमवगम्य सूत्राभिलापः कार्य इति। एवं पुढविकाइयाणं सव्वेसुवि ठाणेसु अभंगयं(४९)एकैकस्मिन् पृथिवीकायिके कषायोपयुक्ता बहवो लभ्यन्ते

तेनाभङ्गकं दशस्वपि स्थानेषु योज्यं, नवरं 'तेउलेसाए'त्ति पृथ्वीकायिकलेश्याद्वारे तेजोलेश्या वाच्या, सा च यदा देवलोकच्युतो देव एकोऽनेका वा पृथ्वीषूत्पद्यंते तदा सा स्यात्, तत्र तदेकादिभवनादशीतिर्भङ्गाः स्युः, शेषाणि तु नारकवद्वाच्यानि, 'णाणत्तं जाणियव्वं'ति नानात्वं यत् पूर्वोक्तं, तच्चेदं शरीरादिषु सप्तसु ज्ञेयम्–'असंखिज्जेसु णं पुढविकाइयावाससयसहस्सेसु पुढवीकाइयाणं कइ सरीरगा पं०?, गो०! तिण्णि, तं०–ओरालिए तेयए कम्मए, एतेषु च 'कोहोवउत्ता' इत्यादि वाच्यं, तथा 'असंखेज्जा णं पुढवीकाइया णं किंसंघयणी?, तथैव नवरं पोग्गला अमणुन्ना मणुन्ना सरीरसंघायत्ताए परिणमंति' एवं संस्थानद्वारेऽपि, 'किंसंठिया पण्णत्ता?, गो०! हुंडसंठियात्ति' इति वाच्यं, न तु 'दुविहा सरीरगा पण्णत्ता, तं०–भवधारणिज्जा उत्तरवेउव्विया ये'ति, यतः पृथ्वीकायिकानां तदभावात्, अथ लेश्याद्वारे–'पुढवीकाइया णं भंते! कइलेसा पं०?, गो०! चत्तारि, तं०–किण्हा नीला काउ तेउ' आद्यासु तिसृष्वभङ्गकमेव, तेजोलेश्याविधिः पूर्वोक्त एव, दृष्टिद्वारे इदं वाच्यं–'असंखेज्जपुढविकाइयाणं किं सम्मद्दिट्ठी-मिच्छ० सम्मामिच्छ०?, गो०! मिच्छद्दिट्ठी', शेषं तथैव, ज्ञानद्वारे 'पुढविकाइया णं भंते! आणी अन्नाणी?, गो०! अन्नाणी' योगद्वारे 'पुढविकाइया किं मणजोगी वय० कायजोगी?, गो०! नो मण० नो वय० कायजोगी'। 'एवं आउकाइयावि'त्ति, पृथ्वीवदप्कायिका वाच्याः, दशस्वपि स्थानेषु अभङ्गा वाच्याः, तेजोलेश्यायामपि तथैवाशीतिर्भङ्गाः, यतो देवश्च्युतोऽत्र उत्पद्यत इति। 'तेउकाए' इत्यादि, 'सव्वेसुवि ठाणेसु'त्ति स्थितिस्थानादिदशस्वपि अभङ्गकं, क्रोधाद्युपयुक्तानामेकदैव बहूनां तेषु भावात्, इह देवो नोत्पद्यत इति तेजोलेश्या तेषु नास्ति, ततस्तदसम्भवानाशीतिरपीत्यभङ्गकं, एतेषु सूत्राणि पृथ्वीकायसमानि, केवलं वायुकायसूत्रेषु शरीरद्वारे एवमध्येयं–'असंखिज्जेसु णं भंते! ०वाउकाइयाणं कइ सरीरगा पं०?, गो०! चत्तारि तं०–ओरालिए वेउव्विए तेयए कम्मए'

'वणप्फइए'त्ति वनस्पतयः पृथ्वीवद्वाच्याः, दशस्वपि स्थानकेषु भङ्गकाभावात् तेजोलेश्यायां च तथैवाशीतिभङ्गसद्भावादिति। ननु पृथिव्यब्वनस्पतीनां दृष्टिद्वारे सास्वादनभावेन सम्यक्त्वं कर्मग्रन्थेष्वभ्युपगम्यते, तत एव च ज्ञानद्वारे मतिज्ञानं श्रुतज्ञानं च, अल्पाश्चैत एव ततोऽशीतिर्भङ्गाः सम्यग्दर्शनाभिनिबोधिकश्रुतज्ञानेषु भवन्तु, नैवं, पृथिव्यादिषु सास्वादनभावस्यात्यन्तविरलत्वेन अविवक्षितत्वात्, तत एवोच्यते–'उभयाभावो पुढवाइएसु विगलेसु होइ उववन्नो'त्ति, उभयं–प्रतिपद्यमानपूर्वप्रतिपन्नरूपं इति। 'बेंदिय'त्ति(सू०५०)जेहिं ठाणेहिं णेरइयाणं असीति भंगा तेहिं ठाणेहिं बेंदियतेंदियचउरिंदियाणं असीइं चेव, तत्र एकादिसङ्ख्यान्तसमयाधिकायां जघन्यस्थितौ १ जघन्यावगाहनायां च २, तत्रैव च सङ्ख्येयान्तप्रदेशवृद्धायां ३ मिश्रदृष्टौ ४ च, नारकाणामशीतिर्भङ्गाः उक्ताः, विकलेन्द्रियाणामप्येतेषु स्थानेषु मिश्रदृष्टिवर्जेष्वशीतिरेव, अल्पत्वात् तेषां क्रोधाद्युपयुक्तस्यैकैकस्य सम्भवात्, मिश्रदृष्टिस्तु विकलेन्द्रियेषु न स्यात् इति न विकलेन्द्रियाणां तत्राशीतिभङ्गसम्भव इति, इहैव विशेषाभिधानायाह–'णवर'मिति, दृष्टिद्वारे ज्ञानद्वारे च नारकाणां सप्तविंशतिरुक्ता विकलेन्द्रियाणां तु अब्भहियंति, अभ्यधिकानि अशीतिर्भङ्गकानां च भवति, क्वेत्याह–सम्यक्त्वे, अल्पीयसां हि विकलेन्द्रियाणां सास्वादनभावेन सम्यक्त्वं, अल्पत्वाच्च तेषामेकत्वस्यापि सम्भवादशीतिर्भङ्गाः, एवं मतिज्ञाने श्रुतज्ञाने च, तथा 'जेही'त्यादि, येषु स्थानेषु नारकाणां सप्तविंशतिर्भङ्गाः तेषु स्थानेषु द्वित्रिचतुरिन्द्रियाणां भङ्गकाभावः, तानि च प्रागुक्ताशीतिभङ्गकस्थानावशेषाणि मन्तव्यानि, भङ्गकाभावश्च क्रोधाद्युपयुक्तानामेकदैव बहूनां भावादिति, विकलेन्द्रियसूत्राणि पृथ्वीकायसूत्राणीवाध्येयानि, नवरमिह लेश्याद्वारे तेजोलेश्या नाध्येतव्या, दृष्टिद्वारे 'बेइंदिया णं भंते! किं सम्मदिट्ठी मिच्छ०सम्मामिच्छ०?, गो०! सम्मदिट्ठी मिच्छ०(णो)सम्मामिच्छदिट्ठी''सम्मदंसणे वट्टमाणा बेइंदिया किं कोहोवउत्ता'इति प्रश्ने

उत्तरमशीतिभङ्गाः, ज्ञानद्वारे च बेइंदिया णं भंते! किं नाणी अन्नाणी?, गो०! णाणीवि अन्नाणीवि, जइ नाणी दुनाणी—मइनाणी सुयनाणी' शेषं तथैवाशीतिर्भङ्गाः। योगद्वारे—'बेइंदिया णं भंते! किं मण० वय०कायजोगी?, गो०! णोमण० वय० कायजोगीवि,' एवं त्रीन्द्रियचतुरिन्द्रियसूत्राण्यपि। 'पंचिंदिए' इत्यादि, 'जहिं सत्तावीसं भंग'त्ति यत्र नारकाणां सप्तविंशतिर्भङ्गास्तत्र पञ्चेन्द्रियतिरश्चां अभङ्गकं, तच्च जघन्यस्थित्यादिकं पूर्वदर्शितमेव, भङ्गकाभावश्च क्रोधाद्युपयुक्तानां बहूनां भावाद्, एकदैव तेषु भावादिति सूत्राणीह नारकसूत्रवदध्येयानि, नवरं शरीरद्वारे अयं विशेषः, 'असंखिज्जेसु णं भंते! पंचिंदियतिरिक्खजोणियावासेसु पंचिंदियतिरिक्खजोणिया णं केवइया सरीरा पं०?, गो०! चत्तारि, तं०—ओरालिए वेउव्विए तेयए कम्मए' सर्वत्र चाभङ्गकं तेषां। संहननद्वारे, 'पंचिंदियतिरिक्खजोणियाण किं संघयणा पं०?, गो०! छ सं०' एवं संस्थाने छ संठाणा। लेश्याद्वारे 'छल्लेसा' मणुस्सावि'त्ति यथा नारका दशसु द्वारेषु अभिहिताः तथा मनुष्याः स्युः, 'जेहिं'त्ति तत्र नारकाणां जघन्यस्थितौ एकादिसङ्ख्यातान्तसमयाधिकायां १ जघन्यावगाहनायां २ तस्यामेव सङ्ख्यातान्तप्रदेशाधिकायाम् ३ मिश्रे च ४ अशीतिर्भङ्गा उक्ताः, मनुष्याणामप्येतेष्वशीतिभङ्गाः, तत्कारणं च तदल्पत्वमेव, नारकाणां मनुष्याणां च सर्वथा साम्यपरिहारायाह—'जेसु सत्तावीस'न्ति नारकाणां येषु सप्तविंशतिरुक्ता मनुष्याणां तेष्वभङ्गकं, यतो नारकाणां बाहुल्येन क्रोधोदय एव स्यात् तेन तेषां सप्तविंशतिर्भङ्गा उक्तस्थानेषु युज्यन्ते, मनुष्याणां तु प्रत्येकं क्रोधाद्युपयोगवतां बहूनां भावान्न कषायोदये विशेषोऽस्ति, तेन तेषां तेषु स्थानेषु भङ्गकाभावः, इहैव विशेषमाह—'नवरं'ति येषु स्थानकेषु नारकाणामशीतिः तेषु मनुष्याणामप्यशीतिः, तथा 'जेसु सत्तावीसा तेसु अभंगयं' नवरं मनुष्याणामिदमभ्यधिकं, यदुत—जघन्यस्थितौ तेषामशीतिः, नतु नारकाणां तत्र सप्तविंशतिरुक्तेति अभङ्गकं, तथा आहारकशरीर-

वतां अशीतिः, आहारकवतां मनुष्याणामल्पत्वात्, नारकाणां तु तन्नास्त्येव, इत्येतदभ्यधिकं मनुष्याणामिति, इह च नारकसूत्राणां मनुष्यसूत्राणां च शरीरादिषु चतुर्षु ज्ञानद्वारे विशेषमाह—'असंखिज्जेसु णं भंते! मणुस्सावासेसु कइसरीरा पन्नत्ता ?, गो० ! पंच, तं०—उरा० वेउ० आहारए तेयए कम्मए, असंखिज्जेसु णं जाव ओरालियमरीरे वट्टमाणा भंते! मणूसा किं कोहोवउत्ता ? ४, गो० ! कोहोवउत्ता ४' एवं सर्वशरीरेषु, नवरमाहारकेष्वशीतिर्भङ्गानां वाच्या, एवं संहननद्वारेऽपि 'मणुस्सा णं भंते ! किंसंघयणा पं० ?, गो० ! छ,' संस्थानद्वारे 'छसंठाणा' लेश्याद्वारे 'छल्लेसा' ज्ञानद्वारे 'नाणाणि पंच जाव केवलनाणं' एषु च केवलवर्जेषु अभङ्गकं केवले तु कषायोदय एव नास्ति इति। 'वाणमंतरे' त्यादि व्यन्तरादयो दशस्वपि स्थानेषु भवनपतिवद्वाच्याः, यत्र असुरादीनामशीतिर्भङ्गा यत्र च सप्तविंशतिस्तत्र व्यन्तरादीनामपि ते तथैव वाच्याः, भङ्गकास्तु लोभमादौ कृत्वा 'लोहोवउत्ता' इत्यध्येयाः, भवनपतिव्यन्तरज्योतिष्कादीनां विशेषमाह—'णवरं णाणत्तं जाणियव्वं जं जस्स'त्ति, यत् लेश्यादिगतं यस्य ज्योतिष्कादेस्तत् नानात्वं ज्ञातव्यं तस्येति, तत्र लेश्यायां ज्योतिष्काणामेका तेजोलेश्या, ज्ञाने च त्रीणि ज्ञानानि अज्ञानानि च त्रीणि, असंज्ञिनां तत्रोपपाताभावेन, असंज्ञ्युत्पादेन चापर्याप्तावस्थायामपि विभङ्गस्य सद्भावात् त्रीण्यज्ञानानि, तथा वैमानिकानां लेश्याद्वारे तेजोलेश्यादयस्तिस्रो लेश्या वाच्याः, ज्ञानद्वारे ज्ञानानि अज्ञानानि च त्रीणि, 'संखेज्जेसु णं भंते ! वेमाणियावाससयसहस्सेसु एगमेगंसि वेमाणियावासंसि केवइया ठिइठाणा पण्णत्ता ?' इत्यादि ॥ **इति प्रथमशते पञ्चमोद्देशकविवरणम् ॥**

अथ षष्ठो व्याख्यायते, 'जावंते' इत्यादिदर्शनायाह—'जावइयाओ'त्ति (५१ सू०) यत्परिमाणात् 'उवासंतराओ'त्ति अवकाशान्तरात् आकाशविशेषात् अवकाशरूपान्तरालाद्वा, यावत्याकाशे स्थित इति, 'उदयंते'त्ति उदयन्—उद्गच्छन् 'चक्खु-

फरिसं'ति चक्षुषो—दृष्टेः स्पर्श इव स्पर्शो, न तु स्पर्श एव, चक्षुषोऽप्राप्तकारित्वात्, 'हव्वं'ति शीघ्रं, स सूर्यः सर्वाभ्यन्तरमण्डले सप्तचत्वारिंशति योजनानां सहस्रेषु द्वयोः शतयोः त्रिषष्टौ च साधिकायां वर्त्तमान उदये दृश्यते, तदस्तमयेऽप्येवं इति, मण्डलविचारः स्थानान्तरादवसेयः। 'सव्वओ समंत'त्ति सर्वतो दिक्षु, समन्तात् विदिक्षु च, 'ओभासइ'त्ति अवभासयति ईषत् स्थूलमेव प्रकाशयति, 'उज्जोवेइ' भृशं उद्योतयति, 'तवेइ'त्ति तपति—शीतनाशं कुर्यात् इति, (प्रभासयति) यथा सूक्ष्मं वस्तु दृश्यते तथा कुर्यात् इति, अथ क्षेत्रमाश्रित्याह—'तं भंते'त्ति यत् क्षेत्रमवभासयति उद्योतयति तपति प्रभासयति तत् क्षेत्रं किं भदन्त! स्पृष्टं अस्पृष्टं वाऽवभासयति?, इह यावत्करणादिदं दृश्यं, गो०! पुट्ठं, नो अपुट्ठं ओभासेइ, तओ ओगाढं अणोगाढं?, गो०! ओगाढं, नो अणोगाढं, एवं अणंतरोगाढं, नो परंपरोगाढं, तं भंते! किं अणुयं बायरमोभासइ?, गो०! अणुंपि ओभासेइ बायरंपि ओभासेइ, तं किं उड्ढं तिरियं अहे ओभा०?, गो०! उड्ढंपि ३, तं भंते! किं आइं मज्झे अंते ओभासेइ?, गो०! आइंपि ३, तं भंते! सविसए अविसए?, गो०! सवि० नो अविसए, तं भंते! आणुपुव्विं अणाणुपुव्विं ओभा०?, गो०! आणुपु० नो अणाणुपु०, तं भंते! कइदिसिं ओभासइ?, गो!०णियमा छद्दिसिं'ति, एतेषां पदानां 'उज्जोएइ०'इति पदत्रयेण योजना वाच्या, 'पुट्ठं'ति स्पृष्टं क्षेत्रं प्रभासयति, अथ स्पर्शनामाह—'से नूणं'ति, 'सव्वंति'त्ति प्राकृतत्वात् सर्वतः सर्वासु दिक्षु 'सव्वावंति'त्ति सर्वेण वा आतपेन आप्तिः—प्राप्तिर्यस्य क्षेत्रस्य तत्सर्वाप्ति, सर्वेण वा आतपेन आपो—व्याप्तिर्यस्य तत्सर्वापं, सह व्यापेन आतपव्याप्त्या यत् तत्सव्यापं, इतिशब्दः सामान्यार्थः, 'फुसमाणकालसमयंमि'त्ति स्पृश्यमानक्षणे, अथवा स्पृशतः सूर्यस्य स्पर्शनायाः कालसमयः स्पृशत्कालसमयः, आतपेनेति गम्यते, यावत् क्षेत्रं स्पृशति सूर्यः; 'तावइयं'ति तावत् क्षेत्रं स्पृश्यमानं स्पृष्टमिति, 'हन्ते'त्युत्तरं

स्पृश्यमानस्पृष्टयोश्चैकत्वं मन्तव्यमिति प्रथमसूत्रात्, स्पर्शनामेवाधिकृत्याह—"लोयंते भंते! अलोयंतं"ति (५२ सू०) लोकान्तः सर्वतोऽलोकान्तं अलोकान्तो लोकान्तं, इहापि 'पुट्ठं फुसइ'इति, योज्यं, यावन्नियमात् षड्दिशः, एतद्भावना चैवं—स्पृष्टमलोकान्तं लोकान्तं स्पृशति, स्पृष्टत्वं च व्यवहारतो दूरस्थस्यापि दृष्टं, यथा चक्षुःस्पर्शः, अवगाढं-आसन्नमिति, तदपि अनन्तरावगाढम्—अव्यवधानेन सम्बद्धं, न तु परम्परावगाढं, शृङ्खलाकटिकावत् परम्परासम्बद्धं, तं चाणुं स्पृशति, अलोकान्तप्रदेशमात्रं, सूक्ष्मत्वात्, बादरमपि च बहुदेशत्वात्, तमूर्ध्वमधस्तिर्यग् च स्पृशेत्, ऊर्ध्वादिदिक्षु लोकान्तस्यालोकान्तस्य च भावात्, तमादौ मध्येऽन्ते च स्पृशति, कथम्?, आदिमध्यान्तकल्पनात्, तिर्यगूर्ध्वाधोलोकप्रान्तानां, तं च स्वविषये स्पृशति स्पृष्टावगाढादौ, नाविषयेऽस्पृष्टादाविति, तं चानुपूर्व्या, आनुपूर्वी चेह प्रथमस्थाने लोकान्तः ततो द्वितीयस्थाने अलोकान्त इत्यवस्थानतया स्पृशेत्, अन्यथा तु स्पर्शनैव न स्यात्, तं च षट्सु दिक्षु स्पृशेत्, लोकान्तस्य पार्श्वतस्सर्वतोऽलोकान्तसद्भावात्, विदिक्षु च स्पर्शना नास्ति, दिशां लोकविष्कम्भप्रमाणत्वात्, विदिशां च तत्परिहारेण भावात्, एवं द्वीपसागरान्तसूत्रेषु स्पृष्टादिपदभावना कार्या, द्वीपान्तसागरान्ते 'दूसियं'ति अस्यैवं भावना—योजनसहस्रावगाढा द्वीपाश्च समुद्राः स्युः, ततश्चोपरितनानधस्तनांश्च द्वीपसमुद्रप्रदेशानाश्रित्योर्ध्वाधोदिग्द्वयस्पर्शना वाच्या, पूर्वादिदिशां तु प्रतीतैव, समन्ततस्तेषामवस्थानात्, 'उदयंते पोतंतं'ति' नद्याद्युदकान्तं पोतान्तं—नौपर्यवसानं, इहाप्युच्छ्रयापेक्षया ऊर्ध्वदिक्स्पर्शना वाच्या, जलनिमज्जने वेति, 'छिदंते दूसंतं'ति, छिद्रान्तो 'दूसंतं'ति छिद्रान्तो दूष्यान्तं—वस्त्रान्तं स्पृशति, इहापि षड्दिक्स्पर्शभावना वस्त्रोच्छ्रयापेक्षया, अथवा कम्बलरूपवस्त्रपोट्टलिकायां तन्मध्योत्पन्नजीवभक्षणेन तन्मध्यरन्ध्रापेक्षया लोकान्तसूत्रवत् षड्दिक्स्पर्शना भावयितव्या, 'छायंते'त्ति, इह छायाभेदेन षड्दिग्भावनैवम्—आतपे व्योमवर्त्तिप-

क्षिप्रभृतिद्रव्यस्य या छाया तदन्त आतपान्तं चतुर्दिक्षु स्पृशति सः, तथा तस्या एव छायाया भूमेः सकाशात् तत् द्रव्यं यावदुच्छ्रयोऽस्ति, ततश्च छायान्त आतपान्तं ऊर्ध्वमधश्च स्पृशति, अथवा प्रासादवरण्डिकादेर्या छाया तस्या भित्तेरवतरन्त्या आरोहन्त्या वा अन्त आतपान्तमूर्ध्वमधश्च स्पृशतीति, अथवा छायातपयोरेव पुद्गलानां असङ्ख्येयप्रदेशावगाहित्वादुच्छ्रयसद्भावस्तत्सद्भावाच्चोर्ध्वाधोविभागः, ततः छायान्त आतपान्तमूर्ध्वमधश्च स्पृशेत् इति भावनीयं। स्पर्शनाधिकारात् प्राणातिपातादिपापस्थानकर्मस्पर्शनामाह–'अत्थि'त्ति, (५३ सू०) अस्ति अयं पक्षः, 'किरिया कज्जइ' इति क्रियत इति, क्रिया–कर्म सा क्रियते–भवति, 'पुट्ठे'त्यादि, व्याख्या पूर्ववत्, 'कडा कज्जइ'त्ति कृता भवति, अकृतस्य कर्मणोऽभावात्, आत्मकृतमेव कर्म स्यात्, नान्यथा, 'अणाणुपुव्वि'त्ति, पूर्वपश्चाद्विभागो यत्र नास्ति सा अनानुपूर्वी उच्यते, 'जहा नेरइया तहा एगिंदियवज्जा भाणियव्वा' नारकवदसुरादयो वाच्याः एकेन्द्रियवर्जाः, तेषां हि दिक्पदे 'निव्वाघाएणं छद्दिसं, वाघायं पडुच्च सिय तिदिसंति'इत्यादि विशेषाभिलापस्य जीवपदोक्तस्य भावाद्, अत एवाह–'एगिंदिया जहा जीवा तहा भाणियव्वा, 'पेज्ज'त्ति, अनभिव्यक्तमायालोभस्वभावमभिष्वङ्गमात्रं प्रेम, 'दोसे'त्ति अनभिव्यक्तक्रोधमानस्वरूपमप्रीतिमात्रं द्वेषः, 'अब्भक्खाणे'त्ति असद्दोषाविष्करणम्, पेसुन्न'त्ति प्रच्छन्नमसद्दोषाविष्करणं, 'परपरिवाए'त्ति प्रकीर्णं परेषां गुणदोषवचनं, 'अरइरइ'त्ति अरतिः–मोहनीयोदयाच्चित्तोद्वेगः रतिः–विषयेषु मोहनीयोदयाच्चित्ताभिरतिः, अरतिरतिरिति, 'मायामोसे' तृतीयकषायद्वितीयाश्रवयोः संयोगाः, अनेन च सर्वसंयोगा उपलक्षिताः, अथवा वेषान्तरकरणेन यत्परवञ्चनं तन्मायामृषा, 'मिच्छादंसणसल्ले'त्ति, मिथ्यादर्शनं शल्यमिव विविधव्यथानिबन्धनत्वात्, मिथ्यादर्शनशल्यमिति ॥ एवं गौतमद्वारेण कर्म प्रज्ञप्तम्, तच्च शाश्वतं, अतः शाश्वतानेव

लोकादिभावान् रोहकाख्यमुनिद्वारेण दर्शयितुमाह—'आलीणे'त्ति (सू. ५४) गुरुसमाश्रितः संलीनो वा 'भद्दए'त्ति अनुपतापको गुरुशिक्षागुणात् 'सत्तमे उवासन्तरे'त्ति सप्तमपृथिव्या अधोवर्त्याकाशमिति, अत्र सङ्ग्रहगाथा वाच्या, तत्र 'उवासं'ति, सप्त अवकाशान्तराणि 'वाय'त्ति तनुवाता ७ घनवाताः ७ 'घणउदहि'त्ति घनोदधयः सप्त, 'पुढवि'त्ति सप्त पृथ्व्यः, 'दीव'त्ति जम्बूद्वीपादयोऽसङ्ख्याताः सागरा—लवणादयोऽप्यसङ्ख्याताः, 'वास'त्ति वर्षाणि भरतादीनि ७, 'नेरइयाइं'ति २४ दण्डकाः, 'अत्थि'त्ति अस्तिकायाः पञ्च, 'समय'त्ति कालविभागाः, कर्माण्यष्टौ लेश्याः ६, दृष्टयो मिथ्यादृष्ट्यादयः ३, दर्शनानि ४ ज्ञानानि ५ संज्ञाः ४ शरीराणि पञ्च योगाः ३ उपयोगौ द्वौ द्रव्याणि ६ प्रदेशा अनन्ताः पर्यवा अप्यनन्ताः 'अद्ध'त्ति अतीताद्धा अनागताद्धा सर्वाद्धा वा, अत्रैवं सूत्राभिलापः 'पुव्विं भंते! लोए पच्छा सत्तमे उवासंतरे'इति, एतानि सूत्राणि शून्यवादादिवादनिरासेन विविधबाह्याध्यात्मिकवस्तुसत्ताभिधानार्थानि, शम्भुकृतत्वनिरासेन वाऽनादित्वाभिधानार्थानि। अथ गौतममुखेनाह—'कइविहा णं'ति (सू. ५५) आकाशप्रतिष्ठितो वातः तनुवातघनवातरूपः, तस्य चाकाशान्तरोपरिस्थितत्वात्, आकाशं तु स्वप्रतिष्ठितमेव, न तत्प्रतिष्ठाचिन्ता कार्या, तथा वातप्रतिष्ठित उदधिः, घनोदधेस्तनुघनवातोपरिस्थितत्वात् २, उदधिप्रतिष्ठिता पृथिवी, घनोदधीनामुपरिस्थितत्वात् रत्नप्रभादीनां, बाहुल्यापेक्षया चेदं उक्तं, अन्यथा ईषत्प्राग्भारा पृथ्वी आकाशप्रतिष्ठितैव ३ सुगमं, पृथ्वीप्रतिष्ठितास्त्रसस्थावराः प्राणाः, इदमपि प्रायिकमेव, यतः आकाशविमानगिरिस्थिता अपि ते सन्ति इति ४, अजीवाः शरीरादिपुद्गलाः, ते जीवप्रतिष्ठिताः, जीवेषु तेषां स्थितत्वात् ५, जीवाः कर्मप्रतिष्ठिताः, कर्मसु अनुदयावस्थकर्मपुद्गलसमुदयरूपेषु संसारिजीवानामाश्रितत्वात्, अथवा जीवाः कर्मभिः प्रतिष्ठिताः—नारकादिभावेनावस्थिताः ६, तथा अजीवा जीवसङ्गृहीता ?, मनोभाषादेः पुद्गलानां

जीवैः सङ्गृहीतत्वात्, अथ जीवप्रतिष्ठितास्तथा अजीवा जीवसङ्गृहीता इत्येतयोः को भेदः ?, उच्यते, पूर्वस्मिन् वाक्ये आधाराधेयभाव उक्तः, उत्तरे तु सङ्ग्राह्यसङ्ग्राहकभाव इति भेदः, यच्च यस्य सङ्ग्राह्यं तत्तस्याधेयमिति अर्थापत्तितः स्यात्, यथा अपूपस्य तैलमित्याधाराधेयभावोऽप्युत्तरवाक्ये दृश्य इति ७, 'जीवा कम्म'त्ति जीवाः कर्मसङ्गृहीताः, संसारिजीवानामुदयप्राप्तकर्मवशवर्त्तित्वात्, ये च यद्वशास्ते तत्र प्रतिष्ठिताः, यथा घटे रूपादय इत्येवमत्राप्याधाराधेयता दृश्या 'से जहानामए'त्ति, (सू० ५६) स यथानामकः कश्चित्पुरुषो वस्तिं-दृतिं, 'आडोवे'त्ति आटोपयेत्—वायुना पूरयेत्, 'उप्पिं सियं'ति उपरिसितं 'षिञ् बन्धने' इति धातोः क्ते प्रत्यये चार्षत्वात्, सितं-बन्धं ग्रन्थिं बध्नाति-करोतीति 'से आउयाए'त्ति सः अप्कायः, 'तस्स वाउकायस्स'त्ति तस्य वायुकायस्य च 'उप्पिं'ति उपरितले सर्वोपरि तिष्ठति, 'हन्ते'त्युत्तरं, यथा वायुराधारो जलस्य एवमाधाराधेयभाव आकाशघनवातादीनामिति भावः, 'अथाहं'ति अस्ताघं-अगाधमिति, अस्ताघो वा निरस्ताधस्तलमिवेति, 'अतरं'ति तरीतुमशक्यं 'अपोरिसं'ति न विद्यते पुरुषः प्रमाणमस्येति अपौरुषेयं 'पोग्गले'त्ति कर्मशरीरादिपुद्गलाः 'अण्णमण्णबद्ध'त्ति अन्योऽन्यं जीवाः पुद्गलानां पुद्गला जीवानां च सम्बद्धा इति, 'अण्णमण्णपुट्ठ'त्ति पूर्वं स्पर्शनामात्रेण अन्योऽन्यं स्पृष्टास्ततोऽन्योऽन्यं गाढतरसम्बद्धा इति 'अण्णमण्णमोगाढ'त्ति परस्परेण लोलीभावं गताः, स्नेहप्रतिबद्धा इति, अत्र रागादिरूपः स्नेहः, 'अण्णमण्णघड'त्ति अन्योऽन्यं घटा-समुदायो येषां ते अन्योऽन्यघटाः तद्भावस्तत्ता तया अन्योऽन्यघटतया 'हरए'त्ति ह्रदो-नदः स्याद्-भवेत्, 'पुण्णे'त्ति पूर्णो—भृतः, 'पुण्णप्पमाणे'त्ति पूर्णप्रमाणः, तथा(यद्वा)पूर्णं जलेनात्मनो मानं यस्येति पूर्णात्ममानः 'वोलट्टमाणे'त्ति व्यपलोठ्यन् अतिजलभरणात् छर्द्यमानजल इति, 'वोसट्ट'त्ति जलप्राचुर्यादेव कसन्-स्फारीभवन्

वर्द्धमान इति. 'समभरघड'त्ति समभरश्चासौ घटश्चेति समासः, समभरघटः तद्भावस्तत्ता तया समभरघटतया समभरघट इव सर्वथा भृतघटाकारतयेति, 'अहेणं'ति अथार्थः, महंती 'सयासवं' सदा आश्रवति–ईषत् क्षरति जलं यैस्ते आश्रवाः—सूक्ष्मरन्ध्राणि, रन्तो-विद्यमानाः सदा वा शतसङ्ख्या वा आश्रवा यस्यां सा सदाश्रवा वा शताश्रवा वा, एवं शतच्छिद्रां, छिद्रं–महत्तरं रन्ध्रं, 'ओगाहे'त्ति अवगाहयेत्, 'आसव'त्ति आश्रवद्वारैः छिद्रैरिति, 'आपूर'त्ति आपूर्यमाणा जलेनेति शेषः, 'वोसट्टमाणा' भृता सती निमज्जति, 'समभरघड'त्ति प्रदक्षिप्तसमभरघटवत्, प्रदस्याभस्त्योदकेन सह तिष्ठति, यथा नौश्च प्रदोदकं अन्योऽन्यमवगाहते, एवं जीवपुद्गलयोर्भावना । 'सया समियं'ति (सू. ५७) सदा—सर्वदा 'समियं'ति सपरिमाणं, अथवा सदा–सर्वर्तुषु समितमिति—रात्रौ दिवसस्य च पूर्वापरयोः प्रहरयोः, तत्रापि कालस्य स्निग्धेतरभावमपेक्ष्य बहुत्वमल्पत्वं वाऽवसेयमिति, यदाह–'पढमचरिमाउ सिसिरे०'इत्यादि, लेपितपात्रं बहिर्न स्थापयेत्, स्नेहरक्षणार्थमिति, सूक्ष्मः स्नेहकायः प्रपतति, ऊर्ध्वं अधश्च तिर्यक् च, वैताढ्यादावधोलोकग्रामेषु तिर्यग्लोके, 'दीहकालं चिट्ठइ'त्ति तडागादिपूरणात्, विध्वंसमागच्छति अल्पत्वात् तथेति,

॥ प्रथमशते षष्ठोद्देशकविवरणम् १–६ ॥

अथ सप्तम आरभ्यते–'उववज्जमाणे'त्ति (सू. ५८) ननु उत्पद्यमान एव उत्पन्नः कथं नारक उच्यते ?, अनुत्पन्नत्वात् तिर्यग्वदिति, अत्रोच्यते, उत्पद्यमान उत्पन्न एव, तदायुष्कोदयात्, अन्यथा तिर्यगाद्यायुष्काभावान्नारकायुष्कोदयेऽपि यदि नारको नासौ तदन्यः कोऽसाविति ?, 'किं देसेणं'ति देशेन देशेन च यदुत्पदनं प्रवृत्तं तद् देशेन देशं, तत्र जीवः किं देशेन–स्वकीयावयवेन देशेन–नारकावयविनोऽंशतयोत्पद्यते, अथवा देशेन देशमाश्रित्योत्पादयन् वे(०यित्वे)ति, एवमन्यत्रापि, 'देसेणं सव्वं'ति तत्र देशेन–

स्वावयवेन सर्वतः—सर्वात्मना नारकावयवितयोत्पद्यत इति, 'सव्वेणं देसं'ति सर्वेण—सर्वात्मना सर्वतो देशतो—नारकांशतया वा, 'सव्वेणं सव्वं'ति सर्वेण सर्वात्मना सर्वतो नारकतयेति प्रश्नः,अत्रोत्तरं—न देशतयोत्पद्यते,यतो न परिणामिकारणावयवेन कार्यावयवो निर्वर्त्यते, तन्तुना पटाप्रतिबद्धपटप्रदेशवत्, यथा हि पटदेशभूतेन तन्तुना पटाप्रतिबद्धः पटदेशो न क्रियते तथा पूर्वावयविप्रतिबद्धेन तद्देशेन उत्तरावयविदेशो न निर्वर्त्यत इति १, तथा न देशेन सर्वतया, अपरिपूर्णकारणत्वात् तन्तुना पट इवेति २, न सर्वेण देशतया, सम्पूर्णपरिणामिकारणत्वात् समग्रघटकारणैर्घटैकदेशवत् ३, सर्वेण सर्वतयोत्पद्यते, पूर्णकारणसमवायात् घटवदिति ४, आहारसूत्रेऽप्येवं चतुर्भङ्गी, 'सव्वेणं देसं'ति ३, उत्पत्त्यनन्तरसमयेषु सर्वात्मप्रदेशैराहारपुद्गलान् कांश्चिदादत्ते कांश्चिद्विमुञ्चति, तप्ततापिकाघृततैलग्राहकविमोचकापूपवदिति देशमाहारयति, सर्वेण सर्वमिति ४, सर्वात्मप्रदेशैरुत्पत्तिसमये आहारपुद्गलानादत्त एव, प्रथमतस्तैलभृततप्ततापिकाप्रथमसमयपतितापूपवदिति, सर्वमाहारयति, यथा उत्पादस्तदाहारेण सह प्राग्दण्डकाभ्यां उक्तः, अ(त)थोत्पादप्रतिपक्षत्वादुद्वर्त्तनादण्डकस्तदाहारदण्डकेन सह वाच्यः, नोद्वर्त्तना अनुत्पन्नस्य स्यादित्युत्पन्नतदाहारदण्डकौ च त(तत उ)द्वर्त्तनाऽऽहारदण्डकौ वाच्याविति,एवं तावदष्टाभिर्दण्डकैर्देशसर्वाभ्यां उत्पादादि चिन्तितम्,अथाष्टाभिरेवार्द्धसर्वाभ्यामुत्पादादि चिन्त्यते, 'णेरइएत्ति जहा पढमिल्लेणं'ति, यथा देशेन तथाऽर्द्धेनापि, ननु देशस्यार्द्धस्य च को विशेषः ?, उच्यते, देशस्त्रिभागादिरनेकधा अर्द्धं त्वेकधा एवेति॥ उत्पत्तिरुद्वर्त्तना च प्रायो गतिपूर्विका स्यात् इति गतिसूत्राणि 'विग्गहगइ'त्ति(सू० ६०) विग्रहो ! वक्रं तत्प्रधाना गतिर्विग्रहगतिः तद्विपक्ष ऋजुगतिकः, तत्र जीवानां आनन्त्यात् प्रतिसमयं विग्रहगतिमतां तद्विपक्षणाणां च बहूनां भावाद् द्वयोरपि बहुत्वं, नारकाणामल्पत्वेन विग्रहगतिमतां कदाचिदसम्भवात् सम्भवेऽपि च एकादीनामपि तेषां भावात् तद्विप-

क्षाणां च बहूनां भावादाह–'सव्वेऽवि ताव होज्ज अविग्गहे'त्यादि विकल्पत्रयम्, 'जावेगिंदियवज्जे'त्ति जीवानां निर्विशेषाणां एकेन्द्रियाणां चोक्तयुक्त्या विग्रहगतित्वे तत्प्रतिषेधे च बहुत्वमेवेति न भङ्गत्रयं, तदन्येषु तु त्रयमेव, 'तियभंगो'त्ति त्रिकरूपो भङ्गस्त्रिकभङ्गो, भङ्गत्रयमित्यर्थः ॥ गत्यधिकाराच्च्यवनसूत्रम् 'महड्ढि'त्ति (सू. ६१) महर्द्धिको विमानपरिवाराद्यपेक्षया 'महज्जुइ'त्ति महाद्युतिकः शरीराभरणाद्यपेक्षया 'महाणुभावे'त्ति महानुभावो विशिष्टवैक्रियादिकरणाचिन्त्यसामर्थ्यः, 'अविउक्कं'ति व्युत्क्रान्तिः–उत्पत्तिस्तन्निषेधादव्युत्क्रान्तिकं, अथवा व्यवक्रान्तिः–मरणं तन्निषेधादव्यवक्रान्तिकम्, तद् यथा स्यादेवं च च्यवमानो जीवन्नेव मृतिकाले इति, चयं–वपुः 'चयमाणे'त्ति त्यजन् किञ्चित्कालं 'हिरि'त्ति ह्रीप्रत्ययं–लज्जानिमित्तं, स हि च्यवनसमयेन प्रक्रान्त एव नरपरिभुज्यमानस्त्रीगर्भाशयरूपं उत्पत्तिस्थानं दृष्ट्वा जिह्रेति, ह्रिया च नाहारयति, 'दुगुंछावत्तियं'ति जुगुप्साप्रत्ययं–कुत्सानिमित्तं शुक्रादेरुत्पत्तिकारणस्य कुत्साहेतुत्वात्, 'परीसह'त्ति परीषहशब्देन अरतिपरीषहो ग्राह्यः, तन्निमित्तं, दृश्यतेऽरतिप्रत्ययाल्लोकेऽप्याहारे वैमुख्यं स्यादिति, 'अहेणं'त्ति अथ लज्जादिक्षणानन्तरं आहारयति, बुभुक्षावेदनीयस्य चिरं सोढुमशक्यत्वात्, 'आहारिज्ज'त्ति क्रियाकालनिष्ठाकालयोरभेदाभिधानेन तदीयाहारस्याल्पतोक्ता, 'पहीणे'त्ति प्रक्षीणमायुः स्यात्, 'जत्थ'त्ति यत्र मनुजत्वादौ 'तमाउ'त्ति तन्मनुजत्वाद्यायुः प्रतिसंवेदयति–अनुभवतीति, देवनारकायुर्निषेधात्तिर्यग्मनुजायुर्युग्मं गृह्यते 'गब्भं वक्कमि'त्ति(सू. ६२)गर्भं व्युत्क्रामन्–गर्भे उत्पद्यमानः 'दव्विंदिय'त्ति निर्वृत्त्युपकरणलक्षणानि, तानि हि इन्द्रियपर्याप्तौ स्युरित्यनिन्द्रिय उच्यते, 'भाविंदिय'त्ति लब्ध्युपयोगलक्षणानि, तानि संसारिणां सर्वावस्थाभावीनीति, 'तप्पढम'त्ति तस्य–गर्भव्युत्क्रमणस्य प्रथमता तत्प्रथमता तया, मातुरोजो–जनन्या आर्त्तवं शोणितमिति, पितुः शुक्रं,तदुभयं संश्लिष्टं

'जं से'त्ति, या तस्य गर्भस्य माता 'रसविगईउ'त्ति रसरूपा विकृतीर्दुग्धाद्या रसविकारान् 'तदेगदेसेणं'ति तासां—रसविकृतीनामेकदेशस्तदेकदेशस्तेन सह ओज आहायति, उच्चारो—विष्ठा, प्रश्रवणं—मूत्रं, खेलो—निष्ठीवनं, 'सिंघाणगं'ति नासिकाश्लेष्म 'केसमंसु'त्ति केशाः—कूर्चरूपाः रोमाणि—कक्षादिकेशाः, जीवेणं'ति गर्भगतो जीवः, प्रभुः—समर्थो मुखेन कावलिकमाहारमाहारयितुं ?, अत्रोत्तरम्—'नो तिणमट्ठे' नायमर्थः समर्थः, 'सव्वओ'त्ति सर्वात्मना, 'अभिक्खणं'ति पुनः २ 'आहच्च'त्ति कदाचिदाहारयति कदाचिन्नाहारयति तथास्वभावत्वात्, ततो मुखेन न प्रभुः—समर्थः कावलिकमाहारमाहर्तुमिति भावः, अथ कथं सर्वत आहारयति इत्याह—रसो ह्रियते—आदीयते यया सा रसहरणी, नाभिनालमित्यर्थः, मातृजीवरसहरणी पुत्रजीवरसहरणी, पुत्रस्य रसोपादाने कारणत्वात्, कथमित्याह—मातृजीवप्रतिबद्धा सती सा यतः पुत्रजीवं स्पृष्टवती, इह च प्रतिबद्धता गाढसम्बन्धः, तदंशत्वात्, स्पृष्टता च सम्बन्धमात्रं अतदंशत्वात्, मातृजीवरसह० पुत्रजीवरस० द्वे नाड्यौ स्तः, ततस्तयोराद्या मातृजीवप्रतिबद्धा पुत्रजीवस्पृष्टा, तस्मान्मातृजीवरसहरण्या प्रतिबद्धया पुत्रजीवस्पर्शनात् आहारयति, 'अवरावि'त्ति पुत्रजीवरसहरण्यपि च पुत्रजीवप्रतिबद्धा सती मातृजीवं स्पृष्टवतीति, तस्माच्चिनोति शरीरं, उक्तं च तंत्रान्तरे—"पुत्रस्य नाभौ मातुश्च, हृदि नाडी निबध्यते। ययाऽसौ पुष्टिमाप्नोति, केदार इव कुल्यया ॥१॥" इति, 'मत्थुलुंगे'ति मस्तकभेजकं, अन्येऽप्याहुः—मेदः, फिप्फसादि मस्तुलुङ्गमिति भावः, 'अट्ठिमिंज'त्ति अस्थिमध्यावयवः, 'अम्मापिऊणं'ति अम्बापैतृकं, शरीरावयवेषु शरीरोपचारात्, 'केवइयं'ति कियत्कालं गर्भे तिष्ठति, 'जावइयं'ति यावत्कालं 'से'त्ति तस्य जीवस्य भवधारणीयं—भवधारणप्रयोजनं, मनुष्यादिभवोपग्राहकमिति, 'अव्वावण्णे'त्ति अव्यापन्नं—अविनष्टं, 'अहे णं'ति उपचयान्तिमसमयादनन्तरमेतत्, अम्बापैतृकं शरीरं

'वोयसिज्ज'त्ति व्यवकृष्यमाणं हीयमानं । 'गब्भगए समाणे'त्ति. (सू. ६३) गर्भगतः सन्, मृत्वेति शेषः, 'एगइए'त्ति स गर्भः राजादिगर्भरूपः संज्ञित्वादिविशेषणानि च गर्भस्थस्यापि नरकप्रायोग्यकर्मबन्धसम्भवाभिधायितयोक्तानि,वीर्यलब्ध्या वैक्रियलब्ध्या सङ्ग्रामयतीति योगः, अथवा वीर्यलब्धिको वैक्रियलब्धिकश्च सन्नित्यर्थः, परानीकं—शत्रुसैन्यं श्रुत्वा श्रुतिभ्यां निशम्य—मनसाऽवधार्य 'पएसे निच्छुभइ' गर्भदेशाद्बहिः क्षिपति, 'समोहणइ'त्ति समवहन्ति, समवहतः स्यात्, तथाविधपुद्गलग्रहणार्थं, सङ्ग्रामं सङ्ग्रामयति—युद्धं कुर्यात्, 'कामकामे'त्ति कामौ शब्दरूपे 'अत्थकामए'त्ति अर्थे—द्रव्ये कामो—वांछा यस्यासौ अर्थकामकः, एवं राज्यकामकः, 'भोगकामए'त्ति भोगा—गन्धरसस्पर्शास्तेषां कामः भोगकामकः, 'अत्थकंखिए'त्ति अर्थे काङ्क्षा—गृद्धिरासक्तिर्यस्येति सोऽर्थकाङ्क्षितः, अर्थपिपासितः, पिपासा प्राप्तेऽप्यर्थेऽतृप्तिः, 'तच्चित्ते'त्ति चित्तं सामान्योपयोगरूपं 'तम्मणे'त्ति मनो—विशिष्टोपयोगरूपं 'तल्लेसे'त्ति लेश्या—आत्मपरिणामविशेषः 'तदज्झवसिए'त्ति अध्यवसितं—परिभोगक्रियासम्पादनविषयमस्येति तदध्यवसितः, 'तत्तिव्वज्झवसाणे'त्ति आरम्भकालादारभ्य प्रकर्षयायि अध्यवसानं—प्रयत्नविशेषो यस्य सः 'तदट्ठोवउत्ते'त्ति उपयुक्तोऽवहितः, 'तदप्पियकरणे'त्ति तस्मिन्नेव अर्थादौ अर्पितानि—आहितानि करणानि—इन्द्रियाणि कृतकारितानुमतिरूपाणि येन सः 'तब्भावणाभाविए'त्ति तद्भावना—अर्थसंस्कारस्तेन भावितो यः सः 'एयंसि'त्ति एतस्मिन्नन्तरे—सङ्ग्रामकरणावसरे, श्रमणस्य—साधोः 'माहणस्स'त्ति मा हनेत्येवमादिशति स्वयं स्थूलप्राणातिपातादिनिवृत्तत्वाद् यः स माहनः, अथवा ब्रह्मचर्यस्य देशतः सद्भावात् ब्राह्मणो देशविरतस्तस्य वा, 'आरियं'ति आराद्यातं पापकर्मभ्य इत्यार्यं, 'धम्म'त्ति धर्मः—श्रुतचारित्रलक्षणः पुण्यं—तत्फलभूतं शुभकर्म 'अंबखुज्जए'त्ति आम्रफलवत्कुब्जः 'अच्छेज्ज' आसीत सामान्यतः 'चिट्ठेज्ज' ऊर्ध्वस्थानेन 'निसी-

एज्जा' निपदनस्थानेन 'तुयट्टेज' शयीत 'सममागच्छइ' समम्—अविषमं, 'सम्मं'ति पाठे सम्यक् अनुपघातहेतुत्वात्, आगच्छति, मातुरुदराद्योन्या निष्क्रामति, 'तिरियमागच्छइ'त्ति तिरश्चीनो भूत्वा जठरान्निर्गन्तुं प्रवर्त्तते, विनिघातं—मरणमापद्यते, निर्गमाभावादिति, गर्भनिर्गतस्य यत् स्यात्तदाह—'वण्णवज्झाणि य'त्ति वर्णः—श्लाघा वध्यो—हन्तव्यो येषां तानि, अथवा वर्णाद् बाह्यानि, अशुभानि, 'से' तस्य गर्भनिर्गतस्य बद्धानि सामान्यतः पुष्टानि—पोषितानि, गाढतरबन्धतो, 'निहत्ता' इति निधत्तानि, उद्वर्त्तनापवर्त्तनाकरणवर्जशेषकरणयोग्यत्वेन स्थापितानीत्यर्थः, अथवा बद्धानि, यतः कथं ?, पूर्वं स्पृष्टानि, 'कडाइं'ति कृतानि—निकाचितानि 'पट्ठवियाइं'ति प्रस्थापितानि मनुष्यगतिपञ्चेन्द्रियजातित्रसादिनामकर्मसहोदयत्वेन 'अभिनिविट्ठाइं'ति अभिनिविष्टानि तीव्रानुभावतया, 'अभिसमण्णागया'ति अभिसमन्वागतानि उदयाभिमुखीभूतानि 'उदिण्णाइं'ति ततश्चोदीर्णानि, स्वत उदीरणाकरणेनोदीरितानि, 'नो उवसंताइं'ति नोपशान्तानि, अतो 'दुरूवे'त्ति दूरूपादि तत्फलभूतानि ज्ञेयानि पदानि, 'अणादेय'त्ति इहैवमक्षरघटना—प्रत्याजातो समुत्पन्नो वा स्यादनादेयवचन इति ॥ प्रथमशते सप्तमोद्देशकविवरणम् ॥

'एगंतबाले'त्ति (सू. ६४) एकान्तबालो मिथ्यादृग् अविरतो वा, एकान्तग्रहणेन मिश्रतां व्यवच्छिनत्ति, यच्चैकान्तबालत्वे समानेऽपि नानाविधायुर्बन्धनं तत् महारम्भाद्युन्मार्गदेशनादितनुकषायत्वाद्यकामनिर्जरादितत्तद्धेतुवशादिति, अत एव बालत्वे समानेऽपि अविरतिसम्यग्दृष्टिर्मनुष्यो देवायुरेव प्रकरोति—बध्नाति, न शेषाणि, 'णेरइयाउयं किच'त्ति नैरयिकायुर्बद्ध्वा नैरयिके उत्पद्यते, एवं देवायुरपि, 'एगंतपंडिए'त्ति (सू. ६५) एकान्तपण्डितः—साधुः 'आउयं सिय'त्ति सम्यक्त्वसप्तके क्षपिते न बध्नाति आयुस्साधुः, अर्वाक्—पुनर्बध्नाति, अत इत्युच्यते—स्यात् प्रकरोति—बध्नाति, न वा, 'केवलमेव'त्ति केवलः—सामस्त्येन 'दो गइ-

उ'त्ति द्वे गती प्रज्ञायेते—अवबुध्येते केवलिना, तयोरेव सत्त्वादिति, 'अंतकिरिय'त्ति निर्वाणं 'कप्पोव'त्ति कल्पेषु—अनुत्तरविमानांतदेवलोकेषु उत्पत्तिः सैव कल्पोपपत्तिका, 'बालपंडिएणं'ति श्रावकः 'देसं उवरमइ'त्ति देशतः स्थूलप्राणातिपातादिना उपरमते—विरतः स्यात्। 'कच्छंसि व'त्ति (सू. ६६) कच्छे—नदीजलपरिवेष्टिते वल्ल्यादिमति प्रदेशे 'दविगंसि'त्ति द्रविके—तृणादिद्रव्यसमुदाये 'वलयंसि व'त्ति वलये वृत्ताकारनद्याद्युदककुटिलगतियुक्तप्रदेशे नूमे—अवतमसे, गहने वृक्षादिसमुदाये, 'गहणविदुग्गं'ति गहनविदुर्गे पर्वतैकदेशस्थितवृक्षवल्लीरूपे पर्वतविदुर्गे—गिरिवृन्दे वने—एकजातीयवृक्षरूपे वनविदुर्गे—नानाजातीयतरुरूपे, 'मियवित्तिए'त्ति मृगैर्वृत्तिः—जीविका यस्य स मृगवृत्तिकः, 'संकप्पे'त्ति मृगसङ्कल्पो वधाध्यवसायो यस्य स मृगसङ्कल्पः, 'पणिहाणे'त्ति मृगप्रणिधानो—मृगवधैकाग्रचित्तः, 'मियवहाए' मृगवधाय 'गंत'त्ति गत्वा, कच्छादाविति योगः, 'एए मिय'त्ति एते मृगा इति कृत्वा, कूटं च—मृगग्रहणहेतुर्गर्त्तादिपाशस्तद्बन्धमिति—कूटपाशं 'उद्दाइ'त्ति उद्दाति—रचयति, 'तओ णं'ति ततः—कूटपाशकरणात्, 'कइकिरिए'त्ति कतिक्रियः, 'जे भविए'यो भव्यो—योग्यो मृगवधकर्त्ता 'जावं च णं'ति यावन्तं कालमित्यर्थः, तस्याः कर्त्तेत्याह, उद्दवणयाए—कूटपाशधारणया, 'तावं च णं' तावन्तं कालं 'काइयाए' गमनादिकायचेष्टारूपया 'अहिगरण'त्ति अधिकरणेन—कूटपाशकरणरूपेण 'पाउसि'त्ति प्रद्वेषो—मृगेषु दुष्टभावः तेन निर्वृत्ता प्राद्वेषिकी तया, 'तीहिं किरियाहिं'ति ताभिस्तिसृभिः क्रियाभिः स्पृष्टः, 'पारितावि'त्ति मृगे बद्धे सति परितापनहेतुः पारितापनिकी तया, प्राणातिपातक्रियया च मृगघातिन इति, 'ऊसवित्त'ति उत्सर्प्य 'ओसक्किऊण' ऊर्ध्वीकृत्य 'निसरइत्त'त्ति निसृजति, निक्षिपति, 'उसुं'ति बाणं, 'आययकण्णं'ति आयतकर्ण—कर्णं यावदायतः—आकृष्टः कर्णायतः, तं इषुं 'आयामेत्ता' आयम्य—आकृष्य 'चिट्ठिज्ज'त्ति

तिष्ठेत्, मृगवधेच्छुः, अन्यश्च कोऽपि पुरुषस्तस्य मृगघातेच्छोः, 'मग्गउ'त्ति पृष्ठतः आगम्य 'सयपाणिण'त्ति स्वकपाणिना तस्य शीर्षं छिन्द्यात्, 'से य'त्ति स च 'उसू'त्ति इषुः, 'पुव्वायामेण'त्ति पूर्वाकर्षणेन तं 'मियं'ति मृगं 'वधिज्जा' हन्यात्, 'से णं भंते! पुरिसे'त्ति स मृगवधेच्छुशिरश्छेत्ता पुरुषः किं मृगवैरेण स्पृष्ट इति, अथ शिरश्छेतृनरहेतुकत्वादिषुनिपातस्य कथं धनुर्द्धरपुरुषो मृगवधेन स्पृष्ट इत्याकूतवतो गौतमस्य तदभ्युपगतमेवार्थमुत्तरतया प्राह वीरः—गौतम! क्रियमाणं धनुःकाण्डादि कृतं इति व्यपदिश्यते, 'संधिज्जमाणे'त्ति सन्धीयमानं—प्रत्यञ्चायामारोप्यमाणं काण्डे धनुर्वाऽऽरोप्यमाणप्रत्यञ्चं सन्धितं—कृतसन्धानं स्यात्, 'निव्वित्तिज्जमाणे'त्ति निर्वर्त्यमानं—नितरां वर्त्तुलीक्रियमाणं प्रत्यञ्चाकर्षणेन निर्वर्त्तितं—वृत्तीकृतं स्यात् 'णिसरिज्जमाणो'त्ति निसृज्यमाणं—क्षिप्यमाणं काण्डं निसृष्टं, यदा च निसृज्यमानं स्यात् तदा निसृज्यमानताया धनुर्द्धरेण कृतत्वात् तेन काण्डं निसृष्टं स्यात्, काण्डनिसर्गाच्च मृगस्तेनैव मारितः हे गौतम! 'जे मियं'ति यो मृगं मारयति स मृगवैरेण स्पृष्टः, 'जे पुरिसं'ति यः पुरुषं मारयति स पुरुषवैरेण स्पृष्टः इत्युत्तरं, 'अंतो छण्हं'ति षण्मासमध्ये यदि मृगो म्रियते तदा स मृगवधेच्छुः कायिकादिपञ्चक्रियाभिः स्पृष्टः(घातक)त्वात्, 'बाहिं छण्हं'ति षण्मासात् बहिः—परतो यदि मृगमृतिः स्यात् तदा कायिकादिचतसृभिः स्पृष्टः, षण्मासादूर्ध्वं तस्य प्राणातिपातक्रिया पञ्चमी न लगति इत्युक्तं व्यवहारनयापेक्षया, अन्यथा यदा कदाऽप्यधिकृतप्रहारहेतुकं मरणं स्यात् मृगादेः तदैव तस्य प्राणातिपातक्रिया लगति, 'सत्तीए'त्ति शक्त्या—प्रहरणविशेषेण 'समभिधंसेज्ज'त्ति हन्यात्, 'काइयाए'त्ति कायिक्या—वपुःस्पन्दरूपया अधिकरणिक्या—शक्तिखड्गव्यापाररूपया प्राद्वेषिक्या—मनोदुष्प्रणिधानेन पारितापनिक्या—परितापनरूपया प्राणातिपातक्रियया मारणरूपया शक्त्याऽभिध्वंसकः असिना वा शिरश्छेत्ता पञ्चक्रिया-

स्पृष्टः, पुरुषवैरेण वा—मारितपुरुषवैरभावेन, किंभूतेन ? 'आसन्न'त्ति आसन्नो वधो यस्माद् वैरात्तेनासन्नवधकेन, पुनः किम्भूतेन 'अणव'त्ति अनवकाङ्क्षणा—परप्राणनिरपेक्षा वृत्तिः—वर्त्तनं यत्र वैरे तेनानवकाङ्क्षणवृत्तिकेनेति ॥ क्रियाधिकार एवेदमाह—द्वौ पुरुषौ 'सरिसय'त्ति (सू० ७१) सदृशकौ कौशल्यादिना 'सरित्तय'त्ति सदृक्त्वचौ 'सरिव्वय'त्ति सदृग्वयसौ 'सरिसभंड'त्ति सदृशानि भाण्डानि—कांस्यपात्रादीनि मात्रा—गणिमादिद्रव्यपरिच्छेदः उपकरणानि—अनेकधाऽऽवरणप्रहरणादीनि ययोस्तौ, 'वीरियवज्झाइं'ति वीर्यं वध्यं येषां तानि, 'सिद्धा णं अवीरिय'त्ति सकरणवीर्याभावादवीर्याः सिद्धाः, 'सेलेसिंपडिवण्णग'त्ति शैलेशो—मेरुस्तस्य च याऽवस्था स्थिरतासाधर्म्यात् सा शैलेशी सा च योगनिरोधेन पञ्चह्रस्वाक्षरोच्चारकालमाना तां प्रतिपन्नका ये ते शैलेशीप्रतिपन्नकाः, 'लद्धिवीरिएणं'ति वीर्यान्तरायक्षयक्षयोपशमतो या वीर्यलब्धिः सैव तद्धेतुत्वाद्वीर्यलब्धिः वीर्यं, तेन सवीर्याः, एषां शैलेश्यवस्थानां च क्षायिकमेव लब्धिवीर्यं, 'करणवीरिएणं'ति लब्धिवीर्यकार्यभूता क्रिया करणं तद्रूपं वीर्यं करणवीर्यं, 'करणवीरिएणं सवीरियावि अवीरियावि'त्ति, तत्र सवीर्या उत्थानादिक्रियावन्तः, अवीर्यास्तद्विपक्षाः, ते च अपर्याप्तकाले अवगन्तव्याः ॥ इति प्रथमशते अष्टमोद्देशकविवरणम् १-८ ॥

अथ नवमोद्देशे गुरुकादिपदसूत्रम्, 'आउलीकरें'ति(सू० ७२) प्रचुरीकुर्वन्ति कर्मभिः 'परित्तीकरिं'त्ति स्तोकं कुर्युः कर्मभिः 'दीहीकरंति' दीर्घं प्रचुरकालमिति, ह्रस्वीकरंति—अल्पकालमिति 'अणुपरियट्टंति' पौनःपुन्येन भ्रमन्ति, 'वीईवयंति' व्यतिव्रजन्ति, पसत्था चत्तारि, लघुत्वपरीतत्वह्रस्वत्वव्यतिव्रजनदण्डकाः प्रशस्ताः, मोक्षाङ्गत्वात्, अपसत्था चत्तारि, गुरुत्वाकुलत्वदीर्घानुपरिवर्तनदण्डकाः अप्रशस्ताः, संसारहेतुत्वात्, 'सत्तमे णं'ति (सू. ७४) इह नेयं गुरुलघुव्यवस्था, "निच्छयओ सव्वगुरुं

सव्वलहुं वा न दिज्जए दव्वं। ववहारओ य जुज्जइ बायरखंधेसु णऽण्णेसु॥१॥ अगुरुलहू चउफासा अरूविदव्वा य होंति नायव्वा। सेसा उ अट्ठफासा गुरुलहुया णिच्छयणयस्स॥२॥" 'चउफास'त्ति सूक्ष्मपरिणामानि, 'अट्ठफास'त्ति बादराणि,गुरुलघु द्रव्यं रूपि, अगुरुलघुद्रव्यमरूपि रूपि वेति, व्यवहारतस्तु गुर्वादीनि चत्वार्यपि सन्ति, तत्र निदर्शनानि—गुरुर्लोष्टः अधोगमनात्, लघुर्धूमः ऊर्ध्वगमनात्, गुरुलघु आकाशं तत्स्वभावत्वात्, अवकाशान्तरादिसूत्राण्येतानि एतद्गाथानुसारेणावगन्तव्यानि,तद्यथा—'ओवास वाय घणउदहि'त्ति(सूत्रे ५४ गा.१७-१८)गाथाद्वयं सुगमं पूर्वोक्तव्याख्यानात्, 'वेउव्वियतेयाइं पडुच्च'त्ति वैक्रियतैजसशरीरे प्रतीत्य गुरुकलघुका एव, यतो वैक्रियतैजसवर्गणात्मके ते, यदाह—"ओरालिय वेउव्विय आहारग तेय गुरुलघू दव्व"त्ति। जीवं कार्मणशरीरं प्रतीत्य नारका अगुरुलघुका एव, जीवस्यारूपित्वेनागुरुलघुत्वात् कार्मणशरीरस्य कार्मणवर्गणात्मकत्वात् अगुरुलघुत्वं, आह च—'कम्मगमणभासाई एयाइं अगुरुलहुयाइं'ति, 'नाणत्तं'ति यस्य यानि शरीराणि तस्य तानि ज्ञात्वा असुरादिसूत्राणि वाच्यानि, असुरादिदेवा नारकवद्वाच्याः, पृथिव्यादयस्तु औदारिकतैजसे प्रतीत्य गुरुलघवः, जीवं कार्मणं च प्रतीत्यागुरुलघवः, वायवस्तु औदारिकवैक्रियतैजसानि प्रतीत्य गुरुलघवः, एवं पञ्चेन्द्रियतिर्यञ्चोऽपि, मनुष्याश्चौदारिकवैक्रियाहारकतैजसानि प्रतीत्येति, 'धम्मत्थिकाए' इह यावत्करणाद् अहम्मत्थिकाए आगासत्थिकाए पदं यावत् चउत्थपएणं अगुरुलघवः, शेषाणां निषेधः कार्यः, धर्मास्तिकायादीनामरूपितया अगुरुलघुत्वादिति, समया अमूर्त्ताः, कर्माणि च कार्मणवर्गणात्मकानि अगुरुलघूनि, 'दव्वलेसं'ति द्रव्यतः कृष्णलेश्या औदारिकादिशरीरवर्णा ओदारीकादिकं च गुरुलघु इतिकृत्वा एषापि गुरुलघ्वी, भावलेश्या तु जीवपरिणतिस्तस्या अमूर्त्तत्वादगुरुलघ्वीति। 'दिट्ठी दंसणणाण'त्ति 'दृष्ट्यादी'ति दृष्ट्यादीनि जीवपर्यायत्वेनागुरुलघुत्वात् चतुर्थपदेन

वाच्यानि, अज्ञानपदं त्विह ज्ञानविपक्षत्वादधीतं, अन्यथा प्रथमशतरोहाकृताण्डककुर्कुटीप्रश्नषष्ठोद्देशके 'दिट्ठीदंसणनाणे'ति द्वितीयगाथायां ज्ञानपदमेव दृश्यते, 'हेट्ठिल्ले'ति औदारिकादीनि गुरुलघुपदेन, गुरुलघुवर्गणात्मकत्वात्, 'कम्मगं'ति कार्मणं चतुर्थपदेन, अगुरुलघुद्रव्यात्मकत्वात्, मनोवाग्योगौ चतुर्थपदेन वाच्यौ, काययोगः कार्मणवर्जस्तृतीयेन, गुरुलघुद्रव्यात्मकत्वात्, 'सव्वे दव्व'त्ति सर्वद्रव्याणि धर्म्मास्तिकायादीनि, सर्वप्रदेशास्तेषामेव निर्विभागा अंशाः, सर्वपर्यवा वर्णोपयोगादयो द्रव्यधर्माः, एते पुद्गलास्तिकायवद्वाच्याः, गुरुलघुत्वेनागुरुलघुत्वेन चेत्यर्थः, यतः सूक्ष्माण्यमूर्त्तानि च द्रव्याणि अगुरुलघूनि, इतराणि तु गुरुलघूनि, प्रदेशपर्यवास्तु तत्तद्द्रव्यसम्बन्धित्वेन तत्तत्स्वभावा इति, गुरुलघुत्वाधिकारादिदमाह—'लाघवि'(सू० ७५) अल्पोपधित्वं 'अप्पिच्छ'त्ति आहारादिषु अल्पाभिध्यः 'अमुच्छ'त्ति उपधावसंरक्षणानुबन्धः 'अगेहि'त्ति भोजनकरणादिषु नासक्तिः अप्रतिबद्धता स्वजनादिषु इति पदपञ्चकं, 'पसत्थं'ति प्रशस्तं साधूनां ज्ञेयं, 'कंखापओसे'त्ति काङ्क्षा—दर्शनान्तरग्रहः सैव प्रकृष्टो दोषः कांक्षाप्रदोषः काङ्क्षाप्रद्वेषौ वा रागद्वेषावित्यर्थः, 'अण्णउत्थियाणं'ति (सू० ७६) अन्ययूथं—विवक्षितसङ्घादपरः सङ्घः, तदस्ति येषां ते अन्ययूथिकाः—तीर्थान्तरीयाः एवमाख्यान्ति सामान्यतः, भाषन्ते विशेषतः, पन्नवेंति—उपपत्तिभिः 'परूवेंति'त्ति भेदकथनतः, द्वयोर्जीवयोरेकस्य वा समयभेदेन आयुर्द्वयकरणे नास्ति विरोध इत्युक्तम्—'एगे जीवे'इत्यादि, 'आहंसु'त्ति उक्तवन्तः, मिथ्यात्वं चास्यैवं—एकेनाध्यवसायेन विरुद्धयोरायुषोर्बन्धायोगात्, यतो जातमात्रो जीव इहभवायुर्वेदयते, तदैव तेन यदि परभवायुर्बद्धं तदा दानाध्ययनादीनां वैयर्थ्यं स्यादिति, 'तेणं'ति(सू० ७७)पासावच्चिज्जा' पार्श्वापत्यानां—पार्श्वशिष्याणां अयं पार्श्वापत्यीयः 'थेरे'त्ति श्रीमहावीरशिष्याः, 'सामाइयं'ति समभावरूपं न जानन्ति, सूक्ष्मत्वात्, 'के भे'त्ति किं भवतामिति, 'आयाणे'त्ति आत्मा नः

अस्माकं मते सामायिकं, यदाह—'जीवो गुणपडिवण्णो नयस्स दव्वट्ठियस्स सामइयं'ति; सामायिकार्थोऽपि जीव एव, कर्म्मानुपादानादीनां जीवगुणत्वात्, जीवाव्यतिरिक्तत्वात् तद्गुणानां, एवं प्रत्याख्यानाद्यवगन्तव्यं। 'जइ भे'त्ति यदि भवतां हे आर्याः! सामायिकमात्मा तदा 'अवहट्टु'त्ति अपहृत्य—त्यक्त्वा क्रोधादीन् किमर्थं गर्हध्वं 'निंदामि गरिहामी'ति वचनात्, अत्रोत्तरं—संयमार्थं 'गरहा संजमे'त्ति अवद्ये गर्हिते संयमः स्यात्, अवद्यानुमतिव्यवच्छेदनात्, 'गरहाविय'त्ति गर्हैव, 'सव्वं दोसं'ति रागादिकं दोषं पूर्वकृतं पापं द्वेषं वा प्रविनयति—क्षपयति, 'सव्ववालियं'ति वाल्यं वालतां मिथ्यात्वं वा अविरतिं च 'परिण्णाय'त्ति परिज्ञाय ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च प्रत्याख्यायेति, 'एवं खु'त्ति एवमेव 'णे'त्त्यस्माकं 'आया संजमे'त्ति आत्मा संयमे 'उवहिए'त्ति उपहितो—न्यस्तः स्यात्, 'उवचिए'त्ति उपचितः पुष्टः, 'उवट्ठिए'त्ति उपस्थितो भवति, अत्यन्तावस्थावी स्यात्, 'पुव्विं'ति पूर्वं 'अदिट्ठाणं'ति कथं अदृष्टानामित्यादिना सर्वत्र सम्बन्धः, 'अणभिगमेणं' विस्तरबोधाभावेन 'असुयाणं'ति अश्रुतानां अन्यतः, 'अमुयाणं'ति अस्मृतानां, दर्शनाकर्णनाभावेन, 'अव्वोकडाणं'ति अव्याकृतानां, गुरुभिरनाख्यातानां, 'अव्वोच्छिन्नाणं'ति विपक्षादव्यवच्छेदितानां, 'अणिज्जूढाणं'ति महाग्रन्थात् सङ्क्षेपनिमित्तं गुरुभिरनुद्धृतानां 'अणुवधारियाणं'ति अनुपधारितानां अनवधारितानां वा 'नो सद्दहिए'त्ति न श्रद्धितः 'नो पत्तिए'त्ति न प्रीतः—प्रीतिविषयीकृतः, न रोचितः, अप्रत्ययतो वा न चिकीर्षितः, 'लद्धावलद्धि'त्ति लब्धं—लाभो अलब्धं—अलाभो लब्धावलब्धिः 'गामकंटय'त्ति ग्रामो—इन्द्रियसमूहस्तस्य कण्टका इव कण्टका—बाधकाः शत्रवो वा ग्रामकण्टकाः ॥ कालास्यवैशिकपुत्रः प्रत्याख्यानक्रियया सिद्ध इति 'सेट्ठिस्स'त्ति (सू. ७८) श्रीदेवताश्रितसौवर्णपट्टविभूपितशिरोवेष्टनयुक्तपौरलोकनायकस्य, तनुकस्य—

दरिद्रस्य 'किविण'त्ति रङ्कस्य कृपणस्य वा, 'अपच्चक्खाण'त्ति अप्रत्याख्यानक्रिया क्रियते, अविरतिं प्रतीत्य सर्वेषां समैव—सद्दशीत्युत्तरं। 'आहाकम्मे'त्यादि (सू. ७९) आधया–साधुविकल्पेन यत् सचेतनमचेतनं क्रियते चीयते गृहादिकं व्यूयते वस्त्रादिकं। 'अथिरे पलोट्टइ'त्ति (सू. ८०) अस्थिरं द्रव्यं लोष्ठादि प्रलोटति—परावर्त्तते, अध्यात्मचिन्तायां तु जीवप्रदेशेभ्योऽस्थिरं कर्म, तस्य प्रतिसमयं चलनेनास्थिरत्वात्, प्रलोटति–बन्धोदयनिर्जरणादिपरिणामैः परिवर्त्तते, 'थिरे ण पलोट्टइ' स्थिरं शिलादि न प्रलोटति, अवस्थितत्वात्, तथा अस्थिरं–भङ्गुरस्वभावं तृणादि भज्यते, एवं कर्मक्षयेऽपि अस्थिरं कर्म तद्भज्यते–व्यपैति, तथा स्थिरम्–अभङ्गुरं अयःशलाकादि न भज्यते, एवमध्यात्मचिन्तायां स्थिरो–जीवः स च न भज्यते, शाश्वतत्वादिति, जीवप्रस्तावादिदमाह–'सासए बालए'त्ति बालको व्यवहारतः शिशुः, निश्चयतोऽसंयतो जीवः, स च शाश्वतो द्रव्यत्वात्, 'बालियत्तं'ति इह इकप्रत्ययस्य स्वार्थिकत्वात् बालत्वं व्यवहारतः शिशुत्वं निश्चयतोऽसंयतत्वं तदशाश्वतं, पर्यायत्वादिति, एवं पण्डितसूत्रमपि, नवरं पण्डितो व्यवहारेण शास्त्रज्ञो जीवः, निश्चयतस्तु संयत इति ॥ **प्रथमशते नवमोद्देशकाविवरणम् १–९॥**

'अन्नउत्थिया णं'ति (सू. ८१) 'चलमाणे अचलिए'त्ति चलत्कर्म अचलितं, तेन चलितकार्याकरणात्, वर्त्तमानस्यातीततया व्यपदेष्टुमशक्यत्वात्, एवमग्रेऽपि वाच्यं, 'एगयओ न साहण्णंति'त्ति एकतः–एकत्वेन एकस्कन्धतया वा न संहन्यंति–न संहतौ स्याताम्, 'नत्थि सिणेहकाए'त्ति नास्ति स्नेहपर्यवराशिः, सूक्ष्मत्वात्, त्र्यादियोगे तु स्थूलत्वात् सोऽस्ति, 'दुक्खत्ताए कज्जंति'त्ति पञ्च पुद्गलाः संहत्य दुःखतया–कर्मतया क्रियन्ते, भवन्ति इत्यर्थः, 'दुक्खेऽवि य णं'ति कर्मापि च 'से'त्ति तत् शाश्वतमनादित्वात्, 'सय'त्ति सदा 'समियं'ति सम्यक् समितं वा चीयते–चयं याति, अपचीयते–अपचयं याति, 'पुव्विं

भास'त्ति भाषणात्प्राक् 'भास'त्ति वाग्द्रव्यसंहतिः 'भास'त्ति सत्यादिभाषा स्यात्, कारणत्वात्, विभङ्गज्ञानित्वेन तेषां मतमात्रमेतन्निरुपपत्तिकमुन्मत्तवचनवत्, अतो नेहोपपत्तिर्गवेषणीया, सर्वत्रापि 'भासेज्जमाणी भासा अभास'त्ति निसृज्यमानवाग्द्रव्याण्यभाषा, वर्त्तमानसमयस्यातिसूक्ष्मत्वेन व्यवहारानङ्गत्वादिति, 'भासासमयं विय'त्ति इह क्तप्रत्ययस्य भावार्थत्वात् विभक्तिपरिणामाच्च भाषासमयव्यतिक्रमे च 'भासिय'त्ति निसृष्टा सती भाषा स्यात्, प्रतिपाद्यस्याभिधेये प्रत्ययोत्पादकत्वात्, 'अभासओ णं'ति अभाषमाणस्य, भाषाभाषणात् पूर्वं पश्चाच्च तदभ्युपगमात्, 'नो खलु भासओ'त्ति भाष्यमाणा, तस्या अनभ्युपगमात् इति, तथा 'पुव्विं किरिया दुक्ख'त्ति क्रिया कायिक्यादिका सा यावन्न क्रियते 'तावत् दुक्ख'त्ति दुःखहेतुः, 'कज्जमाणि'त्ति क्रियमाणा क्रिया न दुःखहेतुः, क्रियासमयव्यतिक्रान्तं च—क्रियायाः क्रियमाणता व्यतिक्रमणता व्यतिक्रमे च कृता सती क्रिया दुःखेति, इदमपि तन्मतमात्रमेवायुक्तम्, अथवा पूर्वं क्रिया दुःखाऽनभ्यासात्, क्रियमाणा क्रिया न दुःखा, अभ्यासात्, कृता क्रिया दुःखा, अनुतापश्रमादेः, 'करणओ दुक्ख'त्ति करणमाश्रित्य करणकाले कुर्वतः, 'अकरणओ'त्ति अकरणमाश्रित्याकुर्वत इति 'ता खलु सा करणओ दुक्ख'त्ति, अक्रियमाणत्वे दुःखतया तस्या अभ्युपगमात्, 'सेवं वत्तव्वं'ति अथ एवं पूर्वोक्तं वस्तु वक्तव्यं स्यात् ?, उपपन्नत्वादस्येति, अथान्ययूथिकान्तरमतमाह—अकिच्चं'ति अकृत्यं—अनागतकालापेक्षया अनिवर्त्तनीयं, जीवैरिति गम्यम्, दुःखमसातं तत्कारणं वा कर्म, तथा अकृतत्वादेवास्पृश्यं—अबन्धनीयं, तथा क्रियमाणे वर्त्तमानकाले, कृतं अतीतकाले, तन्निषेधादक्रियमाणे कृतं, कालत्रयेऽपि कर्मणो बन्धनिषेधात्, अकृत्वा २ आभीक्ष्ण्ये द्विर्वचनं, दुःखमिति प्रकृतमेव, के इत्याह—प्राणभूतजीवसत्त्वाः, तल्लक्षणमिदम्—"प्राणा द्वित्रिचतुः प्रोक्ता, भूतास्तु तरवःस्मृताः ।

जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वा इतीरिताः ॥१॥'' 'वेयण'ति शुभाशुभकर्मवेदनां पीडां वा वेदयन्ति–अनुभवन्ति, इत्ये-
तद् वक्तव्यं स्यात्?, एतस्यैवोपपद्यमानत्वात्, यादृच्छिकं लोके सर्वं सुखदुःखमिति, यतः–''अतर्कितोपस्थितमेव सर्वं, चित्रं जनानां
सुखदुःखजातम्। काकस्य तालेन यथाऽभिघातो, न बुद्धिपूर्वोऽत्र वृथाऽभिमानः॥१॥'' 'से कहमेयं'ति अथ कथमेतत्? भदन्त!,
एवमन्ययूथिकन्यायेनेति प्रश्नः, 'जण्णं ते अण्णउत्थिया' इत्याद्युक्तं, मिथ्या चैतदेवं–यदि चलदेव प्रथमसमये चलितं न स्यात्
तदा द्वितीयादिष्वपि तदचलितमेवेति न कदापि चलेद्, अत एव वर्त्तमानस्यापि विवक्षया अतीतत्वं न विरुद्धं, यच्चोच्यते–'चलि-
तकार्याकरणादचलितमेवे'ति तदयुक्तं, यतः प्रतिक्षणमुत्पद्यमानस्थासकोशादिवस्तुष्वंत्यक्षणभावि वस्तु आद्यक्षणे स्वकार्यं न कुर्यात्,
असत्त्वात्, अतो यदन्त्यसमये चलितं कार्यं विवक्षितं परेण तदाद्यसमये चलितं यदि न कुर्यात् तदा क इव दोषोऽत्र?, कारणानां
स्वस्वकार्यकरणस्वभावत्वादिति, यच्चोक्तम् 'द्वौ परमाणू न संहन्येते, सूक्ष्मतया, स्नेहाभावात्', तदयुक्तं, एकस्यापि परमाणोः स्नेह-
सम्भवात्, सार्द्धपुद्गलस्य संहतत्वेन तैरेवाभ्युपगमात्, यत उक्तम्–''तिण्णि परमाणुपोग्गला एगयओ साहण्णंति, ते भिज्जमाणा
दुहावि तिहावि कज्जंति, दुहो कज्जमाणा एगयओ दिवड्ढे'त्ति अनेन हि सार्द्धपुद्गलस्य संहतत्वाभ्युपगमेन तस्य स्नेहोऽभ्युपगत एव,
अतः कथं परमाण्वोः स्नेहाभावेन सङ्घातीभावः, यच्चोक्तम्–'एकतःसार्द्धं' एतदप्यचारु, परमाणोरर्धीकरणे परमाणुत्वाभावप्रसङ्गात्,
तथा यदुक्तं 'पञ्च पुद्गलाः संहताः कर्मतया स्युः', तदप्यसङ्गतं, कर्मणोऽनन्तपरमाणुमयानन्तस्कन्धरूपत्वात्, तथा कर्म जीवा-
वरणस्वभावमिष्यते, तच्च कथं पञ्चपरमाणुस्कन्धमात्ररूपं सदसङ्ख्यातप्रदेशात्मकं जीवमावृणुयादिति, तथा यदुक्तं 'कर्म शाश्वतं'
तदप्यसङ्गतं, कर्मणः शाश्वतत्वे तत्क्षयोपशमाद्यभावेन ज्ञानादीनां हानेरुत्कर्षस्य चाभावप्रसङ्गात्, दृश्येते ज्ञानादिहानिवृद्धी, तथा

यदुक्तं 'कर्म सदा चीयते, अपचीयते चे'ति तदप्येकान्तशाश्वतत्वे नोपपद्यत इति, यच्चोक्तं 'भाषणात्पूर्वं भाषा, तद्धेतुत्वात्' तदसङ्गतमेव, औपचारिकत्वात्, उपचारस्य तत्त्वतोऽवस्तुत्वात्, उपचारस्तात्त्विके वस्तुनि सति भवतीति तात्त्विकी भाषाऽस्तीति सिद्धं, यच्चोक्तं 'भाष्यमाणा अभाषा, वर्त्तमानसमयस्याव्यावहारिकत्वात्' तदप्यसम्यक्, वर्त्तमानसमयस्यैवास्तित्वेन व्यवहाराङ्गत्वात्, अतीतानागतयोश्च विनष्टानुत्पन्नतयाऽसत्त्वेन व्यवहारानङ्गत्वात्, यच्चोक्तं–'भाषासमयेत्यादि' तदप्यसाधु, भाष्यमाणाया भाषाया अभावे भाषासमय इत्यभिलापस्याभावप्रसङ्गात्, यश्च प्रतिपाद्यस्याभिधेयप्रत्ययोत्पादकत्वादिति हेतुः सोऽनेकान्तिकः, करादिचेष्टानामभिधेयप्रतिपादकत्वे सत्यपि भाषात्वासिद्धेः, तथा यदुक्तम्–'अभाषकस्य भाषे'ति, तदसङ्गतं, एवं हि सिद्धस्याचेतनस्य च भाषाप्राप्तिप्रसङ्ग इति, एवं क्रियाऽपि वर्त्तमानकाल एव युक्ता, तस्यैव सत्त्वादिति, यच्चानभ्यासादिकं कारणमुक्तं तच्चानेकान्तिकं, अनभ्यासादावपि यतः काचित् सुखादिरूपैव, तथा यदुक्तं 'अकरणतः क्रिया दुःखे'ति, तदसम्यक्, यतः करणकाल एव क्रिया दुःखा वा सुखा वा दृश्यते, न पूर्वं पश्चाद्वा, तदसत्त्वात्, तथा यदुक्तं 'अकिच्चमिति, यदृच्छावादिमताश्रयणात्' तदप्यसाधीयः, यतो यद्यकरणादेव कर्म दुःखं सुखं वा स्यात् तदा विविधैहलौकिकपारलौकिकानुष्ठानाभावप्रसङ्गः स्यात्, अभ्युपगतं च किंचित् पारलौकिकानुष्ठानं तैरपि चेत्येतत्सर्वं अज्ञानविजृम्भितम्, उक्तं च वृद्धैः—"परतित्थियवत्तव्वय पढमसए दसमयंमि उद्देसे। विब्भंगीऽणादेसा मइभेया यावि सा सव्वा ॥१॥ सब्भूयमसब्भूयं भंगा चत्तारि हुंति विब्भंगे। उम्मत्तवायसरिसं तो अन्नाणंति निद्दिट्ठं ॥२॥" सद्भूते परमाणौ असद्भूतमर्द्धादि १ असद्भूते सर्वगात्मनि सद्भूतं चैतन्यं २ सद्भूते परमाणौ सद्भूतं निष्प्रदेशत्वं ३ असद्भूते सर्वगात्मनि असद्भूतमकर्तृत्वमिति ४ 'अहं पुणगोयम'त्ति प्रतीतार्थमेव, नवरं दोण्हं परमाणुपोग्गलाणं अत्थि सिणे-

हकाए'त्ति एकस्यापि परमाणोः शीतोष्णस्निग्धरूक्षस्य स्पर्शानामन्यतरदविरुद्धं स्पर्शद्वयमेकदैवास्ति, ततश्च द्वयोरपि तयोः स्निग्धत्वभावात् स्नेहकायोऽस्त्येव, ततस्तौ विषमस्नेहात् संहन्येते, इदं च परमतानुवृत्त्योक्तं, अन्यथा रूक्षावपि रूक्षत्ववैषम्ये संहन्येते एव, यदाह–"समनिद्धयाइ बन्धो, न होइ समलुक्खयाइवि न होइ। वेमायनिद्धलुक्खत्तणेण बंधो उ खंधाणं ॥१॥"ति, 'खंधेऽवि य णं से असासए'त्ति उपचयापचयिकत्वाद्, अत एवाह–'सया समिय'मिति, 'पुव्विं भासा अभास'त्ति भाष्यत इति भाषा, भाषणाच्च पूर्वं न भाष्यत इति न भाषा, 'भासिज्जमाणी'ति शब्दार्थोपपत्तेः, 'भासिया अभास'त्ति शब्दार्थवियोगात्, 'पुव्विं किरिय'त्ति करणात्पूर्वं क्रियैव नास्तीति, असत्त्वादेव न दुःखा, सुखापि नासावसत्त्वादेव, केवलं परमतानुवृत्त्या अदुःखेति उक्तं, 'जहा भास'त्ति वचनात्, 'कज्जमाणी किरिया दुःखा सत्त्वात्, इहापि यत् क्रिया दुःखेत्युक्तं तत्परमतानुवृत्त्यैव, अन्यथा सुखापि क्रियमाणैव क्रिया, तथा 'किरियासमयविइक्कंतं च ण'मिति दृश्यं च। 'किच्चं दुक्ख'मित्यनेन कर्मसत्ताऽऽवेदिता, प्रमाणसिद्धत्वादस्य, तथाहि—यद् द्वयोरिष्टशब्दादिविषयसुखसाधनसमेतयोरेकस्य दुःखलक्षणं फलमन्यस्येतरत् तत् न विशिष्टहेतुमन्तरेण सम्भाव्यते, कार्यत्वात्, घटवद्, यश्चासौ विशिष्टो हेतुः स कर्मेति, आह च–"जो तुल्लसाहणाणं फले विसेसो ण सो विणा हेउं। कज्जत्तणओ गोयम! घडुव्व हेऊ य से कम्मं ॥१॥"ति, पुनरप्यन्ययूथिकमतान्तरमुपदिशन्नाह–'इरियावहि'त्ति (सू. ८२) ईर्या गमनं तद्विषयः पन्था ईर्यापथः तत्र भवा ऐर्यापथिकी–केवलयोगप्रत्ययः कर्मबन्ध इति, 'संपराइय'त्ति संपरैति–परिभ्रमति प्राणी भवे एभिरिति सम्परायः(या)–कषायाः तत्प्रत्यया या सा साम्परायिकी–कषायहेतुः कर्म्मबन्ध इति, 'परउत्थियवत्तव्वं णेयव्वं'ति इह सूत्रे अन्यतीर्थिकवक्तव्यं स्वयं वाच्यं, तच्चेदम्–"जंसमयं संपराइयं पकरेइ तंस-

मयं इरियावहियं पकरेइ, इरियावहियाए पकरणयाए संपराइयं पक०, संपराइयपकरणयाए इरिया० प०, एवं खलु एगेणं समएणं दो किरियाओ पकरेइ, तंजहा–इरियावहियं संपराइयं चे'ति, 'ससमयवत्तव्वयाए णेयव्वं' सूत्रमिति गम्यम्, सा चैवम्–'से कहमेयं भंते! एवं १, गौतमा! जण्णं ते अण्णउत्थिया एवमाइक्खंति ४ जाव संपराइयं चे'ति, जे ते एवमाहंसु मिच्छं त ए०, अहं पुण गोयमा! एवमाइक्खामि ४–एवं खलु एगे जीवे एगेणं समएणं एगं किरियं पकरेइ' इत्यादि, पूर्वोक्तानुसारेणाध्येयमिति, मिथ्यात्वं चास्यैवं–ऐर्यापथिकी क्रिया अकषायोदयप्रभवा इतरा तु कषायप्रभवा इति कथमेकस्यैकदा तयोः सम्भवो, विरोधादिति, अथ क्रियावतां जीवानामुत्पादविरहप्ररूपणायाह—'निरयगई' (सू. ८३) इत्यादि 'वक्कंतीपय'न्ति व्युत्क्रान्तिः–जीवानामुत्पादस्तदर्थं पदं व्युत्क्रान्तिपदं, तच्च प्रज्ञापनायां षष्ठम्, तच्चार्थलेशत एवं द्रष्टव्यम्, पञ्चेन्द्रियतिर्यङ्मनुष्यदेवगतौ उत्कर्षतो १२ मुहूर्त्ताः, जघन्यत एकसमय उत्पादविरहकालः, 'चउवीसइ मुहुत्ता १ सत्त अहोरत्त २ तह य पन्नरस ३ मासो य ४ दो य ५ चउरो ६ छम्मासा विरहकालो य॥१॥ उक्कोसो रयणाइसु सव्वासु जहन्नओ भवे समओ। एमेव य ओवट्टण संख पुण सुरवरुतुल्ला (०रेहिं समा) ॥ २ ॥" सा चेयम्—एगो य दो य तिण्णि य संख असंखा व एगसमएणं। उववज्जंतेवइया उव्वट्टंतावि एमेव ॥३॥ तिर्यग्गतौ न विरहकालो, यद्वा भिन्नमुहुत्तो विगलिंदियाण संमुच्छिमाण य तहेव। बारस मुहुत्त गब्भे उक्कोस जहन्नओ समओ ॥४॥" एकेन्द्रियाणां तु विरह एव नास्ति, मनुष्येषु–' बारस मुहुत्त गब्भे मुहुत्त संमुच्छिमे चउव्वीसं। उक्कोस विरहकालो दोसुवि य जहन्नओ समओ ॥५॥ देवेषु—"भवणवणजोइसोहम्मीसाणे चउवीसइ मुहुत्ता। उक्कोस विरहकालो पंचसुवि जहण्णओ समओ ॥६॥ नव दिण वीसमुहुत्ता ३ बारस दस चेव दिण मुहुत्ताओ ४। बावीसा अद्धंचिय ५ पणयाल ६ असीइ ७ दिवससयं

॥७॥ संखेज्ज मास आणय ९ पाणएसु १० तह आरण ११ च्चुए १२ वासा। संखिज्जा विण्णेया, गेविज्जेसुं अओ वुच्छं ॥८॥ हेट्ठिमे वाससयाइं मज्झे सहस्साइं उवरिमे लक्खा। संखिज्जा विण्णेया जया जहा(ते जह)संखेण तीसुंपि ॥९॥ पलिया असंखभागो, उक्कोसो होइ विरहकालो य। विजयाइसु निद्दिट्ठो सव्वेसु जहन्नओ समओ ॥ १० ॥ उववायविरहकालो इय एगो वण्णिओ य देवाणं। उव्वट्टणावि एवं सव्वेसुवि होइ विण्णेया ॥११॥ जहण्णेणेगसमओ, उक्कोसेणं तु होइ छम्मासा। विरहो सिद्धिगईए, उव्वट्टणवज्जिया नियमा ॥१२॥" त्ति ॥ इति प्रथमशते दशमोद्देशकविवरणम् ॥

## ॥ विवाहप्रज्ञप्त्यङ्गवृत्तौ प्रथमशतविवरणं सम्पूर्णम् ॥

व्याख्यातं प्रथमशतम्, अथ द्वितीयं व्याख्यायते—'जे इमे' (सू. ८४) इत्यादि, यद्यप्येकेन्द्रियाणां आगमादिप्रमाणाज्जीवत्वं प्रतीयते, तथापि तदुच्छ्वासादीनां साक्षादनुपलम्भात् जीव(च्छ)शरीरस्य च निरुच्छ्वासादेरपि कदाचिद्दर्शनात् पृथिव्यादिपूच्छ्वासादिशङ्का स्यादिति तन्निरासाय सूत्रमिदं ज्ञातव्यं, उच्छ्वासादिद्रव्याणां खरूपनिर्णयाय प्रश्नयन्नाह—'किण्णं भंते'त्ति (सू. ८५) किमिति सामान्यनिर्देशात् कानि—किंविधानि द्रव्याणि इति 'आहारगमो नेयव्वो', प्रज्ञापनाष्टाविंशतितमाहारपादोक्तो ज्ञेयः, 'जीवेगिंदिय'त्ति जीवा एकेन्द्रियाः, 'वाघायनिव्वाघाय'त्ति व्याघातनिर्व्याघातवन्तो भणितव्याः, तद्यथा—पुढविकाइया णं भंते ! कइदिसं आणमंति पाणमंति ४१, गो० निव्वाघाएणं छद्दिसिं, वाघायं पडुच्च सिय तिदिसिं'ति, इत्यादि, एवमप्कायादिष्वपि, तत्र निर्व्याघातेन षड्दिशि—षड् दिशो यत्रानमनादौ तत्तथा, व्याघातं प्रतीत्य स्यात्रिदिशं चतुर्दिशं पञ्चदिशं वा आनमंति, यतस्तेषां लोकान्तवृत्तावलोकेन त्र्यादिदिक्षूच्छ्वासादिपुद्गलानां व्याघातः संभवति, 'सेसा णियमा छद्दिसिंति' शेषाः—नारकादित्रसाः

पद्दिशमानमन्ति, तेषां हि त्रसनाड्यन्तर्भूतत्वात्, अथैकेन्द्रियाणामुच्छ्वासादिभावादुच्छ्वासादेश्च वायुरूपत्वात् किं वायुकायानामपि उच्छ्वासादिना वायुना भवितव्यं उतान्येन केनापि पृथिव्यादीनामिव तद्विलक्षणेनेत्याशङ्कायां प्रश्नयन्नाह–'वाउयाए णं'ति(सू.८६) अथोच्छ्वासस्यापि वायुत्वादन्येनोच्छ्वासवायुना भाव्यं, तस्याप्यन्येन, एवमनवस्था, नैवं, अचेतनत्वात्तस्य, किञ्च–योऽयमुच्छ्वासवायुः स वायुत्वेऽपि न वायुसम्भव्यौदारिकवैक्रियशरीररूपः, तदीयपुद्गलानामानप्राणसंज्ञितानामौदारिकवैक्रियशरीरपुद्गलेभ्योऽनन्तगुणप्रदेशत्वेन सूक्ष्मतया एतच्छरीराव्यपदेश्यत्वात्, तथा च सत्युच्छ्वासादीनामभाव इति नानवस्था, 'वाउकाए णं भंते'त्ति अयं च प्रश्नो वायुकायप्रस्तावाद्विहितः, अन्यथा पृथिवीकायिकादीनामपि मृत्वा स्वकाये उत्पादोऽस्त्येव, सर्वेषामेषां कायस्थितेरसङ्ख्याततयाऽनन्ततया चोक्तत्वात्, यदाह–"अस्संखोसप्पिणिसप्पिणीउ एगिंदियाण य चउण्हं। ता चेव ऊ अणंता वणस्सईए उ बोद्धव्वा ॥१॥" तत्र वायुकायो वायुकाये एव अनेकशतसहस्रकृत्वः 'उद्दाइत्त'ति अपहृत्य—मृत्वा 'तत्थेव'त्ति तत्रैव वायौ 'पच्चायाइ' प्रत्याजायते उत्पद्यते,'पुट्ठे उद्दाइ' स्पृष्टः स्वकायपरकायशस्त्रेण अपद्रवति–म्रियते, 'नो अपुट्ठे'त्ति, सोपक्रमापेक्षमिदं, 'निक्खमइ'त्ति निष्क्रामति स्वकलेवरात्, 'सिय ससरीरि'त्ति स्यात्–कथञ्चिच्छरीरी,'ओरालिय'त्ति औदारिकवैक्रियापेक्षयाऽशरीरी तैजसकार्मणापेक्षया तु सशरीरी निष्क्रामति ॥ यथा वायोस्तथा कस्यापि मुनेरपि तत्रैवोत्पत्तिः स्यादिति दर्शयन्नाह–'मडाई णं'ति (सू. ८७) मृतादिः–प्रासुकभोजी निर्ग्रन्थः–साधुः 'नो निरुद्ध'त्ति अनिरुद्धाग्रेतनजन्मा, चरमभवाप्राप्त इति, अयं च भवद्वयप्राप्तव्यमोक्षोऽपि स्यादित्याह–'नो निरुद्धभवपवंचे'त्ति प्राप्तव्यभवविस्तार इति, अयं च देवमनुष्यभवप्रपञ्चापेक्षयाऽपि स्यादत आह– 'नो पहीण'त्ति अप्रहीणचतुर्गतिगमनः, यत एवमतो 'नो पहीणसंसार'त्ति अप्रक्षीणसंसारवे-

द्यकर्मा, अयं च सकृच्चतुर्गतिगमनतोऽपि स्यादतो 'नो वोच्छिन्नसंसारे'त्ति अव्युच्छिन्नसंसृतिगमनः, अतो 'अवुच्छिन्न'त्ति अव्युच्छिन्नसंसारवेद्यकर्मा अतो 'नो निट्ठियट्ठे' न निष्ठितप्रयोजनः, अतो 'नो निट्ठियट्ठकरणिज्जे'त्ति नो-नैव निष्ठितार्थानामिव करणीयानि-कृत्यानि यस्य स तथा, 'पुणरवि'त्ति पुनरपि स साधुः-'इत्थत्थं'ति एतमर्थं चतुर्गतिगमनलक्षणं, तथाऽनुस्वारलोपश्च प्राकृतत्वात्, अनेन प्रकारेण इत्थत्वं इति, पाठान्तरे इत्थं तद्भाव इत्थत्वं—मनुष्यादित्वं 'हव्वं' शीघ्रं 'आगच्छइ'त्ति आप्नोति, अभिधीयते च कषायोदयात् प्रपतितचरणमुनीनां भवभ्रमणं, यतः—"जइ उवसंतकसाओ, लहइ अणंतं पुणोऽवि पडिवायं"ति, स च संसृतिसंश्रितो मुनिजीवः प्राणादिना नामषट्केन कालभेदेन युगपच्च वाच्यः स्यादिति विभणिषुः प्रश्नयन्नाह—'से णं'ति (सू० ८८) सः-साधुजीवः किंशब्दः प्रश्ने, वक्तव्यः स्यात्, प्राकृतत्वात् किमसौ वक्तव्यः स्यात्?, अत्रोत्तरं 'पाणेत्ति वत्तव्वं'ति तत्र प्राण इत्येतत् तं प्रति वक्तव्यं स्यात्, यदोच्छ्वासादिमत्त्वमात्रमाश्रित्य तस्य निर्देशः क्रियते, एवं भवनादिधर्मविवक्षया भूतादिशब्दपञ्चकवाच्यता तस्य साधोः कालभेदेन व्याख्येया, यदा तूच्छ्वासादिधर्मैर्युगपदसौ विवक्ष्यते तदा प्राणो भूतो जीवः सत्त्वो विज्ञो वेदयिता इत्येवं तं प्रति वाच्यं स्यात्, 'जम्हा जीवे'त्ति यस्माज्जीवः-आत्माऽसौ जीवति-प्राणान् धारयति, तथा जीवत्वमुपयोगलक्षणं आयुष्कं च कर्म उपजीवति—अनुभवति तस्माज्जीवः, 'सत्ते'ति सक्तः-आसक्तः, शक्तो वा समर्थः सुन्दरासुन्दरासु चेष्टासु, तथा सक्तः-सम्बद्धः शुभाशुभकर्मभिः ॥ पूर्वोक्तार्थविपर्ययमाह—'मडाई'त्यादि (सू० ८९) 'पारगए' पारं गतः संसाराब्धेः, 'परंपरगए' मिथ्यात्वादिगुणस्थानकानां मनुष्यादिसुगतीनां वा परम्परया-क्रमेण सिद्धिं गतः। संयताधिकारे स्कन्दकचरितं विवक्षुरिदमाह—'उप्पण्णनाणदंसणधरे' (सू० ९०) इह यावत्करणात् 'अरहा जिणे केवली सव्वण्णू सव्वदरिसी

आगासगएणं छत्तेणं' समवसरणान्तं वाच्यं, 'गद्दभालस्स'त्ति गर्द्दभालाख्यपरिव्राजकस्य, इतिहासः पुराणं तत् पञ्चमं येषां ते(षां) चतुर्वेदानां, निर्घण्टुः नामकोशः, 'संगोवंगाणं' अङ्गानि—शिक्षादीनि षट्, उपाङ्गानि—तदुक्तप्रपञ्चनपराः प्रबन्धाः, 'सारए' सारकः—अध्यापनेन प्रवर्त्तकः, सारको वाऽन्येषां विस्मृतसूत्रादिसारणात्, वारकोऽशुद्धपाठनिषेधात्, धारकोऽधीतसूत्रधरणात्, पारगामी, 'सडंगवी' षडंगवित्, 'सद्वितंतविसारए' कापिलीयशास्त्रपण्डितः, 'संखाणे' सङ्ख्याशास्त्रे 'सिक्खाकप्पे'त्ति शिक्षा-अक्षरस्वरूपनिरूपकं शास्त्रं, कल्पश्च—तथाविधसमाचारनिर्देशकं शास्त्रमेव, छन्दे—पद्ये शास्त्रे निरुक्ते—शब्दव्युत्पत्तिशास्त्रे 'जोइसामयणे' ज्योतिःशास्त्रे, 'बंभन्नए'त्ति ब्राह्मणसम्बन्धिषु 'परिव्वायएसु' परिव्राजकसत्केषु नयेषु—नीतिषु, दर्शनेष्वित्यर्थः, 'वेसालियसावए'त्ति विशाला—महावीरमाता तदपत्यं वैशालिको भगवान्, तस्य वचः शृणोति तद्रसिकत्वात् वैशालिकश्रावकः 'इणमक्खेवं' एतमाक्षेपं—प्रश्नं पृष्टवान् 'मागह'त्ति मगधजनपदजातत्वात् मागधस्तस्यामन्त्रणं हे मागध! 'वड्ढइ' संसारवर्द्धनात् 'हायइ' संसारहान्येति, एतावत् प्रश्नजातं तावदाख्याहि, उच्यमानः—पृच्छ्यमानः एवम्—अनेन प्रकारेण शङ्कितः किमिदमिहोत्तरं इदं वेति जातशङ्कः, इदमिहोत्तरं न साधु इदं च साधु इति काङ्क्षितः, अस्मिन्नुत्तरे दत्ते किमस्य प्रतीतिरुत्पत्स्यते नवेति विचिकित्सितः, भेदं—मतेर्भङ्गं किंकर्त्तव्यताव्याकुलत्वलक्षणमापन्नो नाहमिह किञ्चिज्जानामीति स्वविषयं कालुष्यं समापन्नः, 'नो संचाए'त्ति न शक्नोति, 'पमोक्खमक्खाइउं'ति प्रमुच्यते पर्यनुयोगबन्धनात् अनेनेति प्रमोक्षः, उत्तरमाख्यातुं—वक्तुं, वन्दामः—स्तुमः नमस्यामः—प्रणमामः सत्कारयामः—आदरं कुर्मः सन्मानयामः—उचितप्रतिपत्तिभिः, किंभूतं? 'कल्याणं' कल्याणहेतुं 'मंगलं' दुरितोपशमहेतुं 'दैवतं' देवं इष्टदेवताप्रतिमा चैत्यमिव चैत्यं पर्युपासयामः सेवामहे, 'अब्भत्थिए' आध्यात्मिकः—आत्मविषयः

चिन्तितः--स्मरणरूपः प्रार्थितः--अभिलषितः सङ्कल्पो--विकल्पः समुत्पन्नवान्, अर्थान् भावान्, भावान् लोकसान्तत्वादीन्, 'हेऊ-इं'ति अन्वयव्यतिरेकलक्षणहेतुगम्यत्वाद्धेतून्, तानेव 'पसिणाइं' प्रश्नान्, उपपत्तिमात्राणि कारणानि, व्याक्रियमाणत्वाद् व्याकरणानि, प्रष्टुं इतिकृत्वा 'संपेहेइ'त्ति संप्रेक्षते पर्यालोचयति, 'परिव्वायावसहे'त्ति मठः कुण्डिका कमण्डलु काञ्चनिका--रुद्राक्षकृता करोटिका मृद्भाजनविशेषः, भृसिका आसनविशेषः, केसरिका प्रमार्जनार्थं चीवरखण्डं, षण्नालकं--त्रिकाष्ठिका अङ्कुशकं तरुपल्लवग्रहणार्थं पवित्रकं--अङ्गुलीयकं, गणेत्रिका कलाचिकाभरणविशेषः, 'पहारेत्थ'त्ति प्रधारितवान् संकल्पितवान् गमनाय--गन्तुं, 'गोयमाई'ति गौतम इति आमन्त्र्येति शेषः, 'काहे व'त्ति कदा कस्यां वेलायां 'किह व'त्ति केन वा प्रकारेण ? साक्षाद् दर्शनतः श्रवणतो वा, 'केवच्चिरेण व'त्ति कियतो वा कालात् 'अदूरागए'त्ति अदूरे आगतः, स चावधिस्थानापेक्षयापि स्यात् अथवा दूरतरमार्गापेक्षया क्रोशादिकमप्यदूरं स्यादत उच्यते--'बहुसंपत्ते'त्ति ईषदूनः सम्प्राप्तो बहुसम्प्राप्तः, 'अद्धाणपवन्ने'त्ति मार्गप्रतिपन्नः, किमुक्तं स्यात् ?, 'अन्तरापहे वट्टइ'त्ति विवक्षितस्थानयोरन्तरालमार्गे वर्त्तत इति, 'पव्वइत्तए'त्ति प्रव्रजितुं, 'अब्भुट्ठेइ'त्ति आसनं त्यजति, यच्च गौतमाभ्युत्थानमसंयतं प्रति तद्भाविसंयतत्वेन, 'हे खंदय'त्ति सम्बोधनमात्रं स्वागतं--शोभनमागमनं तव स्कन्दक ! सु--अतिशयेन स्वागतं 'अणुरागयं'ति रेफस्यागमिकत्वात् अनुरूपं आगमनं 'जेणेव इहं'ति यस्यां दिशि इदं--भगवत्समवसरणं 'तेणेव' तस्यां दिशि 'अत्थे समत्थे'त्ति अयमर्थः समर्थः--सङ्गतः ?, किंति प्रश्ने, उत्तरं तु 'हन्ता अत्थि' सद्भूतोऽयमर्थः, 'से केणं'ति गोयमा ! तहारूवेति स कः, णंति वाक्यालङ्कारे, तथारूपो ज्ञानी तपस्वी वा 'जेणं'ति येन ज्ञानिना तव एषः अर्थः आख्यातः, 'रहस्सकडे'त्ति रहःकृतः--प्रच्छन्नकृतः, हृदय एव अवधारितत्वात्

'वियट्टभोइ'त्ति व्यावृत्ते सूर्ये भुङ्क्ते इत्येवंशीलो व्यावृत्तभोजी, प्रतिदिनभोजीति भावः, 'सिंगारे'त्ति शृङ्गारमिव शृङ्गारं—अतिशयशोभावत्, 'आणंदिए'त्ति ईषत्सौम्यतादिभावैः, नन्दितः सौम्यतादिभावैः, 'परमाणं'ति समृद्धितरतां प्राप्तः, 'पीयमणे'त्ति प्रीतिः प्रीणनं—आप्यायनं मनसि यस्य स प्रीतमनाः, 'परमसोमण'त्ति परमं सौमनस्यं—सुमनस्कता सञ्जातं यस्य स परमसौमनस्यः, 'विसप्प'त्ति हर्षेण विस्तारं व्रजत् हृदयं यस्य स तथा, 'दव्वओ णं एगे लोए सअंते'त्ति पञ्चास्तिकायमयैकद्रव्यत्वाल्लोकस्य सान्तोऽसौ, आयामो—दैर्घ्यं विष्कम्भो—विस्तारः, 'परिक्खेवेण'ति परिधिना 'भुविंसु'त्ति अभवन्, ध्रुवोऽचलत्वात्, नियतः एकस्वरूपत्वात्, नियतरूपः कादाचित्कोऽपि स स्यादत आह—'सासए'त्ति शाश्वतः, प्रतिक्षणं सद्भावात्, अक्षयोऽविनाशात्, अव्ययः तत्प्रदेशानामव्ययत्वात्, अवस्थितः पर्यायाणामनन्ततया अवस्थितत्वान्नित्यः. 'वण्णपज्जव'त्ति वर्णविशेषा एकगुणकालत्वादयः, एवमन्येऽपि गुरुलघुपर्यवास्तद्विशेषाः बादरस्कन्धानां, अगुरुलघुपर्यवाः अणूनां सूक्ष्मस्कन्धानाममूर्त्तानां च, 'नाणपज्जवे'त्ति ज्ञानविशेषाः, बुद्धिकृता वा अविभागपलिच्छेदाः अणंता, गुरुलघुपर्यवा औदारिकादिशरीराण्याश्रित्य इतरे तु कार्मणादिद्रव्याणि जीवस्वरूपं वाऽऽश्रित्य, 'दव्वओ णं एगा सिद्धि'त्ति इह सिद्धिः सिद्धाधाररूपा ईषत्प्राग्भारा सिद्धिशिला 'खेत्तओ'त्ति पञ्चचत्वारिंशद्योजनलक्षाणि आयामविष्कम्भाभ्यां, 'एगा जोयणकोडि ४२ लक्षाः ३० सहस्राः किञ्चिन्न्यूनगव्यूतद्वयाधिके द्वे योजनशते एतत्परिधिः । 'बालमरणे दुवालसविहे'त्ति 'वलए'त्ति वलतो—बुभुक्षा परिगतत्वेन वलवलायमानस्य संयमाद्वा भ्रश्यतो मरणं वलन्मरणं 'वसट्ट'त्ति वशेन इन्द्रियवशेन ऋतस्य—पीडितस्य मृतिः दीपरूपाक्षिप्तचक्षुषः शलभस्येव यत्तद्वशार्त्तमरणं, 'अंतोसल्ल'त्ति अन्तःशल्यस्य द्रव्यतोऽनुद्धृततोमरादेः भावतः सातिचारस्य यत् तदन्तःशल्यमरणं,

तस्स भवाय मनुष्यादेस्सतो मनुष्यादावेव बद्धायुषो यत्तत्तद्भवमरणं, 'सत्थोवाडण'त्ति शस्त्रादिना-क्षुरिकादिना अवपाटनं शस्त्रा-वपाटनं, 'वेहाणसे'त्ति विहायसि-आकाशे भवं वृक्षशाखाद्युद्बद्धत्वेन वैहानसं मरणं 'गिद्धपिट्ठ'त्ति गृध्रैः-पक्षिभिः गृद्धैः-मांस-लुब्धैर्वा शृगालादिभिः स्पृष्टस्य-विदारितस्य करिकरभरासभादिशरीरान्तर्गतत्वेन यत्तद् गृध्रस्पृष्टं गृद्धस्पृष्टं वा, 'वड्ढइ'त्ति वर्द्धते, संसारवर्द्धनेन, पादपवदुपगमनम्-अस्पन्दतयाऽवस्थानं पादपोपगमनं, इदं चतुर्विधाहारवर्जितमेव स्यात्, 'नीहारिमे'त्ति निर्हा-रेण निर्वृत्तं तन्निर्हारिमं, उपाश्रये यो म्रियते तत्कलेवरनिर्हारणात्, अनिर्हारिमं योऽटव्यां म्रियते इति, यद्वाऽन्यत्रेह स्थाने इङ्गि-तमरणमुच्यते, तद्भक्तप्रत्याख्यानस्यैव विशेष इति नेह भेदेन दर्शितमिति। 'सद्दहामि'त्ति (सू० ९१) निर्ग्रन्थं प्रवचनमहं प्रति-पद्ये 'पत्तियामि'त्ति (प्रत्येमि) प्रीतिप्रत्ययं वा सत्यमिदं एवं तत्र करोमि, रोएमि-चिकीर्षामि, अब्भुट्ठेमि एतदङ्गीकरोमि, 'तहमेयं'ति तथैतत् 'अवितह'त्ति सत्यमेतत् 'असंदिद्धं'ति असन्दिग्धं 'इच्छिय'न्ति इष्टमेतत् 'पडिच्छिय'न्ति प्रती-प्सितं-प्राप्तुमिष्टं, 'आलित्ते'त्ति आ-ईषत् ज्वलितः 'पलित्ते'त्ति प्रकर्षेण ज्वलितः, 'आलित्तपलित्ते'त्ति आदीप्तप्रदीप्त इति, 'झियायमाणं'ति ध्मायमाने-दह्यमाने अप्पसारं अल्पं च तत्सारं चेति अल्पसारं-मणिमुक्तास्वर्णटङ्कादि, 'आयाए' आत्मना, 'एगंतं'ति एकान्तं-विजनं अन्तं-भूभागं अपक्रामति, एष मणिमुक्तादिकरण्डको मम निस्तारितः-अग्निनिष्कासितः 'खमाए'त्ति क्षमायै धृतयेऽनुगामितया भविष्यति, स्थैर्यधर्मयोगात् स्थैर्यः वैश्वासिको विश्वासप्रयोजनत्वात् सम्मतः तत्कृतकार्याणां सम्मत-त्वात्, बहुशो मतो बहुमतः, अनु-विप्रियकरणस्य पश्चादपि मतोऽनुमतः, 'भण्डकरडग'त्ति भाण्डकरण्डकम्-आभरणभाजनं तत्समानः, आदेयत्वात्, 'मा णं वाल'त्ति मा-निषेधे, व्यालाः-श्वापदभुजगाः, 'फुसंतु'त्ति स्पृशन्तु इतिकृत्वा 'सेहावि-

यं'ति सेधितुं प्रत्युपेक्षणादिक्रियाकलापग्राहणतः शिक्षितुं सूत्रार्थग्राहणतः, 'सयमेव'त्ति स्वयमेव भगवन्तैव, प्रव्राजितुं रजोहरणादिवेपदानेन, आत्मानमिति गम्यते, आचारः-श्रुतानुष्ठानं कालाध्ययनादि गोचरं-भिक्षाटनं विनयः-प्रतीतः वैनयिकं तत्फलं कर्मक्षयादि चरणं-चारित्रं करणं-पिण्डविशुध्ध्यादि यात्रा-संयमयात्रा तदर्थमेव मात्रा-आहारग्रहणं वृत्तिः-वर्त्तनं यत्र तं धर्ममाख्यातुं, इच्छामीति योगः, 'तुयट्टियव्वं'ति शयितव्यं, सामायिकोच्चारणादिपूर्वं, उत्थायोत्थाय—विबुध्य २ 'पाणेहिं'त्ति प्राणादिपु चतुर्पु यः संयमो-रक्षा तेन संयंतव्यम्-यतितव्यं, 'तमाणाए'त्ति तदनन्तरमाज्ञया-आदेशेन खेलः-कण्ठमुखश्लेष्मा सिंघानको-नाशामलः, समितः सङ्गतमनःप्रवृत्तिकः 'गुत्ते'त्ति मनोगुप्तत्वादीनां निगमनं, गुप्तं-ब्रह्मगुप्तियुक्तं ब्रह्म चरति यः 'चाइ'त्ति सङ्गत्यागवान् "लज्जू' संयमवान् रज्जुरिव वा रज्जुः अवक्रव्यवहार इति 'खंतिखमे'त्ति क्षान्त्या क्षमते न त्वसमर्थतया यः स क्षान्तिक्षमः, 'सोहिय'त्ति शोधितो वा निरतिचारचारित्रत्वात्, सौहृदं—मैत्री सर्वप्राणिपु तद्योगात् सौहृदो वा 'अप्पुस्सु'त्ति अल्पौत्सुक्यः त्वरारहित इति, 'अबहिल्लेसे'त्ति अविद्यमाना बहिः-संयमाद्बहिस्तात् लेश्या-मनोवृत्तिर्यस्य सः अबहिर्लेश्यः, 'दंते'त्ति दान्तः क्रोधादिदमनात्, पन्तो वा रागद्वेपयोरन्तार्थप्रवृत्तत्वात्, 'पुरओ'त्ति मार्गानभिज्ञो मार्गज्ञनरमिव पुरस्कृत्य, एकादशाङ्गीमधीते, इह कश्चिदाह-ननु अनेन स्कन्दकचरितात्प्रागेवैकादशाङ्गीनिष्पत्तिरवसीयते, पञ्चमाङ्गान्तर्भूतं चेदं चरितं इति कथं न विरोधः?, उच्यते, श्रीवीरतीर्थे किल नव वाचनाः, तत्र सर्ववाचनासु स्कन्दकचरितात् पूर्वकाले ये स्कन्दकचरिताभिधेया अर्थास्ते चरितान्तरद्वारेण प्रज्ञाप्यन्ते, स्कन्दकचरितोत्पत्तौ च सुधर्मणा जम्बुमधिकृत्यास्यां वाचनायां स्कन्दकचरितमेवाश्रित्य तदर्थप्ररूपणा कृतेति न विरोधः, अथवा सातिशयत्वाद् गणधराणां अनागतकालभाविचरितबन्धनमदुष्टमिति,

भाविशिष्यापेक्षयाऽतीतनिर्देशोऽपि न दुष्ट इति, 'भिक्खुपडिमं'ति भिक्षूचितमभिग्रहविशेषं, एतत्स्वरूपं चेदं—'गच्छा विणिक्खमित्ता पडिवज्जइ मासियं महापडिमं। दत्तेग भोयणस्सा पाणस्सवि एग जा मासं॥१॥'' नन्वयमेकादशाङ्गधारी पठितः, प्रतिमाश्च विशिष्टश्रुतवानेव कुर्यात्, यदाह ''गच्छेच्चिय निम्माओ, जा पुव्वा दस भवे असंपुन्ना। णवमस्स तइयवत्थू होइ जहण्णो सुयाहिगमो ॥ २ ॥'' इति कथं न विरोधः ?, उच्यते, पुरुषान्तरविषयोऽयं श्रुतनियमः, तस्य तु सर्वविदुपदेशेन प्रवृत्तत्वान्न दोषः, 'अहाकप्पं'ति प्रतिमाकल्पानतिक्रमेण 'अहातच्चं'ति यथातत्त्वं तत्त्वानतिक्रमेण 'अहासम्मं'ति यथासाम्यं, समभावानतिक्रमेण 'सोहेइ' शोभयति पारणकदिने गुर्वादत्तशेषभोजनग्रहणात् 'तीरइ' पूर्णेऽप्यवधौ स्तोककालावस्थानात् 'पूरेइ' तत्कृत्यपूरणात्, कीर्त्तयति पारणकदिने इदं च इदं च तस्याः कृत्यं तच्च मया कृतमिति कीर्त्तनात्, 'अणुपालेइ' तदनुमोदनात्, एवमेतत्क्रमेण सप्त सप्तमासान्ताः, ततोऽष्टमी प्रथमसप्तरात्रिंदिवा सप्ताहोरात्रमाना, एवं नवमी दशमी च, एतास्तिस्रोऽपि चतुर्थभक्तेनापानकेन, 'एगराइ'त्ति एकरात्रिकी चेयमष्टमेन स्यात्, 'राइंदिय'त्ति रात्रिंदिवा एकादशी अहोरात्रप्रमाणा, इयं च षष्ठभक्तेन, 'गुणरयणसंवच्छरं'ति गुणा एव रत्नानि यत्र स गुणरत्नः २ संवत्सरो यत्र तद् गुणरत्नसंवत्सरं तपः, इह च त्रयोदश मासाः सप्तदशदिनाधिकाः तपःकाल इति, त्रिसप्ततिर्दिनानि पारणकालः, स च एवं—''पण्णरस वीस चउवीस चेव चउवीस पण्णवीसा य। चउवीस एक्कवीसा चउवीसा सत्तवीसा य ॥१॥ तीसा तित्तीसाविय चउवीस छव्वीस अट्ठवीसा य। तीसा बत्तीसाविय सोलसमासेसु तवदिवसा ॥२॥ पन्नरस दसट्ठ छप्पंच चउर पंचसु य तिन्नि तिन्निति। पंचसु दो दो य तहा, सोलसमासेसु पारणगा ॥३॥'' इह च यत्र मासे अष्टमादितपसो यावन्ति दिनानि न पूर्यन्ते तावन्त्यग्रेतनमासादाकृष्य पूरणीयानि अधिकानि वा अग्रेत-

नमारे क्षेप्तव्यानि, 'चउत्थं चउत्थेणे'ति चतुर्थं भक्तं यावद्भक्तं त्यज्यते यत्र तच्चतुर्थभक्तं, इयं चोपवासस्य संज्ञा, एवं षष्ठादिकमुपवासद्वयादेरिति, 'अणिक्खित्तेणं' अविश्रान्तेन 'दिय'त्ति दिवसे 'ठाणुक्कुड'त्ति स्थानं-आसनमुत्कटुकं आधारे पुतालगनरूपं यस्यासौ स्थानोत्कटुकः, 'वीरासणेणं' वीरासनेन रात्रौ, निषीदनासनाकर्षणात् तथैव स्थित्येत्यर्थः,'अवाउडेण' प्रावरणरहितेन 'उरालेण' प्रधानेन विपुलेन बहुदिनत्वात् 'पयत्तेण' प्रदत्तेन गुरुभिरनुज्ञातेन 'पज्जहिएण' प्रकर्षादङ्गीकृतेन 'उदग्गेण' उत्तरोत्तरं वृद्धिमता 'उदात्तेन' उन्नतभाववता 'उत्तमेन' उत्तमपुरुषसेवितत्वेन 'उदारेणं' औदार्यवता निःस्पृहत्वात् 'महानुभागेण' महानुभावेन 'शुष्को' नीरसवपुष्कात्, 'लुक्खे'त्ति बुभुक्षावशेन रूक्षीभूतत्वात्, अस्थिचर्मावनद्धः किटिकिटिका-निर्मांसास्थिसम्बन्धी उपवेशनादिक्रियासमुत्थः शब्दस्तां भूतः-प्राप्तो यः स किटिकिटिकाभूतः धमनीसंततो-नाडीव्याप्तो मांसक्षयेणादृश्यमाणनाडीकत्वात् 'जीवंजीवेणं'ति अनुस्वारस्यागमिकत्वात् जीवजीवेन, जीवबलेनेत्यर्थः, न वपुर्बलेनेति, 'भासं भासि'त्यादि, कालत्रयनिर्देशः ग्लायति ग्लानः स्यात्, 'से जहानामए'त्ति से इति अथार्थः, 'यथे'ति दृष्टान्तार्थः, नामेति सम्भावनायां, ए इति वाक्यालङ्कारे, 'कट्ठसगडिय'त्ति काष्ठभृता शकटिका काष्ठशकटिका 'पत्तसगडिय'त्ति पलाशादिपत्रभृता गन्त्री 'पत्ततिल'त्ति पत्रयुक्ततिलानां भाण्डकानां च मृन्मयभाजनानां भृता गन्त्री, अङ्गारभृतगन्त्रीत्यर्थः,'उण्हे दिन्ना' उष्णस्तापस्तत्र दत्ता, शुष्का सतीति विशेषणद्वयमार्द्रकाष्ठादीनामेव सम्भवति,हुताशन इव भस्मराशिप्रतिच्छन्नः, 'तवेणं तेएणं'ति तपस्तेजसा एव,बहिर्निस्तेजाः,अतः शुभध्यानाग्निना ज्वलति,'पुव्वरत्तावर'त्ति पूर्वरात्रश्च-रात्रेः पूर्वभागः अपरात्रश्च-रात्रेः पश्चिमो भागस्तलक्षणो यः कालसमयः-कालात्मकः समयः स तथा तत्र धर्मजागरिकां जाग्रतः,कुर्वत इत्यर्थः,'तं अत्थि ता मे'त्ति तदेवमप्यस्ति तावत्

मेत्ति मम उत्थानादि, न सर्वथा क्षीणमिति भावः, 'तं जाव ता मे'त्ति तत्-तस्मात् यावत् ता इति भाषामात्रे मे-ममास्तीति 'जाव य'त्ति यावच्च 'सुहत्थी'त्ति शुभार्थी भव्यान् प्रति, सुहस्ती वा-पुरुषवरगन्धहस्ती वा, 'कल्लं'ति श्वः 'पाउ'त्ति प्रादुः-प्रकटप्रभातायां रात्रौ 'फुल्ल'त्ति उत्फुल्लं यदुत्पलं-पद्मं कमलश्च-हरिणविशेषस्तयोः कोमलमुन्मीलितं-उन्मीलनं यत्र तत्तथा, 'कडाईहिं' इह पदैकदेशात्पदसमुदायो दृश्यः, ततः कृतयोग्यादिभिः, तत्र कृता योगाः-प्रत्युपेक्षणादिव्यापारा यैस्ते कृतयोगिनः, आदिशब्दात् प्रियधर्माणो दृढधर्माण इति, 'विउलं'ति 'विपुलगिरिमेहघण'त्ति घनमेघसन्निकाशः-सान्द्रजलदसदृशं, देवानां सन्निपातः-समागमो रमणीयत्वाद्यत्र तं 'संलेहण'त्ति संलिख्यते-कृशीक्रियते अनया इति संलेखना, तस्या झोसणा—सेवा, तया 'झुसिए'त्ति जुष्टः-सेवितः 'भत्तपाण'त्ति प्रत्याख्यातभक्तपानस्य कालं-मरणं 'इतिकट्टु' इतिकृत्वा 'संपेहेइ'त्ति सम्प्रेक्षते-पर्यालोचयति, 'उच्चार'त्ति पादपोपगमनादारादुच्चारादिभूमीः प्रतिलेखयति, उच्चारादेस्तस्य कर्त्तव्यत्वात् तद्भूमिप्रतिलेखनं न निरर्थकं, 'सट्ठिं भत्ताइं'ति प्रतिदिनं भोजनद्वयत्यागात्त्रिंशता दिनैः षष्टिभक्तानि व्यक्तानि स्युः, 'अणसणाए' प्राकृतत्वादनशनेन 'छेइत्ता' छित्त्वा परित्यज्य 'परिनिव्वाणवत्तियं'ति परिनिर्वाणं-मरणं तदेव प्रत्ययो-हेतुर्यस्य तं परिनिर्वाणप्रत्ययं ॥ द्वितीयशते प्रथमोद्देशकविवरणम् ॥ 

अथ द्वितीय आरभ्यते-'समुग्घाय'त्ति (सू० ९६) सम्-एकीभावे उत्-प्राबल्ये, ततश्च एकीभावेन प्राबल्येन च घाताः समुद्घाताः, अथ प्राबल्येन घाताः कथम् ?, उच्यन्ते, यस्माद्वेदनादिसमुद्घातपरिणतो बहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यान् उदीरणाकरणेनाकृष्य उदये प्रक्षिप्यानुभूय निर्जरयति, आत्मप्रदेशैस्सह श्लिष्टान् शातयतीत्यर्थः, 'सत्त'त्ति वेदना-

समुद्घातादयस्सप्त समुद्घाताः, अत एवाह–'छाउमत्थियसमुग्घायवज्ज'त्ति छद्मस्थसाधोः केवलज्ञानाभावेन केवलिसमुद्घाताभावः, तत्रेदं सूत्रं–'कइ णं भंते ! छाउमत्थियसमुग्घाया पन्नत्ता ?, गोयमा !' इत्यादिसूत्रवर्जितं 'समुग्घायपयं'ति प्रज्ञापनायां षट्त्रिंशत्तमपदं समुद्घातार्थं नेतव्यं, तच्चेदम्–'कइ णं भंते ! समुग्घाया पं०?, गो०! सत्त, तंजहा—वेयणसमुग्घाए कसायसमुग्घाए' इत्यादि, इह सङ्ग्रहगाथा–"वेयण १ कसाय २ मरणे ३ वेउव्विय ४ तेयए य ५ आहारे ६ । केवलिए चेव भवे जीवमणुस्साण सत्तेव ॥१॥" जीवपदे मनुष्यपदे सप्त वाच्याः, नरकादिषु तु यथायोगं, तत्र वेदनासमुद्घातेन समुद्धत आत्मा वेदनीयकर्मपुद्गलानां शातं कुर्यात्, कषायसमुद्घातेन कषायपुद्गलानां, मारणान्तिकसमुद्घातेन आयुःकर्मपुद्गलानां, वैक्रुर्विकसमुद्धतो जीवप्रदेशान् शरीराद्बहिर्निष्कास्य शरीरविष्कम्भबाहल्यमात्रमायामतश्च सङ्ख्येययोजनानि दण्डं निसृजति, निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् शातयति, यथासूक्ष्मांश्चादत्ते, यथोक्तम्–"वेउव्वियसमुग्घाएणं समोहण्णइ २ संखेज्जाइं जोयणाइं दंडं निसरइ २ अहा॰पुग्गले परिसाडेइ २ अहासुहुमे पोग्गले परिआयइ'त्ति,एवं तैजसाहारकसमुद्घातावपि व्याख्येयौ, केवलिसमुद्घातेन समुद्धतः केवली वेदनीयादिकर्मपुद्गलान् शातयति, एतेषु सर्वेषु समुद्घातेषु शरीराज्जीवप्रदेशनिर्गमोऽस्ति, सर्वे एतेऽन्तर्मुहूर्त्तमानाः, नवरं केवलिकोऽष्टसामयिकः, एते चैकेन्द्रियविकलेन्द्रियाणामादितस्त्रयो वायुनारकाणां चत्वारः देवानां पञ्चेन्द्रियतिरश्चां च पञ्च, मनुष्याणां तु सप्तेति ॥ द्वितीयशते द्वितीय उद्देशकः ॥

अथ तृतीय आरभ्यते–यथा 'कइ णं भंते ! पुढवीओ'त्ति (सू० ९७) इह जीवाभिगमद्वितीयोद्देशको नारकवक्तव्यतारूपो ज्ञातव्यः, अत्र सङ्ग्रहगाथा–"पुढवी ओगाहित्ता, निरया संठाणमेव बाहल्लं । विक्खंभपरिक्खेवो, वण्णो गंधो य फासो य ॥१॥"

सूत्रे पूर्वार्द्धमेव लिखितं, शेषाणां विवक्षितार्थानां यावच्छब्देन सूचितत्वात्, 'पुढवि'त्ति पृथिव्यो वाच्याः-ताश्चैवम्-'कइ णं भंते ! पुढवीओ पं०? गो०! सत्त, तं०-रयणप्पभे'त्यादि, 'ओगाहित्ता निरय'त्ति पृथ्वीमवगाह्य कियद्दूरे नरका इति वाच्यं, तत्रास्यां रत्नप्रभायां अशीतिसहस्रोत्तरयोजनलक्षबाहल्यायां उपर्येकं योजनसहस्रमवगाह्याधोऽप्येकं वर्जयित्वा त्रिंशन्नरकलक्षाणि स्युः, एवं शर्करप्रभादिषु यथायोगं वाच्यं, 'संठाणमेव'त्ति संस्थानं नरकेषु वाच्यं, तत्र ये आवलिकाप्रविष्टाः ते वृत्तात्र्यस्राश्च, इतरे तु नानासंस्थानाः, 'बाहल्लं'ति नरकबाहल्यं वाच्यं, तच्च त्रीणि योजनसहस्राणि, कथं?, अध एकं मध्ये शुषिरमेकमुपरि चैकं सङ्कोच इति, 'विक्खंभपरिक्खेवो'त्ति एतौ वाच्यौ, तत्र सङ्ख्यातविस्तृतानां सङ्ख्यातयोजन आयामो विष्कम्भः परिक्षेपश्च, इतरेषां त्वन्यथेति, तथा वर्णादयो वाच्याः, ते चात्यन्तमनिष्टा इत्यादि बहु वक्तव्यं,यावदयमुद्देशकान्तो यदुत किं 'सव्वपाण'त्ति अस्यां रत्नप्रभायां ३० नरकलक्षेषु किं सर्वे प्राणादय उत्पन्नपूर्वाः?, अत्रोत्तरं—'असइं'ति असकृद्-अनेकशः, 'अदुव'त्ति अथवा 'अनंतखुत्तो' अनन्तकृत्वः अनन्तवारानिति ॥ द्वितीयशते तृतीय उद्देशकः ॥

अथ चतुर्थ आरभ्यते, यथा 'पढमिल्लो इंदियउद्देसउ'त्ति ( सू. ९८ ) प्रज्ञापनायामिन्द्रियपदाख्यपञ्चदशपदस्य प्रथम उद्देशकोऽत्र नेतव्यः, तत्र च द्वारगाथा-"संठाणं बाहल्लं पोहत्तं कइपएस ओगाढे। अप्पा बहु पुट्ठपविट्ठविसये अणगार आहारे ॥ १ ॥" इह सूत्रेऽयमेवः लिखितः शेषास्तु तदर्था यावच्छब्देन सूचिताः, तत्र संस्थानं श्रोत्रादीन्द्रियाणां वाच्यं, श्रोत्रेन्द्रियं कदम्बपुष्पसंस्थितं, चक्षुः मसूरकचन्द्राकारं, मसूरकमासनविशेषः, अथवा चन्द्रः—शशी, अथवा मसूरकचन्द्रो-धान्यविशेषदलं, घ्राणं अतिमुक्तकचन्द्रपुष्पविशेषाकारं, रसनेन्द्रियं क्षुरप्रसंस्थितं, स्पर्शनेन्द्रियं नानाकारं, बाहल्यतः सर्वाण्यङ्गुलासङ्ख्येयभागबाहल्यानि,

'पोहत्तं'ति पृथुत्वं श्रोत्रचक्षुर्घ्राणानामङ्गुलासङ्ख्येयभागः, जिह्वेन्द्रियस्याङ्गुलपृथक्त्वं, स्पर्शनेन्द्रियं शरीरमानं, 'कइपएस'त्ति अनन्तप्रदेशनिष्पन्नानि पञ्चापि, 'ओगाह'त्ति असङ्ख्यातप्रदेशावगाढानि, 'अप्पबहु'त्ति सर्वस्तोकं चक्षुरवगाहतः, ततः श्रोत्रघ्राणरसनेन्द्रियाणि क्रमेण सङ्ख्यातगुणानि, स्पर्शनं त्वसङ्ख्येयगुणं, 'पुट्ठपविट्ठ'त्ति श्रोत्रादीनि चक्षूरहितानि स्पृष्टमर्थं प्रविष्टं च गृह्णन्ति, 'विसय'त्ति सर्वेषां जघन्यतोऽङ्गुलासङ्ख्येयभागो विषयः, श्रोत्रस्य उत्कर्षतो १२ योजनानि, चक्षुषः सातिरेकं लक्षं, शेषाणां नव योजनानि, 'अणगारे'त्ति अनगारस्य समुद्घातगतस्य ये निर्जरापुद्गलास्तेऽ(तान)त्र छद्मस्थो मनुजः न पश्येत्, 'आहारे'त्ति निर्जरापुद्गलान्न नारकादयो जानन्ति न पश्यन्ति च आहारयन्ति चैवमादि बहु वाच्यं, अथ किमन्तोऽयमुद्देशक इत्याह-यावदलोकः-अलोकसूत्रान्तः, तच्चेदम्-अलोगे णं भंते ! किण्णा फुडे ?, धम्म० छहिं वा काएहिं अद्धा० फुडे ?, गो० ! नो धम्मत्थिकाएणं फुडे जाव नो आगासत्थिकाएणं फुडे, आगासत्थिकायस्स देसेणं फुडे, आगासत्थिकायस्स पदेसेहिं फुडे, नो पुढविकाएणं फुडे, जाव नो अद्धासमएण फुडे, एगे अजीवदव्वदेसे, अगुरुलहुए, अगुरुलहुयगुणेहिं अणंतेहिं संपुन्ने, सव्वागासे अणंतभागूणेत्ति, नालोको धर्मास्तिकायादिना पृथिव्यादिकायैः समयेन च स्पृष्टो-व्याप्तः, तेषां तत्रासत्त्वात्, आकाशास्तिकायदेशादिभिः स्पृष्टः, तेषां तत्र सत्त्वात्, एकश्चासावजीवद्रव्यदेशः, आकाशद्रव्यदेशत्वात् तस्येति ॥ द्वितीयशते चतुर्थः ॥

अथ पञ्चम आरभ्यते-यथा 'देवब्भूएणं'ति (सू० ९९) देवभूतेनात्मना नो परिचारयति 'से णं'ति स निर्ग्रन्थदेवः तत्र-देवलोके 'नो' नैव 'अण्णे'त्ति अन्यान् आत्मव्यतिरिक्तान् देवान्, तथा नोऽन्येषां देवानां सम्बन्धिनीं देवीं अभिजुंजिय-अभियुज्य-वशीकृत्य आश्लिष्य च परिचारयति-परिभुङ्क्ते, 'नो अप्पणिच्चि'ति न आत्मीया देवीः 'अप्पणामेव अप्पाणं विउव्विय'

आत्मानं स्त्रीपुरुषरूपतया विकृत्य, 'परउत्थियवत्तव्वय'त्ति परतीर्थिकवक्तव्यता एवं नेतव्या, 'जंसमयमित्थिवेयं वेएइ, तंसमयं पुरिस० जंसमयं पुरिस० तं समयमित्थिवेयं वेएइ, इत्थिवेयस्स वेयणाए पुरिसवेयं वेएइ, पुरिसवेयस्स वेयणाए इत्थिवेयं वेएइ, एवं खलु एगेऽवि य णं'ति, मिथ्यात्वमेषामेवं ज्ञेयं—स्त्रीरूपकरणेऽपि तस्य देवस्य पुरुषत्वात् पुरुषवेदस्यैवैकसमये उदयो, न स्त्रीवेदस्य, वेदपरिवृत्त्या वा स्त्रीवेदस्यैव, न पुरुषवेदस्य, परस्परविरुद्धत्वादिति, 'उववत्तारो'त्ति प्राकृतशैल्या उपपत्ता भवति इति दृश्यं, 'उज्जोवेमाणे'त्ति उद्योतयन् प्रकाशकरणेन 'पभासेमाणे'त्ति प्रभासयन् शोभयन् 'पडिरूवे'त्ति द्रष्टारं २ प्रति रूपं यस्य स प्रतिरूपः ॥ 'उदगगब्भे णं'ति (सू० १००) 'एक्कं समयं'ति समयानन्तरमेव प्रवर्षणात्, उत्कृष्टतस्तु षण्मासान्, षण्मासानामुपरि वर्षणात्, अयं च मार्गशीर्षपौषादिषु वैशाखान्तेषु सन्ध्यारागमेघोत्पादादिलिङ्गः स्यात् ,यदाह—"पौषे च मार्गशीर्षे सन्ध्यारागाम्बुदाः सपरिवेषाः। नात्यर्थं मार्गशिरे शीतं पौषेऽतिहिमपातः ॥१॥ 'कायभवत्थेणं'ति (सू० १०१) काये जनन्युदरस्थितनिजदेह एव यो भवो—जन्म स कायभवः, तत्र तिष्ठतीति स कायभवस्थः, 'चउवीसं'ति स्त्रीकाये द्वादश वर्षाणि स्थित्वा पुनर्मृत्वा तस्मिन्नेव स्वशरीरे उत्पद्यते द्वादशवर्षस्थितितया इत्येवं चतुर्विंशतिवर्षाणि स्युः, केचिदाहुः—द्वादश वर्षाणि स्थित्वा पुनस्तत्रैवान्यबीजेन तच्छरीरे उत्पद्यते द्वादशवर्षस्थितिरिति. 'एगजीवेणं'ति ( सू० १०३ ) मनुष्याणां तिरश्चां च बीजं द्वादश मुहूर्त्तान् यावद् योनिभूतं स्यात्, गवादीनां शतपृथक्त्वस्यापि बीजं गवादियोनिप्रविष्टं बीजमेव, तत्र च बीजसमुदाये एको जीव उत्पद्यते, स च तेषां बीजस्वामिनां सर्वेषां पुत्रः स्यात्, अत उक्तम्—'उक्कोसेणं सयपुहुत्तं'त्ति, 'सयसहस्सपुहुत्तं'ति(सू.१०५) मत्स्यादीनामेकसंयोगेऽपि शतसहस्रपृथक्त्वं गर्भे उत्पद्यते निष्पद्यते चेत्येकस्यैकभवग्रहणे लक्षपृथक्त्वं पुत्राणां स्यात्, मनुष्य-

योनौ पुनरुत्पन्ना अपि बहवो न निष्पद्यन्ते, कस्यामसावुत्पद्यते ?, 'कम्मकडाए'त्ति नामकर्मनिर्वर्त्तितायां योनौ, अथवा कर्म-मदनोद्दीपकव्यापारस्तत् कृतं यस्यां सा कर्मकृता तस्यां, मैथुनस्य वृत्तिः-प्रवृत्तिर्यस्मिन्नसौ मैथुनं वा प्रत्ययो-हेतुर्यस्मिन् स मैथुनप्रत्ययिकः, 'ते दुहओ'त्ति ते इति स्त्रीपुरुषौ उभयतः स्नेहं-रेतःशोणितलक्षणं सञ्चिनुतः-सम्बन्धयतः ॥ अथ मैथुनस्यैवासंयमहेतुतामाह-'रूयनालियं व'त्ति (सू० १०५) रुतं-कर्पासविकारः, तद्भृता नालिका तां, बूरनालिकामपि, नवरं बूरं-वनस्पतिविशेषावयवविशेषः, 'समभिधंसेज्ज'त्ति समभिध्वंसयेत् ॥'तेण'मित्यादि(सू० १०६) 'अड्ढ'त्ति आढ्या धनादिभिः 'दित्त'त्ति दीप्ताः, 'विच्छिण्ण'त्ति विस्तीर्णानि-विपुलानि प्रचुराणि भवनानि-गृहाणि शयनासनयानवाहनैराकीर्णानि-व्याप्तानि येषां ते तथा, तत्र यानं-गन्त्र्यादि वाहनं त्वश्वादि, 'बहुधण'त्ति बहुधनं-गणिमादि, तथा बह्वेव जातरूपं-सुवर्णं रजतं-रूप्यं येषां ते तथा, 'आओग'त्ति आयोगो-द्विगुणादिवृद्ध्याऽर्थप्रदानं प्रयोगः-कलान्तरं तौ सम्प्रयुक्तौ-व्यापारितौ यैस्ते, 'विच्छड्डिय'त्ति विच्छर्दितं-विविधमुज्झितं बहुलोकभोजनतः उच्छिष्टावशेषसम्भवात्, विपुलं भक्तं पानकं येषां ते, बहवो दासीदासा येषां ते, गोमहिषगवेलकाश्च प्रभूता येषां, गवेलका-उरभ्राः, 'आसवे'त्यादौ क्रिया-कायिक्यादयः, अधिकरणं-गन्त्रीमुशलोदूखलाः 'असहेज्ज'त्ति न विद्यते साहाय्यं-परसाहायिकमत्यन्तसमर्थत्वाद्येषां ते असहाय्याः ते च ते देवादयश्च, अथवा असाहाय्या इति व्यस्तमेव, असुरा नागा भवनपतयः, 'सुवण्ण'त्ति सद्वर्णा-ज्योतिष्काः, यक्षादयः सर्वे व्यन्तरविशेषाः, लब्धार्था अर्थश्रवणात्, गृहीतार्था अर्थावधारणात्, पृच्छितार्थाः प्रश्नकरणात्, अधिगतार्थाः प्रश्नार्थाभिगमात्, 'अट्ठिमिंज'त्ति अस्थीनि च-कीकसानि मिञ्जा च-तन्मध्यवर्त्ती धातुः, अस्थिमिञ्जाः, प्रेमानुरागेण-सर्वज्ञप्रवचनप्रीतिरूपकुसुम्भादिरागेण रक्ता इव रक्ता येषां ते, अथवाऽस्थिमिञ्जासु जिन-

गतप्रेमानुरागेण रक्ता ये ते, उच्छ्रितो–गृहद्वारादपगतः परिघः–अर्गला येषां ते उच्छ्रितपरिघाः, औदार्यातिशयाद्भिक्षुकप्रवेशार्थमनर्गलितगृहद्वारा इत्यर्थः, अप्रावृतद्वाराः कपाटादिभिः, 'चियत्त'त्ति प्रीतिकरोऽन्तःपुरे गृहेषु च प्रवेशः–शिष्टजनप्रवेशनं येषां ते, अथवा व्यक्तोऽन्तःपुरे परेषां गृहे वा प्रवेशो यैस्ते, 'बहूहिं'ति शीलं–ब्रह्मचर्यं व्रतानि–अणुव्रतानि गुणा–गुणव्रतानि विरमणानि–रागादिविरतयः प्रत्याख्यानानि–नमस्कारसहितादीनि पौषधः–पर्वदिनं तत्रैवोपवासः पौषधोपवास इत्येषां द्वन्द्वः, 'चाउद्दसि'त्ति उद्दिष्टा–अमावास्या 'पीढ'त्ति पीठं–आसनं फलकं–उपष्टम्भनफलकं शय्या–वसतिर्बृहत्संस्तारको वा, 'अहापरि'त्ति यथापरिगृहीतैः। 'थेर'त्ति (सू० १०७) स्थविराः–श्रुतवृद्धाः, 'ओयंसी'ति ओजस्विनो–मनोबलयुक्ताः 'वचंसी'ति वर्चस्विनः–सप्रभावा वचस्विनो वा–पटुवक्तारः, 'जाव'त्ति यावत्करणादिदं दृश्यं—'तवप्पहाणा गुणप्पहाणा करणप्पहाणा चरणप्पहाणा' करणं–पिण्डशुद्ध्यादि, चरणं–'वयसमणधम्मे'त्यादि, 'निग्गहप्पहाण'त्ति निग्रहः–इन्द्रियनिग्रहः, 'निच्छयप्प०' निश्चयः–अवश्यंकरणाभ्युपगमः, 'मद्दवप्पहाणा अज्जवप्पहाणा लाघवप्पहाणा' लाघवं क्रियासु दक्षत्वं, 'खंतिप्पहाण'त्ति, एवं विज्जमंता वेयबंभनयनियमसच्चसोयप्पहाणा चारुपन्ना–सत्प्रज्ञाः, सोही अणियाणा अप्पुस्सुया अबहिल्लेसा सुसामण्णरया अच्छिद्दपसिणवागरणा अच्छिद्राणि–अविरलानि निर्दूषणानि प्रश्नव्याकरणानि येषां ते, 'कुत्तियावण'त्ति कुत्रिकं–स्वर्भूर्भुवोलक्षणं भूमित्रयं तत्सम्भवं वस्त्वपि कुत्रिकं तत्सम्पादक आपणो–हट्टः कुत्रिकापणस्तद्भूताः समीहितार्थसम्पादकत्वेन सकलगुणोपेतत्वेन वा तदुपमाः। 'सिंघाडग'त्ति (सू. १०८) शृङ्गाटकफलाकृतिस्थानं, त्रिकं–रथ्यात्रयमीलनस्थानं चतुष्कं–रथ्याचतुष्कमीलनस्थानं चत्वरं–बहुरथ्यामीलनस्थानं महापथो–राजमार्गः, पन्था—रथ्यामात्रं, यावत्करणात् 'बहुजणसद्देइ वा' इत्यादि दृश्यं, 'कयबलि'त्ति कृतं

बलिकर्म स्नानानन्तरं यैस्ते स्वगृहदेवतानां,दुःस्वप्नादिविघातार्थं कृतानि कौतुकमङ्गलप्रायश्चित्तानि यैः, अवश्यं करणीयत्वात्, कौतुकानि-मषीतिलकादीनि मङ्गलानि-सिद्धार्थदध्यक्षतदूर्वाचन्दनादीनि 'सुद्धप्पा' शुद्धात्मानो वेष्याणि—वेषोचितानि, 'विउसरणायाए' व्युत्सर्जनया-त्यागेन, त्रिविधया मनोवाक्कायभेदात् पर्युपासनया 'महइमहालियाइ'त्ति (सू. १०९) आलप्रत्ययस्य स्वार्थिकत्वात् महातिमहत्याः पर्षदः,'अणण्हयफले' अनाश्रवफलः, अनाश्रवो-नवकर्मानुपादानं फलमस्येति अनाश्रवफलः, 'वोदाणफले'त्ति व्यवदानं-पूर्वकृतकर्मवनगहनलवनं प्राक्कृतकर्मशोधनं वा फलं यस्य तद् व्यवदानफलं, 'तवे'इत्ति 'किंपत्तियं'त्ति कः प्रत्ययः-कारणं यत्र तत्किंप्रत्ययं, निष्कारणमेव, तपस्संयमयोः उक्तनीत्या तदकरणत्वादित्यभिप्रायः, 'पुव्वतवेणं'ति पूर्वतपः-सरागावस्थाभावितपस्या, वीतरागावस्थापेक्षया सरागावस्थायाः पूर्वकालभावित्वात्, एवं संयमोऽपि, अयथाख्यातचरित्रमिति, सरागकृतेन संयमेन तपसा च देवत्वावाप्तिः, रागांशस्य कर्मबन्धहेतुत्वात्, 'कम्मियाए'त्ति कर्म विद्यते यस्यासौ कर्मी तद्भावस्तत्ता तया कर्मितया, 'संगियाए'त्ति सङ्गोऽस्यास्तीति सङ्गी तद्भावस्तत्ता तया सङ्गितया, सत्सङ्गो हि द्रव्यादिषु संयमादियुक्तोऽपि कर्म बध्नाति, ततः सङ्गितया देवत्वाप्तिरिति, आह च-"पुव्वतवसंजमी होंति रागिणो पच्छिमा अरागस्स । रागो संगो वुत्तो संगा कम्मं भवो तेणं ॥१॥" 'नो चेव णं आयभाववत्तव्वया' नैवात्मभाववक्तव्यतया, अयमर्थः-आत्मना च स्वाभिप्राय एव न वस्तुतत्त्वं वक्तव्यो-वाच्यो येषां ते तेषां भाव आत्मभाववक्तव्यता-अहंमानिता तया, एवमहंमानितया न ब्रूमो वयं, अपि तु परमार्थ एवायमिति भावना, 'अतुरियं'ति (सू. ११०) कायिकत्वरारहितं, 'अचवलं'त्ति मानसचापल्यरहितं असम्भ्रान्तज्ञानः 'घरसमुदाणस्स' गृहेषु समुदानं-भैक्ष्यं गृहसमुदानं तस्मै गृहसमुदानाय, चतुर्थ्यर्थे षष्ठी, 'भिक्खायरियाए'

भिक्षासमाचारेण, 'से कहमेयं मण्णे एवं'ति अथ कथमेतत् स्थविरवचनं मन्ये इति वितर्कार्थो निपातः, एवं–अमुना प्रकारेण
बहुजनवचनं 'पभू णं भंते ! ते' प्रभवः–समर्थास्ते 'समियाणं'ति सम्यक् ते व्याकर्तुं वर्त्तन्ते, अविपर्यासास्ते इत्यर्थः, समिता
वा–सम्यक्प्रवृत्तयः, श्रमिता वा–अभ्यासवन्तः, आयोगिका–उपयोगवन्तो ज्ञानिनश्च, 'पलिउब्भिज्जय'त्ति परि–समन्तात् योगिकाः
परिज्ञानिन इति, परिजानन्तीति भावः, श्रमणं–तपोयुक्तं 'माहणं'ति (सू. १११) माहनं वा–स्वयं हननिवृत्तत्वात् परं प्रति
मा हनेतिवादिनं उपलक्षणत्वान्मूलगुणयुक्तं, अथवा श्रमणः–साधुः माहनः–श्रावको वा 'विण्णाणफले'त्ति विशिष्टज्ञानफलं विवे-
काविवेकज्ञानरूपं 'अघे'त्ति अघाख्यः (आप्यः) अपां प्रभवः 'उरालि'त्ति विस्तीर्णा बलाहका–मेघाः 'संसेयंति'संस्विद्यंति
उत्पादाभिमुखीभवन्ति 'संमुच्छंति' सम्मूर्च्छन्ति–उत्पद्यन्ते, 'वासं'ति वर्षन्ति, 'तव्वइरित्ते य'त्ति ह्रदपूरणादतिरिक्तश्च उत्क-
लितः 'आउयाए'त्ति अप्कायः, 'अहिनिस्सवइ'त्ति अभिनिःश्रवति–क्षरति अदूरसामन्ते–नातिदूरे नातिसमीपे 'महातवो'त्ति
आतपः–उष्णता महाश्चासावातपश्चेति महातपः, महातपस्य उपतीरं—तीरसमीपे प्रभवः–उत्पादो यस्य स महातपोपतीरप्रभवः
'पासवणे'त्ति प्रश्रवति–क्षरतीति प्रश्रवणः, प्रस्यन्दन् 'वक्कमंति' उत्पद्यन्ते 'विउक्कमंति' विनश्यन्ति, एतद्व्यत्ययेनाह–च्यवन्ते
उत्पद्यन्ते 'एस णं'ति एषः अन्यगुथिककृताघसंज्ञो महातपोपतीरप्रभवप्रश्रवण इति ॥ द्वितीयशते पञ्चम उद्देशकः ॥

अथ षष्ठे भाषास्वरूपमुच्यते–'से नूणं'ति (सू० ११३) 'से'त्ति अथ नूनं–निश्चितं, भदन्त ! गुर्वामन्त्रणं अहं मन्ये–अवबुध्ये
'ओहारणिया' अवधार्यते—अवगम्यते अनयेत्यवधारिणी, अवबोधबीजभूतेत्यर्थः, अथ भदन्त ! एवमहं मन्ये अवश्यमवधा-
रणी भाषा इति, भाषापदं प्रज्ञापनायामेकादशं भणितव्यं, इह भाषा द्रव्यक्षेत्रकालभावैः सत्यादिभेदैरन्यैश्च बहुभिः पर्यायैर्विचा-

यत इति, द्वितीयशते षष्ठ उद्देशकः २-६ ।

'जहा ठाणपए' (सू० ११४) यथा प्रज्ञापनायां द्वितीये स्थानाख्यपदे च वक्तव्यता सेति तथा भणितव्या, सा चैवम्-'इमीसे रयणप्पभाए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिमेगं जोयणसहस्समोगाहेत्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे अट्ठुत्तरजोयणसयसहस्से एत्थ णं भवणवासीणं देवाणं सत्त भवणकोडीओ बावत्तरिं च भवणावाससयसहस्सा भवंतीतिमक्खाय'मित्यादि, 'उववाएणं'ति उपपातो—भवनपतिस्वस्थानप्राप्त्याभिमुख्यं तेन, उपपातमाश्रित्येत्यर्थः, लोकस्यासङ्ख्येयतमे भागे वर्त्तन्ते भवनवासिन इति, एवमन्यदपि भणितव्यं, तच्चेदं 'समुग्घाएणं लोगस्स असंखिज्जभागे' मारणान्तिकादिसमुद्घातवर्त्तिभवनपतयो लोकासङ्ख्येयभागे वर्त्तन्ते, 'सट्ठाणेणं लोगस्स असंखिज्जभागे' स्वस्थानस्योक्तभवनावाससातिरेककोटीसप्तलक्षणस्य लोकासङ्ख्येयभागवर्त्तित्वादिति, एवं दाक्षिणात्यानां चासुरादीनामौदीच्यानां नागादीनामपि तथौचित्येन व्यन्तरज्योतिष्कवैमानिकस्थानानि वाच्यानि, यावत्सिद्धिगण्डिका, 'कप्पाण'न्ति कल्पानां प्रतिष्ठानं—आधारो वाच्य इति, स चैवम्—'सोहम्मीसाणेसु णं भंते ! कप्पेसु विमाणपुढवी किंपइट्ठिया पं०?, गो० ! घणोदहिपइट्ठिया पन्नत्ता, आह च "घणउदहिपइट्ठाणा, सुरभवणा होंति दोसु कप्पेसु । तिसु वाउपइट्ठाणा, तदुभयसुपइट्ठिया तिसुवि ॥१॥ तेण परं उवरिमगा आगासंतरपइट्ठिया सव्वे ।" 'वाहल्लें'त्ति विमानपृथिवीपिण्डो वाच्यः, स चैवं-'सोहम्मीसाणेसु णं भंते ! कप्पेसु विमाणपुढवी किंबाहल्लेणं पं०?, गो०! सत्तावीसं जोयणसयाइं' इत्यादि, आह च-"सत्तावीस सयाइं आइमकप्पेसु पुढविबाहल्लं । एक्केक्कहाणि सेसे दु दुगे य दुगे चउक्के य ॥२॥" ग्रैवेयकेषु द्वाविंशतियोजनशतानि, अनुत्तरेष्वेकविंशतिरिति, 'उच्चत्तं'ति विमानोच्चत्वं वाच्यं, तच्चैवं-'सोहम्मी० विमाणा केव-

इयं उच्चत्तेणं पं०?, गो०! पंचजोयणसयाइं," आह च—"पंचसयुच्चत्तेणं आइमकप्पेसु होंति य विमाणा। एक्केक्कवुड्ढिसेसे दु दुगे य दुगे चउक्के य ॥१॥ ग्रैवेयकेषु १० योजनशतानि, अनुत्तरेषु ११ शतयोजनशताति। 'संठाणं'ति विमानसंस्थानं वाच्यं, सोहम्मी० विमाणा किंसंठिया पं०?, गो०! जे आवलियापविट्ठा ते वट्टा तंसा चउरंसा, जे आवलियाबाहिरा ते नाणासंठिया इत्यादि वक्तव्यता श्रीजीवाभिगमवैमानिकोद्देशके नेतव्येति ॥ द्वितीये सप्तम उद्देशकः २-७ ॥

'उप्पायपव्वए'त्ति (सू० ११५) तिर्यग्लोकगमनाय यत्रागत्योत्पतति स उत्पातपर्वतः गो०! 'थुभस्स'त्ति गोतमस्तुभो लवणाब्धिमध्ये पूर्वदिशि नागराजावासगिरिः, तस्यादिमध्यान्तेषु विष्कम्भप्रमाणमिदं—'कमसो विक्खम्भो से दसबावीसाइं जोयणसयाइं १। सत्तसए तेवीसे २ चत्तारि सया चउव्वीसे ३ ॥१॥ 'नवरं'ति मूले दस बावीसे जोयणसए विक्खंभेणं, मज्झे चत्तारि चउव्वीसे, उवरि सत्त तेवीसे, मूले तिन्नि जोयणसहस्साइं, दोन्नि य बत्तीसुत्तरे जोयणसए किंचिविसेसूणे परिक्खेवेणं मज्झे, एगं जोयणसहस्सं तिन्नि इगुयाले जोयणसए किंचि० परिक्खेवेणं उवरिं, दोन्नि जोयणसहस्साइं दोन्नि बत्तीसाए जोयणसए किंचिविसेसाहिए परिक्खेवेणं, पुस्तकान्तरे त्वेतत्सकलमस्त्येवेति, 'वरवइर'त्ति वरवज्रस्येव विग्रहः—आकृतिर्यस्य स वरवज्रविग्रहिको, मध्यक्षाम इति 'मउंदे'त्ति मुकुन्दो वाद्यविशेषः, आकाशस्फटिकवत् 'सण्हे' श्लक्ष्णः 'लण्हे' मसृणः, 'उल्लोयभूमिवण्णउ'त्ति उल्लोकः—प्रासादस्योपरिभागः तस्य वर्णकः, स चैवम्-'तस्स पासायवडिंसगस्स एरिसे उल्लोए पण्णत्ते, पउमलयभत्तिचित्ते, इत्यादि, भूमिवर्णकस्त्वेवम्—'तस्स पासायवडिंसयस्स बहुसमरमणिज्जे भूमिभागे पण्णत्ते'इत्यादि 'सपरिवारं'ति चमरसम्बन्धिपरिवारसिंहासनोपेतं 'उवारियलेणं'ति गृहस्य पीठबन्धकल्पं 'सव्वप्पमाणं'ति अयमर्थो यत्तस्यां राजधान्यां प्राकारप्रासादसभादि वस्तु

तस्य सर्वस्योच्छ्रयादिप्रमाणं सौधर्मवैमानिकविमानप्राकारप्रासादसभादिवस्तुगतस्य प्रमाणस्यार्द्धं नेतव्यं, तथाहि–सौधर्मदेवविमानप्राकारस्त्रीणि योजनशतान्युच्चत्वेन एतस्याः सार्द्धशतं, सोधर्मविमानमूलप्रासादः पञ्च योजनशतानि, तदन्ये चत्वारस्तत्परिवारभूताः सार्द्धे द्वे शते प्रत्येकं च तेषां चतुर्णामन्ये परिकरभूताश्चत्वारः सपादं शतं तदन्ये तत्परिकरभूताः ४ सार्द्धा द्विषष्टिः, एवमन्ये सपादमेकत्रिंशत्, इह तु मूलप्रासादः सार्द्धे द्वे योजनशते एवमर्द्धार्द्धहीनास्तदपरे यावदन्तिमाः १५ योजनानि पञ्च योजनस्याष्टांशाः, एतदेव वाचनान्तरे उक्तं–'चत्तारि परिवाडिओ पासायवडिंसगाणं अद्धद्धहीणाओ'त्ति, एतेषां प्रासादानां चतसृष्वपि परिपाटिषु त्रीणि योजनशतानि एकचत्वारिंशदधिकानि स्युः, एतेभ्यः प्रासादेभ्य उत्तरपूर्वस्यां–ईशानदिग्भागे सभा सुधर्मा सिद्धायतनमुपपातसभा ह्रदोऽभिषेकसभा व्यवसायसभा वा, एतानि सुधर्मसभादीनि सौधर्मवैमानिकसभादिभ्यः प्रमाणतोऽर्द्धप्रमाणानि, एषामुच्छ्रयः ३६ योजनानि, पञ्चाशदायामो विष्कम्भश्च पञ्चविंशतिरिति, सर्वं च जीवाभिगमोक्तं विजयदेवसम्बन्धि चमरस्य वाच्यं, यावदुपपातसभायां सङ्कल्पश्चाभिनवोत्पन्नस्य–किं मम पूर्वं पश्चाद्वा कर्त्तुं श्रेय इत्यादिरूपः, अभिषेकसभायामभिषेको महर्द्ध्या सामानिकादिदेवकृतः, अलङ्कारपर्षदि वस्त्रालङ्कारादि, व्यवसायसभायां पुस्तकवाचनं, 'अच्चणिय'त्ति अर्चनिका सिद्धायतनसिद्धप्रतिमादीनां 'सद्दगमो'त्ति सुधर्मसभागमनं च, चमरस्य परिवारश्च सामानिकादिः, 'इड्ढित्त' ऋद्धिमत्त्वं वाच्यमिति ॥ द्वितीयेऽष्टम उद्देशकः॥

'समयखेत्तत्ति' (सू० ११६) समयः–कालस्तेन युक्तं क्षेत्रं समयक्षेत्रं, कालो हि दिनमासादिरूपः सूर्यगतिसमभिव्यङ्ग्यो मनुष्यक्षेत्रे एव, न परतः, परतो हि न सूर्यास्संचरिष्णव इति जीवाभिगमवक्तव्यता नेतव्या, एषा चैवम्–'एगं जोयणसयसहस्सं आयामविक्खंभेण'मित्यादि. 'जोइसविहूणं'ति जीवाभिगमोक्तजम्बूद्वीपादिमनुष्यक्षेत्रवक्तव्यतायां ज्योतिष्कवक्तव्यता उक्ताऽस्ति

तत एतद्विहीनं यथा स्यात्तथा जीवाभिगमवक्तव्योद्देशकसूत्रमत्र ज्ञेयं, 'जाव इमा गाह'त्ति 'अरहंत समय बायर विज्जू थणिया बलाहगा अगणी। आगर णिहि नइ उवराग निग्गमे वुड्ढिवयणं च ॥१॥ जम्बूद्वीपादीनां मानुषोत्तरान्तानामर्थानां वर्णनान्ते इदमुक्तम्–'जावं च णं माणुसुत्तरे पव्वए तावं च णं अस्सिं लोएत्ति पवुच्चइ' मनुष्यलोक उच्यते 'अरहंत'त्ति 'जावं च णं अरहंता चक्कवट्टी जाव सावियाओ मणुया पगइभद्दया पगइविणीया तावं च णं अस्सिंलोएत्ति पवुच्चइ' 'समय'त्ति 'जावं च णं समयाइ वा आवलियाइ वा जाव अस्सिंलोए० एवं जाव बायरे विज्जू बायरे थणियसद्दे जावं च णं उराला बलाहया संसेयंति' 'अग-णि'त्ति 'जावं च णं बायरे तेउयाए जावं च णं आगराइ वा निहीइ वा नईं वा उवरागत्ति चंदोवरागाइ वा सूरोवरागाइ वा तावं च णं अस्सिंलोए०' उपरागो–ग्रहणं 'निग्गमे वुड्ढिवयणं'ति यावन्निर्गमादीनां वादनं–प्रज्ञापनं तावन्मनुष्यलोक इति, तत्र 'जावं च णं चंदिमसूरिया जाव तारारूवाणं अइगमणं निग्गमणं वुड्ढी निव्वुड्ढी आघविज्जइ, तावं च णं अस्सिं०' अतिगमनमिहोत्तरायणं, निर्गमनं–दक्षिणायनं, वृद्धिर्दिनस्य वर्द्धनं, निर्वृद्धिस्तस्यैव हानिरिति ॥ द्वितीये नवम उद्देशकः ॥

'अत्थिकाया' (सू. ११७) अस्तिशब्देन प्रदेशा उच्यन्ते, तेषां काया–राशयो अस्तिकायाः, अथवा अस्तीत्ययं निपातः काल-त्रयवाची, ततोऽस्तीति सन्ति आसन् भविष्यंति च ये काया इति धर्मास्तिकायादयः, तत्र मङ्गलत्वादादौ धर्मास्तिकाय उक्तः, तद्वि-पक्षोऽधर्मास्तिकायः, तदाऽऽधारत्वादाकाशास्तिकायः, ततोऽन्तरं त्वमूर्त्तत्वसाधर्म्याज्जीवास्तिकायः, तदुपष्टम्भकत्वात् पुद्गलास्ति-कायः, 'अवट्ठिए' अवस्थितप्रदेशाः, 'लोगदव्वे'त्ति लोकस्य–पञ्चास्तिकायात्मकस्यांशभूतं द्रव्यं लोकद्रव्यं, 'भावओ'त्ति पर्यायतः, 'गुणओ'त्ति कार्यतः, 'गमणगुणे'त्ति जीवपुद्गलानां गतिपरिणतानां गत्युपष्टम्भहेतुर्मीनानां जलमिवेति 'ठाण-

गुणे'त्ति स्थितिपरिणतजीवपुद्गलानां स्थित्युपष्टम्भहेतुर्मीनानां स्थलमिव, 'अवगाहणागुणे'त्ति जीवादीनामवकाशहेतुःवदराणां कुण्डमिव, 'उवओगगुणे'त्ति उपयोगः-चैतन्यं साकारमनाकारभेदं, 'गहणगुणे'त्ति ग्रहणं-मिथःसम्बन्धनं जीवेन औदारिकादिप्रकारैः ॥ 'खण्डे चक्के'त्ति (सू० ११८) खण्डं च-ऊनं न स्यात्, किन्तु सकलमेव चक्रं स्यात्, एवं धर्मास्तिकायः प्रदेशेन न्यूनो न धर्मास्तिकाय इति वक्तव्यः स्यात् इति निश्चयनयमतं, व्यवहारनयमतं तु एकदेशेन न्यूनमपि वस्तु वस्त्वेव, यथा खण्डोऽपि घटो घट एव, छिन्नकर्णोऽपि श्वा श्वैव, भणितं च 'एकदेशविकृतमनन्यवदि'ति, एवं 'मोयए'त्ति मोदकोऽपि, 'से किं खाइ'त्ति अथ किंपुनरित्यर्थः, सर्वे-समस्ताः ते च देशापेक्षयापि स्युरतः 'कसिणे'त्ति कृत्स्नाः, 'पडिपुण्ण'त्ति प्रतिपूर्णाः-आत्मस्वरूपेणाविकलाः 'निरवसेस'त्ति प्रदेशान्तरतोऽपि स्वस्वभावेनान्यूनाः, 'एकग्गहणगहिय'त्ति एकशब्दग्रहणेन धर्मास्तिकाय इत्येवंलक्षणेन गृहीता ये ते, एकशब्दाभिधेया इत्यर्थः, नवरं 'तिण्हंपि पएसा अणंता भाणियव्व'त्ति, धर्माधर्मयोरसङ्ख्येयाः प्रदेशा उक्ताः, आकाशादीनामनन्ताः प्रदेशा वाच्याः, अनन्तप्रदेशिकत्वात्रयाणामपि, 'सउट्ठाणे'त्ति (सू० ११९) इत्यादि विशेषणानि सिद्धजीवव्युदासार्थानि, 'आयभावेणं'ति उत्थानशयनगमनभोजनादिरूपेणात्मपरिणामविशेषेण, 'जीवभावं'ति जीवत्वं चैतन्यमुपदर्शयति-प्रकाशयति इति, 'वत्तव्वं'ति वक्तव्यं स्याद्, विशिष्टस्योत्थानादेर्विशिष्टचेतनापूर्वकत्वादिति, 'अणंताणमाभिनिवोहियनाणपज्जव'त्ति पर्यवाः-प्रज्ञाकृता अविभागपलिच्छेदाः, ते चानन्ता आभिनिवोधिकज्ञानस्य, अतोऽनन्तानामाभिनिवोधिकज्ञानपर्यवाणां सम्बन्धिनामनन्ताभिनिवोधिकज्ञानपर्यवात्मकं उपयोगं-चेतनाविशेषं गच्छति इति हृदयस्थं, उत्थानादावात्मभावे वर्त्तमान इति योगः, अत 'उवओगलक्खणेणं'ति उपयोगलक्षणो जीवस्तेनार्थेन-तस्मात् कारणादुपयोगलक्षणं जीव-

भावमुत्थानाद्यात्मभावेनोपदर्शयतीति वक्तव्यं स्यादेव। 'लोगागासे अलोगागासे'त्ति (सू० १२०) तत्र लोकालोकाकाशयोर्लक्षणमिदं—धर्मादीनां वृत्तिर्यत्र द्रव्याणां स्यात् तत्क्षेत्रं तैर्द्रव्यैः सह लोकः, तद्विपरीतोऽलोकः,' 'लोगागासे ण'मित्यादौ षट् प्रश्नाः, लोकाकाशे अधिकरणे 'जीव'त्ति संपूर्णानि जीवद्रव्याणि,'जीवदेस'त्ति जीवस्यैव बुद्धिपरिकल्पिता द्व्यादयो विभागाः, 'जीवपएस'त्ति जीवस्यैव बुद्धिकृताः प्रदेशाः, प्रदेशा निर्विभागा विभागाः, एवं अजीवषट्प्रश्न्यामपि जे अजीवा ते रूवी यत्ति–मूर्त्ताः पुद्गलाः 'अरूवी य'त्ति अमूर्त्ता धर्मास्तिकायादयः, 'खंध'त्ति परमाणुसमूहात्मकः तद्देशा द्व्यादयो विभागाः, प्रदेशाः तस्यैव निरंशाः, 'परमाणु'त्ति स्कन्धभावमनापन्नाः परमाणव इति, 'जे अरूवी ते पंचविह'त्ति, कथमित्याह–'धम्मत्थिकाए'त्ति इह जीवानां पुद्गलानां च बहुत्वाद् एकस्यापि जीवस्य पुद्गलस्य वा स्थाने संकोचादितथाविधपरिणामवशाद् बहवो जीवाः पुद्गलाश्चेति, तथा तद्देशास्तत्प्रदेशाश्च सम्भवन्ति, इतिकृत्वा जीवाश्च जीवप्रदेशाश्च, तथा रूपिद्रव्यापेक्षया अजीवा अजीवदेशा अजीवप्रदेशाश्चेति सङ्गतं, एकत्राप्याश्रये भेदवतो वस्तुत्रयस्य सद्भावात्, धर्मास्तिकायादौ तु द्वितयमेव युक्तं, यतो यदा सम्पूर्णं वस्तु विवक्ष्यते तदा धर्मास्तिकायादि उच्यते, तदंशविवक्षायां तु तत्प्रदेशा इति, तेषामवस्थितरूपत्वात्, तद्देशकल्पना त्वयुक्ता, तेषामनवस्थितरूपत्वादिति, अत आह–'नो धम्मत्थिकायस्स देसेत्ति, नो अधम्मत्थिकायस्स देसे'त्ति, चूर्णिकारोऽप्याह–"अरूविणो दव्वा समुदयसद्देण भणंति नीसेसा, पएसेहिं वा नीसेसा भणिज्जा, नो देसेण, तस्स अणवट्ठियपमाणत्तणओ, तेण न देसेण निद्देसो, जो पुण देससद्दो एएसु कओ सो सविसयववहारत्थं परदव्वफुसणादिगयववहारत्थं वे"ति, तत्र स्वविषये धर्मास्तिकायादिरूपे यो देशव्यवहारो यथा धर्मास्तिकायः स्वदेशेनोर्ध्वलोकाकाशं व्याप्नोति तदर्थं, तथा परद्रव्येण ऊर्ध्व-

लोकाकाशादिना यस्तस्य स्पर्शनादिगतो व्यवहारो यथोर्ध्वलोकाकाशेन धर्मास्तिकायस्य देशः स्पृश्यते इत्यादिस्तदर्थमिति, 'अद्धासमए'त्ति अद्धा–कालस्तल्लक्षणः समयः–क्षणः अद्धासमयः, स चैक एव, वर्त्तमानलक्षणः, अतीतानागतयोरसत्त्वात् । अथालोकाकाशं प्रति प्रश्नयन्नाह–'पुच्छा तह चेव'(सू. १२१)यथा लोकप्रश्नः तथैव, निर्वचनं तेषां पण्णामपि निषेधः. 'एगे अजीवदव्वदेस'त्ति अलोकाकाशस्य देशत्वं लोकालोकाकाशद्रव्यस्य भागरूपत्वात् . 'अगुरुलहुए'त्ति गुरुलघुत्वाव्यपदेश्यत्वात् , 'अणंतेहिं' अनन्तैः स्वपरपर्यायपरपर्यायरूपैर्गुणैः, अगुरुलघुस्वभावैरित्यर्थः, 'सव्वागासे'त्ति अलोकाकाशस्य लोकाकाशसम्बद्धत्वेन अलोकाकाशं सर्वाकाशमित्युच्यते,'अणंतभागूणे'त्ति लोकाकाशस्यालोकाकाशापेक्षया अनन्तभागरूपत्वान तेनालोकाकाशमनन्तभागोनमित्यर्थः॥ अथ धर्म्मास्तिकायादिप्रमाणमाह–'केमहालए'त्ति (सू, १२२) लुप्तभावप्रत्ययत्वात् निर्देशस्य किं महत्त्वं यस्यासौ किंमहत्त्वः, 'लोए'त्ति लोको लोकप्रमितत्वात् , लोकमात्रो लोकप्रमाणः, 'लोयफुडे'त्ति लोकेन–लोकाकाशेन सकलस्वप्रदेशैः स्पृष्टो लोकस्पृष्टः,'लोयं चेव'त्ति लोकमेव च स्पृष्ट्वा स्वप्रदेशैस्तिष्ठतीति । 'अहोलोएणं'ति (सू. १२३) 'सातिरेगमद्धं'ति लोकव्यापकत्वाद्धर्म्मास्तिकायस्य सातिरेकसप्तरज्जुप्रमाणत्वाच्चाधोलोकस्य 'असंखेज्जइ भागं'ति असङ्ख्यातयोजनप्रमाणस्य धर्म्मास्तिकायस्य ऊर्ध्वाधो मेरुरुचकादि अष्टादशयोजनशतप्रमाणस्तिर्यग्लोकः, यतः–'सगरज्जू तिरियाऽट्ठारसजोयणसय'त्ति लोकनालिवचनात् इति, असङ्ख्यातभागवर्त्तीति तस्यासावसङ्ख्येयभागं स्पृशति, 'देसूणमद्धं'ति देशोनसप्तरज्जुप्रमाणत्वादूर्ध्वलोकस्येति, 'इमा णं भंते'त्ति इह रत्नप्रभायां प्रथमं रत्नप्रभासूत्रं घनोदधिसूत्रं घनवातसूत्रं तनुवातसूत्रं ४ अवकाशान्तरसूत्रं पञ्चमं, एवं प्रति पृथिवीं पञ्च सूत्राणि स्युः, ततः सप्तानां पञ्चभिर्गुणने जातानि पञ्चत्रिंशत्सूत्राणि, द्वादशदेवलोकसूत्राणि द्वादश, ग्रैवेयकसूत्राणि त्रीणि,

अनुत्तरेषत्प्राग्भारासूत्रे २, एवं द्वापंचाशत्, ३५।१२।३।२ सर्वमीलने द्विपञ्चाशत्सूत्राणि धर्मास्तिकायस्य किं सङ्ख्येयभागं स्पृशन्तीत्याद्यभिलापेनावसेयानि, तत्रावकाशान्तराणि सङ्ख्येयभागं स्पृशंति, शेषास्त्वसङ्ख्येयभागमिति निर्वचनं, एतान्येव सूत्राणि अधर्मास्तिकायलोकाकाशयोरिति ॥ इहोक्तार्थसङ्ग्रहगाथा भाविताथैवेति ॥ द्वितीयशतविवरणं सम्पूर्णम् ॥

## अथ तृतीयं शतकं

अथ तृतीयशते दशोद्देशकसङ्ग्रहगाथामाह—'केरिस'त्ति ( १२३ ) कीदृशी चमरस्य विकुर्वणा शक्तिरिति प्रथमः, 'चमर'त्ति चमरोत्पाताभिधेयो द्वितीयः, 'किरिय'त्ति कायिक्यादिक्रियावाच्यस्तृतीयः, 'जाण'त्ति यानं, देवेन वैक्रियकृतं जानाति साधुरिति चतुर्थः, 'इत्थि'त्ति साधुर्बाह्यान् पुद्गलान् पर्यादाय प्रभुः स्त्र्यादिरूपाणि वैक्रियाणि कर्त्तुमिति पञ्चमः,'नगर'त्ति वाणारस्यां नगर्यां कृतसमुद्घातस्साधुः राजगृहे रूपाणि जानीयादिति षष्ठः,'पालय'त्ति सोमादिलोकपाल ४ स्वरूपः सप्तमः, 'अहिवइ'त्ति असुरादीनामधिपतयः कति इत्यष्टमः, इन्द्रियविषयवाच्यो नवमः, 'परिस'त्ति चमरपर्षद्रूपो दशमः, 'केमहिड्डिए'त्ति (सू० १२५) केन किंरूपा वा महर्द्धिरस्येति किंमहर्द्धिकः, इन्द्रतुल्यः, ऋद्ध्या समानाः सामानिकाः, त्रयस्त्रिंशतां मन्त्रिकल्पानां 'आहेवच्चं' आधिपत्यं 'पोरेवच्चं' पुरोवर्त्तित्वं—अग्रगत्वं भट्टि० भर्तृत्वं पोपकत्वं,'आणाईसर'त्ति आज्ञेश्वरस्य—आज्ञाप्रधानस्य सतो यत् सेनापत्यं तत्तथा कारयन्नन्यैः, 'एवं'ति इतिमहर्द्धिकः, 'जुवइ'त्ति यथा युवतिं युवा हस्तेन हस्ते गृह्णाति कामवशगाढग्रहणतः,अन्यदृष्टान्तमाह-'चक्कस्स'त्ति चक्रस्य नाभिः,किंरूपा ?-'अरगाउत्ते'ति अरकैरायुक्ता अरकायुक्ता 'सिया'

स्याद् भवेत् 'एवामेव'त्ति, निरन्तरतयेत्यर्थः, वृद्धैस्त्वेवं व्याख्यातं-यथा यात्रादिषु युवतिर्यूनो हस्ते लग्ना प्रतिबद्धा गच्छेत् बहुलोकप्रचितदेशे, एवं यानि रूपाणि विकुर्वितानि तान्येकस्मिन् कर्त्तरि प्रतिबद्धानि, यथा चक्रनाभिरेका बह्वारकप्रतिबद्धा घना निश्छिद्रा स्यात् एवं जम्बूद्वीपं स्वशरीरप्रतिबद्धासुरदेवदेवीभिः पूरयेदिति योगः, 'वेउव्वियसमु'त्ति वैक्रियकरणाय प्रयत्नविशेषेण 'समोहण्णइ' समुपहतः स्यात्, समुपहन्ति वा स्वप्रदेशान् विक्षिपतीति 'संखेज्जाइं' इति, दंड इव दण्डः ऊर्ध्वमध आयतः शरीरबाहल्यो जीवप्रदेशकर्मपुद्गलसमूहः, 'रयणाणं'ति रत्नानां कर्केतनादीनां, इह च यद्यपि रत्नादिपुद्गला औदारिका वैक्रियसमुद्घाते च वैक्रिया एव ग्राह्याः, तथापि तेषां रत्नादिपुद्गलानामिव सारताप्रतिपादनाय रत्नानामित्याद्युक्तम्, तच्च रत्नानामिवेति व्याख्येयम्, अन्ये त्वाहुः-औदारिका अपि ते गृहीताः सन्तो वैक्रियतया परिणमन्ति, 'अहाबायरे'त्ति यथाबादरान्-असारान् पुद्गलान् परिशातयति दण्डनिसर्गगृहीतान् 'अहासुहुमे'त्ति यथासूक्ष्मान् सारान् पर्यादत्ते दण्डनिसर्गगृहीतान् सामस्त्येनादत्ते, ततश्च प्रभुः-समर्थः, 'केवलकप्पं'ति सम्पूर्णं जम्बूद्वीपं 'आइण्णं'ति व्याप्तं, आइन्नमित्यादयः शब्दाः एकार्था अत्यन्तव्याप्तिप्रदर्शनायोक्ताः, 'अदुत्तरं च णं'ति अथापरं चेदं सामर्थ्यातिशयवर्णनं, 'विसए'त्ति गोचरो वैक्रियकरणशक्तेः, विषयमात्रं क्रियाशून्यं 'वुइए'त्ति उक्तमेतदिति, 'संपत्तीए'त्ति यथोक्तार्थसम्पादनेन 'विकुव्विंसु वा'त्ति विकुर्वितवान् विकुर्वति वा विकुर्विष्यति वा, विकुर्व इत्ययं धातुः सामयिकोऽस्ति, विकुर्वणेत्यादिप्रयोगदर्शनात्, 'संखेज्जे दीवसमुद्दे'त्ति (सू० १२६) लोकपालानां सामानिकेभ्योऽल्पतरर्द्धिकत्वेनाल्पतरत्वाद्वैक्रियकरणलब्धेः, 'अपुट्ठवागरणं'ति (सू० १२७) अपृष्टे सति प्रतिपादनं 'वइरोयणिंदे'त्ति दाक्षिणात्यासुरकुमारेभ्यो विशिष्टं रोचनं-दीपनं येषामस्ति वैरोचना-औदीच्यासुरास्तेषामिन्द्रो वैरोचनेन्द्रः,

'साइरेगं केवलकप्पं'त्ति उदीच्येन्द्रत्वेन बलेर्विशिष्टतरलब्धिकत्वादिति, 'तीसए'त्ति(सू० १२९) तिष्यकाख्य इति 'सयंसि' स्वके विमाने 'पंचविहाए'त्ति पर्याप्तिराहारशरीरादीनामभिनिर्वृत्तिः, साऽन्यत्र षोढा उक्ता, इह तु पञ्चधा, भाषामनःपर्याप्त्योर्बहुश्रुताभिमतेन केनापि कारणेनैकत्वविवक्षणात्, 'लद्धे'त्ति जन्मान्तरे तदुपार्जनेन 'पत्ते'त्ति प्राप्ता देवभवापेक्षया 'अभिसमण्णागए'त्ति तदुभोगापेक्षया। 'उद्धं बाहाओ'त्ति (सू०१३१) ऊर्ध्वं बाहू प्रगृह्य विधायेति, 'कूडागारसालदिट्ठंतो'त्ति(सू. १३३)कूटाकारेण–शिखराकृत्या उपलक्षिता या शाला तया दृष्टान्तो यस्य तथा, कूटाकारशाला स्यात् तदासन्नो महाजनवृन्दस्तिष्ठेत्, स महामेघपटलमूर्त्तं दृष्ट्वा कूटाकारशालां प्रविशति, एवमीशानेन्द्रदेवस्य सा दिव्या देवर्द्धिः शरीरकमनुप्रविष्टा, 'किण्णा'त्ति केन हेतुना, किं वा दत्त्वा दत्त्वा–भक्तादि भुक्त्वा–अन्तप्रान्तादि कृत्वा–तपःसामाचार्यादि, जण्णंत्ति–यस्मात् पुण्यात् णमिति वाक्यालङ्कारे 'पुरा पोराणाणं'ति पुरा–पूर्वं कृतानां पौराणानां अत एव पुराणानां 'सुचिण्णाणं'ति सुचीर्णानां–दानादिसुचरितरूपाणां सुष्ठु पराक्रान्तानां, पराक्रमः–तपःप्रभृतिकं येषु तेषां, शुभानामर्थावहत्वेन कल्याणानामनर्थोपशमेन 'रयण'त्ति रत्नानि कर्केतनादीनि, मणयः–चन्द्रकान्ताद्याः शिला–राजपट्टादिरूपा प्रवालं–विद्रुमं रक्तरत्नानि–पद्मरागादीनि एतद्रूपं यत् 'संतसारसावएज्ज'त्ति सद्–विद्यमानं सारं–प्रधानं स्वापतेयं तेन, 'एगंतसोक्खयं'ति एकान्तशः—एकान्तेन क्षयं नवानामशुभानां कर्मणामनुपार्जनेन 'आढाइ' आद्रियते 'परियाणाइ' परिजानाति स्वामितया, 'पाणामाए' प्रणामोऽस्ति विधेयतया यस्यां सा प्राणामी तया, 'सुद्धोयणं'त्ति सूपशाकादिवर्जितं कूरं 'तिसत्त'त्ति त्रिसप्तकृत्वः–एकविंशतिवारानिति, 'आसाए'त्ति आ–ईषत् स्वादयन् 'वीसाए'त्ति विशेषेण स्वादयन् 'परिभाए'त्ति ददत् 'परिभुंजे'त्ति भोज्यं परिभुञ्जानः, 'जिमिय'त्ति प्रथमैकवचनलोपात् जेमितो–भुक्तवान्,

भुक्तोत्तरं–भोजनोत्तरकालं 'आगए'त्ति आगत उपवेशनस्थाने भुक्तोत्तरागतः 'आयंते'त्ति आचान्तः शुद्धोदकयोगेन 'चोक्खे'त्ति चोक्षो–लेपसिक्थाद्यपनयनेन, अत एव परमशुचिरूप इति, 'खंदं वा' स्कन्दं कार्त्तिकेयं 'शिवं'ति व्यन्तरविशेषं 'वेसमणं'त्ति उत्तरदिक्पालं 'अज्जं'ति प्रशान्तरूपां चण्डिकां 'कोट्टकिरिं'त्ति चण्डिकामेव रौद्ररूपां महिषकुट्टनक्रियावतीं 'पाणं व'त्ति श्वपाकं 'अणिच्चजागरियं'त्ति (सू. १३०) अनित्यचिन्तां 'दिट्ठाभट्ठे य'त्ति दृष्टाभाषितान् 'पुव्वसंगं'त्ति पूर्वसङ्गतिकान् गृहस्थत्वे परिचितान् 'निअत्तणियमंडलं'ति निवर्त्तनं—क्षेत्रमानविशेषस्तत्परिमाणं निवर्त्तनिकं, निजतनुप्रमाणमित्यन्ये, 'अपुरोहि'त्ति शान्तिकर्मकारिपुरोहितरहिता इन्द्राभावात्, 'निवण्णे' निषण्णः, सुप्त इत्यर्थः, 'ठितिपकप्पं'ति स्थितौ- स्थाने बलिचञ्चाविषये प्रकल्पः–सङ्कल्पश्चिन्तनं स्थितिप्रकल्पस्तं, त्वरितया–आकुलया, न स्वभावजयेति, चपलया वपुश्चापल्ययुक्तया, चण्डया रौद्रया, जविन्या गत्यन्तरजेतृत्वात्, छेकया–निपुणया, सिंहया सिंहगतिसमानया श्रमाभावेन, शीघ्रया वेगवत्या, दिव्यया प्रधानया, उद्धतया वस्त्रादीनामुद्धतत्वेन सदर्पया वा, 'सपक्खिं'ति सर्वे पक्षाः–पार्श्वाश्चतुर्दिग्विभागा यत्र तत् सपक्षं, इकारः प्राकृतत्वात्, 'सपडिदिसिं'ति सर्वाः प्रतिदिशो–विदिग्भागा यत्र तत् सप्रतिदिक्, 'अट्ठं बंधह' प्रयोजननिश्चयं कुरुत, 'अणाढाइज्जमाण'त्ति अनाद्रियमाणाः 'अपरियाइज्जमाण'त्ति अपर्यादीयमानाः–अनङ्गीक्रियमाणाः। 'आसुरुत्ता' (सू० १३५) आशुरुप्ताः–शीघ्रं कोपविमूढबुद्धयः, कुपिता जातकोपोदयाः, 'चंडिक्किय'त्ति प्रकटितरौद्ररूपाः 'मिसिमिसेमाण'त्ति देदीप्यमानाः क्रोधज्वलनेन 'उच्छुहंति' मुखे निष्ठीवनं कुर्युः, 'आकड्ढ'त्ति आकर्षविकर्षिकां कुर्वन्ति, 'हीलंति'त्ति जात्याद्युद्घाटनतः कुत्संति, निन्दन्ति चेतसा, खिंसंति समक्षं वचनैः, तर्जंति अंगुलीशिरश्चालनेन, ताडयन्ति हस्तचपेटया, 'परिवहंति'त्ति परिव्यथन्ते सर्वतो

ऽयथन्ते 'पव्वथेंति' प्रव्यथंते–प्रकर्षेण कदर्थयन्ति। 'तत्थ'त्ति (सू. १३६) जातभयाः 'तिवलि'न्ति त्रिवलिकां–भ्रूकुटिं दृष्टिविकाररूपां 'भीय'त्ति त्रस्ता भयाज्जातोत्कम्पादिभयभावाः, तृषिताः शुषितानन्दरसाः, उद्विग्नाः त्यागमानसाः, 'समतुरंगे'त्ति समाश्लिष्यन्तः, अन्योऽन्यमनुप्रविशन्त इति वृद्धाः, 'नाइभुज्जो'नैव भूयः 'एवं करणयाए' एवंकरणाय सम्पत्स्यामहे, 'आणाउववाय'त्ति आज्ञा इदं कर्त्तव्यमेवेति, उपपातः–सेवावचनं, भृत्ययोग्य आदेशः, निर्देशः प्रश्निते कार्ये नियतार्थमुत्तरम्, तत एषां द्वन्द्वस्तत्र, 'उच्चतराए'त्ति (सू. १३७) उच्चत्वं प्रमाणतः उन्नतत्वं गुणतः॥ 'से कहमियाणिं'ति (सू. १३८) अथ कथमिदानीं–अस्मिन् काले कार्यविसरलक्षणे प्रकुरुतः, कार्याणि इति गम्यं, 'इति भो'त्ति परस्परालापानुकरणम्। 'आणुकंपिए' (सू. १४०) कृपावान् 'निस्सेयसिए' निःश्रेयसो–मोक्षः तत्र नियुक्त इव नैःश्रेयसिकः। 'तीसगकुरुदत्ताणं'ति (*२४–२५) तिष्यककुरुदत्तसाध्वोः क्रमेण षष्ठमष्टमं च तपः, मासोऽर्द्धमासश्चानशनं, तथैकस्याष्ट वर्षाणि अन्यस्य च षण्मासा इति, द्वयोरपि भक्तपरिज्ञा अनशनं दीक्षापर्यायश्च। तृतीयशते प्रथमोद्देशकविवरणम् ३–१॥

'विउव्वेमाण'त्ति (सू० १४१) संरम्भेण महद्वैक्रियशरीरं कुर्वन्तः, 'परियारे'त्ति परिचारयन्तः–परकीयदेवीपरिभोगं कर्त्तुकामाः 'अहालहुस्सगाइं' यथोचितानि लघुस्वकानि–अमहास्वरूपाणि दिव्यस्त्रीरत्नानि 'आयाए'त्ति आत्मना स्वयं 'एगंतं'विजनं 'अंतं'ति देशं, 'से कहमियाणिं'ति अथ किमिदानीं रत्नग्रहणानन्तरमेकान्तापक्रमणकाले प्रकुर्वन्ति वैमानिका रत्नादातॄणां इति, 'तओ से'त्ति ततो रत्नादानात् 'पच्छ'त्ति अनन्तरं 'से'त्ति तेषां रत्नादातॄणां असुराणां कायं प्रव्यथन्ते–प्रहारैर्मथ्नन्ति वैमानिका देवाः, तेषां प्रव्यथितानां वेदना जघन्येनान्तर्मुहूर्त्तमुत्कृष्टः षण्मासान् यावत्, 'से'त्ति अथ दृष्टान्तोपन्यासे, 'जहा नाम-

ए'त्ति यथा नामकः, 'इहं'ति अत्र क्षेत्रे 'सगा इव'त्ति शबरादयोऽनार्यविशेषा देशाधिपाः यथा 'गड्डं व'त्ति गर्त्तां 'विसमं'ति गर्त्तान्तर्याद्याकुलभूमिरूपं 'नीसाए'त्ति निश्राय—आश्रित्य 'आसबलं'ति अश्वसैन्यं, एवं हस्तिसैन्यं योधसैन्यं 'धणुबलं' धनुर्द्धरबलं, 'आगलेंति–आकलयन्ति–[जयन्ति, कलयन्ति–पराजयन्तीति], एतत्सैन्यं वयं जेष्याम इति चिन्तयंतीत्यर्थः, 'नण्णत्थ'त्ति ननु–निश्चितमत्र–इह लोके, अथवा अरिहंतादिनिश्राया अन्यत्र, नैव तां विनेत्यर्थः। 'दाणामाए'त्ति (सू. १४३) दानमय्या 'छउमत्थकालियाए'त्ति छद्मस्थकाल एव छद्मस्थकालिका तस्यां 'साहट्टु'त्ति संहृत्य–संहतौ कृत्वा, जिनमुद्रयेति, 'वग्घारिय'त्ति प्रलम्बितभुजः 'ईसिं पब्भारगएणं'ति ईषत्प्राग्भारः–अग्रतो मुखावनतत्वं, 'अहापणिहिएहिं'ति यथाप्रणिहितैः–यथास्थितैः 'वीससाए'त्ति स्वभावतः ' 'पासइ'त्ति पश्यति तत्र सौधर्मे 'अपत्थिय'त्ति अप्रार्थितं प्रार्थयते यः सः 'दुरंत'त्ति दुरन्तानि–दुष्टावसानानि, अत एव प्रान्तानि–अमनोहराणि लक्षणानि यस्य सः 'हीणपुण्णचाउद्दसि'त्ति हीनायां पुण्यचतुर्दश्यां जातो हीनपुण्यचातुर्दशः, किल पुण्या चतुर्दशी तिथिरत्यन्तभाग्यवत एव जन्मनि स्यात्, अत इदं आक्रोशवच इति, 'जण्णं ममं'ति यस्मात् कारणात् मम एतद्रूपायां दिव्यायां देवर्द्धौ सत्यां प्रधानायां वा 'अप्पुस्सुए'त्ति(अल्पौत्सुक्यः)'अच्चासाइत्तए'त्ति अत्याशातयितुं, छायाया भ्रंशयितुमिति,उण्णः कोपात् उष्णभूतोऽस्वाभाविकमुष्णत्वं प्राप्त इति, घोरां हिंसां'घोराकारं'ति घोराकृतिं, भीमां विकरालत्वेन, भीमाकारां भयजनकाकारां 'भयाणीयं'ति भयमानीतं यया सा भयानीता तां 'उत्तासणियं'ति उत्त्रासनिकां 'त्रसी उद्वेगे' इति वचनात्, 'अप्फोडेइ' करास्फोटं कुर्यात् 'वग्गइ'त्ति वल्गति गर्जति 'हयहेसियं' हयहेषारवं 'हत्थिगुलुगुलाइयं' हस्तिरावं 'रहघणघणाइयं'ति रथवद् घणघणादिकं, 'पायदद्दरयं' पादेन भूम्यास्फोटनं 'भूमिचवेडयं' करेण भूमेश्चपेटां

'उच्छोलेइ' अग्रतोमुखां चपेटां 'पच्छोलेइ' पृष्ठतोमुखां चपेटां अपहस्तरूपां 'तिवइं छिंदइ' मल्ल इव रंगभूमौ त्रिपदीच्छेदं कुर्यात्, 'उसावइ' उत्सृतं प्रलम्बं कुर्यात्, 'विडंबेइ' विवृतं कुर्यात्, 'आकड्ढंति वि०'त्ति आकर्षयन्निव 'विउज्झमाणे'त्ति व्युद्भ्राजमानः-शोभमानः, विजृम्भमाणो वा, 'इन्दकीलं' गोपुरकपाटयुगसन्निवेशस्थानं 'नाहि ते'त्ति नैव ते-तव सुखमस्ति, 'फुलिंगमालाजाल'त्ति स्फुलिङ्गानां ज्वालानां च या मालास्तासां यानि सहस्राणि तैश्चक्षुर्विक्षेपः-चक्षुर्भ्रमो दृष्टिप्रतिघातश्च-दर्शनाभावः,'जईणवेगं' शेषवेगवद्वेगजयी वेगो यस्य 'महब्भयं'ति महतां भयमस्मादिति महद्भयं 'झियाइ'त्ति ध्यायति,किमेतदिति चिन्तयति, 'पिहाइ'त्ति स्पृहयति, यद्येवंविधं प्रहरणं मम स्यात् एवमभिलषति, तथा 'पिहेइ' अक्षिणी पिधत्ते-निमीलयति, 'सालम्बणहत्थाभरणे'त्ति सह आलम्बनेन वर्त्तन्ते सालम्बानि २ हस्ताभरणानि यस्य अधोमुखगमनवशादसौ सालम्बहस्ताभरणः 'कक्खागयसेयं पिव'त्ति भयातिरेकात् कक्षागतस्वेदमिव विनिर्मुञ्चन्, देवानां किल स्वेदो न स्यात् इति संदर्शनार्थः पिवशब्दः, झटिति 'समोवइए'त्ति सम एव पतितः, 'पभु'त्ति शक्तः 'समत्थे'त्ति सङ्गतप्रयोजनः, 'अवियाइं'ति अपि चेति आइंति वाक्यालङ्कारे, 'मुट्ठिवाएणं'ति वज्रग्रहणाय यो मुष्टेर्बन्धने वात उत्पन्नः स मुष्टिवातः तेन मुष्टिवातेन 'वीइत्था' केशाग्राणि वीजितवान् 'अज्जं'ति अद्यास्मिन्नहनि, तथा आर्य उपसम्पद्यतु उपसम्पन्नो भूत्वा वर्त्ते, 'नाइभुज्जो'त्ति नैव भूय एवंकरणतायां वर्त्तिष्ये, 'सीहे'त्ति शीघ्रो वेगवान् 'सीहगइ'त्ति शीघ्रगतिरेव, त्वरितः कायतः, त्वरितगतिः मार्गे सौत्सुक्यप्रवर्त्तितवेगगतिः, 'उड्ढंलोयकंडए'त्ति ऊर्ध्वलोकगमने कण्डकं-कालखण्डं ऊर्ध्वलोककण्डकं, ऊर्ध्वलोककण्डकापेक्षया अधोलोककण्डकं सङ्ख्यातगुणं-द्विगुणमिति, अथ शक्रादीनां प्रत्येकं गतिक्षेत्रस्याल्पबहुत्वोपदर्शकं सूत्रत्रयमाह-'सक्कस्स णं भंते'त्ति 'सव्वत्थोवं'ति

सर्वलोकमधःक्षेत्रं समयेनावपतति, अधोमन्दगतित्वाच्छक्रस्य, 'तिरियं संखेज्ज'त्ति कल्पनया किलैकेन समयेन योजनमधो गच्छति शक्रः, तत्र च योजने द्विधाकृते द्वौ भागौ भवतः, तयोश्चैकस्मिन् द्विभागे मीलिते त्रयः सङ्ख्येयभागाः स्युः, अतस्तान् तिर्यग्गच्छति, सार्द्धं योजनमिति भावः, तिर्यग्गतौ तस्य शीघ्रगतित्वात्, 'उड्ढं संखेज्ज'त्ति यान् कल्पनया त्रीन् द्विभागान् तिर्यग्गच्छेत् तेषु चतुर्थेऽन्यस्मिन् द्विभागे मीलिते चत्वारो द्विभागरूपास्सङ्ख्यातभागास्सम्भवन्ति, अतस्तानूर्ध्वं गच्छति, अथ कथं सङ्ख्यातभागमात्रग्रहणे सति इदं नियतभागव्याख्यानं क्रियते?, उच्यते—"जावइयं खित्तं चमरे अहे ओवयइ एक्केणं समएणं तं सक्के दोहिं," तथा "सक्कस्स य उप्पयणकाले चमरस्स य ओवयणकाले एए णं दोण्णिवि तुल्ला" इति वचनान्निश्चीयते—शक्रो यावदधो द्वाभ्यां समयाभ्यां व्रजेत् तावदूर्ध्वं एकेनेति द्विगुणमधःक्षेत्रादूर्ध्वं क्षेत्रं, एतयोश्चापान्तरालवर्त्ति तिर्यक्क्षेत्रं सार्द्धं योजनं स्यादिति व्याख्यानं, आह चूर्णिकारः—"एगेणं समएणं ओवयइ अहे जोयणं, एगेणेव समएणं तिरियं दिवड्ढं गच्छइ, उड्ढं दो जोयणाइं सक्को"त्ति 'चमरस्स ण'मिति 'सव्वत्थोवं'ति ऊर्ध्वगतौ मन्दगतित्वात् तस्य, तच्च कल्पनया किल त्रिभागन्यूनं गव्यूतत्रयं, 'तिरियं'ति तस्मिन्नेव पूर्वोक्ते त्रिभागन्यूने गव्यूतत्रये द्विगुणिते ये योजनसङ्ख्येयभागाः स्युः तान् व्रजेत्, तिर्यग्गतौ शीघ्रतरगतित्वात् तस्य, 'अहे संखेज्जे'त्ति पूर्वोक्ते त्रिभागद्वयन्यूने गव्यूतषट्के त्रिभागन्यूनगव्यूतत्रये मीलिते ये सङ्ख्येयभागास्तान् व्रजेत्, योजनद्वयमिति भावः, अथ कथं सङ्ख्येयभागमात्रोपादाने नियतसङ्ख्येयभागत्वं व्याख्यायते?, उच्यते, शक्रस्योर्ध्वगतेश्चमरस्याधोगतेः समत्वमुक्तं, शक्रस्य समयेनैकेन योजनद्वयमूर्ध्वगमनं चमरस्याधस्तथैव, 'जावइयं सक्के २ उड्ढं उप्पयइ एगेणं समएणं तं वज्जे दोहिं, जं वज्जे दोहिं तं चमरे तीहिं'ति वचनात् प्रतीयते—शक्रस्य यदूर्ध्वगमनक्षेत्रं तस्य त्रिभागमात्ररूपं चमरस्योर्ध्व-

गतिक्षेत्रं, अतो व्याख्यातं—त्रिभागन्यूनत्रिगव्यूतमानं तदिति, ऊर्ध्वाधोगतिक्षेत्रयोरपान्तरालवर्त्ति तिर्यक्क्षेत्रमितिकृत्वा त्रिभागद्व्यन्यूनषड्गव्यूतमानं तत्र व्याख्यातमिति, यत्र चूर्णिकारेणोक्तम्—'चमरो उड्ढं जोयण'मिति तन्नावगतं, 'वज्जं जहा सक्कस्स' वज्रस्य गत्यल्पबहुत्वं यथा शक्रस्य, 'विसेसाहिय'न्ति 'सव्वत्थोवे'त्ति सर्वस्तोकं क्षेत्रं शक्रः अधो व्रजेत् एकेन समयेन, तस्याधो मन्दगतित्वात्, तच्च किल कल्पनया त्रिभागन्यूनं योजनं, तिर्यक् विशेषाधिकौ भागौ याति, शीघ्रतरगतित्वात्, तौ च योजनस्य द्वौ त्रिभागौ विशेषाधिकौ, सत्रिभागं गव्युतत्रयमिति भावः, तथोर्ध्वं विशेषाधिकौ भागौ गच्छति, यौ किल तिर्यग् विशेषाधिकौ भागौ तावेवोर्ध्वगतौ किञ्चिद्विशेषाधिकौ, शीघ्रतमगतित्वात्, परिपूर्णं योजनमिति भावः, अथ कथं सामान्यतो विशेषाधिकत्वेऽभिहिते नियतभागत्वं व्याख्यायते ?, उच्यते, 'जावइयं चमरे अहे ओवयइ जाव तं वज्जे तिहिं'ति वचनसामर्थ्याद् अधोगत्यपेक्षया वज्रस्य त्रिभागन्यूना अधोगतिर्लब्धेति त्रिभागन्यूनं योजनमिति सा व्याख्याता, तथा 'सक्कस्स ओवयणकाले वज्जस्स उप्पयणकाले एस णं दुण्णिवि तुल्ले' इति वचसा अवसीयते यावदेकेन समयेन शक्रोऽधो व्रजेत् तावद्वज्रमूर्ध्वं, शक्रश्चाधः किल योजनं,

| | | | |
|---|---|---|---|
| ऊर्ध्वं | २४ | १२ | ८ |
| तिर्यग् | १८ | १० | १६ |
| अधः | १२ | ८ | २४ |
| | इन्द्र | वज्र | चमर |

| | ऊर्ध्वं | तिर्यग् | अधः |
|---|---|---|---|
| इन्द्र | यो. २ | यो. १ यो. २ | यो. १ |
| वज्र | योजन | ग. १/३ ३ | ग. २/३ २ |
| चमर | ग. ३ २ ।२ | यो. १ ग. १ । १/२ | योजन २ |

एवं कृत्वा वज्रस्योर्ध्वं योजनमुक्तं, ऊर्ध्वाधोगत्योश्चापान्तरालवर्त्तितिर्यग्गतेः सत्रिभागगव्युतत्रयलक्षणं तिर्यग्गतिप्रमाणमुक्तमिति,

एतेन व्याख्या सुखावबोधार्थं विस्तरतो विक्रियते, तत्रादौ गाथाद्वयमाह–"चउवीस बारसऽट्ठ य दुवालसंसा उ जोयणस्सुड्ढं। सक्को वज्जं चमरो तिण्णिवि गच्छंति समकालं ॥१॥ तिरियऽट्ठारस दस सोलसेव अह बारसऽट्ठ चउवीसा। जहसंखं तेण हरी वज्जं पाविंसु नो चमरं ॥२॥" देवेन्द्रसूरिभिरिमे गाथे कृते, एतत्स्थापना चेयम्। एवं गतिविषयं क्षेत्रमानमनेकविधं, तस्य मध्ये कतरो गतिविषयः कतरस्माद् गतिविषयादल्पादिरिति प्रश्नः, उत्तरं तु सर्वस्तोकमधःक्षेत्रं समयेन शक्रोऽवपतति, यतः–त्रिभिर्भागैर्गव्यूतं निष्पन्नमस्ति, तेन चतुर्भिस्त्रिकैर्द्वादशेति वचसा त्रिभागरूपगव्यूतचतुष्केण योजनं स्यात्, ततोऽधः शक्रो मन्दगतित्वात् योजनं यातीत्यर्थः, इत्यधो द्वादशभागैर्योजनं, ततश्च योजने द्विधा कृते द्वौ भागौ स्यातामिति, कथं ?, द्वादशभागरूपं योजनमर्धीक्रियते, अतस्त्रिभागद्वयरूपाः षड्भागाः स्युरित्येवं द्वौ षड्रूपौ भागौ जातौ, तयोश्चैकस्मिन् द्विभागे मीलिते त्रयस्सङ्ख्येया भागाः स्युरिति, कथं ?, तयोः षड्रूपयोर्भागयोरेकस्मिन् द्विभागत्रिभागरूपगव्यूतद्वयरूपे तृतीयषड्भागे मीलिते सति जातास्त्रयः षड्भागा इति प्रागुक्तद्वादशभागरूपयोजनोपरित्रिभागरूपं गव्यूतद्वयं यदि चिन्त्यते तदा तिर्यग्गतौ तस्य शीघ्रगतित्वात् जातं षड्भागाधिकं योजनं, भागाश्चैवं जाता अष्टादश, तेर्जातं गव्यूतद्वयाधिकं योजनं, सार्द्धं योजनमित्यर्थः, तेषु चतुर्थेऽन्यस्मिन् द्विभागे मीलिते ते चत्वारो द्विभागरूपाः सङ्ख्यातभागाः सम्भवंतीति, कथं ?, तेषु प्रागुक्ताष्टादशभागेषु चतुर्थेऽन्यस्मिन् द्विभागे त्रिभागरूपगव्यूतद्वयरूपे चतुर्थषड्भागे च मीलिते सति जाते द्वे योजने, भागाश्चैवं चतुर्विंशतयः, अतस्तानूर्ध्वं शीघ्रगतित्वाच्छक्रो व्रजेत्, जाते ऊर्ध्वं द्वे योजने इत्यर्थः, एवं शक्रस्याधस्तिर्यगूर्ध्वगतित्रयमानं प्रोक्तं। 'चमरस्स णं'त्ति ऊर्ध्वं चमरस्त्रिभागन्यूनं गव्यूतत्रयमिति, कोऽर्थः ?, प्रागुक्तत्रिभागरूपगव्यूतद्वयं तृतीयगव्यूतस्य द्वौ भागौ च, एवं जाते द्वे गव्यूते त्रिभागरूपगव्यूतद्वयद्विभागाधिके ग. २३

एवं जातास्सर्वेऽप्यष्टौ भागाः, ऊर्ध्वं तस्य मन्दगतित्वात्, 'तिरियं'ति तद्वशेन प्रागुक्तभागाष्टरूपे तृतीयभागन्यूनगव्यूतत्रये द्विगुणिते सति जाताः षोडश भागाः सङ्ख्येया योजनस्येति यो. १ ग. १⅓ तान् व्रजेत्, तिर्यग्गतौ तस्य शीघ्रगतित्वात्, 'अहे संखेज्जे भागे गच्छइ'त्ति प्रागुक्ते द्विगुणितेऽङ्के भागद्वारेण षोडशभागरूपे वद्धाङ्कतया जातानि पञ्च गव्यूतानि त्रिभागरूपषष्ठगव्यूत- सैको भागश्च, एवं जातं त्रिभागद्वयन्यूनगव्यूतषट्कमानं, तन्मध्ये चमरोर्ध्वगतिसत्कप्रागुक्ततृतीयभागन्यूनगव्यूतत्रयमीलने ग. २⅓ गव्यूतत्रयतृतीयगव्यूतभागद्वयाधिकैतावत्प्रमाणाङ्कक्षेपे जातं योजनद्वयमित्यर्थः, अधस्तस्य शीघ्रगतित्वात्। अथ वज्रस्य गति- त्रयमानमुच्यते, तत्र यच्चमरस्योर्ध्वगतिमानं तद्वज्रस्याधोगतिमानं, त्रिभागन्यूनं योजनमिति, कोऽर्थः?—अत्र भागचतुष्करूपा योज- नस्य त्रयो भागाश्चिन्त्यन्ते, तत्र चतुर्भागरूपौ योजनस्य द्वौ भागौ, तत एवं तृतीयचतुर्भागरूपत्रिभागेन न्यूनं योजनं, गव्यूतापे- क्षया तु द्वे गव्यूते द्वौ त्रिभागहृतौ भागौ भवतः ग. २⅔ अंशाश्चाष्टौ जाताः, अधो मन्दगतित्वात् तस्येति, अथ तिर्यक् उच्यते— योजनस्य द्वौ त्रिभागौ इति, कोऽर्थः ?, प्रागुक्तौ चतुर्भागरूपौ योजनस्य द्वौ भागौ विशेषाधिकाविति, किं ?, प्रागुक्तयोस्तयोरव- शिष्टो यस्तृतीयश्चतुर्भागः स त्रिभाग इत्युच्यते, ततस्तौ योजनस्य द्वौ भागौ तृतीयचतुर्थभागसत्कद्विभागाधिकौ क्रियेते, एवं जाता योजनदशभागाः, गव्यूतापेक्षया तु गव्यूतत्रयं त्रिभागहृतैकभागश्च ग. ३⅓ सत्रिभागगव्यूतत्रयमित्यर्थः, तिर्यग् शीघ्रग- तित्वात्तस्य। अथोर्ध्वगतिरुच्यते—प्रागुक्तोऽङ्कः स एव दशभागरूपः स्थाप्यते, तत्रापि विशेषाधिकाविति, कोऽर्थः ?, पूर्वाङ्कमध्ये योजनापेक्षया तृतीयचतुर्भागावशिष्टद्विभागक्षेपे जातं योजनमेकमित्यर्थः, ऊर्ध्वं शीघ्रतमगतित्वात्तस्य, गव्यूतापेक्षयां तु पूर्वोक्ता- ङ्कमध्ये त्रिभागसत्कोद्धरितद्विभागक्षेपे जाता द्वादश भागाः, तत्प्येवमेव जातं योजनमूर्ध्वं तस्य, गव्यूतापेक्षया गव्यूतत्रिकैश्चतुर्भिः

चतुर्भागयोजनापेक्षया चतुर्भागत्रिमिश्रं योजनं स्यादिति भावः, अथ गतिकालाल्पबहुत्वमाह—'एयस्स णं भंते ! वज्जस्स'त्ति 'एए णं दुण्णिवि तुल्ले'त्ति शक्रचमरयोः स्वस्थानगमनं प्रति गतिवेगसमत्वादुत्पतनावपतनकालौ तयोस्तुल्यौ परस्परेण, 'सव्वत्थोव'त्ति वक्ष्यमाणापेक्षयेति, तथा 'सक्कस्स'त्ति 'एस णं दुण्णिवि तुल्ले' उभयोरपि तुल्यः, शक्रावपतनकालो वज्रोत्पतनकालस्य तुल्यो वज्रोत्पातकालश्च शक्रावपतनकालस्य इत्यर्थः, 'संखेज्जगुणे'त्ति शक्रोत्पातकालः चमरावपातकालापेक्षया, एवमनन्तरसूत्रमपि भावनीयम्, 'ओहयमण'त्ति (सू० १४७) अपहतो—ध्वस्तो मनसः सङ्कल्पो—दर्पहर्षादिप्रभवो विकल्पो यस्य सः 'पल्हत्थमुहे'त्ति पाणौ पर्यस्तं—अधो न्यस्तं मुखं येन सः 'अक्किट्ठे'त्ति अक्लिष्टः—अबाधितो निर्वेदतः 'उवसंपज्जित्ताणं'ति उपसम्पद्य उपशान्तो भूत्वा विहरामि 'किंपत्तियं'ति (सू० १४८) कः प्रत्ययः—किं कारणं यत्र तत् किंप्रत्ययं, 'चरमभवत्थाणं'ति भवचरमभागस्थानां, च्यवनावसरे इत्यर्थ ॥ तृतीयशते द्वितीयचमरोद्देशकविवरणम् ॥

'अणुवरय'त्ति (सू० १४९) अनुपरतः—अविरतस्तस्य कायक्रिया अनुपरतकायक्रिया, इयमविरतस्य, 'दुप्पउत्त'त्ति दुष्टं प्रयुक्तं—प्रयोगो यस्य सः २तस्य कायक्रिया दुष्प्रयुक्तकायक्रिया, इयं प्रमत्तसंयतस्येति, विरतिमतः प्रमादे सति कायदुष्टप्रयोगसद्भावात्, 'संजोयण'त्ति हलमुशलादीनां संयोजनं—मीलनं तदेवाधिकरणक्रिया संयोजनाधिकरणक्रिया 'निव्वत्तण'त्ति निर्वर्त्तनं—असिशक्तितोमरादीनां निष्पादनं तदेवाधिकरणं तेन क्रिया निर्वर्त्तनाधिकरणक्रिया, 'जीवपाउसिय'त्ति जीवस्यात्मपरतदुभयोपरिप्रद्वेषितया क्रिया सा जीवप्रद्वेषिका, 'अजीवपाउसिय'त्ति अजीवानां—स्तम्भभारपट्टभित्तिप्रभृतीनामुपरि करशिरोघातादिना यत् प्रद्वेषकरणं सा अजीवप्रद्वेषिका। 'पमायपच्चया' (सू० १५१) प्रमादः प्रत्ययो—निमित्तं यस्याः सा प्रमाद-

प्रत्यया, यथा दुष्प्रयुक्तकायक्रियाजन्यं कर्म्म, योगनिमित्तं च यथैर्यापथिकं कर्म 'एयइ' (सू० १५२) एजति—कम्पते, 'वेयइ' व्येजति—विविधं कम्पते, 'चलइ' स्थानान्तरं गच्छति, 'फंदइ'त्ति किञ्चिचलति, 'स्पदि किञ्चिच्चलने' इतिधातोः, अन्यमवकाशं गत्वा पुनस्तत्रैव गच्छति इत्यन्ये, 'घट्टइ'त्ति सर्वदिक्षु चलति, पदार्थान्तरं वा स्पृशति, 'खुब्भइ'त्ति क्षुभ्यति पृथिवीं प्रविशति, क्षोभयति वा पृथ्वीं, बिभेति वा, 'उदीरेइ'त्ति उदीरयति, उत्—प्राबल्येन प्रेरयति, 'तं तं भावं'ति उत्क्षेपणावक्षेपणाकुंचनप्रसारणादिकं परिणामं यातीत्यर्थः, 'आरंभइ' आरभते पृथिव्यादीन् उपद्रवयति, संरभते—तेषु विनाशसङ्कल्पं कुर्यात्, 'समारभइ'त्ति समारभते, तानेव परितापयति, आह च—"संकप्पो संरंभो, परितावकरो भवे समारंभो। आरंभो उद्दवओ. सव्वनयाणं विसुद्धाणं ॥१॥ 'सोयावणयाए'त्ति दैन्यप्रापणायां 'जूरावण'त्ति शोकातिरेकाच्छरीरजीर्णताप्रापणायां 'तिप्पावणत्ति' 'तिपृ ष्टेपृ क्षरणे, इति वचनात्, तिप्रापणायां शोकातिरेकादेव अश्रुलालादिक्षरणप्रापणायां 'परियावण'त्ति परितापनायां शरीरसन्तापे वर्त्तते, 'णो एयइ'त्ति शैलेशीकरणे योगनिरोधे नो एजति, एजनादिरहितस्तु नारम्भादिषु वर्त्तते, तथा च योगनिरोधाभिधानशुक्लध्यानेन सकलकर्मध्वंसरूपा अन्तक्रिया स्यात्, 'तणहत्थयं'ति तृणपूलकं जाततेजसि—वह्नौ 'मसमसाविज्जइ' शीघ्रं दह्यते, एवमेजनादिरहितस्य शुक्लध्यानचतुर्थभेदानलेन कर्मदाह्यादहनं स्यात् 'उदाइ'त्ति उद्याति, जलस्योपरि—वर्त्तते, 'अत्तत्तासंवुडस्स'त्ति आत्मन्यात्मना संवृतस्य प्रतिसंलीनस्येति, 'आउत्तं'ति आयुक्तः उपयोगपूर्वकं 'चक्खुपम्ह'त्ति चक्षुःपक्ष्मनिपातोऽपि, प्राकृतत्वाल्लिङ्गव्यत्ययः, उन्मेषनिमेषमात्रक्रियाऽप्यस्ति, आस्तां गमनादिका, 'वेमाय'त्ति विविधा मात्रा अन्तर्मुहूर्त्तादिर्देशोनपूर्वकोटीपर्यन्तस्य क्रियाकालस्य विचित्रत्वात्, 'सुहुम'त्ति सूक्ष्मबन्धादिकाला 'इरियावहि'त्ति ईर्यापथो—गमनमार्गस्तत्र भवा

ऐर्यापथिकी, केवलकाययोगप्रत्ययेति, 'किरिय'त्ति क्रिया—कर्म सातावेदनीयं 'कज्जइ'त्ति क्रियते भवतीति, उपशान्तमोहक्षीणमोहसयोगिकेवलिगुणस्थानकत्रयवर्त्तिवीतरागोऽपि सक्रियत्वात् सातवेद्यं कर्म बध्नातीति भावः, 'बद्धपुट्ठ'त्ति बद्धा कर्मतापादनात्, स्पृष्टा जीवप्रदेशैः स्पर्शनात्, वेदिता अनुभूतस्वरूपा, निर्जीर्णा अनुभूतस्वरूपत्वेन जीवप्रदेशेभ्यः परिशटितेति, एतद्वाक्यान्तरेणाह-बद्धा स्पृष्टा प्रथमसमये द्वितीयसमये उदीरिता—उदयमुपनीता, किमुक्तं स्यात्?—वेदिता, नह्येकस्मिन् समये उदीरणा उदयश्च सम्भवति इत्येवं व्याख्यानं, तृतीये निर्जीर्णा, 'सेयकाले'त्ति एष्यत्काले 'अकम्मं वावि'त्ति अकर्मापि स्यात्। अथ यदुक्तं श्रमणानां प्रमादप्रत्यया क्रिया स्यात्, तत्र प्रमादपरत्वं तदितरत्वं संयतस्य कालतो निरूपयन्नाह—'सव्वावि य णं पमत्तद्धे'ति (सू० १५३) सर्वापि—सर्वकालसम्भवापि च प्रमत्ताद्धा—प्रमत्तगुणस्थानकालः कालतः—कियन्तं कालं यावद् भवति इति प्रश्नः, 'एक्कं समयं' जघन्येन प्रमत्तसंयमप्रतिपत्तिसमयसमनन्तरमेव मरणात्, 'देसूणा पुव्वकोडि'त्ति किल प्रत्येकमन्तर्मुहूर्त्तप्रमाणे एव प्रमत्ताप्रमत्तगुणस्थानके, ते च पर्यायेण जायमाने देशोनपूर्वकोटिं यावदुत्कर्षेण भवतः, संयमवतो हि पूर्वकोटिरेव परमायुः, स च संयममष्टासु वर्षेषु गतेष्वेव लभते, महान्ति वा अप्रमत्तान्तर्मुहूर्त्तापेक्षया प्रमत्तान्तर्मुहूर्त्तानि कल्प्यन्ते, एवमन्तर्मुहूर्त्तप्रमाणानां प्रमत्ताद्धानां सर्वासां मीलनेन देशोना पूर्वकोटीकालमानं स्यात्, अन्ये त्वाहुः—अष्टवर्षोनां पूर्वकोटीं यावदुत्कर्षतः प्रमत्तसंयतता स्यादिति, एवमप्रमत्तसूत्रमपि, नवरं 'जहण्णेणं'ति किलाप्रमत्ताद्धायां वर्त्तमानस्यान्तर्मुहूर्त्तमध्ये मृत्युर्न स्यात्, चूर्णिकारमतं तु प्रमत्तसंयतवर्जः सर्वोऽपि सर्वविरतोऽप्रमत्त उच्यते, प्रमादाभावात्, स चोपशमश्रेणीं प्रतिपद्यमानो मुहूर्त्ताभ्यन्तरे कालं कुर्वन् जघन्यकालो लभ्यते, देशोनपूर्वकोटी तु केवलिनमाश्रित्येति, 'अइरेयं'ति (सू० १५४) तिथ्यन्तरापेक्षयाऽधिकतरं 'लवणसमुद्द-

वत्तव्वय'त्ति जीवाभिगमोक्ता, कियद्दूरं यावदित्याह–'जाव लोयट्ठिई' यावल्लोकस्थितिः, 'लोयाणुभावे'त्ति लोकप्रभाव इति ॥ तृतीयशते तृतीयोद्देशकविवरणम् ॥

तत्र 'भावियप्प'त्ति भावितात्मा संयमतपोभ्यां, एवंविधानगाराणां हि प्रायोऽवधिज्ञानलब्धयः स्युरितिकृत्वा भावितात्मेत्युक्तं, 'जाणरूवेणं'ति यानप्रकारेण–शिविकाद्याकारवता वैक्रियविमानेनेति, 'जायमाणं'ति यान्तं–गच्छन्तं 'जाणइ' ज्ञानेन 'पासइ' दर्शनेन, उत्तरं तु चतुर्भङ्गी, विचित्रत्वादवधिज्ञानस्येति, 'अंतो'त्ति मध्यं काष्ठसारादि, 'बाहिं'ति बहिर्वर्त्ति त्वक्पत्रसञ्चयादि 'जाव बीयं'ति यावत्करणात् मूलं १ कन्दः २ स्कन्धः ३ त्वक् ४ शाखा ५ प्रवालं ६ पत्रं ७ पुष्पं ८ फलं ९ बीजं १० चेति पदानि, एतेषां पञ्चचत्वारिंशत् द्विकसंयोगाः स्युः, एतावन्त्येव चतुर्भङ्गीसूत्राण्यध्येयानि, 'जाणं'ति शकटं, 'जुग्ग'त्ति गोल्लविषयप्रसिद्धं, जंपानं द्विहस्तप्रमाणं वेदिकोपशोभितं, 'गिल्लि'त्ति हस्तिन उपरि कोल्लररूपा या मानुषं गिलतीव 'थिल्लि'त्ति लाटानामश्वपल्यानं तद् अन्यविषयेषु थिल्लीत्युच्यते, 'सीय'त्ति शिविका कूटाकाराच्छादिता, 'संदमाणिय'त्ति पुरुषप्रमाणायामा 'वाउकाए'त्ति वायुकायः 'पडागासंठिय'त्ति पताकासंस्थितं, स्वरूपेणैव वायोः पताकाकारशरीरत्वाद् वैक्रियावस्थायामपि तदाकारभावात्, 'आयड्ढि'त्ति आत्मर्द्ध्या आत्मलब्ध्या वा 'आयकम्मुणा'त्ति आत्मक्रियया 'आयप्पओगेणं' न परप्रयुक्त इति, 'उस्सिओदयं' उच्छ्रितः–ऊर्ध्व उदयः–आयामो यत्र गमने तदुच्छ्रितोदयं, ऊर्ध्वपताकमिति, 'पत्तोदयं'ति पतितपताकं गच्छति, ऊर्ध्वपताका स्थापना चेयम् |> पतितपताका स्थापना चेयम् |> 'एगओपडाग'त्ति एकतः–एकस्यां दिशि पताका यत्र तदेकतः पताकं स्थापना <| 'दुहओपडागं'ति द्विधापताकं, स्थापना त्वेयम् <|> 'बलाहए'त्ति (सू० १५७) मेघः, 'परिणामे'त्ति

बलाहकस्याजीवत्वेन विकुर्वणाया असम्भवात् परिणामयितुमुक्तम्, परिणामश्चास्य विश्रसारूपः, 'नो आयड्ढिए'त्ति अचेतनत्वान्मेघस्य विवक्षितशक्तेरभावाच्चात्मर्ध्या गमनमस्ति वायुना देवेन वा प्रेरितस्य तु स्याद् गमनमतोऽभिधीयते—'परिड्ढीए'त्ति एवं 'पुरिसे आसे'त्ति स्त्रीरूपसूत्रमिव पुरुषाश्वहस्तिरूपसूत्राण्यध्येतव्यानि, 'एगओचक्कवालंपि' नवरमिह यानं—शकटं चक्रवालं—चक्रं, शकट एव चक्रवालभावात्, ततश्च युग्यगिल्लिथिल्लिशिबिकास्यन्दमानिकारूपसूत्राणि स्त्रीरूपसूत्रवदध्येयानि, 'जे भविए'त्ति यो योग्यः 'किंलेसेसु'त्ति (सू० १५८) का कृष्णादीनामन्यतमा लेश्या येषां तेषु किंलेश्येषु मध्ये 'जल्लेसाइं'ति या लेश्या येषां द्रव्याणां तानि यल्लेश्यानि, यस्या लेश्यायाः सम्बन्धीनीति भावः, 'परियाइत्ता' पर्यादाय कालं करोति—म्रियते, तल्लेश्येषु नारकेषूत्पद्यते, अत्र गाथाः—"सव्वाहिं लेसाहिं पढमे समयंमि संपरिणयाहिं । नो कस्सवि उववाओ परे भवे अत्थि जीवस्स ॥१॥" सव्वाहिं लेसाहिं चरमे समयंमि संपरिणयाहिं । नवि कस्सवि उववाओ परे भवे अत्थि जीवाणं ॥२॥ अंतमुहुत्तंमि गए अंतमुहुत्तंमि सेसए चेव । लेसाहिं परिणयाहिं, जीवा गच्छंति परलोयं ॥३॥" 'जाव'त्ति ननु एतावतैव विवक्षितार्थसिद्धेः किमर्थं भेदेन ज्योतिष्कालापकः पृथगुक्तः ?, उच्यते, २४ दण्डकान्त्यसूत्रदर्शनार्थं, ननु तर्हि यावत्करणात् वैमानिकसूत्रं वाच्यं स्यात्, न तु ज्योतिष्कसूत्रं, सत्यं, किन्तु ज्योतिष्कवैमानिकाः प्रशस्तलेश्याः स्युरित्यस्यार्थस्य दर्शनार्थं तेषां भेदेनाभिधानं, विचित्रत्वाद्वा सूत्रगतेः, 'बाहिरए'त्ति औदारिकशरीरव्यतिरिक्तान् वैक्रियानिति, उल्लङ्घनं सकृत्, प्रलङ्घनं पुनः २, 'णो इणमट्ठे'त्ति वैक्रियपुद्गलपर्यादानं विना वैक्रियकरणस्यैवाभावात्, बाह्यपुद्गलपर्यादाने तु पर्वतोल्लङ्घनादौ प्रभुः स्यात्, महतः पर्वतातिक्रामिणः शरीरस्य सम्भवादिति, 'मायी'त्ति (सू० १५९) मायावान् सकषायः प्रमत्त इति, अप्रमत्तो हि वैक्रियं न कुर्यादिति, 'वामेइ'त्ति

वमनं करोति, 'बहुली'त्ति घनीस्यात्, प्रणीतसामर्थ्यात्, 'पयणुए'त्ति अघनीस्यात् 'अहाबायर'त्ति यथाबादरा आहारपुद्गलाः 'लूहं'ति रूक्षं अप्रणीतं,'णो वामेइ' अकपायितया वैक्रियायामनर्थित्वात् रूक्षभोजिन आहारादिपुद्गला उच्चारादितयैव परिणमन्ति, अन्यथा शरीरासारतानापत्तेरिति, 'तस्स ठाणस्स'त्ति तस्मात् स्थानात्" विकुर्वणलक्षणात् प्रणीतभोजनलक्षणाद्वा

|| तृतीयशते चतुर्थोद्देशकविवरणम् ||

**'असिचम्मपायं'ति** (सू० १६०) असिः–खड्गः, चर्मपात्रं–स्फुरकः, असिचर्मपात्रं हस्ते यस्य स तथा, कृत्यं सङ्घादि, तत्र कार्यं गतः–प्राप्तः, सूत्रे विशेषणकर्मधारयसमासः, 'उद्धं वेहासं'ति ऊर्ध्वं विहायसं–आकाशं, 'वग'ति वृकः 'दीविय'त्ति चतुष्पदविशेषः, 'अच्छ'त्ति ऋक्षः 'तरच्छ'त्ति व्याघ्रविशेषः 'परासर'त्ति शरभः 'अहिजुंजित्तए' अभियोक्तुं–विद्यासामर्थ्यतस्तदनुप्रवेशेन व्यापारयितुं,यच्च स्वस्यानुप्रवेशनेनाभियोजनं तद्विद्यादिसामर्थ्योपात्तबाह्यपुद्गलान् विना न स्यादित्युच्यते-'नो बाहिरए पोग्गले अपरियाइत्त'त्ति, 'अणगारे णं'ति अनगार एवासौ, तत्त्वतोऽनगारस्यैवाश्वाद्यनुप्रवेशेन व्याप्रियमाणत्वात्, 'माई अभिजुंजइ'त्ति कषायवानभियुङ्क्ते,अधिकृतवाचनायां 'माई विउव्वइ'त्ति दृश्यते, तत्र अभियोगोऽपि विकुर्वणा मन्तव्या, विक्रियारूपत्वात् तस्येति, 'अण्णयरेसु'त्ति आभियोगिकदेवा अच्युतान्ताः स्युरिति अन्यतरेषु केषुचित् उत्पद्यन्ते अभियोगभावनायुक्तः साधुराभियोगिकदेवेषु, कश्चित्करोति विद्यालब्ध्युपजीवकोऽभियोगभावनां, यदाह–मंता जोगं काउं भूईकम्मं च जे पउंजंति। सायरसइड्ढिहेउं अभिओगं भावणं कुणइ ॥१॥" 'इत्थी(*२६)त्यादि सङ्ग्रहगाथा गतार्था ॥ तृतीयशते पञ्चम उद्देशकः॥

विकुर्वणाधिकारसम्बद्ध एव षष्ठ उद्देशकः, तस्येदमादिसूत्रम्–'अणगारे णं'ति ( सू० १६१ ) अनगार एव गृहवासत्यागात्

भावितात्मा स्वसमयानुसारिप्रशमादिभिः, मायी कषायवान् , मिथ्यादृष्टिरन्यतीर्थिकः, वीर्यलब्ध्यादिभिः कारणभूताभिः वाणारसीं पुरीं 'समोहए'त्ति विकुर्वितवान् , रूपाणि–पशुपुरुषप्रासादप्रभृतीनि, जानाति पश्यति च विभङ्गज्ञानलब्ध्या, स हि मन्यते अहं राजगृहं समवहतः, वाणारसीरूपाणि जानामि पश्यामि, एवं 'से' तस्यानगारस्य 'से'त्ति असौ दर्शने विपर्यासो विपर्ययः, अन्यदीयरूपाणामन्यदीयरूपतया विकल्पितत्वात् , दिग्मोहादिव पूर्वामपि पश्चिमां मन्यमानस्येति, अन्तरा—तयोरन्तरालवर्त्तिनं जनपदसमूहं समवहतः नो तथाभावं, यतोऽसौ वैक्रियाण्यपि तानि मन्यते स्वाभाविकानि, 'जसे'त्ति यशोहेतुत्वाद्यशः, 'चत्तारि चउसट्ठि'त्ति (सू० १६३) तत्र सर्वेषामिन्द्राणां सामानिकचतुर्गुणा आत्मरक्षाः तेन चतुःषष्टिः 'चत्तारि'त्ति चतुर्गुणाः क्रियन्ते, जाताः सर्वे २५६००० प्रमाणाश्चमरस्यात्मरक्षकाः। तृतीयशते षष्ठ उद्देशकः ॥

'वीइवइत्त'त्ति (सू० १६४) व्यतिव्रज्य–व्यतिक्रम्य 'उयालीसं जोयण'त्ति एकोनचत्वारिंशद्योजनलक्षाणि 'उवगारियालेण'त्ति उपकारिकालयनं–गृहपीठबन्धकल्पं 'सोमकाइय'त्ति सोमस्य कायो–निकायो येषामस्ति ते सोमकायिकाः–सोमपरिवारभूताः 'सोमदेवयकाइय'त्ति सोमदेवताः–तत्सामानिकादयस्तासां कायो येषामस्ति ते सोमदेवताकायिकाः–सोमसामानिकादिदेवपरिवाररूपाः, 'तब्भत्तिया' तत्र–सोमे भक्तिर्येषां ते तद्भक्तिकाः, 'तप्पक्खिया' सोमपाक्षिकाः–सोमप्रयोजनसहायाः 'तब्भारिया' तस्य–सोमस्यातिवश्यत्वात्तद्भार्या इव, अथवा तद्भारो वोढव्यतया येषामस्ति ते तद्भारिकाः, 'गहदंड'त्ति दण्डा इव दण्डाः तिर्यगायताः श्रेणयः ग्रहाणां—मङ्गलादीनां दण्डा ग्रहदण्डाः, एवं ग्रहमुशलानि, नवरमूर्ध्वायतश्रेणयः, 'गहगज्जिय'त्ति ग्रहसञ्चारादौ स्तनितानि गर्जितानि ग्रहगर्जितानि, ग्रहयुद्धानीति ग्रहयोरेकत्र नक्षत्रे दक्षिणोत्तरेण समश्रेणितयाऽवस्थानानि,

ग्रहसिंघाटकानि--ग्रहाणां सिंघाटकफलाकारेणावस्थानानि, ग्रहापसव्यानि--ग्रहाणामपराङ्गानि ग्रहाणामपसव्यगमनानि--प्रतीपगमनानि, अभ्रात्मका वृक्षाः, गन्धर्वनगराणि आकाशे व्यन्तरकृतानि नगराकाराणि प्रतिबिम्बानि, उल्कापाताः--तारकस्येव पाता दिग्दाहा--अन्यतमस्यां दिशि अधोऽन्धकारा उपरि च प्रकाशात्मका दह्यमानमहानगरप्रकाशकल्पाः, 'जूव'त्ति शुक्लपक्षे प्रतिपदादिदिनत्रयं यावद्यैः सन्ध्याछेदा आव्रियन्ते ते यूपकाः 'जक्खालित्त'त्ति यक्षोद्दीप्तानि---आकाशे व्यन्तरकृतज्वलनानि, धूमिका धूसरवर्णा, महिका स्वापाण्डुरा, 'रउग्घाओ' रजोवृष्टिः, 'चंदोवरागसूरोवरागा' चंद्रसूर्यग्रहणानि, 'पडिचंद'त्ति प्रतिचन्द्राः, 'उदगमच्छ'त्ति इन्द्रधनुःखण्डानि 'कविहसिय'त्ति अनभ्रे या विद्युत् सहसा तत्कपिहसितं, अथवा कपिहसितं नाम यदाकाशे कपिमुखसदृशस्य विकृतमुखस्य हसनं, अमोघाः--आदित्योदयास्तमयोरादित्यकिरणविकारजनिताः आताम्राः श्यामा वा शकटोर्द्धिसंस्थिता दण्डाः, 'पाईण'त्ति पूर्वदिग्वाताः 'पडीण'त्ति प्रतीचीनवाताः, यावत्करणात् दाहिणउदीणउड्ढाहोतिरियदिसिविदिसिवाया वाउब्भामा--वातोद्भ्रामा अनवस्थिता वाताः 'वाउक्कलिया' वातोत्कलिकाः समुद्रोत्कलिकावत्, 'वाउमंडलिया' वातोल्यः, उक्कलिया वाया--उत्कलिकाभिर्ये वान्ति, मण्डलिया वाया--मण्डलिकाभिर्ये वान्ति, गुंजावाताः--सशब्दं ये वान्ति, झंझावाता उत्पातरूपाः, संवर्त्तकवाताः तृणादिसंवर्त्तनस्वभावाः ॥ अथानन्तरोक्तग्रहदण्डादिफलानि दर्शयन्नाह--प्राणक्षयाः--बलक्षयाः व्यसनभूता--आपद्रूपाः अनार्याः--पापात्मकाः न ते अज्ञाताः अणणाया अनुमानतः अदृष्टाः प्रत्यक्षापेक्षया अश्रुता अन्यवचनद्वारेण अस्मृता मनोऽपेक्षया अविज्ञाता अवध्यपेक्षया । 'अहावच्च'त्ति यथापत्यानि, पुत्रस्थानीया इत्यर्थः, 'अभिण्णाया' अभिज्ञाताः--अवगताः, 'कंदप्पिय'त्ति कान्दर्पिकाः, कान्दर्पभावनाभाविताः, कान्दर्पिकदेवेषु अभिमतवस्तुकारित्वात्, 'कोरुया'

अभवन्, उपलक्षणत्वाच्च भवन्ति भविष्यतीति द्रष्टव्यम्, ते चाङ्गारादयः पूर्वोक्ताः, एतेषु यद्यपि चन्द्रसूर्ययोर्वर्षलक्षाद्यधिकं पल्योपमं तथाप्याधिक्यस्याविवक्षितत्वात् पल्योपममेवोक्तं, 'पेयकाइया' प्रेतकायिका व्यन्तरविशेषाः 'पेयदेवणय'त्ति प्रेतसत्कदेवतासम्बन्धिनः, 'आभिओग'त्ति अभियोगश्च—आदेशस्तद्भावनावशेन आभियोगिकदेवेषूत्पन्नाः अभियोगवर्त्तिनश्च, 'डिम्बाइ'त्ति डिम्बा-विघ्नाः, डमरा-एकराज्य एव राजकुमारादिकृतोपद्रवाः कलहा—वचनराटयः अव्यक्ताक्षरध्वनिसमूहः खाराः-परस्परमत्सराः महायुद्धानि—व्यवस्थाविहीनानि महासङ्ग्रामाः-चक्रादिव्यूहरचनोपेताः सव्यवस्थाः महाशस्त्रनिपातनादयश्च महायुद्धादिकार्यभूताः, 'दुब्भूय'त्ति दुष्टा जनधान्यादीनामुपद्रवहेतुत्वात् भूताः-सत्त्वा यूकामत्कुणोंदुरतिड्डप्रभृतयो दुर्भूताः, ईतय इत्यर्थः, इन्द्रग्रहा-उन्मत्तताहेतवः, एकाहिकादयो ज्वरविशेषाः, 'उव्वेयग'त्ति उद्वेगकाः, इष्टवियोगादिजन्या उद्वेगाः, उद्वेजका वा लोकोद्वेगकारिणश्चौरादयः, 'कच्छकोह'त्ति कक्षाणां-वपुरवयवरूपाणां वनगहनानां वा कोथाः-कुथितत्वानि शटनानि वा कक्षाकोथाः कक्षकोथा वा, अम्ब (सू० २७) इत्यादयः, पञ्चदशासुरनिकायान्तर्वर्त्तिनः परमाधार्मिकनिकायाः, तत्र यो देवो नारकानम्बरतले नीत्वा विमुञ्चत्यसावम्बः १ यो नारकान् खण्डशः कृत्वा भ्राष्ट्रपाकयोग्यान् कुर्यादसावम्बरीषस्य आसम्बन्धात् अम्बरीषः २ तेषां यः शातनादिकारको वर्णतश्च श्यामः स श्यामः ३ 'सबल'त्ति तेषामन्त्रहृदयादीन्युत्पाटयति यो वर्णतश्च शबलः-कर्बुरः स शबलः ४, यः कुन्तादीषु नारकान् प्रोतयति स रौद्रः, ५ यस्तेषामङ्गोपाङ्गानि भनक्ति स उपरौद्रः ६ यः कंड्वादिषु पचति वर्णतश्च कालः स कालः ७ यः श्लक्ष्णमांसखण्डानि कृत्वा खादयति स वर्णतश्च महाकालः ८ योऽसिना छिनत्ति स असिरेव ९ असिपत्राकारपत्रवद्वनविकुर्वणादसिपत्रः १० कुम्भ्यादिषु तेषां पचनात् कुम्भः ११ पाठान्तरे तु 'असिपत्ते धणूकुंभे'त्ति असि-

पत्रकुम्भौ पूर्ववत्, 'धणु'त्ति यो धनुर्विमुक्तार्द्धचन्द्रादिबाणैः कर्णादिच्छेदनभेदनादि कुर्यात् स धनुः १२ कदम्बपुष्पाद्याकारवालुकासु यः पचति सः वालुकः १३ 'वेयरणी य'त्ति तत्र पूयरुधिरादिभृतवैतरण्याख्यनदीविकुर्वणात् वैतरणीदेव इति, यो वज्रकण्टकाकुलं शाल्मलीतरुमारोप्य नारकं खरस्वरं कुर्वन्तं कर्षत्यसौ खरस्वरः १४, यो भीतान् पलायमानान् नारकान् पशूनिव वाटके महाघोषं कुर्वन् रुणद्धि स महाघोषः १५ एवमेते यथापत्यदेवा उक्ताः, 'अइवास'त्ति अतिशयवर्षाः—वेगवद्वर्षणानि 'मंद'त्ति शनैर्वर्षणानि, सुवृष्टि, दुर्वृष्टिः, 'उदउब्भेय'त्ति उदकोद्भेदाः, गिरितटादिभ्यो जलोद्भवाः, 'उदउप्पीलिय'त्ति उदकोत्पीलाः—तडागादिजलसमूहाः 'पवाह'त्ति अपकृष्टानि अल्पान्युदकवहनानि, तान्येव प्रकर्षवन्ति प्रवाहाः, इह प्राणक्षयादयो जलकृता द्रष्टव्याः 'कक्कोडए'त्ति कर्कोटकाभिधानोऽनुवेलन्धरनागराजावासभूतो गिरिर्लवणाब्धौ ऐशान्यां दिश्यस्ति, ततस्तन्निवासी नागराजः कर्कोटकः, 'कद्दमए'त्ति आग्नेय्यां तथैव विद्युत्प्रभगिरिः तत्र कर्दमको नाम नागराजः 'अंजणो'त्ति वेलम्बाभिधानवायुकुमारराजस्य लोकपालोऽञ्जनाभिधानः, 'संखवालए'त्ति धरणाभिधाननागराजस्य लोकपालः शङ्खपालः, शेषास्तु पुण्ड्रादयोऽप्रतीताः, 'वसुहार'त्ति (सू. १६७) तीर्थकरजन्मादिषु नभसो द्रव्यवृष्टिः वसुधारा, हिरण्यं—रूप्यं, घटितं सुवर्णमित्यन्ये, वर्षोऽल्पतरः वृष्टिस्तु महतीति वर्षवृष्ट्योर्भेदः, माल्यं—ग्रथितपुष्पाणि, वर्णाश्चन्दनं, चूर्णो- गन्धद्रव्यसम्बन्धी, गन्धाः—कोष्ठपुटपाकादयः 'सण्णिहि'त्ति घृतगुडादिस्थापनानि, 'सन्निचय'त्ति धान्यसञ्चयाः, निधिर्लक्षादिप्रमाणद्रव्यस्थापनानि, निधाना भूमिगतसहस्रादिद्रव्यसङ्ख्यसञ्चयाः, 'पहीणसेइयाइ'न्ति प्रहीणा—अल्पीभूताः सेक्तारः—सेचका नवद्रव्यप्रक्षेप्तारो येषां तानि प्रहीणं—विरलीभूतमानुषं गोत्रागारं—तत्स्वामिगोत्रगृहं येषां तानि, 'निद्धमणेसु' नगरोदकनिर्गमनेषु 'सुसाण'त्ति

गृहशब्दस्य प्रत्येकं सम्बन्धात् श्मशानगृहं-पितृगृहं गिरिगृहं-पर्वतोपरिगृहं कन्दरगृहं-गुफा शान्तिगृहं-शान्तिकर्मस्थानं शैलगृहं-पर्वतमुत्कीर्य यत्कृतं उपस्थानगृहं-आस्थानमण्डपः भवनगृहं-कुटुम्बवसनस्थानमिति ॥ तृतीये सप्तम उद्देशकः ॥

अथ दक्षिणभवनपतीन्द्राणां प्रथमलोकपालनामानि सो॰ को॰ चि॰ प॰ ते॰ रु॰ ज॰ तु॰ का॰ आ॰ (सू. १६८) इत्यक्षरद्वयेन उच्यन्ते, वाचनान्तरेषु गाथा, सा चैवम्-"सोमे य १ कोलवाले २ चित्त ३ प्पभ ४ तेउ ५ तह रुए चेव ६। जलपह ७ तह तुरियगई ८ काले ९ आवत्त १० पढमाओ ॥१॥" एवं द्वितीयादयोऽप्यभ्यूह्याः, इह पुस्तकान्तरेऽयमर्थो दृश्यते, दाक्षिणात्येषु लोकपालेषु प्रतिसूत्रं यौ तृतीयचतुर्थौ तावौदीच्येषु चतुर्थतृतीयौ ज्ञातव्यौ, 'एसा वत्तव्वया सव्वेसुवि कप्पेसु'त्ति एषा वक्तव्यता सौधर्मेशानोक्ता सर्वेषु कल्पेषु-इन्द्रनिवासभूतेषु भणितव्या, सनत्कुमारादीन्द्रयुग्मेषु पूर्वेन्द्रापेक्षया उत्तरेन्द्रसम्बन्धिनां लोकपालानां तृतीयचतुर्थयोर्व्यत्ययो वाच्य इत्यर्थः, एते सोमादयः प्रतिदेवलोकं वाच्याः, न तु भवनपतीन्द्राणामिवापरापरे, 'जे य इंदावि' शक्रादयो दशेन्द्रा वाच्याः, अन्तिमदेवलोकचतुष्के इन्द्रद्वयभावादिति ॥ तृतीये शतेऽष्टम उद्देशकः ॥

जीवाभिगमोक्तः 'जोइंमियउद्देसओ' (सू. १६९) स चायं-सोइंदियविसए जाव फासिंदियविसए, सोइंदियविसए णं भंते! पोग्गलपरिणामे कइविहे पण्णत्ते?, गो॰! दुविहे-सुब्भि॰ दुब्भिसद्दपरिणामे य' शुभाशुभशब्दपरिणामः, चक्षुरिन्द्रियविषये सुरूव॰ दुरूवपरिणामे य, घाणिंदिये सुब्भि॰ दुब्भिगंधपरिणामे य, जिब्भिंदिये सुरसदुरसपरिणामे य, स्पर्शेन्द्रिये तु सुफासदुफासपरिणामे य, से नूणं भंते! उच्चावएहिं सद्दपरिणामेहिं परिणाममाणा पोग्गला परिणमंति इति वत्तव्वं सिया?, हंता! गोयमा!, एवं सुब्भिणो'त्ति इदं सूत्रं पुनरेवम्, -से नूणं भंते! सुब्भिसद्दपोग्गला दुब्भिसद्दत्ताए परिणामन्ति? हंता! गोयमा! ॥ तृतीयशते नवम उद्देशकः ॥

'समिय'त्ति (सू. १७०) शमिका उत्तमत्वेन स्थिरप्रकृतितया उपशमनी स्वप्रभोर्वा कोपौत्सुक्यादिभावान् शमयति उपादेयवचनतया शमिता वा-अनुद्धता, 'चंड'त्ति तथाविधमहत्त्वाभावेनेपत्कोपादीनां जातत्वाच्चण्डा, 'जाय'त्ति प्रकृतिमहत्त्ववर्जितत्वेन अस्थानकोपादीनां जातत्वाज्जाता, क्रमेणाभ्यन्तरा मध्यमा बाह्या चेति, तत्राभ्यन्तरा समुत्पन्नकार्येण प्रभुणा गौरवार्हत्वादाकारितैव पार्श्वे समेति, तां चासावर्थपदं पृच्छेत्, मध्यमा तूभयथाऽप्यागच्छेत्, अल्पतरगौरवविषयत्वात् अभ्यन्तरगा चादिष्टमर्थपदं तया समं प्रबध्नाति-ग्रन्थिबन्धं कुर्यात्, बाह्या अनाकारितैवागच्छति, अल्पतमगौरवविषयत्वात्, तस्याश्चार्थपदं वर्णयत्येव, आद्यायां चतुर्विंशतिसहस्राणि देवानां द्वितीयायामष्टाविंशतिः तृतीयायां द्वात्रिंशदिति, तथा क्रमेण देवीशतानि अध्युष्टानि त्रीणि सार्द्धे द्वे चेति, तद्देवानामायुः क्रमेणार्द्धतृतीयपल्योपमानि द्वे सार्द्धं चेति, देवीनां तु सार्द्धं एकं तदर्द्धं चेति, एवं बलेरपि, नवरं देवप्रमाणं तदेव चतुश्चतुःसहस्रहीनं, देवीमानं तु शतेनाधिकं, आयुर्मानमपि तदेव, नवरं पल्योपमाधिकं, एवमच्युतान्तानामिन्द्राणां प्रत्येकं तिस्रः पर्षदः स्युः, नामतो देवादिमानतः स्थितिमानतश्च क्वचित्किञ्चिद्भेदः, एतत्स्वरूपं जीवाभिगमादवसेयमिति ॥ सम्पूर्णं तृतीयं शतम् ॥

'अच्चणिय'त्ति (सू. १७१) सिद्धायतनजिनप्रतिमाद्यर्चनमभिनवोत्पन्नसोमलोकपालस्येति, 'रायहाणीसु चत्तारि उद्देसया भाणियव्वा' ते चैवम्-'कहन्नं भंते ! ईसाणस्स देविंदस्स देवरण्णो सोमस्स महारण्णो सोमाणामं रायहाणी पण्णत्ता ?, गो० ! सुमणस्स महाविमाणस्स अहे सपक्खिं इति, पूर्वोक्तानुसारेण जीवाभिगमोक्तविजयराजधानीवर्णकानुसारेण चैकैक उद्देशकः अध्येतव्यः, 'आदि'गाह(*३२)त्ति ईशानेन्द्रस्य, 'आदिदुय'त्ति आद्यद्वयोः सोमयमयोरायुस्त्रिभागोने द्वे पल्ये 'दो चेव'त्ति सम्बन्धा-

श्रवत:, धनदस्य द्वे एव पल्योपमे, 'तिभाग'त्ति वरुणविषये सत्रिभागे द्वे पल्ये, 'पलिय'त्ति यथापत्यदेवानां पल्यमेकमिति, गाथा गतार्था ॥ चतुर्थशतेऽष्टम उद्देशकः ॥

'नेरइए णं'ति (सू. १७३) लेस्सापदे सप्तदशे प्रज्ञापनायास्तृतीय उद्देशको भणितव्यः,स चैवं–गोयमा ! नेरइए णेरइएसु उववज्जइ, णो अणेरइए णेरइएसु उववज्जइ' अयं चास्यार्थः—नैरयिको नैरयिकेषूत्पद्यते, न पुनरनैरयिकः, कथमेतद् ?, उच्यते, यस्मान्नारकादिभवोपग्राहकं आयुरेव, अतो जीवः कोऽपि प्राग्भवायुर्भुक्त्वा नरकादिषूत्पत्तुकामः स नारकाद्यायुःप्रथमसमयसंवेदनकाल एव नारकादिव्यपदेश्यः स्यात् ऋजुसूत्रनयदर्शनेन, यत उक्तं नयविद्भिः–'पलालं न दहत्यग्निर्भिद्यते न घटः क्वचित् । न शून्यान्निर्गमोऽस्तीह, न च शून्यं प्रविश्यते ॥१॥" नारकव्यतिरिक्तश्च, नरके नोपपद्यते । नरकान्नारकश्चास्य, न कश्चिद्विप्रमुच्यते ॥२॥" 'जाव नाणाइं'ति अयमुद्देशको ज्ञानावसानोऽध्येतव्यः, स चायम्–'कण्हलेसे णं जीवे कइसु नाणेसु होज्जा ?, गो० ! दोसु तिसु चउसु वा नाणेसु होज्जा, दोसु होज्जमाणे आभिणिबोहियसुयनाणेसु होज्जा' ॥ चतुर्थशते नवम उद्देशकः ॥

'तारूवत्ताए'त्ति (सू. १७४) तद्रूपतया नीललेश्यास्वभावेन, एवं प्रज्ञापनालेश्यापदे चतुर्थोद्देशकः, स चैवम्–'तावण्णत्ताए तागंध० तारस० ताफासत्ताए भुज्जो २ परिणमंति ?, हंता ! गोयमा ! कण्हलेसा नीललेसं पप्प तारूवत्ताए० भुज्जो २ परिणमइ.' अयमस्य भावार्थः यदा कृष्णलेश्यापरिणतो जीवो नीललेश्यायोग्यानि द्रव्याणि गृहीत्वा कालं कुर्यात् तदा नीललेश्यापरिणत उत्पद्यते, 'जल्लेसाइं दव्वाइं परियाइत्ता कालं करेइ तल्लेसे उववज्जइ' इति वचनाद् , अतः कारणमेव कार्यांस्यात् , 'से केणट्ठेणं भंते ! एवं वुच्चइ–कण्हलेसा नीललेसं पप्प तारूवत्ताए भुज्जो २ परिणमइ ?, गोयमा ! से जहानामए खीरे दूसिं पप्प' तक्रमिति भावः, 'सुद्धे

वा तत्थे रागं पप्प तारूवत्ताए भुज्जो २ परिणमइ, एएणट्ठेणं गोयमा! एवं वुच्चइ–कण्हलेसा' इत्यादि, एतेनैवाभिलापेन नीला कापोतीं कापोती तैजसीं तैजसी पद्मां पद्मा शुक्लां प्राप्य तद्रूपत्वादिना परिणमतीति वाच्यम्, अथ कियद्दूरमुद्देशकोऽयं वाच्य इत्याह–'जावे'त्यादि, परिणामेत्यादिगाथोक्तद्वारपरिसमाप्तिं यावदिति, तत्र परिणामो दर्शित एव, तथा 'वण्ण'त्ति कृष्णादिलेश्यानां वर्णो वाच्यः,स चैवं–'कण्हलेस्सा णं भंते! केरिसगा वण्णेणं पन्नत्तेति, उत्तरं तु कृष्णा जीमूतादिवत्, नीला भृङ्गादिवत्, कापोती कापोतवर्णा खदिरसारादिवत्, तैजसी लोहिता शशकरक्तादिवत्, पद्मा पीता चम्पकादिवत्, शुक्ला(श्वेता)शङ्खादिवत्, 'रस'त्ति कृष्णा तिक्तरसा लिम्बवत्, नीला कटुकरसा नागरवत्, कापोती कषायरसा अपक्वबदरवत्, तेजोलेश्या अम्लमधुरा अपक्वाम्रफलवत्, पद्मा कटुकषायमधुररसा चन्द्रप्रभासुरावत्, शुक्ला मधुररसा गुडादिवत्, 'गंध'त्ति लेश्यागन्धो वाच्यः, आद्यास्तिस्रो दुरभिगन्धाः, अन्त्याश्च तदितराः, 'सुद्ध'त्ति अन्त्याः शुद्धाः, आद्यास्त्वितराः, 'अपसत्थ'त्ति आद्या अप्रशस्ता अन्त्याः प्रशस्ताः 'संकिलिट्ठ'त्ति आद्याः संक्लिष्टाः, अन्त्या अन्याः, 'उण्ह'त्ति अन्त्या उष्णाः स्निग्धाश्च, आद्याः शीता रूक्षाश्च, 'गइ'त्ति आद्या दुर्गतिहेतवः अन्त्याः सुगतिहेतवः,'परिणाम'त्ति लेश्यानां कतिविधः परिणाम इति वाच्यं, तत्रासौ जघन्यमध्यमोत्कृष्टभेदात् त्रिधा उत्पादादिभेदाद्वा त्रिधा, 'पएसि'न्ति आसां प्रदेशा वाच्याः, तत्रानंतप्रदेशकाः प्रत्येकं वाच्या एताः,'ओगाह'त्ति अवगाहना आसां वाच्या, तत्रैता असङ्ख्यातक्षेत्रप्रदेशावगाढाः, 'वग्गण'त्ति वर्गणा आसां वाच्याः, तत्र वर्गणा कृष्णलेश्यादियोग्यद्रव्यवर्गणाः, ताश्चानन्ता औदारिकादिवर्गणावत्, 'ठाण'त्ति तारतम्येन विचित्राध्यवसायनिबन्धनानि कृष्णादिद्रव्यवृन्दानि, तानि चासङ्ख्येयानि, अध्यवसायस्थानानामसङ्ख्यातत्वात्, 'अप्पबहु'त्ति लेश्यास्थानानामल्पबहुत्वं वाच्यं, तच्चैवम्–'एएसि णं भंते!

कण्हलेसाठाणाणं जाव सुक्कलेसाठाणाण य जहन्नगाणं दव्वट्ठयाए ३ कयरे २ हिंतो अप्पा वा ४ ?, गोयमा ! सव्वत्थोवा जहण्णगा काउलेसाठाणा दव्वट्ठयाए जहण्णगा नीललेसाठाणा दव्वट्ठयाए असंखेज्जगुणा जहण्णगा कण्हलेसा० दव्व० असं० जह० पम्हलेसाठाणा दव्व० असंखेज्जहण्णगा तेउलेसाठाणा दव्व० असं० जह० पम्हलेसाठाणा दव्व० असं० जह० सुक्कलेसाठाणा दव्व० असं०' इत्यादीनि ॥ चतुर्थशते दशमः ॥ सम्पूर्णं चतुर्थं शतम् ॥

भगवत्यां चतुर्थशतान्ते लेश्या उक्ताः, पञ्चमशते तु प्रायो लेश्यावन्तो निरूप्यन्ते, एवंसम्बन्धस्यास्योद्देशकस्य सङ्ग्रहगाथेयम्— "चंप रवि १ अणिल २ गंठिय ३ सद्दे ४ छउमा ५ ऽऽउ ६ एअण ७ णियंठे ८। रायगिहं ९ चंपा चंदिमा य १० दस पंचमंमि सए ॥१॥" 'चंपे'ति तत्र चम्पायां रविविषयप्रश्ननिर्णयार्थः प्रथमः, 'अणिल'त्ति वायुविषयो द्वितीयः, 'गंठिय'त्ति जालग्रन्थिकाज्ञातज्ञापनीयार्थनिर्णयपरस्तृतीयः, 'सद्दे'त्ति शब्दविषयप्रश्ननिर्णयार्थश्चतुर्थः, 'छउम'त्ति छद्मस्थवक्तव्यतार्थः पञ्चमः, 'आउ'त्ति आयुषोऽल्पत्वादिवाच्यार्थः षष्ठः, 'एयण'त्ति पुद्गलानामेजनाद्यर्थवाच्यः सप्तमः, 'णियंठे'त्ति निर्ग्रन्थीपुत्राभिधानानगारविहितसुविचारसारोऽष्टमः, 'रायगिहं'ति राजगृहनगरविचारपरो नवमः, 'चंपा चंदिमा य'त्ति चम्पायां चन्द्रवक्तव्यतार्थो दशमः, तत्र प्रथमोद्देशके किञ्चिल्लिख्यते—'सूरिय'त्ति द्वौ रवी, जम्बूद्वीपे द्वयोरेव भावात्, 'उदीणपाईणं'ति उदगेव उदीचीनं प्रागेव प्राचीनं, उदीचीनं तदुदीच्यासन्नत्वात् प्राचीनं तत्प्रत्यासन्नत्वात्, उदीचीनप्राचीनं दिगन्तरं, क्षेत्रदिगपेक्षया पूर्वोत्तरदिगित्यर्थः, 'उग्गच्छ'त्ति उद्गत्य क्रमेण तत्रोद्गमनं कृत्वा 'पाईणदाहिणं'ति प्राचीनदक्षिणं दिगन्तरं, पूर्व-

दक्षिणमिति, 'आगच्छंति'त्ति आगच्छतः, क्रमेणैवास्तं यात इति, इह चोद्गमनमस्तमयं च द्रष्टृलोकविवक्षयाऽवसेयं, तथाहि— येषामदृश्यौ सन्तौ दृश्यौ तौ रवी स्यातां ते तयोरुद्गमनं व्यवहरन्ति, येषां तु दृश्यौ सन्तावदृश्यौ स्यातां तयोरस्तमनं व्यवहरन्ति इत्यनियतावुदयास्तमयौ, आह च—"जह २ समए २ पुरओ संचरइ भक्खरो गयणे। तह २ पुरओऽवि नियमा जायइ रयणीय भावत्थो ॥१॥ एवं च सइ नराणं उदयत्थमणाइं होंतऽनिययाइं। सइ दिसिभेए कस्स य किंची ववदिस्सए नियमा ॥ २ ॥ सइ चेव य निद्दिट्ठो, भद्दमुहुत्तो कमेण सव्वेसिं। केसिंची दाणिंपिय विसयपमाणो रवी जेसिं ॥३॥" इत्यादि, अनेन च सूर्यस्य चतसृषु दिक्षु गतिरुक्ता, ततश्च ये मन्यन्ते सूर्यः पश्चिमसमुद्रं प्रविश्य पाताले गत्वा पुनः पूर्वसमुद्रे उदेति तन्मतं निषिद्धं, इह च सूर्यस्य सर्वतो गमनेऽपि प्रतिनियतत्वात् प्रकाशस्य रात्रिंदिवसविभागोऽस्ति, तं क्षेत्रभेदेन दर्शयन्नाह—'जया णं'ति (सू. १७६) इह सूर्यद्वयभावादेकदैव दिग्द्वये दिवस उक्तः, इह यद्यपि दक्षिणार्द्धे तथा उत्तरार्द्धे इत्युक्तं तथाऽपि दक्षिणभागे उत्तरभागे चेति बोद्धव्यं, अर्द्धशब्दस्य भागमात्रार्थत्वात्, यतो यदि दक्षिणार्द्धे उत्तरार्द्धे च समग्र एव दिवसः स्यात् तदा कथं पूर्वेणापरेण च रात्रिः स्यात् इति वक्तुं युज्येत ?, अर्द्धद्वयग्रहणेन सर्वक्षेत्रस्य गृहीतत्वात्, इतश्च दक्षिणार्द्धादिशब्देन दक्षिणादिभागमात्रमवसेयं, न त्वर्द्धं, यतो यदापि दक्षिणोत्तरयोः सर्वोत्कृष्टो दिवसः स्यात् तदापि जम्बूद्वीपस्य दशभागत्रयप्रमाणमेव तापक्षेत्रं तयोः प्रत्येकं स्यात्, दशभागद्वयमानं च पूर्वपश्चिमयोः प्रत्येकं रात्रिक्षेत्रं स्यात्, तथाहि—षष्ट्या मुहूर्त्तैः किल सूर्यो मण्डलं वृत्ताकारं जम्बूद्वीपं पूरयति, उत्कृष्टदिनं चाष्टादशभिर्मुहूर्त्तैरुक्तः, अष्टादश च षष्टेर्दशभागत्रितयरूपाः स्युः, यदाऽष्टादशमुहूर्तो दिवसस्तदा रात्रिर्द्वादशमुहूर्त्ता स्यात्, द्वादश च षष्टेर्दशभागद्वयरूपाः स्युः, तत्र च मेरुं प्रति नव योजनसहस्राणि चत्वारि शतानि षडशीत्यधिकानि ९४८६ ^{९}_{१०}

भागा नव च दशभागयोजनस्येत्येतत् सर्वोत्कृष्टदिवसे दशभागत्रयरूपं तापक्षेत्रप्रमाणं स्यात्, कथं ?, मन्दरपरिक्षेपस्य किञ्चिन्न्यूनत्रयोविंशत्यूनस्य ३१६२३ शताधिकैकत्रिंशद्योजनसहस्रमानस्य दशभिर्भागे हृते यल्लब्धं तस्य त्रिगुणितत्वे एतस्य भावादिति । तथा लवणसमुद्रं प्रति चतुर्नवतियोजनानां सहस्रं ९४८६८ ४/१० अष्टौ शतानि अष्टषष्ट्यधिकानि चत्वारश्च दशभागयोजनस्येत्येतदुत्कृष्टदिने तापक्षेत्रप्रमाणं स्यात्, कथं ?, जम्बूद्वीपपरिधेः किञ्चिन्न्यूनाष्टाविंशत्युत्तरशतद्वयाधिकषोडशसहस्रोपेतयोजनलक्षत्रयमानस्य ३१६२२८ दशभिर्भागे यल्लब्धं तस्य त्रिगुणितत्वे एतस्य भावादिति, जघन्यरात्रिक्षेत्रपरीमाणं चाप्येवमेव, नवरं परिधेर्दशभागो द्विगुणः कार्यः, तत्राद्यः षट् योजनानां ६३२४ ६/१० सहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि षट् च भागा दशभागयोजनस्य. द्वितीयं तु त्रिषष्टिः सहस्राणि द्वे पञ्चचत्वारिंशदधिके योजनानां शते षट् भागा दशभागयोजनस्य ६३२४५ ६/१० सर्वलघौ च दिने तापक्षेत्रमनन्तरोक्तरात्रिक्षेत्रतुल्यं, रात्रिक्षेत्रं त्वनन्तरोक्ततापक्षेत्रतुल्यमिति, आयामतस्तु तापक्षेत्रं जम्बूद्वीपमध्ये पञ्चचत्वारिंशद्योजनसहस्राणि, लवणे च त्रय ३३३३३ १/३ स्त्रिंशत्सहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि एकभागश्च त्रिभागयोजनस्य, उभयमीलने तु अष्टसप्ततिः सहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि योजनत्रिभागश्चेति ७८३३३ १/३ । 'उक्कोसए अट्ठारसमुहुत्ते दिवसे हवइ'त्ति इह किल सूर्यस्य चतुरशीत्यधिकं मण्डलशतं स्यात्, तत्र किल जम्बूद्वीपमध्ये पञ्चषष्टिर्मण्डलानि स्युः, एकोनविंशत्यधिकं च शतं मण्डलानां लवणसमुद्रमध्ये भवति, तत्र सर्वाभ्यन्तरे मण्डले यदा वर्त्तते सूर्यस्तदा अष्टादशमुहूर्त्तो दिवसो भवति, यदा सर्वबाह्ये मण्डले वर्त्तते रविस्तदा सर्वजघन्यो द्वादशमुहूर्त्तो दिवसो भवति, अष्टादश मुहूर्त्ताः कथं स्युः ?, उच्यते, द्वितीयमण्डलादारभ्य प्रतिमण्डलं द्वाभ्यां एकषष्टिभागरूपमुहूर्त्तस्य त्र्यशीत्यधिकशत-

तममण्डले पट् मुहूर्त्ता वर्द्धन्त इत्येवमष्टादशमुहूर्त्तो दिवसः स्यात्, अत एव द्वादशमुहूर्त्ता रात्रिः स्यात्, त्रिंशन्मुहूर्त्तत्वादहोरात्रस्य, 'अट्ठारसमुहुत्ताणंतरे'त्ति यदा सर्वाभ्यन्तरमण्डलानन्तरे मण्डले वर्त्तते सूर्यस्तदा मुहूर्त्तैकषष्टिभागद्वयहीनोऽष्टादशमुहूर्त्तो दिवसः स्यात्, स चाष्टादशमुहूर्त्तादिवसादनन्तरोऽष्टादशमुहूर्त्तानन्तर इति व्यपदिश्यते, 'साइरेगा दुवालसमुहुत्ता राइ'त्ति द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः स्यात्, यावता भागेन दिनं हीयते तावता रात्रिर्वर्द्धते, त्रिंशन्मुहूर्त्तत्वादहोरात्रस्येति, 'एवं एएणं कमेणं'ति एतेनानन्तरोक्तेन 'जया णं भंते! जंबुद्दीवे २ दाहिणड्ढे' इत्यनेन 'ओसारेयव्वं'ति दिनमानं ह्रस्वीकार्यं, तदेव दर्शयति–'सत्तरसे'त्यादि, तत्र सर्वाभ्यन्तरमण्डलानन्तरमण्डलादारभ्यैकत्रिंशत्तममण्डलार्द्धे यदा सूर्यस्तदा सप्तदशमुहूर्त्तो दिवसः स्यात्, पूर्वोक्तहानिक्रमेण त्रयोदशमुहूर्त्ता च रात्रिरिति, 'सत्तरसमुहुत्ताणंतर'त्ति मुहूर्त्तैकषष्टिभागद्वयहीनसप्तदशमुहूर्त्तप्रमाणो दिवसो यत् द्वितीयादारभ्य द्वात्रिंशत्तममण्डलार्द्धे स्यात्, एवमनन्तरत्वमन्यत्राप्यूह्यम्, 'साइरेगतेरसमुहुत्ता राइ'त्ति मुहूर्त्तैकषष्टिभागद्वयेन सातिरेकत्वं, एवं सर्वत्र, 'सोलसमुहुत्ते दिवसे'त्ति द्वितीयादारभ्यैकषष्टितममण्डले १६ मुहूर्त्तो दिवसः स्यात्, 'पन्नरसमुहुत्ते दिवसे'त्ति द्विनवतितममण्डलार्द्धे वर्त्तमाने रवौ, 'चउद्दसमुहुत्ते दिवसे'त्ति द्वाविंशत्युत्तरशततमे मण्डले, 'तेरसमुहुत्ते'त्ति सार्द्धद्विपञ्चाशदुत्तरशततमे मण्डले, 'बारसमुहुत्ते'त्ति त्र्यशीत्यधिकशततमे मण्डले, सर्वबाह्य इत्यर्थः॥ कालाधिकारादिदमाह–'जया णं भंते! जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमे समए पडिवज्जइ' इत्यादि, (सू. १७७) 'वासाणं'ति चतुर्मासप्रमाणवर्षाकालस्य सम्बन्धी प्रथमः–आद्यः समयः–क्षणः प्रतिपद्यते–संपद्यते, भवति इत्यर्थः, 'अणंतरपुरेक्खडे समयंसि'त्ति अनन्तरो निर्व्यवधानो दक्षिणार्धवर्षाप्रथमतापेक्षया, स चातीतोऽपि स्यादत आह–

पुरस्कृतः–पुरोवर्ती, भविष्यन्नित्यर्थः, समयः प्रतीतः, ततः पदत्रयस्य कर्मधारयः तत्र, 'अणंतरपच्छाकडे समयंसि'त्ति पूर्वापरविदेहवर्षाप्रथमसमयापेक्षया योऽनन्तरः पश्चात्कृतः–अतीतः समयस्तत्र दक्षिणोत्तरयोर्वर्षाकालप्रथमसमयः स्यात्, 'एवं जहा समएणं'ति इत्यादि, आवलिकाभिलापश्चैवम्–'जया णं भंते! जंबुद्दीवे २ दाहिणड्ढे वासाणं पढमा आवलिया पडिवज्जइ जया णं उत्तरड्ढेवि, जया णं उत्तरड्ढे वासाणं पढ० तया णं जंबु० मंदरपव्वयस्स पुरच्छिमपच्चच्छिमे णं अणंतरपुरक्खडसमयंसि वासाणं पढमावलिया पडिवज्जइ? हंता! गोयमे'त्यादि, एवमानप्राणादिषु पदेष्वपि, आवलिकाद्यर्थः पुनरेवं–आवलिका–असङ्ख्यातसमयात्मिका आनप्राणः—उच्छ्वासनिःश्वासकालः स्तोकः–सप्तप्राणप्रमाणो लवस्तु–सप्तस्तोकरूपः, मुहूर्त्तः पुनः लवसप्तसप्ततिमितः ऋतुस्तु मासद्वयमानः 'हेमंताणं'ति शीतकालस्य 'गिम्हाणं'ति उष्णकालस्य, 'पढमे अयणे'त्ति दक्षिणायनं, श्रावणादित्वात् संवत्सरस्य, षण्मासीं यावद्दक्षिणायनमिति, एवमुत्तरायणमपि, 'जुगेणवि'त्ति युगं–पञ्चसंवत्सरमानं 'पुव्वेण व'त्ति पूर्वांगं ८४ वर्षलक्षाणां, 'पुव्वेण व'त्ति पूर्वं पूर्वाङ्गमेव ८४ वर्षलक्षगुणितं, एवमग्रेऽपि ८४ वर्षलक्षगुणितमुत्तरोत्तरं स्थानं स्यात्, चतुर्णवत्यधिकं शताङ्कशतमन्तिमे स्थाने स्यादिति, 'पढमा ओसप्पिणि'त्ति अवसर्पयति भावानित्येवंशीला अवसर्पिणी तस्याः प्रथमो विभागः प्रथमा अवसर्पिणी 'उस्सप्पिणि'त्ति उत्सर्पयति भावानित्येवंशीला उत्सर्पिणी ॥ पञ्चमशते प्रथम उद्देशकः ॥

प्रथमोद्देशके दिक्षु दिवसादिविभाग उक्तः, द्वितीये तु तास्वेव वातं प्रतिपिपादयिषुर्वातभेदांस्तावदभिधातुमाह–'अत्थि'त्ति (सू. १७९) अस्त्ययमर्थो यदुत वाता वान्ति, कीदृशा इत्याह–'ईसिं पुरेवाय'त्ति मनाक् सस्नेहवाताः, 'पच्छावाय'त्ति पथ्या–वनस्पत्यादिहिता वाताः, 'मंदा वाय'त्ति मन्दाः–शनैः सञ्चारिणोऽमहावाताः 'महावाय'त्ति उद्दण्डवाता अनल्पाः, 'पुरत्थिमे-

णं'ति मेरोः पूर्वदिशि, एवमेतानि दिग्विदिगपेक्षयाऽष्टौ सूत्राणि ॥ उक्तं दिग्भेदतो वातानां वानं, अथ दिशामेव परस्परोपनिबन्धेन तदाह-'जया णं'ति इह च द्वे दिक्सूत्रे द्वे विदिक्सूत्रे ॥ अथ प्रकारान्तरेण वातस्वरूपनिरूपणसूत्रं, तत्र 'दीविच्चगा'त्ति द्वीपा द्वीपसम्बन्धिनः 'सामुद्दिय'त्ति समुद्रस्यैते सामुद्रिकाः,'अन्नमन्नविवच्चासेणं'ति अन्योऽन्यव्यत्यासेन, यदैके ईषत्पुरोवातादि-विशेषणा वाता वान्ति तदेतरे न तथाविधा वान्तीति, 'वेलं नाइक्कमंति' तथाविधवातद्रव्यसामर्थ्याद्वेलायाः तथास्वभावत्वाच्चेति । अथ वातानां वाने प्रकारत्रयं सूत्रत्रयेण दर्शयन्नाह-'अत्थि णं'मित्यादि, 'अहारियं'ति रीतं रीतिः स्वभावः तस्यानतिक्रमेण यथारीतं गच्छति, यथास्वाभाविकया गत्या गच्छति,'उत्तरकिरियं'ति वायुकायस्य हि मूलशरीरमौदारिकं, उत्तरं तु वैक्रियं, अतः उत्तरा उत्तरशरीराश्रया गतिलक्षणा क्रिया यत्र गमने तदुत्तरक्रियम् तद्यथा भवतीत्येवं 'रीयं रीयते' गच्छति, इह चैकसूत्रेणैव वायुवानकारणत्रयस्य वक्तुं शक्यत्वे यत् सूत्रत्रयकरणं तद् विचित्रत्वात् सूत्रगतेरिति मन्तव्यं, वाचनान्तरे त्वाद्यं कारणं महावात-वर्जितानां द्वितीयं तु मन्दवातवर्जितानां तृतीयं तु चतुर्णामप्युक्तं ॥ वायुकायाधिकारादेवेदमाह-'वाउआए णं'मित्यादि,'जहा खंदए' तत्र प्रथमो दर्शित एव, 'अणेगे'त्यादि द्वितीयः, स चैवम्-वाउयाए णं भंते ! वाउयाए चेव अणेगसयसहस्सखुत्तो उद्दा-इत्ता २ तत्थेव भुज्जो २ पच्चायाइ ?, हंता ! गो० !, 'पुट्ठे उद्दाइ'त्ति तृतीयः, स चैवम्-'से भंते ! किं पुट्ठे उद्दाइ' ? अपुट्ठे० ?, गो० ! पुट्ठे उद्दाइ, नो अपुट्ठे' 'ससरीरी'त्यादिश्चतुर्थः, स चैवम्-से भंते ! किं ससरीरी निक्खमइ, असरीरी नि० ?, गो० ! सिय ससरीरी'त्ति, वायुकायश्चिन्तितः । अथ वनस्पतिकायादीन् शरीरतश्चिन्तयन्नाह-'एएणं'ति एतानि 'किंसरीरं'त्ति (सू० १८०) केषां शरीराणि किंशरीराणि, 'सुराए य जे घणे'त्ति सुरायां द्वे द्रव्ये स्यातां-घनद्रव्यं द्रवद्रव्यं च, तत्र यद् घनद्रव्यं 'पुव्व-

'भावपन्नवणं पडुच'त्ति अतीतपर्यायप्रज्ञापनामङ्गीकृत्य वनस्पतिशरीराणि, पूर्वं हि ओदनादयो वनस्पतयः 'तओ पच्छ'त्ति
वनस्पतिजीवशरीरव्यपदेशानन्तरं अग्निजीवशरीराणीति वक्तव्यं स्यादिति, किंभूतानि सन्तीत्याह–'सत्थातीय'त्ति शस्त्रेण–उदू-
खलमुशलयन्त्रकादिना अतीतानि—अतिक्रान्तानि पूर्वपर्यायमिति शस्त्रातीतानि, 'सत्थपरिणामिय'त्ति शस्त्रेण परिणामितानि-
कृताभिनवपर्यायाणि शस्त्रपरिणामितानि, 'अगणिज्झामिय'त्ति वह्निना ध्यामितानि-श्यामीकृतानि, स्ववर्णत्याजनात्, 'अग-
णिज्झुसिय'त्ति अग्निझोषितानि. पूर्वस्वभावक्षपणात्, अग्निसेवितानि वा 'जुषी प्रीतिसेवनयो'रित्यस्य धातुपाठात्, 'अगणिपरि-
णामियाइं'ति अग्निपरिणामितानि. औष्ण्ययोगादिति, 'उवले'त्ति दग्धः पाषाणः, 'कसवट्टिय'त्ति कषपट्टः 'अट्ठिज्झामि'त्ति
अस्थि च तद् ध्यामं च–अग्निना ध्यामलीकृतं आपादितपर्यायान्तरमिति, 'इंगालो' ज्वलितेन्धनः, 'छारिय'त्ति क्षारिकं–भस्म,
'तुसे'त्ति तुषं 'गोमए'त्ति छगणं, इह तुषगोमयौ भूतपर्यायानुवृत्त्या दग्धावस्थौ ग्राह्यौ, अन्यथा अग्निध्यामितादिविशेषणाना-
मनुपपत्तिः स्यात्, एते पूर्वभावप्रज्ञापनां प्रतीत्य एकेन्द्रियजीवैः शरीरतया प्रयोगेण–स्वव्यापारेण परिणामिताः ये ते तथा,
एकेन्द्रियशरीराणीत्यर्थः. अपिः समुच्चये. यावत्करणात् द्वीन्द्रियजीवशरीरप्रयोगपरिणामिता अपीत्यादि दृश्यं, द्वीन्द्रियादिजीव-
शरीरपरिणतत्वं च यथासम्भवमेव, न तु सर्वपदेष्विति, तत्र पूर्वमङ्गारो भस्म च एकेन्द्रियादिशरीररूपम्, एकेन्द्रियादिशरीराणा-
मिन्धनत्वात्, तुसं तु यवगोधूमहरितावस्थायामेकेन्द्रियशरीरं, गोमयस्तु तृणाद्यवस्थायां एकेन्द्रियशरीरं, द्वीन्द्रियादीनां तु गवा-
दिभिर्भक्षणे द्वीन्द्रियादिशरीरमपि ॥ पृथिव्यादिकायाधिकारादप्कायस्य लवणोदधेः स्वरूपमाह–'लवणे'इत्यादि,(सू. १८१)'जाव-
लोगट्ठिइ'त्ति, तदेवम्, 'केवइयं परिक्खेवेणं ?, गोयमा! दो जोयणसयसहस्साइं चक्कवालविक्खंभेणं, पन्नरस सयसहस्साइं इक्-

सीइं च सहस्सा सयं च इगुयालं किंचिविसेसूणं परिक्खेवेणं पण्णत्ते,' इत्यादि, एतस्यां 'ता कम्हा णं भंते ! लवणसमुद्दे जंबुद्दीवं २ नो उव्वीलेइ' इत्यादिप्रश्ने 'गोयमा ! जंबुद्दीवे २ भरहेरवएसु वासेसु अरहंता चक्कवट्टी'त्यादि, उत्तरग्रन्थस्यान्ते 'लोगट्ठिई' इत्यादि, द्रष्टव्यमिति ॥ पञ्चमे शते द्वितीय उद्देशकः ॥

तृतीयोद्देशकादिसूत्रमिदमाह—'जालगंठिय'त्ति (सू. १८२) जालं—मत्स्यबन्धनं तस्येव ग्रन्थयो यस्यां सा जालग्रन्थिका-जालिका, किंस्वरूपा सेत्याह—'आणुपुव्विगढिय'त्ति आनुपूर्व्या—परिपाट्या, आद्युचितग्रन्थीनामादौ विधानाद् अन्तोचितानां च क्रमेण अन्त एव करणात् 'आणंतरगढि'त्ति प्रथमग्रन्थीनामनन्तरव्यवस्थापितग्रन्थिभिस्सह ग्रथिताः,एवं परम्परैः—व्यवहितैस्सह ग्रथिताः,'अन्नमन्न'त्ति अन्योऽन्यं—मिथः एकेन ग्रन्थिना सहान्यो ग्रन्थिः अन्येन च सहान्य इत्यन्योऽन्यग्रथिताः,'अन्नमन्नगुरुय'त्ति अन्योऽन्येन ग्रथनात् गुरुकता—विस्तीर्णता तया, 'अन्नमन्नभारिय'त्ति अन्योऽन्यस्य यो भारः स विद्यते यत्र तदन्योऽन्यभारिकं तद्भावस्तत्ता तया, 'अन्नमन्नगुरुयसंभारिय'त्ति अन्योऽन्येन गुरुकं यत् संभारिकं च तत्तथा तद्भावस्तत्ता तया, 'अन्नमन्नघड'त्ति अन्योऽन्यं घटा—समुदायरचना यत्र तदन्योऽन्यघटं तद्भावस्तत्ता तया 'चिट्ठइ'त्ति आस्ते, अयं दृष्टान्तः, अथ दार्ष्टान्तिक उच्यते—"एवामेव'त्ति अनेनैव न्यायेन 'बहूसु आजाइसहस्सेसु'त्ति अनेकेषु देवादिजन्मसु प्रतिजीवं क्रमेण प्रवृत्तेषु बहून्यायुष्कसहस्राणि, तत्स्वामिजीवानां आजातीनां च बहुसहस्रसङ्ख्यत्वात्, आनुपूर्वीग्रथितानीति पूर्ववद् व्याख्येयं, अथैतेषामायुषां को वेदनविधिरित्याह—'एगेऽवि ये'त्यादि, एकोऽपि जीव एकेन समयेनेत्यादि प्रथमशतवत्, अत्रोत्तरं—'जे ते' इत्यादि, मिथ्यात्वं चैषामेवं—यानि हि बहूनि आयूंषि बहूनां जालग्रन्थिकावत्तिष्ठन्ति तानि य(त)था

न्तर्जीवप्रदेशेषु सम्बद्धानि असंबद्धानि वा ?, यदि सम्बद्धानि तदा कथं भिन्नदेशावस्थितानां तेषां जालग्रन्थिकाकल्पना कल्पयितुं शक्या, तथापि तत्कल्पने जीवानामपि जालग्रथिकाकल्पत्वं स्यात्, तत्सम्बद्धत्वात्, तथा च सर्वजीवानां सर्वायुस्संवेदनेन सर्वभवानुभवनप्रसङ्गः, अथ जीवानामसम्बद्धान्यायूंषि तदा तद्वशाद्देवादिजन्म इति न स्याद्, असम्बद्धत्वादेवेति, यच्चोक्तं-एको जीव एकेन समयेन द्वे आयुषी वेदयति, तदपि मिथ्या, आयुर्द्वयसंवेदने युगपद्भवद्वयप्रसङ्गादिति, 'एगमेगस्स'त्ति एकैकस्य जीवस्य, नतु बहूनां, बहुष्वाजातिसहस्रेषु क्रमवृत्तिअतीतकालिकेषु तत्काऽपेक्षया सत्सु बहून्यायुःसहस्राणि अतीतानि वर्त्तमानभवान्तानि अन्यभविकमन्यभविकेन प्रतिबद्धं इत्येवं सर्वाणि मिथःप्रतिबद्धानि स्युः, न पुनरेकभव एव बहूनि, 'इहभवियाउ'त्ति वर्त्तमानभवायुः 'परभवियाउ'त्ति परभवप्रायोग्यं यद्वर्त्तमानभवनिबद्धं, तच्च परभवे गतो यदा वेदयति तदा व्यपदिश्यते 'परभवियाउयं व'त्ति 'कहिं कडे'त्ति क्व भवे बद्धं ?, 'समाइण्णे'त्ति, समाचरितं, तद्धेतुसमाचरणात् 'जे जंभविए जोणिं उववज्जित्तए'त्ति यो यस्यां योनावुत्पत्तुं योग्य इति, 'दुविहे'त्ति सम्मूर्च्छिमगर्भव्युत्क्रान्तिकभेदान् द्विधा, 'चउविहं'ति चतुर्विधं भवनपत्यादिभेदादिति ॥ पञ्चमशते तृतीय उद्देशकः ॥

'आउडिज्जमाणाइं'ति (सू० १८४) 'जुड बन्धने' इति धातोः आजोड्यमानेभ्यः-सम्बध्यमानेभ्यो मुखहस्तदण्डादिना सह शङ्खपटहझल्लर्यादिवाद्येभ्यः, आकुट्यमानेभ्यो वा एभ्य एव, ये जाताः शब्दास्ते आजोड्यमाना आकुट्यमाना एव वा उच्यन्ते, अतस्तानाजोड्यमानानाकुट्यमानान् वा शब्दान् शृणोति, इह प्राकृतत्वाच्छन्दस नपुंसकता, अथवा 'आउडिज्जमाणाइं'ति आकुट्यमानानि निर्घोजनिहन्यमानानि शब्दानि-शब्दद्रव्याणि, 'संखिय'त्ति शङ्खिका-ह्रस्वशङ्खः 'खरमुहे'त्ति काहला 'पोया'महती काहला

'पिरिपिरिया' कोलिकपुटकावनद्धमुखो वाद्यविशेषः, 'पणव'त्ति भाण्डपटहः लघुपटहो वा 'भंभ'त्ति ढक्का 'होरंभ'त्ति रूढि-गम्या, 'भेरि'त्ति महाढक्का 'झल्लरि'त्ति वलयाकारा 'दुन्दुहि' देववाद्यं 'तताणि'त्ति, ततं वीणादिकं ज्ञेयं, विततं पटहादिकम् । घनं तु कांश्यतालादि, वंशादि शुषिरं मत ॥१॥' मिति, 'पुट्ठाइं'ति प्रथमशते आहाराधिकारवदवसेयं. 'आरगयाइं'ति आराद्-भागस्थितान् इन्द्रियगोचरमागतान् 'पारगयाइं'ति इन्द्रियविषयात्परतोऽवस्थितान् 'सव्वदूरमूलमणंतियं'ति सर्वथा दूरं-विप्रकृष्टं मूलं च-निकटं सर्वदूरमूलं तद्योगाच्छब्दोऽपि सर्वदूरमूलोऽतस्तं, अत्यर्थदूरवर्त्तिनमत्यन्तासन्नं चेत्यर्थः, अंतिकमासन्नं च, तन्नि-षेधादनन्तिकं, नञोऽल्पार्थत्वान्नात्यन्तमन्तिकं अदूरासन्नमिति भावः, तद्योगाच्छब्दोऽप्यनान्तिकोऽतस्तं, अथवा 'सव्व'त्ति सर्वतः-समन्तात् दूरमूलं, अनादिकमिति हृदयं, 'अणंतियं' अनन्तिकमिति 'मियं'ति परिमाणवत्, गर्भजमनुष्यजीवद्रव्यादि, 'अमियं'ति अनन्तमसङ्ख्येयं वा वनस्पतिपृथ्वीजीवद्रव्यादि, 'निव्वुडे'त्ति निर्वृत्तं निरावरणज्ञानं, केवलिनः क्षायिकत्वाच्छुद्धमिति; वाचनान्तरे तु 'निव्वुडे वि'तिमिरे विसुद्धेइति पाठो वा ॥ 'उस्सूयाइज्ज'त्ति (सू० १८५) उत्सुकायेत-उत्सुको भवेत्, विषयादानं प्रत्यौत्सुक्यं कुर्यादिति, 'जण्णं जीव'त्ति यस्माज्जीवः, 'से णं'ति तच्चारित्रमोहनीयं कर्म केवलिनो नास्ति, एवं वैमानिकान् यावत् नारकादिदण्डको वाच्यः, स चैवम्-'णेरइए णं भंते ! हसमाणे उस्सुयमाणे कइ कम्मपगडीओ बंधइ ?, गो० ! सत्तविहबंधए वा अट्ठविहबंधए वा' इत्यादि, इह च पृथिव्यादीनां हासः प्राग्भविकतत्परिणामादवसेयः, 'पोहत्तिएहिं'ति पृथक्त्वसूत्रेषु-बहुवचनसूत्रेषु 'जीवा णं भंते ! हसमाणा वा उस्सुयमाणा वा कइ क० बंधंति ?, सत्तविहबंधगावि अट्ठविहबंधगावि', 'जीवेगिंदियवज्जो'त्ति जीवपदमेकेन्द्रियपदानि पृथिव्यादीनि च वर्जयित्वा अन्येषु एकोनविंशतौ नारकादिपदेषु त्रिकभङ्गो-भङ्गत्रयं वाच्यं, यतो

जीवपदे पृथिव्यादिपदेषु च बहवो जीवानां सप्तविधबन्धका अष्टविधबन्धकाश्चेत्येक एव भङ्गो लभ्यते, नारकादिषु तु त्रयं, तथाहि—सर्वे एव सप्तविधबन्धकाः स्युरित्येकः, सप्तविधबन्धका अष्टविधबन्धकश्चेति द्वितीयः, सप्तविधबन्धका अष्टविधबन्धकाश्चेति तृतीयः, 'निद्दाएज्ज'त्ति निद्रां—सुखप्रतिबोधलक्षणां कुर्यात् निद्रायेत, 'पयलाएज्ज'त्ति प्रचलां—ऊर्ध्वस्थितनिद्राकरणलक्षणां कुर्यात् प्रचलायेत, 'इत्थीगब्भं'ति (सू. १८६) स्त्रीसम्बन्धी गर्भः—सजीवपुद्गलपिण्डः स्त्रीगर्भस्तं, 'संहरमाणे'त्ति अन्यत्र नयन्, इह चतुर्भङ्गी—गर्भाद् गर्भाशयादित्यर्थः गर्भं गर्भाशयान्तरं संहरति—प्रवेशयति इत्येकः, गर्भाद् अवधेर्योनिं—गर्भनिर्गमद्वारं संहरति योन्या उदरान्तरं प्रवेशयति २ तथा योनितो—योनिद्वारेण गर्भं संहरति ३ तथा योनीतो—योनिसकाशात् योनिं संहरति—नयति, योन्या—उदरान्निष्काश्य योनिद्वारेणैवोदरान्तरं प्रवेशयतीत्यर्थः ४, एतेषु शेषनिषेधेन तृतीयमनुजानन्नाह—'परामुसिय'त्ति परामृश्य २ तथाविधकरव्यापारेण संस्पृश्य स्त्रीगर्भं अव्याबाधमव्याबाधेन सुखंसुखेन योनिद्वारेण निष्काश्य गर्भं—गर्भाशयं संहरति, यच्चेह योनितो निर्गमनं स्त्रीगर्भस्योक्तं तल्लोकव्यवहारानुवर्त्तनात्, तथाहि—निष्पन्नोऽनिष्पन्नो वा गर्भः स्वभावाद्योन्यैव निर्गच्छति इति, अथ सामर्थ्यं दर्शयति—नखाग्रे 'साहरित्तए' संहर्तुं—प्रवेशयितुं 'नीहरित्तए' नखशिरसो रोमकूपाद्वा निर्हर्तुं—निष्काशयितुं 'छविच्छेदं'ति गर्भस्य हि छविच्छेदमकृत्वा नखादौ प्रवेशयितुमशक्यत्वात्, 'एसुहुमं णं'ति इतिसूक्ष्मं—इतिलघ्विति। 'कुमारसमणे'त्ति (सू.१८७) षड्वर्षजातस्य तस्य प्रव्रजितत्वात्, आह—'छव्वरिसो पव्वइओ निग्गंथं रोइऊण पावयणं'ति, एतदेवाश्चर्यं, अन्यथा वर्षाष्टकादारात् दीक्षा स्यात्, 'कक्खग'त्ति कक्षायां प्रतिग्रहं रजोहरणमादाय 'नाविया मे' नौका—द्रोणी मे—ममेयमिति, 'अदक्खु'त्ति अद्राक्षुः—दृष्टवन्तः, ते च क्षुल्लकोचितां चेष्टां दृष्ट्वा तमुपहसन्त इव भगवन्तं पप्रच्छुः, 'हीलेह' जात्युद्घाटनतः,

निन्दह मनसा 'खिंस'त्ति जनसमक्षं, 'गरह'त्ति अन्यजनसमक्षं 'अवमन्नह'त्ति तदुचितप्रतिपत्त्यकरणेन 'परिभवह'त्ति परिभवः—समस्तपूर्वोक्तपदकरणेन अग्लान्या—अखेदेन 'संगिण्हह' सङ्गृण्हीत—स्वीकुरुत, 'उवगिण्हह' उपगृण्हीत—उपष्टम्भं कुरुत, 'अंतकर'त्ति भवच्छेदकरः, स च दूरतरभवेऽपि स्यादत आह—'अंतिमसरीर'त्ति चरमशरीर इति, 'झाणंतरियाए'त्ति अन्तरस्य—विच्छेदस्य करणमन्तरिका ध्यानस्यान्तरिका ध्यानान्तरिका, आरब्धध्यानस्य समाप्तिरपूर्वस्यानारम्भणमिति भावः, तस्यां वर्त्तमानस्य ॥'कप्पाओ'(सू.१८८)कल्पाद्—देवलोकात् 'सग्गाओ'त्ति स्वर्गाद्—देवलोकदेशात् प्रस्तटात् 'विमाणाओ'प्रस्तटैकदेशात् 'वागरणाइं' व्याक्रियन्त इति व्याकरणानि—अर्थाः अधिकृता एव, 'देवाणं'ति (सू. १८९) 'से किं खाईणं भंते! देवा इय वत्तव्वं सिय'त्ति से इति अथार्थः, खाई पुनरर्थः, णमिति वाक्यालङ्कारे, देवा इति यद्वस्तु तद्वक्तव्यं स्यात्, 'नोसंयता' इत्येतद्वक्तव्यं स्यात्, असंयतशब्दपर्यायत्वेऽपि नोसंयतशब्दस्यानिष्ठुरवचनत्वात्, मृतशब्दापेक्षया परलोकीभूतशब्दवदिति, 'विसिस्सइ'त्ति (सू. १९०) विशिष्यते–विशिष्टा स्यात्, 'अद्धमागह'त्ति भाषा षड्विधा, यथा प्राकृतसंस्कृतशौरसेनीमागधीपैशाचीअपभ्रंशरूपाः, तत्र मागधभाषालक्षणं किञ्चित्किञ्चिच्च प्राकृतभाषालक्षणमस्यामस्ति सा अर्धं मागध्या इति व्युत्पत्त्याऽर्द्धमागधी 'उवासगस्स'त्ति (सू. १९१) केवलिनमुपास्ते यः श्रवणाकाङ्क्षी तदुपासनामात्रपरः सन्नसौ केवल्युपासकः, 'तप्पक्खियस्स'त्ति केवलिपाक्षिकस्य स्वयंबुद्धस्येति, 'पमाणे'त्ति (सू. १९०) प्रमीयते येनार्थस्तत्प्रमाणं 'पच्चक्खे' अक्षं—जीवं प्रति गतं प्रत्यक्षं 'अणुमाणे' अनु—लिङ्गग्रहणसम्बन्धस्मरणादेः पश्चात् मीयतेऽनेनेत्यनुमानं 'ओवम्मे' उपमीयते—सदृशतया गृह्यते वस्तु अनयेत्युपमा सैव औपम्यं 'आगमि'त्ति गुरुपारम्पर्येणैतीत्यागमः, द्विविधं प्रत्यक्षं—इन्द्रियप्रत्यक्षं नोइन्द्रियप्रत्यक्षं च,

तत्र प्रथमं पञ्चधा श्रोत्रादीन्द्रियभेदात्, नोइन्द्रियं त्रिधा–अवध्यादिभेदात्, त्रिविधमनुमानं–पूर्ववत् शेषवत् दृष्टसाधर्म्यवत्, तत्र (पूर्ववत्) पूर्वोपलब्धासाधारणलक्षणात् मात्रादिप्रमातुः पुत्रादिपरिज्ञानं, शेषवत् यत्कार्यादिलिङ्गात्परोक्षार्थज्ञानं, यथा मयूरोऽत्र केकायितादिति, दृष्टसाधर्म्यवत् यथा एकस्य कार्षापणादेर्दर्शनादन्येऽप्येवंविधा एते इति प्रतिपत्तिः औपम्यं यथा गौर्गवयस्तथेति, आगमो द्विधा लौकिकलोकोत्तरभेदात्, त्रिधा वा सूत्रार्थोभयभेदात्, अन्यथा वा त्रिधा, आत्मागमअनन्तरागमपरम्परागमभेदात्, तत्रात्मागमाद्योऽर्थतः क्रमेण जिनगणधरतच्छिष्यापेक्षया द्रष्टव्याः, सूत्रतस्तु गणधरतच्छिष्यप्रशिष्यापेक्षयेति, 'तेण परं'ति, गणधरशिष्याणां सूत्रतोऽनन्तरागमः अर्थतस्तु परम्परागमः, ततः परं प्रशिष्याणामिति, 'नो'त्ति आत्मअनन्तरपरंपरागमत्रिकं नियमेन वाच्य इत्यर्थः ॥ 'चरमकम्मं'ति (सू. १९३) चरमकर्म यच्छैलेशीचरमसमयेऽनुभूयते, चरमनिर्जरा तु यत्ततोऽनन्तरसमये जीवप्रदेशेभ्यः परिशटतीति ॥ 'पणीयं'ति (सू.१९४) प्रणीतं शुभतया प्रकृष्टं 'धारेज्ज'त्ति धारयेद्–व्यापारयेत्, 'एवं अणंतरपरंपर'त्ति अस्यायमर्थः–यथा वैमानिका द्विधा प्रोक्ताः, मायिमिथ्यादृष्टीनां च ज्ञाननिषेधः, एवमत्रापि सम्यग्दृष्टयोऽनन्तरोपपन्नकपरम्परोपपन्नकभेदेन द्विधा वाच्याः, अनन्तरोपपन्नकानां ज्ञाननिषेधः, तथा परम्परोपपन्नकाः पर्याप्तकापर्याप्तकभेदात् द्विधा, अपर्याप्तकानां न ज्ञाननिषेधः, पर्याप्तका उपयुक्तानुपयुक्तभेदेन द्विधा, अनुपयुक्तानां ज्ञाननिषेधः, आलापं–(सू. १९५) सकृज्जल्पनं संलापं–मुहुर्मुहुर्जल्पनं, 'लद्धाओ' तदवधेर्विषयं गताः, 'पत्ताओ' तदवधिना सामान्यतः प्राप्ताः–परिच्छिन्नाः, अभिसमन्नागता– विशेषतः परिच्छिन्नाः, यतस्तेषामवधिज्ञानं सम्भिन्नलोकविषयं, यच्च लोकनाडीग्राहकं तन्मनोवर्गणाग्राहकं स्यादेव, यतो योऽपि लोकसङ्ख्येयभागविषयोऽवधिः सोऽपि मनोद्रव्यग्राही, यः पुनः सम्भिन्नलोकविषयोऽसौ कथं न मनोद्रव्यग्राही भवि-

ष्यति ?, इष्यते लोकसङ्ख्येयभागावधेर्मनोद्रव्यग्राहित्वं, यदाह–"संखिज्ज मणोदव्वे, भागो लोगपलियस्स बोद्धव्वो"त्ति ॥'उदि-
न्नमोह'त्ति (सू. १९६) उत्कटवेदमोहनीयाः, 'उवसंत'त्ति अनुत्कटवेदमोहाः, परिचारणायाः कथञ्चिदप्यभावात्, नतु सर्व-
थोपशान्तमोहाः, उपशमश्रेणेस्तेषामभावात्, 'नो खीणमोहे'त्ति क्षपकश्रेणेरभावात् 'आयाणेहिं' (सू. १९७) आदीयते–गृह्यते-
ऽर्थ एभिरित्यादानानि–इन्द्रियाणि तैर्न जानाति, केवलित्वात् ॥ 'अस्सिं समयंसि' (सू.१९८) अस्मिन् वर्त्तमानसमये 'ओगा-
हित्ताणं' अवगाह्य–आक्रम्य 'सेयकालंसि' एष्यत्कालेऽपि 'वीरिय'त्ति वीर्यं–वीर्यान्तरायक्षयप्रभवा शक्तिस्तत्प्रधानं सयोगं–
मानसादिव्यापारयुक्तं यत् सद्–विद्यमानं द्रव्यं–जीवद्रव्यं तत्तथा, वीर्यसद्भावेऽपि जीवद्रव्यस्य योगान् विना चलनं न स्यात् इति
सयोगशब्देन द्रव्यं विशेषितं, सदिति विशेषणं तस्य सदा सत्तावधारणार्थं, अथवा स्वः–आत्मा तद्रूपं द्रव्यं स्वद्रव्यं, ततः कर्मधा-
रयः, अथवा वीर्यप्रधानः सयोगो–योगवान् वीर्यसयोगः स चासौ सद्रव्यः–मनःप्रभृतिवर्गणायुक्तो वीर्यसयोगसद्रव्यस्तस्य भावस्तत्ता
तया हेतुभूतया 'चलाइं'ति चलानि–अस्थिराणि 'उवकरणाइं' अङ्गोपाङ्गानि 'चलोवगरणट्ठयाए'त्ति चलोपकरणलक्षणो योऽर्थ-
स्तद्भावः चलोपकरणार्थता तया चलोपकरणार्थतया ॥ 'घडाओ घडसहस्सं' (सू. १९९) घटावधेः–घटं निश्रां कृत्वा घटसहस्रं
'अभिनिव्वट्टित्ता' अभिनिर्वर्त्त्य–विधाय श्रुतसमुत्थलब्धिविशेषेणोपदर्शयितुं प्रभुरिति प्रश्नः, 'उक्कारिया भेएणं' इह पुद्गलानां
पञ्चधा भेदः खण्डादिभेदात्, तत्र खण्डभेदः खण्डशो यो भवति लोष्ठादेरिव, प्रतरभेदोऽभ्रपटलानामिव, चूर्णिकाभेदस्तिलादि-
चूर्णवत्, अनुतटिकाभेदोऽवटतटवंशभेदवत्, उत्कारिकाभेदः एरंडबीजानामिव, तत्रोत्कारिकाभेदेन भिद्यमानानि लब्धानि–
लब्धिविशेषाद् ग्रहणविषयतां गतानि–प्राप्तानि, अभिसमन्वागतानि घटादिरूपेण परिणमयितुमारब्धानि, ततस्तैर्घटसहस्रादि निर्व-

र्त्तयति, आहारकशरीरवत् निर्वर्त्त्य च दर्शयति जनानामिति, इह च उत्कारिकाभेदग्रहणं तद्भिन्नानामेव द्रव्याणां विवक्षितघटादिनिष्पादनसामर्थ्यमस्ति, नान्येषामितिकृत्वेति ॥ **पञ्चमशते चतुर्थः** ॥

'जहा पढमसए'त्ति (सू.२००) तत्र छद्मस्थ आधोऽवधिकः परमाधोऽवधिकश्च केवलेन संयमादिना न सिध्यति इत्याद्यर्थपरं तावन्नेयं यावदुत्पन्नज्ञानादिधरः केवली अलमस्त्विति वक्तव्यं स्यादिति, 'एवं भूयं'ति (सू. २०१) यथाविधं कर्म निबद्धमेवंभूतां—एवंप्रकारोत्पन्नां वेदनामसातादिकर्मोदयां वेदयन्ति—अनुभवन्ति,मिथ्यात्वं चैतद्वादिनामेवं, नहि यथा बद्धं तथैव सर्वं कर्मानुभूयते, आयुःकर्मणा व्यभिचारात्, तथाहि—दीर्घकालानुभवनीयस्यायुःकर्मणोऽल्पीयसापि कालेनानुभवो भवति, कथमन्यथा अपमृत्युव्यपदेशः स्यात्?, कथं वा युद्धे जीवलक्षाणां युगपन्मृत्युरुपपद्यते ?,'अणेवंभूयं'ति यथा बद्धं कर्म नैवंभूता अनेवंभूता अतस्तां, यतो बहुस्थितिकं कर्मदलिकं बद्ध्वा अपवर्त्तनाकरणेनाल्पकालेनापि वेद्यते, यदुक्तं **सङ्ग्रहिण्यां—'बहुकालवेयणिज्ज'**-(४६२)मित्यादि, श्रूयंते ह्यागमे कर्मणः स्थितिरसघातादय इति, नारकाधिकारे तु नैवं, अनैवं, कथं ?, तत्र सम्यग्दृष्टित्वमिथ्यादृष्टित्वादिकारणविशेषात्, यथा कृष्णश्रेणिकजीवादीनां सप्तमीतः प्रथमतृतीयपृथ्व्योर्गमनं जातं, ततो नैवमनैवमित्युच्यते,**'संसारमंडलं'ति एवमुक्तक्रमेण** वैमानिकावसानं संसारिजीवचक्रवालं नेतव्यमिति ॥ **पञ्चमशते पञ्चमः** ॥

'अप्पाउयत्ताए'त्ति (सू.२०३) अल्पायुष्कतायै, अल्पायुर्निबन्धनमित्यर्थः, अल्पायुष्कतया वा, कर्म—आयुष्कलक्षणं प्रकुर्वन्ति—बध्नन्ति 'अइवायित्त'त्ति अतिपात्य—विनाश्य मृषावादमुक्त्वा 'तहारूवं' तथारूपं भक्तदानोचितपात्रमिति, श्राम्यति—तपस्यतीति श्रमणस्तं, मा हनेत्येवं योऽन्यं प्रति वक्ति स्वयंहनननिवृत्तः सन्नसौ माहनः, न प्रगता असवः—प्राणिनो यस्मात् तदप्रासुकं,

सजीवमित्यर्थः, 'पडिलाभे'त्ति प्रतिलंभ्य—लाभवन्तं कृत्वा, अध्यवसायविशेषादेतत्त्रयं जघन्यायुःफलं स्यादिति भावः, हीलनं जात्या-द्युद्घट्टनतः, निन्दनं मनसा, खिंसनं जनसमक्षं, अपमानं—अनभ्युत्थानादिकं, अमनोज्ञेन कदन्नादिना, 'गाहावइस्स'त्ति(सू.२०८) गृहपतेः—गृहिणः 'मिच्छादंसण'त्ति मिथ्यादर्शनप्रत्यया 'सिय'त्ति स्यात्—कदाचित् क्रियते—भवति, स्यान्नो भवेत्—कदाचिन्न भवति, यदा मिथ्यादृष्टिर्गृहपतिस्तदाऽसौ स्यात्, यदा तु सम्यग्दृष्टिस्तदाऽसौ न स्यात् इत्यर्थः, 'से'त्ति तद् भंडं 'अभिसमण्णागए'त्ति गवेषयित्वा लब्धं स्यात् 'तओ'त्ति ततो भाण्डलंभनानन्तरं 'से'त्ति तस्य गृहपतेः पश्चात्—समन्वागमानन्तरमेव 'सव्वाओ' यासां सम्भवोऽस्ति ताः क्रियाः प्रतनुकीभवन्ति—ह्रस्वीभवन्ति, अपहृतभाण्डगवेषणकाले हि महत्यस्ता आसन्, प्रयत्नविशेषपरत्वाद् गृहपतेः, तल्लाभकाले तु प्रयत्नविशेषस्योपरतत्वात् ह्रस्वाः स्युरिति, 'कइए भंडं साइज्जेज्ज'त्ति क्रयिको—ग्राहको भाण्डं स्वादयेत्—सत्यंकारदानतः स्वीकुर्यात्, 'अणुवणीए'त्ति अनुपनीतं—समर्पितं न स्यात्, 'पयणुई'त्ति अप्राप्तभाण्डत्वेन तद्गतक्रियाणामल्पत्वात्, गृहपतेस्तु महत्यो, भाण्डस्य तदीयत्वात्, क्रयिकस्य भाण्डे समर्पिते महत्यः, गृहपतेस्तु प्रतनुकाः, इदं भाण्डस्यानुपनीतोपनीतभेदाभ्यां सूत्रद्वयमुक्तं, एवं धनस्यापि वाच्यं, तत्र प्रथममेवं—'गाहावईस्स णं भंते! भंडं किणमाणस्स कइए भंडं साइज्जेज्जा, धणे य से अणुवणीये सिया, कइयस्स णं भंते! ताओ धणाओ किं आरंभिया किरिया कज्जइ ५?, गाहावइस्स वा ताओ धणाओ किं आरंभिया किरिया कज्जइ ५?, गोयमा! कइयस्स ताओ धणाओ हेट्ठिल्लाओ चत्तारि किरियाओ कज्जंति, मिच्छादंसणकिरिया भयणाए, गाहावइस्स णं ताओ सव्वाओ पयणुई भवन्ति', धनेऽनुपनीते क्रयिकस्य महत्यस्ताः स्युः, धनस्य तदीयत्वात्, गृहपतेस्तु तास्तनुकाः, धनस्य तदानीमतदीयत्वात्, एवं द्वितीयसूत्रसमानमिदं तृतीयं, अत एवाह—'एयंपि जहा भंडे

द्रव्योपमामनिष्टां, एवं कटुकां–परुषां कठोरां–निष्ठुरां चण्डां–रौद्रां तीव्रां–झगिति शरीरव्यापिकां दुःखां–असुखरूपां, दुर्गां–दुःखाश्रयणीयां, अत एव दुरधिसह्यामिति। इयं च वेदना ज्ञानाद्याराधनाविरहेण स्यादिति 'अणवज्जे' (सू. २०९) अनवद्यमिति, 'मणं' मानसं प्रधारयिता–स्थापयिता स्यात् चिन्तितवानिति, रइयकडं–मोदकचूर्णादि पुनर्मोदकतया रचितमौद्देशिकभेदरूपं 'कंता-र'त्ति कान्तारं–अरण्यं तत्र भिक्षुकाणां निर्वाहार्थं यद्विहितं भक्तं तत्कान्तारभक्तं, एवमन्यान्यपि, नवरं वद्दलिया—वार्दलिका मेघदुर्दिनं 'गिलाण'त्ति ग्लानस्य नीरोगतार्थं भिक्षुकदानाय यत्कृतं भक्तं तत् ग्लानभक्तं, आधाकर्म्मादीनां सदोषत्वेनागमेऽभिहितानां निर्दोषताकल्पनं तत एव स्वयं भोजनमन्यसाधुभ्योऽनुप्रदानं सभायां निर्दोषताभणनं च विपरीतश्रद्धानादिरूपत्वान्मिथ्यात्वादि, ततश्च ज्ञानादिविराधना स्फुटैव। 'सविसयंसि' (सू. २१०) स्वविषये–अर्थसूत्रदानलक्षणे गणं-गच्छं अखेदेन सङ्गृह्णन्–स्वीकुर्वन् उपगृह्णन्–उपष्टंभयन् द्वितीयश्च भवो देवभवान्तरितो दृश्यः, चारित्रवतोऽनन्तरो देवभव एव स्यात्, न च तत्र सिद्धिरस्ति, अलीकेन (सू. २११) भूतनिह्नवरूपेण पालितब्रह्मचर्यसाधुविषयेऽपि नानेन ब्रह्मव्रतं पालितमित्यादिरूपेण 'असब्भूएणं'ति असद्भूतोद्भावनरूपेण–अचौरे चौरोऽयमिति, 'असंतएणं' असत्येन, तच्च द्रव्यतोऽपि स्याद् यथा लुब्धकादिना मृगादीन् पृष्टस्य जानतोऽपि नाहं जानामीति, असद्भूतेन–दुष्टाभिप्रायत्वादशोभनरूपेण 'अब्भक्खाणेणं' आभिमुख्येन ख्यानं–दोषाविष्करणमभ्याख्यानं तेन अभ्याख्यानेन 'अब्भक्खाइ' अभ्याख्याति ब्रूते 'कहप्पगारा' कथंप्रकाराणि–किंप्रकाराणीति, 'तहप्पगारा' अभ्याख्यानफलानीति, 'जत्थेव णं' यत्रैव मानुषत्वादौ अभिसमागच्छति–उत्पद्यते, तत्रैव प्रतिवेदयति अभ्याख्यानफलं कर्म, ततः पश्चाद्वेदयति, निर्जरयतीति ॥ पञ्चमशते षष्ठ उद्देशकः ॥

कायादिव्यापाराणां तस्य दृश्यमानत्वात्, धनुरादिनिर्वर्त्तकशरीराणां तु जीवानां कथं पञ्च क्रियाः?, कायमात्रस्यापि तदीयस्य तदानीमचेतनत्वात्, अचेतनकायमात्रादपि पञ्चधाऽभ्युपगमे सिद्धानामपि तत्प्रसङ्गः, तदीयशरीराणामपि प्राणातिपातहेतुत्वेन लोके विपरिवर्त्तमानत्वात्, किञ्च-यथा धनुरादीनि कायिक्यादिक्रियाहेतुत्वेन पापबन्धकारणानि भवन्ति तज्जीवानां, एवं पात्रदण्डकादीनि जीवरक्षाहेतुत्वेन पुण्यकर्मनिबन्धनानि स्युरिति, न्यायस्य समानत्वात्, अत्रोच्यते, अविरतिपरिणामाद् बन्धः, अविरतिपरिणामश्च यथा पुरुषस्यास्ति एवं धनुरादिनिर्वर्त्तकशरीरजीवानामपीति, सिद्धानां तु नास्त्यसाविति न बन्धः, पात्रादिजीवानां च पुण्यबन्धहेतुत्वं तद्धेतोर्विवेकादेस्तेष्वभावादिति, किञ्च-सर्वज्ञवचनप्रामाण्याद्यथोक्तं तत्तथा श्रद्धेयमेवेति, इषुरिति-शरपत्रफलादिसमुदायः, 'अह से उसू' इत्यादि, 'पच्चोवयमाणे'त्ति प्रत्यवपतन्-नीचैर्गच्छन्, इह धनुर्धनुष्मदादीनां यद्यपि सर्वक्रियासु कथंचिन्निमित्तभावोऽस्ति तथापि विवक्षितवधं प्रति अमुख्यप्रवृत्तिकतया विवक्षितवधक्रियायास्तैः पुरुषैः कृतत्वेनाविवक्षणात् शेषक्रियाणां च निमित्तभावमात्रेणापि तत्कृतत्वेन विवक्षणाच्चतस्रस्ता उक्ताः, बाणादिजीवशरीराणां तु साक्षाद् वधक्रियायां प्रवृत्तत्वात् पञ्चेति, 'बहुसमाइण्णे' (सू. २०८) अत्यन्तमाकीर्णो-व्याप्तः, मिथ्यात्वं च तद्वचनस्य विभङ्गज्ञानपूर्वकत्वादवसेयमिति, 'एगत्तं'ति एकत्वं प्रहरणानां 'पुहुत्तं' पृथक्त्वं-बहुत्वं प्रहरणानामेव, 'जहा जीवाभिगमे' आलापकश्चैवम्-'एगत्तंपि पहू विउव्वित्तए, पुहुत्तंपि पहू विउ०, एगत्तं विउव्वेमाणे एगं महं मोग्गररूवं वा' इत्यादि, 'पुहुत्तं विउव्वेमाणे मोग्गररूवाणि वा' इत्यादि, 'ताइं संखेज्जाइं २ ससरीराइं विउव्वंति, विउव्वित्ता अन्नमन्नस्स कायं अभिहणेमाणा वेयणं उदीरेंति, उज्जलं पगाढं कक्कसं कडुयं फरुसं निट्ठुरं चंडं तिव्वं दुक्खं दुरहियासं'ति तत्रोज्ज्वलां-विपक्षलेशेनाप्यकलङ्कितां विपुलां-शरीरव्यापिकां प्रगाढां-प्रकर्षवतीं कर्कशां-कर्कश-

भाजनानि, उपकरणानि–लोहकटाहकादीनि, एकेन्द्रियाणां परिग्रहोऽप्रत्याख्यानादवसेयः, 'बाहिरभंडमत्तोवगरण'त्ति उपकरणसाधर्म्यात् बाह्यानि द्वीन्द्रियाणां शरीररक्षार्थं तत्कृतगृहकादीनि अवसेयानि, 'टंक'त्ति छिन्नटङ्काः 'कूट'त्ति कूटानि–शिखराणि हस्त्यादिबन्धनस्थानानि वा 'सेल'त्ति मुण्डपर्वताः 'सिहरि'त्ति शिखरिणः–शिखरवन्तो गिरयः 'पब्भार'त्ति ईषदवनता गिरिदेशाः 'लेण'त्ति उत्कीर्णं पर्वतगृहं 'उज्झर'त्ति अपझरः–पर्वततटादुदकस्याधः पतनं 'निज्झर'त्ति निर्झरः–उदकस्य श्रवणं 'चिल्ल'त्ति चिक्खिल्लमिश्रोदको जलस्थानविशेषः, 'पल्लण'त्ति प्रल्हादनशीलः स एव 'वप्पिण'त्ति केदारवान् तटवान् वा देशः 'अगड'त्ति कूपः 'वावि'त्ति वापी–चतुरस्रो जलाश्रयविशेषः 'पुक्खरिणि'त्ति पुष्करिणी–वृत्तः स एव पुष्करवान् वा 'दीहिय'त्ति सारण्यो 'गुंजालिय'त्ति वक्राः सारण्यः 'सर'त्ति सरांसि–स्वयंसम्भूतजलाश्रयविशेषाः 'सरपंतिय'त्ति सरःपङ्क्तयः 'सरसर'त्ति यासु सरःपङ्क्तिषु एकस्मात् सरसोऽन्यस्मिन् अन्यस्मादन्यत्र एवं सञ्चारकपाटवेनोदकं सञ्चरति ताः सरःसरःपङ्क्तयः, विलपङ्क्तयः प्रतीताः 'आराम'त्ति आरमंति येषु माधवीलतादिषु दम्पत्यादीनि ते आरामाः 'उज्जाण'त्ति उद्यानानि–पुष्पादिमद्वृक्षसंकुलानि उत्सवादौ बहुजनभोग्यानि, काननानि–सामान्यवृक्षसंयुक्तानि नगरासन्नानि वनानि–नगरविप्रकृष्टानि वनखण्डा–एकजातीयवृक्षसमूहात्मकाः वनराजयो–वृक्षपङ्क्तयः, खातिका–उपरि विस्तीर्णा अधःसङ्कटखातरूपाः, परिखा–अध उपरि च समखातरूपाः 'अट्टालग'त्ति प्राकारोपरि आश्रयविशेषाः 'चरिय'त्ति चरिका गृहप्राकारान्तरे हस्त्यादिप्रचारमार्गः, 'दारं' द्वारं खडक्किका 'गोपुरं' नगरप्रतोली, 'पासाय'त्ति प्रासादो देवभूपानां 'सरण'त्ति शरणानि तृणमयावसरिकादीनि, आपणा–हट्टाः शृङ्गाटकं स्थापना ◁ त्रिकं स्थापना ⊥ चतुष्कं स्थापना + चत्वरं स्थापना ※ चतुर्मुखं देवकुलादि, महापथो–राजमार्गः, लोही–

'सिय एयइ' (सू.२१२) कदाचिदेजति, कादाचित्कत्वात्सर्वपुद्गलेष्वेजनादिधर्माणां, तथा कदाचिद्वेजति, 'तं तं भावं'ति शुक्लनीलादिभावं परिणमति, द्विप्रदेशिके त्रयो विकल्पाः–स्यादेजनं १ स्यादनेजनं २ देशेनैजनं देशेनानेजनं ३ इत्यंशकल्पनया कृतेति, त्रिप्रदेशिके पञ्च, आद्यास्त्रयस्त एव, अणुकस्यापि सद्वीपस्यैकांशस्य तथाविधपरिणामेनैकदेशतया विवक्षितत्वात्, तथा देशस्य एजनं देशयोश्चानेजनं इति चतुर्थः, तथा देशयोरेजनं देशस्य चानेजनमिति पञ्चमः, एवं चतुष्प्रदेशिकेऽपि, नवरं षट्, तत्र षष्ठो देशयोरेजनं देशयोरेव चानेजनमिति। पुद्गलाधिकारादेवेदं सूत्रवृन्दं, 'ओगाहेज्ज'त्ति (सू. २१३) अवगाहेत–आश्रयेत, छिद्येत–छिधा भावं यायात्, भिद्येत–विदारणभावमात्रं यायात्, 'नो खलु तत्थ सत्थं'ति परमाणुत्वात्, अन्यथा परमाणुत्वमेव न स्यादिति, 'अत्थेगइए छिज्जेज्ज'त्ति तथाविधबादरपरिणामत्वात्, 'अत्थेगइए नो छिज्जेज्जा' सूक्ष्मपरिणामत्वात्, 'उदउल्लं सिया'त्ति आर्द्रः स्यात्, 'विणिहायं'ति विनिघातं–प्रतिस्खलनमापद्येत 'परियावज्जेज्ज' पर्यापद्येत–विनश्येत्, 'दुपएसिए'त्ति (सू.२१४) यस्य स्कन्धस्य समाः प्रदेशाः स सार्द्धः, यस्य तु विषमाः स समध्यः, एवं द्व्यादिप्रदेशादिषु स्कन्धाः समप्रदेशिका इतरे च, तत्र यः समप्रदेशिकः स सार्द्धोऽमध्यः, इतरस्तु विपरीतः। 'देसेणं' इत्यादि (सू. २१५) ९ विकल्पाः, तत्र देशेन स्वकीयेन देशं तदीयं स्पृशति, देशेनेत्यनेन देशं देशान् सर्वमित्येवं अवयवपदेन त्रयः, देशैरित्यनेन ३, सर्वेणेत्यनेन च त्रय एव, स्थापना–देशेन देशं १ देशेन देशान् २ देशेन सर्वं ३ देशैर्देशं १ देशैर्देशान् २ देशैः सर्वं ३ सर्वेण देशं १ सर्वेण देशान् २ सर्वेण सर्वं ३, अत्र च सर्वेण सर्वमित्येक एव घटते, परमाणोर्निरंशत्वेन देशाद्यसम्भवात्, ननु यदि सर्वेण सर्वं स्पृशतीत्युच्यते तदा परमाण्वोरेकत्वापत्तिः, कथमपरपरमाणुयोगेन घटादिस्कन्धनिष्पत्तिरिति, अत्रोच्यते, सर्वेण सर्वं स्पृशतीति कोऽर्थः ?– स्वात्मना तावन्मात्रं

लगतः, न पुनरर्धाद्यंशेन, अर्धादिदेशस्य तयोरभावात्, घटाद्यभावापत्तिस्तु तदैव प्रसज्येत यदा तयोरेकत्वापत्तिः, न च तयोः सा, स्वरूपभेदात्, 'सत्तमनवमेहिं'ति सर्वेण देशं सर्वेण सर्वमित्येताभ्यामित्यर्थः, तत्र यदा द्विप्रदेशिकः प्रदेशद्वयावस्थितः स्यात् तदा तस्य परमाणुः सर्वेण देशं स्पृशति, परमाणोस्तद्देशस्यैव विषयत्वात्, यदा तु द्विप्रदेशिकः परिमाणसौक्ष्म्यादेकप्रदेशस्थो भवति तदा तं परमाणुः सर्वेण सर्वं स्पृशेत् इत्युच्यते, 'निप्पच्छिमएहिं'ति निर्गतः पश्चिमो भङ्गको येभ्यस्ते निष्पश्चिमास्तैरपश्चिमभङ्गकैः त्रिभिरन्त्यैस्त्रिप्रदेशिकमसौ स्पृशति, तत्र यदा त्रिप्रदेशिकः प्रदेशत्रयस्थितः स्यात् तदा तस्य परमाणुः सर्वेण देशं स्पृशति, यदा तु तस्यैकप्रदेशे द्वौ प्रदेशावन्यत्र एकोऽवस्थितः स्यात् तदा एकप्रदेशस्थितपरमाणुद्वयस्य परमाणोः स्पर्शविषयत्वेन सर्वेण देशौ स्पृशति इत्युच्यते, ननु द्विप्रदेशकेऽपि युक्तोऽयं विकल्पः, तत्रापि प्रदेशद्वयस्य स्पृश्यमानत्वात्, नैवम्, यतस्तत्र द्विप्रदेशमात्र एवावयवीति कस्य देशः स्पृशति ?, त्रिप्रदेशिके तु त्रयापेक्षया द्वयस्पर्शने एकः अवशिष्यते, ततश्च सर्वेण देशौ स्पृशति त्रिप्रदेशिकस्कन्धस्य इति व्यपदेशः साधुः स्यात्, यदा त्वेकप्रदेशावगाढोऽसौ तदा सर्वेण सर्वं स्पृशतीति स्यादिति, 'तइयणवमेहिं'ति यदा तु द्विप्रदेशिको द्विप्रदेशस्थस्तदा परमाणुर्देशेन सर्वं स्पृशति इति तृतीयः, यदा एकप्रदेशावगाढोऽसौ तदा सर्वेण सर्वमिति नवमः, 'पढमतइयसत्तमणवमेहिं'ति यदा द्विप्रदेशकौ प्रत्येकं द्विप्रदेशावगाढौ तदा देशेन देशमिति प्रथमः, यदा त्वेक एकत्र अन्यस्तु द्वयोस्तदा देशेन सर्वमिति तृतीयः, तथा सर्वेण देशमिति सप्तमः, नवमस्तु प्रतीत एवेति, अनया दिशाऽन्येऽपि व्याख्येया इति। अथ पुद्गलानां द्रव्यक्षेत्रभावान् कालतश्चिन्तयति, तत्र द्रव्यचिन्ता 'असंखिज्जं'ति (सू. ११६) असङ्ख्येयकालात्परतः पुद्गलानामेकरूपेण स्थित्यभावात्, 'एगपएसोगाढे णं'ति क्षेत्रचिन्ता, 'सेए'त्ति सैजः—सकम्पः 'तंमि वा ठाणे' तस्मिन्नधि-

कृते स्थाने 'अणंसि'त्ति अधिकृतादन्यत्र, 'असंखेज्जभागं'ति पुद्गलानामाकाशिकत्वाच्चलनस्य निरेजत्वादीनामिवासङ्ख्येयकालत्वं, 'असंखिज्जपएसोगाढ'त्ति अनन्तप्रदेशावगाहस्यासम्भवादसङ्ख्यातप्रदेशावगाढ इत्युक्तं, 'निरेए'त्ति निरेजो-निष्कम्पः 'परमाणुपुग्गलस्स'त्ति परमाणोरपगते परमाणुत्वे यदपरमाणुत्वेन वर्त्तनं-आपरमाणुत्वपरिणतेः तदन्तरं स्कन्धसम्बन्धकालः, स चोत्कर्षतोऽसङ्ख्यात इति, द्विप्रदेशिकस्य तु शेषस्कन्धसम्बन्धकालः परमाणुकालस्यान्तरकालः, स च तेषामनन्तत्वात् प्रत्येकं चोत्कर्षतोऽसङ्ख्येयस्थितिकत्वादनन्तः, तथा यो निरेजस्य कालः स सैजस्यान्तरमितिकृत्वोक्तं-सैजस्यान्तरमुत्कर्षतोऽसङ्ख्यातकालः, यस्तु सैजस्य कालः स निरेजस्यान्तरमितिकृत्वोक्तं निरेजस्यान्तरमुत्कर्षत आवलिकाया असङ्ख्यातो भागः, एकगुणकालकत्वादीनां चान्तरमेकगुणकालकत्वादिकालसमानमेव, न पुनर्द्विगुणकालकत्वादीनामनन्तत्वेन तदन्तरस्यानन्तत्वं, वचनप्रामाण्यात्, सूक्ष्मादिपरिणतानां त्ववस्थानतुल्यमेवान्तरं, यतो यदेवैकस्यावस्थानं तदेवान्यस्यान्तरं, तच्चासङ्ख्येयकालमानमिति । 'एयस्स णं भंते ! दव्वट्ठाणाउयस्स'त्ति (सू. २१७) द्रव्यं-पुद्गलद्रव्यं तस्य स्थानं-भेदः परमाणुद्विप्रदेशकादिस्तस्यायुः-स्थितिः अथवा द्रव्यस्याणुत्वादिभावेन यत् स्थानं-अवस्थानं तद्रूपमायुः द्रव्यस्थानायुस्तस्य 'खेत्तट्ठाणाउयस्स'-त्ति क्षेत्रस्य-आकाशस्य स्थानं-भेदः पुद्गलावगाहकृतस्तस्यायुः-स्थितिः, अथवा क्षेत्रे एकप्रदेशादौ स्थानं-यत् पुद्गलावस्थानं तद्रूपमायुः, एवमवगाहनास्थानायुर्भावस्थानायुश्च, नवरमवगाहना-नियतपरिमाणक्षेत्रावगाहित्वं पुद्गलानां भावस्तु-कालत्वादि, ननु क्षेत्रस्यावगाहनायाश्च को भेदः ?, उच्यते, क्षेत्रमवगाढमेव, अवगाहना तु विवक्षितक्षेत्रादन्यत्रापि पुद्गलानां तत्परिमाणक्षेत्रावगाहित्वमिति, 'कयरे' इत्यादि कण्ठ्यं, 'भंडमत्तोवगरण'त्ति (सू. २१८) भाण्डानि-मृन्मयभाजनानि, मात्राणि-कांस्य-

भांजनानि, उपकरणानि–लोहकटल्लकादीनि, एकेन्द्रियाणां परिग्रहोऽप्रत्याख्यानादवसेयः, 'बाहिरभंडमत्तोवगरण'त्ति उपकरणसाधर्म्यात् बाह्यानि द्वीन्द्रियाणां शरीररक्षार्थं तत्कृतगृहकादीनि अवसेयानि, 'टंक'त्ति छिन्नटङ्काः 'कूट'त्ति कूटानि–शिखराणि हस्त्यादिबन्धनस्थानानि वा 'सेल'त्ति मुण्डपर्वताः 'सिहरि'त्ति शिखरिणः–शिखरवन्तो गिरयः 'पब्भार'त्ति ईषदवनता गिरिदेशाः 'लेण'त्ति उत्कीर्णं पर्वतगृहं 'उज्झर'त्ति अपझरः–पर्वततटादुदकस्याधः पतनं 'निज्झर'त्ति निर्झरः–उदकस्य श्रवणं 'चिल्ल'त्ति चिक्खिल्लमिश्रोदको जलस्थानविशेषः, 'पल्लण'त्ति प्रल्हादनशीलः स एव 'वप्पिण'त्ति केदारवान् तटवान् वा देशः 'अगड'त्ति कूपः 'वावि'त्ति वापी–चतुरस्रो जलाश्रयविशेषः 'पुक्खरिणि'त्ति पुष्करिणी–वृत्तः स एव पुष्करवान् वा 'दीहिय'त्ति सारण्यो 'गुंजालिय'त्ति वक्राः सारण्यः 'सर'त्ति सरांसि–स्वयंसम्भूतजलाश्रयविशेषाः 'सरपंतिय'त्ति सरःपङ्क्तयः 'सरसर'त्ति यासु सरःपङ्क्तिषु एकस्मात् सरसोऽन्यस्मिन् अन्यस्मादन्यत्र एवं सञ्चारकपाटकेनोदकं सञ्चरति ताः सरःसरःपङ्क्तयः, विलपङ्क्तयः प्रतीताः 'आराम'त्ति आरमंति येषु माधवीलतादिषु दम्पत्यादीनि ते आरामाः 'उज्जाण'त्ति उद्यानानि–पुष्पादिमद्वृक्षसंकुलानि उत्सवादौ बहुजनभोग्यानि, काननानि–सामान्यवृक्षसंयुक्तानि नगरासन्नानि वनानि–नगरविप्रकृष्टानि वनखण्डा–एकजातीयवृक्षसमूहात्मकाः वनराजयो–वृक्षपङ्क्तयः, खातिका–उपरि विस्तीर्णा अधःसङ्कटखातरूपाः, परिखा–अध उपरि च समखातरूपाः 'अट्टालग'त्ति प्राकारोपरि आश्रयविशेषाः 'चरिय'त्ति चरिका गृहप्राकारान्तरे हस्त्यादिप्रचारमार्गः, 'दारं' द्वारं खडक्किका 'गोपुरं' नगरप्रतोली, 'पासाय'त्ति प्रासादो देवभूपानां 'सरण'त्ति शरणानि तृणमयावसरिकादीनि, आपणा–हट्टाः शृङ्गाटकं स्थापना ◁ त्रिकं स्थापना ⊥ चतुष्कं स्थापना + चत्वरं स्थापना ※ चतुर्मुखं देवकुलादि, महापथो–राजमार्गः, लोही–

मण्डकादिपचनिका, 'लोहकडुच्छुय'त्ति अन्नपरिवेषणाद्यर्थो भाजनविशेषः, 'भवणा' भवनपतिनिवासाः॥'पंच हेउ'त्ति(सू.२१९) इत्यादि, इह हेतुषु वर्त्तमानो ना-नरो हेतुरेव, तदुपयोगानन्यत्वात्, पञ्चविधत्वं चास्य क्रियाभेदादित्याह-'हेउं जाणइ'त्ति हेतुं-साध्याविनाभूतं साध्यनिश्चयार्थं जानाति-विशेषतः सम्यगवगच्छति, सम्यग्दृष्टित्वाद्, अयं च पञ्चविधोऽपि सम्यग्दृष्टिर्मन्तव्यः, मिथ्यादृष्टेः सूत्रद्वयात् परतो वक्ष्यमाणत्वादित्येकः, एवं हेतुं पश्यति, सामान्यत एव, अवबोधत्वादिति द्वितीयः, एवं हेतुं बुध्यते, सम्यक् श्रद्धत्ते, बोधेः सम्यक्श्रद्धानपर्यायत्वात् इति तृतीयः, हेतुं अभिसमागच्छति, साध्यसिद्धौ व्यापारणतः सम्यक् प्राप्नोतीति चतुर्थः,'हेउं छउमत्थे'त्ति हेतुः-अध्यवसानादिर्मरणकारणं तद्योगात् मरणमपि हेतुरतस्तं, हेतुमदित्यर्थः, छद्मस्थमरणं, न केवलिमरणं, तस्य निर्हेतुकत्वात्, नाप्यज्ञानमरणं, एतस्य सम्यग्ज्ञानित्वात्, अज्ञानमरणस्य च वक्ष्यमाणत्वात्, म्रियते-करोतीति पञ्चमः। प्रकारान्तरेण हेतूनेवाह-हेतुना अनुमानस्थापकेन जानाति-अनुमेयं सम्यगवगच्छति, सम्यग्दृष्टित्वादेकः, पश्यति द्वितीयः, बुध्यते श्रद्धत्ते इति तृतीयः, एवमभिसमागच्छति-प्राप्नोतीति चतुर्थः, अकेवलित्वात् हेतुना अध्यवसानादिना छद्मस्थमरणं म्रियत इति पञ्चमः। अथ मिथ्यादृष्टिमाश्रित्य हेतूनाह-'पञ्चे'त्यादि, पञ्च क्रियाभेदात्, हेतवो हेतुव्यवहारत्वात्, तत्र हेतुं-लिङ्गं न जानाति, नञः कुत्सार्थत्वादसम्यगवैति, मिथ्यादृष्टित्वात्, एवं न पश्यति न बुध्यते नाभिसमागच्छति, हेतुं अध्यवसानादिहेतुयुक्तं अज्ञानमरणं म्रियते-करोति, मिथ्यादृष्टित्वेनासम्यग्ज्ञानित्वात्। अथ प्रकारान्तरेण हेतूनाह-हेतुना-लिङ्गेन न जानाति, असम्यगवगच्छति, एवमन्येऽपि चत्वारः, अथ उक्तविपक्षभूतानहेतूनाह-'पंचे'त्यादि, प्रत्यक्षज्ञानित्वादिना अहेतुव्यवहारित्वादहेतवः-केवलिनः, ते च पञ्च क्रियाभेदात्, तद्यथा-'अहेउं जाणइ'त्ति अहेतुं न हेतुभावेन, सर्वज्ञत्वेनानुमानानपेक्षत्वाद्धूमादिकं जानाति,

सस्यानुमानानुत्थापकतयेति, अतोऽसावहेतुरिति, एवं पश्यतीत्यादि ३, तथा 'अहेउं केवलिमरणं'ति अहेतुः–निर्हेतुकमनुपक्रमत्वात् केवलिमरणं म्रियते–करोति इति, अहेतुरसौ पञ्चम इति । प्रकारान्तरेण 'पञ्चे'त्यादि तथैव, नवरं अहेतुना–हेत्वभावेन केवलित्वाज्जानाति योऽसावहेतुरित्येवं पश्यतीत्यादयोऽपि ३ 'अहेउणा केवलिमरणं'ति अहेतुना उपक्रमाभावे केवलिमरणं म्रियते, केवलिनो निर्हेतुकस्यैव तस्य भावादिति, अहेतूनेव प्रकारान्तरेण आह–'पञ्च अहेऊ'इत्यादि, अहेतवः–अहेतुव्यवहारिणस्ते च पञ्च, ज्ञानादिभेदात्, तद्यथा–'अहेउं न याणइ'त्ति अहेतुं न हेतुभावेन, स्वस्यानुमानानुत्थापकतयेत्यर्थः, न जानाति न सर्वथाऽवगच्छति, कथञ्चिदेवावगच्छतीत्यर्थः, नञो देशनिषेधार्थत्वात्, ज्ञातुश्चावध्यादिज्ञानित्वात् कथञ्चित् ज्ञानमुक्तं, समग्रज्ञानं तु केवलिन एव स्यादिति, एवमन्यान्यमि ३, तथा 'अहेउं छउमत्थमरणं'ति अध्यवसानादेरुपक्रमकारणस्याभावात्, छद्मस्थमरणं अकेवलित्वात्, नत्वज्ञानमरणं, अवध्यादिज्ञानित्वेन ज्ञानित्वात्तस्येति, अहेतूनेवान्यथाऽऽह–'पंचे'त्यादि,तथैव, नवरं अहेतुना–हेत्वभावेन न जानाति—कथञ्चिदवगच्छति, गमनिकामात्रमेवेदमष्टानामपि सूत्राणां, एषां भावार्थं तु बहुश्रुता विदन्ति ॥

॥ इति पञ्चमशते सप्तमः ॥

'दव्वादेसेणं'ति (सू. २२०) द्रव्यप्रकारेण, द्रव्यात् इत्यर्थः, परमाणुत्वाद्याश्रित्येतियावत्, 'खित्तादेसेणं'ति एकप्रदेशावगाढत्वादिनेति, 'कालादेसेणं'ति एकादिसमयस्थितिकत्वेन 'भावादेसेणं'ति एकगुणकालकत्वादिना, 'सव्वपोग्गला सपएस'त्ति सर्वे पुद्गलाः सप्रदेशा अप्रदेशा अपि इत्यादि, इह च ये सार्द्धादिपुद्गलविचारे प्रक्रान्ते सप्रदेशा अप्रदेशा एव ते प्रस्ताविताास्तत्तेषां प्ररूपणे सार्द्धत्वादि प्ररूपितमेव स्यादितिकृत्वेत्यवसेयं, तथाहि–सप्रदेशाः सार्द्धाः समध्या वा अप्रदेशा अमध्या वा,

'अणंत'त्ति तत्परिमाणज्ञापनपरं तत्स्वरूपाभिधानं, अथ द्रव्यतोऽप्रदेशस्य क्षेत्राद्याश्रित्याप्रदेशादित्वं निरूपयन्नाह-'जे दव्वओ अप्पएसे'त्ति द्रव्यतोऽप्रदेशः परमाणुः, स च क्षेत्रतो नियमादप्रदेशो, यस्मादसौ क्षेत्रस्यैकत्रैव प्रदेशेऽवगाहते, प्रदेशद्वयाद्यवगाहे तु तस्य अप्रदेशत्वमेव न स्यात्, कालतस्तु यद्यसावेकसमयस्थितिकस्तदाऽप्रदेशः, अनेकसमयस्थितिकस्तु सप्रदेश इति, भावतः पुनर्य-द्येकगुणकालकादिस्तदाऽप्रदेशः, अनेकगुणकालकादिस्तु सप्रदेश इति, निरूपितो द्रव्यतोऽप्रदेशः, अथ क्षेत्रतोऽप्रदेशं निरूपयन्नाह-'जे खेत्तओ अपएसे'त्ति यः क्षेत्रतोऽप्रदेशः स द्रव्यतः स्यात् सप्रदेशः, द्व्यणुकादेरपि एकप्रदेशावगाहित्वात्, स्यादप्रदेशः पर-माणोरप्येकप्रदेशावगाहित्वात्, कालतो 'भयणाए'त्ति क्षेत्रतोऽप्रदेशो यः स कालतो भजनया अप्रदेशादिर्वाच्यः, तथाहि-एक-प्रदेशावगाढ एकसमयस्थितिकत्वादप्रदेशोऽपि स्याद् अनेकसमयस्थितिकत्वात् सप्रदेशोऽपि स्यादिति, 'भावओ भयणाए'त्ति क्षेत्रतोऽप्रदेशो योऽसावेकगुणकालकत्वादिनाऽप्रदेशोऽपि स्यादनेकगुणकालकत्वादिना सप्रदेशोऽपि स्यादिति। अथ कालाप्रदेशं भावा-प्रदेशं च निरूपयन्नाह-'जहा खेत्तओ एवं कालओ भावओ'त्ति यथा क्षेत्रतोऽप्रदेश उक्तः, एवं कालतो भावतश्चासौ वाच्यः, तथाहि-'जे कालओ अप्पएसे से दव्वओ सिय सपएसे सिय अपएसे' एवं क्षेत्रतो भावतश्च, तथा 'जे भावओ अपएसे से दव्वओ सिय सपएसे सिय अपएसे,' एवं क्षेत्रतः कालतश्चेति, उक्तोऽप्रदेशः। अथ सप्रदेशमाह-'जे दव्वओ सप्पएसे'त्ति, अयमर्थो-यो द्रव्यतो द्व्याद्यणुकादित्वेन सप्रदेशः स क्षेत्रतः स्यात्सप्रदेशो द्व्यादिप्रदेशो द्व्यादिप्रदेशावगाहित्वात्, स्यादप्रदेश एव एक-प्रदेशावगाहित्वात्, एवं कालतो भावतश्चेति, तथा यः क्षेत्रतः सप्रदेशो द्व्यादिप्रदेशावगाहित्वात् स द्रव्यतः सप्रदेश एव, द्रव्यतोऽप्र-देशस्य द्व्यादिप्रदेशावगाहासम्भात्, कालतो भावतश्चासौ द्वेधापि स्यादिति, तथा यः कालतः सप्रदेशः स द्रव्यतः क्षेत्रतो भावतश्च

द्विधापि स्यात्, तथा यो भावतः सप्रदेशः, स द्रव्यक्षेत्रकालैर्द्विधाऽपि स्यादिति सप्रदेशसूत्राणां भावार्थ इति। अथैषां सप्रदेशानां द्रव्याणामल्पबहुत्वविभागमाह—'एएसि णं'ति इत्यादि सूत्रसिद्धं, यदाहुर्वृद्धाः—'वोच्छं अप्पाबहुयं दव्वक्खेत्तद्धभावओ वावि। अपएससप्पएसाण पोग्गलाणं समासेणं ॥१॥ दव्वेणं परमाणू खेत्तेणेगप्पएसमोगाढो। कालेण एगसमया अपएसा पुग्गला हुंति ॥२॥ भावेण अप्पएसा एगगुणा जे हवंति वन्नाई। वर्णादिभिरिति, तेच्चिय थोवा जं पुण बाहल्लं पायसो दव्वे ॥३॥ द्रव्ये प्रायो द्व्यादिगुणाश्चानन्तगुणान्ताः कालकत्वादयः स्युः, एकगुणकालकादयस्त्वल्पा इति विस्तरतो वृहद्वृत्तौ प्रोक्तमस्ति तदत्र ग्रन्थगौरवभयान्न लिखितं, जीवा वर्द्धन्ते हीयन्ते अवस्थिताः ?, (सू० २२१) गौतम! अवस्थिताः, 'नेरइया णं'ति 'अवट्ठिया जहण्णेणमेगसमयं उक्कोसेणं चउवीसई मुहुत्त'त्ति, कथं ?, सप्तस्वपि पृथिवीषु द्वादश मुहूर्त्तान् यावन्न कोऽप्युत्पद्यते उद्वर्त्तते च, उत्कृष्टतो विरहकालस्यैवंरूपत्वात्, अन्येषु पुनर्द्वादशसु मुहूर्त्तेषु यावन्त उत्पद्यन्ते तावन्त एवोद्वर्त्तन्त इत्येवं चतुर्विंशतिं यावन्नारकाणामेकपरिमाणत्वादवस्थितत्वं, वृद्धिहान्योरभाव इत्यर्थः, एवं रत्नप्रभादिषु य उत्पादोद्वर्त्तनाविरहकालश्चतुर्विंशतिमुहूर्त्तादिको व्युत्क्रान्तिपदेऽभिहितः स तत्र तुल्यस्य समसङ्ख्यानामुत्पादोद्वर्त्तनाकालस्य मीलनात् द्विगुणितः सन्नवस्थितकालोऽष्टचत्वारिंशन्मुहूर्त्तादिकः सूत्रोक्तः स्यात्, विरहकालश्च प्रतिपदमवस्थानकालार्द्धभूतः स्वयमभ्यूह्यः, 'एगिंदिया वड्ढंति' तेषु विरहाभावेऽपि बहुतराणामुत्पादादल्पतराणां चोद्वर्त्तनात्, 'हायंति'त्ति बहुतराणामुद्वर्त्तनात् अल्पतराणां चोत्पादात्, 'अवट्ठिय'त्ति तुल्यानामुत्पादादुद्वर्त्तनाच्चेति, 'एतेहिं तिहिवि'त्ति एतेषु त्रिष्वपि एकेन्द्रियवृद्ध्यादिषु आवलिकासङ्ख्येयो भागः, ततः परं यथायोगं वृद्ध्यादेरभावात्, 'दो अंतोमुहुत्त'त्ति एकमन्तर्मुहूर्त्तं विरहकालः द्वितीयं तु समानानामुत्पादोद्वर्त्तनकालः, सङ्ख्येया मासाः

सङ्ख्येया वासाः, इह विरहकालस्य सङ्ख्यातमासवर्षरूपस्य द्विगुणितत्वेऽपि सङ्ख्यातत्वमेवेत्यतः सङ्ख्यातमासाः इत्युक्तं,'एवं गेवेज्जदेवाणंपि' इह यद्यपि ग्रैवेयकाधस्तनत्रये सङ्ख्यातानि शतानि वर्षाणां मध्यमे सहस्राणि उपरिमे लक्षाणि विरह उच्यते तथापि द्विगुणनेऽपि सङ्ख्यातवर्षत्वं न विरुध्यते; विजयादिषु त्वसङ्ख्यातकालो विरहः, स च द्विगुणितोऽपि स एव, सर्वार्थसिद्धे पल्योपमसङ्ख्येयभागः, सोऽपि द्विगुणितः सङ्ख्येयभाग एव स्यात्, अत उक्तम्–'विजयवेजयन्तजयंतापराजियाणं असंखिज्जाइं वाससहस्साइं' इत्यादि। 'सिद्धा सोवचय'त्ति अनेकसिद्धानामेकसमये द्व्यादीनामष्टोत्तरशतान्तानां प्ररूपणागाथामाह सङ्ग्रहिण्यां यथा 'बत्तीसा अडयाल०'त्ति एतद्व्याख्या–यदैकसमयेनैकादय उत्कर्षतो द्वात्रिंशत्सिद्ध्यन्ति एवं द्वितीयसमयेऽपि द्वात्रिंशद् एवं नैरन्तर्येण अष्टसमयान् यावद् द्वात्रिंशत्सिद्ध्यन्ति ततोऽवश्यमन्तरं स्यात्, यदा ४८ एकसमयेन सिद्ध्यन्ति तदा निरन्तरं सप्त समयान्, तदनन्तरमन्तरं,यदा एकोनपञ्चाशतमादौ कृत्वा एकसमयेन षष्टिः सिद्ध्यन्ति तदा निरन्तरं ६ समयान्, तदुपर्यन्तरं समयादि स्यात्, एवमग्रेऽपि ज्ञेयं, यावदष्टोत्तरशतमेकसमयेन सिद्ध्यति, तदनन्तरमवश्यमन्तरं इत्युक्ताः सिद्धाः सोपचयाः। अथ जीवानेव भङ्गान्तरेणाह–सोपचयाः सवृद्धयः प्राक्तनेष्वन्येषामुत्पादात्,सापचयाः प्राक्तनेभ्यः केषाञ्चिदुद्वर्त्तनात् सक्षया इति,सोपचयसापचया उत्पादोद्वर्त्तनाभ्यां वृद्धिहान्योर्युगपद्भावात्,निरुपचयनिरपचया उत्पादोद्वर्त्तनयोरभावेन वृद्धिहान्योरभावात्, ननूपचयो वृद्धिः, अपचयस्तु हानिः युगपत् द्वयमद्वयं चावस्थितत्वमेवं न शब्दभेदव्यतिरेकेण कोऽनयोः सूत्रयोर्भेदः ?, उच्यते, पूर्वत्र परिमाणमभिप्रेतमिह तु तदनपेक्षमुत्पादोद्वर्त्तनामात्रं, ततश्चेह तृतीयभङ्गके पूर्वोक्तवृद्ध्यादिविकल्पानां त्रयमपि स्यात्, तथाहि–बहुतरोत्पादे वृद्धिः, बहुतरोद्वर्त्तने च हानिः, समोत्पादोद्वर्त्तनयोश्चावस्थितत्वमित्येवं भेदः, 'एगिंदिया तइयाए' सोपचयास्सा-

पचया इत्यर्थः, युगपदुत्पादोद्वर्त्तनाभ्यां वृद्धिहानिभावात्, शेषभङ्गेषु ते न सम्भवन्ति,प्रत्येकमुत्पादोद्वर्त्तनयोस्तद्विरहस्य वा भावात्, 'अवट्ठिएहिं'ति अत्र प्राकृतत्वात् तृतीयार्थे सप्तमी वाच्या, कथं ?, निरुपचयनिरपचयनिरपचयेषु 'वक्कंतीकालो भाणियव्वो' विरहकालो वाच्यः ॥ पञ्चमशतेऽष्टमः ॥

'जहा एयणुद्देसए'त्ति (सू० २२२) एजनोद्देशकोऽस्यैव पञ्चमशतस्य सप्तमः, तत्र पञ्चेन्द्रियतिर्यग्वक्तव्यता,'टङ्का कूडा सेला सिहरी'त्यादिका योक्ता सेह भणितव्या, अत्रोत्तरम्—'पुढवीवि नगर'मिति पृथिव्यादिसमुदायो राजगृहं, न पृथिव्यादिसमुदायादृते राजगृहशब्दप्रवृत्तिः, 'पुढवी जीवा इय अजीवाइय'त्ति जीवाजीवस्वभावं राजगृहमिति प्रतीतं, ततश्च विवक्षिता पृथिवी सचेतनाचेतनत्वेन जीवाश्चाजीवाश्चेति राजगृहमिति प्रोच्यते, 'दिवा सुभ'त्ति (सू० २२३) दिवा—दिवसे शुभाः पुद्गलाः स्युः, किमुक्तं भवति ?—शुभः पुद्गलपरिणामः, स चार्ककरसम्पर्कात्, 'रत्तिं'ति रात्रौ, 'नेरइयाणं असुभपुग्गल'त्ति तत्क्षेत्रस्य पुद्गलशुभतानिमित्तभूतरविकरादिप्रकाशकवस्तुवर्जितत्वात् 'असुरकुमाराणं सुभा पोग्गल'त्ति तदाश्रयादीनां भास्वरत्वात् 'पुढविकाइय'त्ति पृथ्वीकायिकादयस्त्रीन्द्रियान्ता यथा नैरयिका उक्ताः तथा वाच्याः, एषां नास्त्युद्योतस्तमिस्रं चास्ति, पुद्गलानामशुभत्वात्, इह चेयं भावना—एतत्क्षेत्रे रविकरसम्पर्के सत्यपि एषां चक्षुरिन्द्रियाभावेन दृश्यवस्तुनो दर्शनाभावात् शुभपुद्गलकार्याकरणेनाशुभपुद्गला लभ्यन्ते, ततश्चैषामन्धकारमेवेति, 'चउरिंदियाणं सुभासुभ'त्ति एषां चक्षुःसद्भावेन रविकरादिसद्भावेन दृश्यार्थाववोधहेतुत्वात् शुभाः पुद्गलाः, रविकराद्यभावे त्वर्थाववोधाजनकत्वादशुभाः, 'तत्थ गया णं'ति (सू० २२४) नरकस्थितैः, षष्ठ्यास्तृतीयार्थत्वादेव, 'पण्णायइ'त्ति एवं प्रज्ञायते, इदं विज्ञायते, 'समयाइ वा' समया इति वा

'इहं तेसिं'ति इह–मनुष्यक्षेत्रे तेषां–समयादीनां मानं–परिमाणं,आदित्यगतिसमभिव्यङ्ग्यत्वात् ,तस्या आदित्यगतेश्च मनुष्यक्षेत्र एव भावात् , नरकादौ त्वभावादिति, 'इहं तेसिं पमाणं'ति इह–मनुष्यक्षेत्रे समयादीनां प्रमाणं–प्रकृष्टं मानं, सूक्ष्ममानमित्यर्थः, तत्र मुहूर्त्तस्तावन्मानं, तदपेक्षया लवः सूक्ष्मत्वात् प्रमाणं, तदपेक्षया स्तोकः प्रमाणं लवस्तु मानमित्येवं नेयं यावत्समय इति, ततश्च 'इहं तेसिं'मित्यादि इह—मर्त्यलोके मनुजैस्तेषां समयादीनां सम्बन्धि एवं वक्ष्यमाणं स्वरूपं समयत्वाद्येव ज्ञायते, तद्यथा–'समयाइ वा' इत्यादि, इह च समयक्षेत्राद्बहिर्वर्त्तिनां समयाद्यज्ञानमवसेयं, तत्र समयादिकालस्याभावेन तद्व्यवहाराभावात् , तथा पञ्चेन्द्रियतिर्यञ्चो भवनपतिव्यन्तरज्योतिष्काश्च यद्यपि केचन मनुष्यक्षेत्रेऽपि सन्ति,तथापि तेऽल्पाः प्रायस्तद्व्यवहारिणश्च इतरे तु बहव इति तदपेक्षया ते न जानन्तीत्युच्यते, इति कालनिरूपणाधिकाराद् रात्रिंदिवलक्षणकालविशेषनिरूपणार्थमिदमाह– 'तेणं कालेण'मित्यादि ( सू० २२५ ) 'असंखिज्जे' असङ्ख्यातप्रदेशात्मकत्वात् , लोके चतुर्दशरज्ज्वात्मके क्षेत्रलोके आधारभूते 'अणंतराइंदिय'त्ति अनन्तपरिमाणानि रात्रिंदिवानि–अहोरात्राणि 'उप्पज्जिंसु'त्ति उत्पन्नानि उत्पद्यन्ते उत्पत्स्यन्ते वा, पृच्छतामयमभिप्रायो–यदि नामासङ्ख्यातो लोकस्तदा कथमनन्तानि तत्र भवितुमर्हन्ति ?, अल्पत्वादाधारस्य महत्त्वाच्चाधेयस्येति, तथा 'परित्ता राइंदिय'त्ति परीत्तानि–नियतपरिमाणानि, नानन्तानि, इहाप्ययमभिप्रायो–यद्यनन्तानि तदा कथं परीत्तानीति विरोधः, अत्र 'हन्ते'त्याद्युत्तरं, अत्रायमभिप्रायः–असङ्ख्यातप्रदेशेऽपि लोके अनन्ता जीवा वर्त्तन्ते, तथाविधस्वरूपत्वाद् , एकत्राश्रये सहस्रादिसङ्ख्यप्रदीपप्रभा इव, ते चैकत्रैव समयादिके कालेऽनन्ता उत्पद्यन्ते विनश्यन्ति च, स च समयादिकालस्तेषु साधारणशरीरावस्थायामनन्तेषु प्रत्येकशरीरावस्थायां च परीत्तेषु प्रत्येकं वर्त्तते, तत्स्थितिलक्षणपर्यायरूपत्वात् तस्य, तथा

कालोऽनन्तः परीत्तश्च स्यादित्येवं वा सङ्ख्येयेऽपि लोके रात्रिंदिवान्यनन्तानि परीत्तानि च कालत्रये युज्यन्त इति, एतदेव प्रश्नपूर्वकं तत्संमतजिनमतेन दर्शयन्नाह—'से नूणं'ति 'भे'त्ति भवतां सम्बन्धिना 'अज्जो'त्ति हे आर्याः 'पुरिसादाणीयेणं'ति पुरुषाणां मध्ये आदानीयः—आदेयः पुरुषादानीयः तेन 'सासए'त्ति प्रतिक्षणं स्थायी, स्थिर इत्यर्थः, 'वुइए'ति उक्तः, स्थिरश्च उत्पत्तिक्षणादप्यारभ्य स्यादित्यत आह–'अणाइए'त्ति अनादिकः, स च सान्तोऽपि स्याद् भव्यत्ववदित्याह–'अणवयग्गे'त्ति अनवदग्रः–अनन्तः 'परित्ते'त्ति परिमितः प्रदेशतः, अनेन लोकस्यासङ्ख्येयत्वं पार्श्वजिनस्यापि सम्मतमिति दर्शितं, 'परिवुडे'त्ति अलोकेन परिवृतः, 'हेट्ठा विच्छिण्णे'त्ति सप्तरज्जुविस्तृतत्वादधः, 'मज्झे'त्ति मध्ये एकरज्जुविस्तारत्वात्, 'उप्पिं'ति ब्रह्मलोकदेशस्य पञ्चरज्जुविस्तारत्वात्, एतदेवोपमानतः प्राह—'अहे पलियंकसंठिए'त्ति उपरि सङ्कीर्णत्वाधोविस्तृतत्वाभ्यां 'मज्झे वरवइर'त्ति वरवज्रवद्विग्रहः–शरीरमाकारो मध्यक्षामत्वेन यस्य स तथा, स्वार्थिकश्चेकप्रत्ययः, 'उप्पिं उड्ढमुइंगागारसंठिए'त्ति ऊर्ध्वो, न तु तिरश्चीनो, यो मृदङ्गस्तस्याकारेण संस्थितो यः स तथा, मल्लकसम्पुटाकार इत्यर्थः, 'अणंता जीवघण'त्ति अनन्ताः परिमाणतः सूक्ष्मादिसाधारणशरीराणां विवक्षितत्वात्, सन्तत्यपेक्षया चानन्ता जीवसन्ततीनामपर्यवसानत्वात्, जीवाश्च ते घनाश्च अनन्तपर्यायसमूहरूपत्वादसङ्ख्येयप्रदेशपिण्डरूपत्वाच्च जीवघनाः, किमित्याह–'उप्पज्जित्ते'त्ति उत्पद्योत्पद्य निलीयन्ते–विनश्यन्ति, तथा 'परित्ता' प्रत्येकं शरीराः, अनपेक्षितातीतानागतसन्तानतया वा सङ्क्षिप्ताः जीवघनाः, अनेन च प्रश्नेन यदुक्तं 'अणंता राइंदिया' इत्यादि तस्योत्तरं सूचितं, यतोऽनन्तपरीत्तजीवसम्बन्धात् कालविशेषा अपि अनन्ताः परीत्ताश्च व्यपदिश्यन्ते, अतो विरोधः परिहृतः स्यात्, अथ लोकमेव स्वरूपत आह–'से नूणं भूए'त्ति ४ जीवघना उत्पद्य निलीयन्ते स-

लोको भूतः सद्भूतो वा भवनधर्मयोगात्, स चानुत्पत्तिकोऽपि स्यात् यथा नयमतेनाकाशमत आह–उत्पन्नः, एवंविधश्च अनश्वरोऽपि स्यात् यथा विवक्षितघटाभाव इत्यत आह–विगतः, स चानन्वयोऽपि किल स्यात् अत आह–परिणतः–पर्यायान्तराण्यापन्नो, न तु निरन्वयनाशेन नष्टः, अथ कथमयमेवंविधो निश्चीयते इत्याह–'अजीवेहिं'ति अजीवैः–पुद्गलादिभिः सत्तां बिभ्रद्भिरुत्पद्यमाने-र्विगच्छद्भिः परिणमद्भिश्च लोकानन्यभूतैर्लोक्यते–निश्चीयते प्रलोक्यते–प्रकर्षेण निश्चीयते भूतादिधर्मकोऽयमिति, अत एव यथा-र्थनामाऽसाविति दर्शयन्नाह–'जे लोक्कइ से लोए'त्ति यो लोक्यते प्रमाणेन स लोकः–लोकशब्दवाच्यः स्यादिति, एवं लोक-स्वरूपाभिधायकपार्श्वजिनवचनसंस्मरणेन स्ववचनं भगवान् समर्थितवानिति, 'पच्चभिजाणंति'त्ति प्रत्यभिजानते सर्वज्ञमिति, अनंतरं 'देवलोएसु उववण्णा' इत्युक्तमतो देवलोकप्ररूपणसूत्रम्, 'कइविहा णं'(सू.२२६)मित्यादि ॥ पञ्चमशते नवम उद्देशकः॥

अथ चन्द्रं समुद्दिश्य दशमोद्देशकमाह, तच्च चेदं सूत्रम्, 'तेणं कालेणं'(सू.२२७)मित्यादि, एतच्चन्द्राभिलापेन पञ्चमशतप्रथमो-द्देशकवन्नेयमिति ॥ पञ्चमशते दशमः ॥ समाप्तं पञ्चमशतमिति ॥

---

अथ षष्ठमारभ्यते—एतत्सङ्ग्रहणीगाथेयम्–'वेयण'इत्यादि (*३७) तत्र 'वेयण'त्ति महावेदनो महानिर्जर इति प्रतिपादनपरः प्रथमः, आहाराद्यर्थाभिधायको द्वितीयः, महाश्रवणस्य पुद्गला बध्यन्ते इति तृतीयः, 'सपएस'त्ति सप्रदेशो जीवोऽप्रदेशो वा इति चतुर्थः, 'तमुयए'त्ति तमस्कायार्थः पञ्चमः, 'भविए'त्ति भव्यो नारकत्वादिनोत्पादस्य योग्य इत्यर्थः षष्ठः, 'साली'त्ति शाल्या-दिधान्यवक्तव्यतार्थः सप्तमः, 'पुढवि'त्ति रत्नप्रभादिपृथिवीवक्तव्यतार्थोऽष्टमः, 'कम्म'त्ति कर्मबन्धाभिधायको नवमः, 'अण्ण-उत्थि'त्ति अन्यतीर्थिकवक्तव्यतार्थो दशमः । 'से नूणं'ति (सू. २२८) महावेदनः–उपसर्गादिसमुद्भूतविशिष्टपीडः महानिर्जरो–

विशिष्टकर्मक्षयः, अनयोश्चान्योऽन्याविनाभूतत्वाविर्भावनाय 'जे महाणिज्जरे' इति प्रत्यावर्त्तनमित्येकः प्रश्नः, तथा महावेदनस्य चाल्पवेदनस्य च मध्ये स श्रेयान् यः प्रशस्तनिर्जराकः—कल्याणानुबन्धनिर्जर इत्येष द्वितीयः प्रश्नः, हन्तेत्याद्युत्तरं, प्रथमप्रश्नोत्तरे महावीरो महोपसर्गकाले ज्ञातं, द्वितीयस्यापि स एवोपसर्गानुपसर्गावस्थायामिति, यो महावेदनः स महानिर्जर इति यदुक्तं तत्र व्यभिचारं शङ्कमान आह—'छट्ठसत्तमासु णं'ति, 'दुधोयतराए'त्ति दुष्करतरधावनप्रक्रियं दुवामतराए—दुर्वाम्यतरकं दुस्त्याज्यतरकलङ्कं, दुपरिकम्मतराए—कष्टकर्त्तव्यतेजोजननभङ्गकरणादिप्रक्रियं, अनेन विशेषणत्रयेणापि दुर्विशोध्यमित्युक्तं 'गाढीकयाइं'ति आत्मप्रदेशैः सह गाढबद्धानि, सणसूत्रगाढबद्धसूचीकलापवत् 'चिक्कणीकयाइं' सूक्ष्मकर्म्मस्कन्धानां सरसतया मिथोगाढसम्बन्धकरणतो दुर्भेदीकृतानि मृत्पिण्डवत् ,'सिलिट्ठीकयाइं' श्लिष्टीकृतानि निधत्तानि—सूत्रबद्धाग्नितप्तलोहशलाकाकलापवत्, 'खिलीभूयाइं' खिलीभूतानि अनुभूतिव्यतिरिक्तोपायान्तरेण क्षपयितुमशक्यानि, निकाचितानीत्यर्थः, विशेषणचतुष्टयेनाप्यनेन दुर्विशोध्यानि स्युस्ततः 'संपगाढं'ति सम्प्रगाढां अतिदुःसहां 'णो महापज्जवसाणा भवन्ति' अनेन महानिर्जराया अभावस्य निर्वाणाभावलक्षणमुक्तं फलमिति नाप्रस्तुतत्वमस्य शङ्कनीयमीति, तदेवं यो महावेदनः स महानिर्जर इति विशिष्टजीवापेक्षमवगन्तव्यं, न पुनर्नारकादिक्लिष्टकर्मजीवापेक्षं, यदपि यो महानिर्जरः स महावेदन इत्युक्तं तदपि प्रायिकं, यतः स्यादयोगी महानिर्जरो महावेदनस्तु भजनयेति, 'अहिगरणि'त्ति अधिकरणी यत्र लोहकारा अयोघनेन लोहानि कुट्टयंति, 'आउडेमाणे'त्ति आकुट्टयन् 'सद्देणं'ति अयोघनघातप्रभवेण ध्वनिना पुरुषहुंकृतिरूपेण वा 'घोसेणं'ति तस्यैवानुनादेन 'परम्पराघाएणं'ति परम्परा—निरन्तरता तत्प्राधान्ये घातः—ताडनं परम्पराघातस्तेन, उपर्युपरिघातेनेति, 'अहाबायरे'त्ति स्थूलप्रकारान् 'सुधोयत-

राए'त्ति अनेन सुविशोध्यं स्यादिति 'अहाबायराइं'ति स्थूलतरस्कन्धानि, असाराणीत्यर्थः, 'सिढिलीकयाइं'ति श्लथीकृतानि, मन्दविपाकीकृतानि, 'निट्ठियाइं कयाइं'ति निस्सत्ताकानि कृतानि 'विपरिणामियाइं' विपरिणामं नीतानि स्थितिरसघातादिभिः, तानि क्षिप्रमेव विध्वस्तानि स्युरिति, एभिर्विशेषणैः सुविशोध्यानि इत्युक्तं स्यात्, 'कम्मकरणे'त्ति कर्मविषयं करणं, जीववीर्यं बन्धनसङ्क्रमादिनिमित्तभूतं कर्मकरणं 'वेमायाए'त्ति विविधमात्रया कदाचित् सातां कदाचिदसातां 'महावेयणे'त्ति (*३८) सङ्ग्रहगाथा गतार्था ॥ षष्ठशते प्रथम उद्देशकः ॥

अथ द्वितीयः–आहारोद्देशकः, (सू. २३१) स च प्रज्ञापनायामिव दृश्यः, स चायं–'नेरइया णं भंते! किं सच्चित्ताहारा अचित्ताहारा मीसाहारा ?, गोयमा ! नो सचित्ताहारा, अचित्ताहारा, नो मीसाहारा'इत्यादि ॥ षष्ठशते द्वितीय उद्देशकः ॥

'बहुकम्म'त्ति (*३९–४०) महाकर्मणः सर्वतः पुद्गला बध्यन्ते इत्यादि वाच्यं, 'वत्थपोग्गलापओगसा वीससा'त्ति यथा वस्त्रे पुद्गलाः प्रयोगतो विस्रसातश्च चीयंते किमेवं जीवानामपीति वाच्यं, 'साइए'त्ति वस्त्रस्य सादिः पुद्गलचयः, एवं किं जीवानामपि इति प्रश्न उत्तरं च वाच्यं, 'कम्मट्ठिइ'त्ति कर्मस्थितिर्वाच्या 'इत्थि'त्ति किं स्त्री पुरुषादिर्वा कर्म बध्नातीति, 'संजय'त्ति किं संयतादिः, 'सम्मदिट्ठि'त्ति किं सम्यग्दृष्ट्यादिः, 'सण्णी य'त्ति संज्ञी भव्यो दर्शनी पर्याप्तको भाषकोऽपरीत्तो ज्ञानी योगी उपयोगी आहारकः सूक्ष्मः चरमः, 'बंधे य'त्ति एतानाश्रित्य बन्धो वाच्यः, 'अप्पबहु'त्ति एषामेव स्त्रीप्रभृतीनां कर्मबन्धकानां मिथोऽल्पबहुत्वं वाच्यमिति, तत्र बहुकर्मद्वारे 'महाकम्मस्स'त्ति (सू० २३२) महाकर्मणः स्थित्याद्यपेक्षया महाक्रियस्य–अलघुकायिक्यादिक्रियस्य महाश्रवस्य–बृहन्मिथ्यात्वादिकर्मबन्धहेतुकस्य महावेदनस्य—महापीडस्य 'सव्व-

ओ'त्ति सर्वतः–सर्वासु दिक्षु सर्वान् वा जीवप्रदेशानाश्रित्य बध्यन्ते—चीयन्ते बन्धनतः, उपचीयन्ते–निषेकरचनतः, अथवा बध्यन्ते बन्धनतः चीयन्ते निधत्ततः उपचीयन्ते निकाचनतः, सदा–सर्वदा समितं–सततं, 'तस्स आय'त्ति यस्य जीवस्य पुद्गला बध्यन्ते तस्यात्मा–बाह्यात्मा, शरीरमित्यर्थः, 'अणिट्ठत्ताए' इच्छाया अविषयतया 'अकंतत्ताए' असुंदरतया 'अप्पियत्ताए' अप्रेमहेतुतया 'असुभत्ताए' अमङ्गलतया 'अमणुन्नत्ताए' न मनसा–भावतो ज्ञायते सुन्दरोऽयमित्यमनोज्ञस्तद्भावस्तत्ता तया 'अमणामत्ताए' न मनसा अम्यते–गम्यते संस्मरणतोऽमनोऽमस्तद्भावस्तत्ता तया 'अणिच्छियत्ताए' अनीप्सिततया—प्राप्तुमवाञ्छितत्वेन 'अहिज्झियत्ताए' भिध्या–लोभः, सा सञ्जाता यत्र स भिध्यितो न भिध्यितः अभिध्यितस्तद्भावस्तत्ता तया 'अहत्ताए' जघन्यतया,'नो उड्ढत्ताए' न मुख्यतया 'अहयस्स'त्ति अपरिभुक्तस्य 'धोयस्स' नीरधौतस्य तंतुवायस्य तन्त्रात् तुरिवेमादेरपनीतमात्रस्य 'बज्झंती' त्यादिना पदत्रयेणेह वस्त्रस्य पुद्गलानां च यथोत्तरं सम्बन्धप्रकर्ष उक्तः, 'भिज्झंति'त्ति प्राक्तनसम्बन्धविशेषत्यागात् छिज्जंति–विशेषतः, विद्धस्संति ततोऽधःपातात्, परिविद्धस्संति, विशेषतया पातात्, 'जल्लियस्स' जल्लितस्य–यानगलनधर्म्मोपेतमलयुक्तस्य 'पंकियस्स' पङ्कितस्य—आर्द्रमलोपेतस्य 'मइलियस्स' मलिनस्य–कठिनमलयुक्तस्य 'परिकम्मिज्जमाणस्स' क्रियमाणशोधनार्थोपक्रमस्य ॥'वत्थस्सत्ति (सू० २३३) वस्त्रस्य द्वारे 'पओगसा वीससा' छांदसत्त्वात् प्रयोगेण–पुरुषव्यापारेण विस्रसा–स्वभावेन, 'जीवाणं कम्मोवचए पओगसा नो वीससा, प्रयोगेणैव, अन्यथा अयोगस्यापि बन्धप्रसङ्गः, सादिद्वारे 'इरियावहियबंधगस्स'त्ति (सू० २३४) ईर्यापथो–गमनमार्गस्तत्र भवमैर्यापथिकं–केवलयोगप्रत्ययं कर्म तद्बन्धकस्य, उपशान्तमोहस्य क्षीणमोहस्य सयोगिकेवलिनश्चेति भावः, ईर्यापथिककर्मणो हि अबद्धपूर्वस्य बन्धनात् सादित्वं, अयो-

ग्यवस्थायां श्रेणिप्रतिपाते वा अबन्धनात् सपर्यवसितत्वं, 'गइरागइं पडुच्च' नारकादिगतिगमनमाश्रित्य सादिकः, आगमनमाश्रित्य सपर्यवसितः, 'सिद्धगइ'त्ति 'साइया अपज्जवसिया' इहाक्षेपपरिहारावेवं–साई अपज्जवसिया सिद्धा न य नामतीयकालम्मि। आसि कयाइवि सुण्णा, सिद्धी सिद्धेहिं सिद्धंते ॥१॥ सव्वं साइसरीरं, नय नामादिमयदेहसब्भावो। कालाणाइत्तणओ, जहा व राइंदियाईणं ॥२॥ सव्वो साई सिद्धो, न यादिमो विज्जई तहा तं च। सिद्धी सिद्धा य सया, निद्दिट्ठा रोहपुच्छाए ॥३॥"त्ति, 'तं च'त्ति तच्च सिद्धानादित्वमिष्यते, यतः–'सिद्धी सिद्धा य'त्ति 'भवसिद्धिया लद्धिं'ति भवसिद्धिकानां भव्यत्वलब्धिः सिद्धत्वेऽपैतीतिकृत्वा अनादिकाः सपर्यवसिता चेति, कर्म्मस्थितिद्वारे 'तिन्नि वाससहस्साइं अबाहा, अबाहूणिय'त्ति(सू० २३५)'बाधृ लोडने', बाधत इति बाधा–कर्मण उदयः, न बाधा अबाधा, कर्मणो बन्धस्योदयस्य चान्तरं, अबाधया उक्तलक्षणया ऊनिका अबाधोनिका कर्म्मस्थितिः–कर्म्मावस्थानकालः उक्तलक्षणः कर्मनिषेकः स्यात्, तत्र कर्मनिषेको नाम कर्मदलिकानुभवनार्थो रचनाविशेषः, तत्र च प्रथमसमये बहुकं निषिंचति–अनुभवति, द्वितीयसमये विशेषहीनं तृतीयसमये विशेषहीनमेव यावदुत्कृष्टस्थितिकं कर्मदलिकं तावद्विशेषहीनं २ निषिञ्चति, तथा चोक्तम्–"मोत्तूण सगमबाहं पढमाइ ठिईइ बहुतरं दव्वं। सेसे विसेसहीणं जावुक्कोसंति सव्वासिं ॥१॥" इदमुक्तं स्यात्–बद्धमपि ज्ञानावरणकर्म त्रीणि वर्षसहस्राणि यावदवेद्यमानमास्ते, ततस्तन्न्यूनोऽनुभवनकालस्तस्य, स च वर्षसहस्रत्रयन्यूनत्रिंशत्सागरोपमकोटाकोटीमान इति, एवमन्यकर्मस्वप्यबाधाकालो व्याख्येयः, नवरमायुषि त्रयस्त्रिंशत्सागरोपमाणि निषेकः पूर्वकोटीत्रिभागश्च अबाधाकाल इति, 'वेयणिज्जेणं जहण्णेणं दो समया'त्ति केवलं काययोगप्रत्ययबन्धापेक्षया वेदनीयं द्विसमयस्थितिकं स्यात्, एकत्र बध्यते द्वितीये वेद्यते, यच्चोच्यते 'वेयणियस्स जहण्णा बारस नामगोयाणं अट्ठ उ मुहुत्त'त्ति, तत्तु

सकषायस्थितिबन्धमाश्रित्य वेदितव्यमिति । स्त्रीद्वारे 'नाणावरणिज्जं कम्मं किं इत्थी बंधइ' (सू० २३६) इत्यादि प्रश्नः, तत्र न स्त्री न पुरुषो न नपुंसको वेदोदयरहितः, स च निवृत्तिबादरसंपरायप्रभृतिगुणस्थानवर्त्ती स्यात्, तत्र चानिवृत्तिबादरसम्परायसूक्ष्मसम्परायौ ज्ञानावरणीयस्य बन्धकौ सप्तविधषड्विधबन्धकत्वात्, उपशान्तमोहादिकस्त्वबन्धकः,एकविधबन्धकत्वाद्, अत उक्तं–स्याद् बध्नाति स्यान्न बध्नाति, 'आउगं णं भंते'त्ति इत्यादि प्रश्नः, तत्र स्त्र्यादित्रयमायुः स्याद् बध्नाति स्यान्न बध्नाति, बन्धकाले बध्नाति अबन्धकाले न बध्नाति, आयुषः सकृदेवैकत्र भवे बन्धात्, निवृत्तस्त्र्यादिवेदस्तु न बध्नाति, निवृत्तिबादरसम्परायादिगुणस्थानकेष्वायुर्बन्धस्य व्यवच्छिन्नत्वात्, संयतद्वारे 'संजए सिय'त्ति संयतः आद्यसंयमचतुष्टयवृत्तिर्ज्ञानावरणं बध्नीयात्, यथाख्यातसंयमसंयतस्तूपशान्तमोहादिर्न बध्नाति, अत उक्तं–स्याद् बध्नाति स्यान्न बध्नाति, असंयतो–मिथ्यादृक्प्रमुखः, संयतासंयतस्तु देशविरतः, तौ च बध्नीतः, निषिद्धसंयमादिभावस्तु सिद्धः, स च न बध्नाति, हेत्वभावादिति, 'आउगं हेट्ठिल्ला तिन्नि भयणाए'त्ति संयतोऽसंयतः संयतासंयतश्चैव त्रयोऽपि आयुर्बन्धकाले आयुर्बध्नन्ति अन्यदा नेति भजनेत्युक्तं, 'उवरि'त्ति संयतादिषूपरितनः सिद्धः, स च न बध्नात्यायुः। सम्यग्दृष्टिद्वारे सम्यग्दृष्टिर्वीतरागः तदितरश्च स्यात्, तत्र वीतरागो ज्ञानावरणं न बध्नाति, एकविधबन्धकत्वात्, इतरश्चावीतरागो बध्नातीति स्यादित्युक्तं, मिथ्यादृग्मिश्रदृष्टी तु बध्नीत एव इति, 'आउए हेट्ठिल्ला दो भयणाए'त्ति सम्यग्मिथ्यादृष्टी तु आयुः स्याद् बध्नीत इत्यर्थः, तथाहि–सम्यग्दृष्टिरपूर्वकरणादिरायुर्न बध्नाति, इतरस्तु आयुर्बन्धकाले तद् बध्नाति अन्यदा तु न बध्नाति, एवं मिथ्यादृष्टिरपि, 'सम्मामिच्छदिट्ठि'त्ति मिश्रदृष्टिस्त्वायुर्न बध्नात्येव,तद्बन्धाध्यवसायस्थानाभावादिति, 'मीसा न रागदोसो' इति मिश्रगुणस्थानकलक्षणेन कार्मग्रथिकेन 'न सम्ममीसो कुणइ

काल'मिति वचसा आयुर्न बध्नात्येव, संज्ञिद्वारे 'सन्नी सिय'त्ति संज्ञी—मनःपर्याप्तियुक्तः, स च यदि वीतरागस्तदा ज्ञानावरणं न बध्नाति यदि पुनरितरस्तदा बध्नाति ततः स्यादित्युक्तं, 'असण्णी बंधइ'त्ति मनःपर्याप्तिविकलो बध्नात्येव, 'नोसन्नीनोअसन्नी' केवली सिद्धश्च न बध्नाति, हेत्वभावात्, 'वेयणिज्जं हेट्ठिल्ला दो बंधंति' संज्ञी असंज्ञी च द्वौ वेदनीयं बध्नीतः, अयोगिसिद्धवर्जानां तद्बन्धकत्वात्, 'उवरिल्ले भयणाए'त्ति उपरितनो नोसंज्ञीनोअसंज्ञी च, स च सयोगायोगकेवली सिद्धश्च, तत्र यदि सयोगकेवली तदा वेदनीयं बध्नाति, यदि पुनरयोगकेवली सिद्धो वा तदा न बध्नाति, अतो भजनयेत्युक्तं, 'आउगं हेट्ठिल्ला दो भयणाए'त्ति संज्ञी असंज्ञी च द्वौ स्याद् बध्नीतः आयुःकर्म्म स्यान्न बध्नीत, कथं ?, बन्धकाले बध्नीतः, अबन्धकाले न, अन्तर्मुहूर्त्तमेव तद्बन्धात्, 'उवरिल्लो ण बंधइ'त्ति केवली सिद्धश्चायुर्न बध्नातीति । भवसिद्धिकद्वारे भवसिद्धिको यो वीतरागस्स न बध्नाति ज्ञानावरणं तदन्यस्तु भव्यो बध्नातीति भजनयेत्युक्तं, 'नोभवसिद्धिएनोअभवसिद्धिए'त्ति सिद्धः, स च न बध्नाति 'आउयं हेट्ठिल्ला दो भयणाए'त्ति भव्योऽभव्यश्चायुर्बन्धकाले बध्नीतः अन्यदा तु न बध्नीत इत्यतो भजनयेत्युक्तं 'उवरिल्ले ण'त्ति सिद्धो न बध्नाति । दर्शनद्वारे 'हेट्ठिल्ला तिन्नि भयणाए'त्ति चक्षुरचक्षुरवधिदर्शनिनो यदि छद्मस्थवीतरागास्तदा न ज्ञानावरणं बध्नन्ति, वेदनीयस्यैव बन्धकत्वात् तेषां, सरागास्तु बध्नन्ति, अतो भजनयेत्युक्तं, 'उवरिल्ले ण बंधइ'त्ति केवलदर्शनी भवस्थः सिद्धो वा न बध्नाति, हेत्वभावात् । 'वेयणिज्जं हेट्ठिल्ला तिन्नि बंधंति' आद्यास्त्रयो दर्शनिनः छद्मस्थवीतरागाः सरागाश्च वेदनीयं बध्नन्त्येव, 'केवलदंसणी भयणाए'त्ति केवलदर्शनी सयोगकेवली बध्नाति, अयोगकेवली सिद्धश्च न बध्नीयात्, अतो भजनयेयुक्तं । पर्याप्तकद्वारे 'पज्जत्तए भयणाए'त्ति पर्याप्तको वीतरागः सरागश्च, तत्र वीतरागो ज्ञानावरणं न बध्नाति, सरागस्तु

वध्नीयादिति भजना, 'नो पज्जत्त०'त्ति सिद्धो न बध्नाति, 'आउगं हेट्ठिल्ला दो भयणाए'त्ति पर्याप्तकोऽपर्याप्तको वा आयुस्तद्बन्धकाले बध्नीतान्यदा नेति विकल्पः, 'उवरिल्ले'त्ति सिद्धो न बध्नाति। भाषकद्वारे 'दोन्नि भयणाए'त्ति भाषको-भाषालब्धिमान् तदन्यस्त्वभाषकः, तत्र भाषको वीतरागो ज्ञानावरणं न बध्नाति, सरागस्तु बध्नीयात्, अभाषकस्त्वयोगी सिद्धश्च न बध्नाति पृथिव्यादयो विग्रहगत्यापन्नाश्च बध्नन्तीति 'दोवि भयणाए' इत्युक्तं, वेयणिज्जं "भासए बंधइ'त्ति सयोग्यवसानस्यापि भाषकस्य सद्वेदनीयबन्धकत्वात् 'अभासए भयणाए'त्ति अभाषकस्त्वयोगी सिद्धश्च न बध्नाति, पृथिव्यादिकस्तु बध्नातीति भजना। परीत्तद्वारे 'परित्ते भयणाए'त्ति परीत्तः-प्रत्येकशरीरोऽल्पसंसारो वा, स च वीतरागोऽपि स्यात्, न चासौ ज्ञानावरणीयं बध्नाति, सरागपरीत्तस्तु बध्नाति इति भजना, 'अपरित्ते बंधइ'त्ति अपरित्तः-साधारणकायोऽनन्तसंसारो वा, स च बध्नाति, 'नोपरित्ते नोअपरित्ते'त्ति सिद्धो न बध्नाति 'आउयं अपरित्तोऽवि भयणाए' प्रत्येकशरीरादिरायुर्बन्धकाल एव बध्नाति आयुः, न तु सर्वदा ततो भजनेति, सिद्धस्तु न बध्नात्येव, अत आह-'नो परित्ते' इत्यादि। ज्ञानद्वारे 'हेट्ठिल्ला चत्तारि भयणाए'त्ति आभिनिबोधिकज्ञानिप्रभृतयश्चत्वारो ज्ञानिनो ज्ञानावरणं वीतरागावस्थायां न बध्नन्ति सरागावस्थायां तु बध्नन्तीति भजना, 'वेयणिज्जं हेट्ठिल्ला चत्तारि बंधंति' वीतरागाणामपि छद्मस्थानां वेदनीयस्य बन्धकत्वात्, 'केवलणाणी भयणाए'त्ति सयोगिकेवलिनां वेदनीयस्य बन्धनाद् अयोगिनां सिद्धानां चाबन्धनाद् भजनेति। योगद्वारे 'हेट्ठिल्ला तिन्नि भयणाए'त्ति मनोवाकाययोगिनो ये उपशान्तमोहक्षीणमोहसयोगिकेवलिनस्ते ज्ञानावरणं न बध्नन्ति, तदन्ये तु बध्नन्तीति भजना, 'अयोगी न बंधइ'त्ति अयोगी-अयोगिकेवली सिद्धश्च न बध्नाति, 'वेयणिज्जं हेट्ठिल्ला बंधंति' मनोयोग्यादयो बध्नन्ति, सयोगानां वेदनीयस्य

बन्धकत्वात्, 'अजोगी ण बंधइ'त्ति अयोगिनः सर्वकर्मणामबन्धकत्वादिति। उपयोगद्वारे 'अट्ठसुवि भयणाए'त्ति साकारानाकारावुपयोगौ सयोगानामयोगानां च स्यातां, तत्र सयोगा ज्ञानावरणादिप्रकृतीर्यथायोगं बध्नन्ति अयोगास्तु नेति भजना। आहारकद्वारे 'दोऽवि भयणाए'त्ति आहारको वीतरागोऽपि स्यात्, न चासौ ज्ञानावरणं बध्नाति, सरागस्तु बध्नाति, इति भजनया आहारको बध्नाति, तथा अनाहारकः केवली विग्रहगत्यापन्नश्च स्यात्, तत्र केवली न बध्नाति, इतरस्तु बध्नाति, इत्यनाहारको भजनया उक्तः, 'वेयणिज्जं आहारए बंधइ'त्ति अयोगवर्जानां सर्वेषां वेदनीयस्य बन्धकत्वात्, 'अणाहारए भयणाए'त्ति अनाहारको विग्रहगत्यापन्नः समुद्घातगतकेवली च बध्नाति, अयोगी सिद्धश्च न बध्नाति इति भजना, 'आउयं आहारए भयणाए'त्ति आयुर्बन्धकाल एवायुषो बन्धनात् अन्यदा त्वबन्धनात् भजनेति, 'अणाहारए ण बंधइ'त्ति विग्रहगत्यापन्नानामप्यायुषोऽबन्धनादिति। सूक्ष्मद्वारे 'बायरे भयणा' वीतरागबादराणां ज्ञानावरणाबन्धकत्वात् सरागबादराणां च बन्धकत्वात् तद्भजनेति, सिद्धस्य पुनरबन्धकत्वादाह-'नो सुहुमे'इत्यादि, 'आउए सुहुमे बायरे भयणाए'त्ति बन्धकाले बन्धनादन्यदा त्वबन्धनात् भजनेति। चरमद्वारे 'अट्ठऽविह भयणाए'त्ति इह यस्य चरमो भवो भविष्यति स चरमः, यस्य तु नासौ भविष्यत्यसौ अचरमः, सिद्धश्चाचरमः, तस्य चरमभवाभावात्, तत्र चरमो यथायोगमष्टापि बध्नाति, अयोगित्वे तु नेत्येवं भजना, अचरमस्तु संसारी अष्टापि बध्नीयात्, सिद्धस्तु नेत्येवं भजनेति। अथाल्पबहुत्वद्वारं तत्र-'इत्थिवेयगा संखेज्जगुण'त्ति (सू. २३७) यतो देवनरतिर्यक्पुरुषेभ्यः स्त्रियः क्रमशो द्वात्रिंशत्सप्तविंशतित्रिरूपाधिकाः स्युरिति, 'अवेयगा अणंतगुण'त्ति अनिवृत्तिबादरसम्परायादयः सिद्धाश्चावेदाः अतस्तेऽनन्तत्वात् स्त्रीवेदेभ्योऽनन्तगुणाः स्युरिति, नपुंसगवेयगा 'अणंतगुण'त्ति अनन्तकायिकानां सिद्धे-

भ्योऽनन्तगुणानामिह गणनादिति, 'एएसिं सव्वेसिं'ति एतेषां पूर्वोक्तानां संयतादीनां चतुर्दशद्वाराणां तद्गतभेदापेक्षया अल्पबहुत्वमुच्चारयितव्यं, तद्यथा–एएसि णं भंते ! संजयाणं असंजयाणं संजयासंजयाणं नोसंजयनोअसंजयनोसंजयासंजयाणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सव्वत्थोवा संजया संजयासंजया असंखेज्जगुणा नोसंजयानोअसंजयानोसंजयासंजया अणंतगुणा'इत्यादि प्रज्ञापनानुसारेण वाच्यं, यावच्चरमाद्यल्पबहुत्वं, एतदेवाह 'सव्वत्थोवा जीवा अचरिमे'त्यादि, अत्राचरिमा अभव्याः, चरमाश्च ये भव्याश्चरमभवं प्राप्स्यंति, सेत्स्यन्तीत्यर्थः, ते चाचरमेभ्योऽनन्तगुणाः, यस्मादभव्येभ्यः सिद्धा अनन्तगुणा भणिताः, यावन्तश्च सिद्धास्तावन्त एव चरमाः, यस्माद्यावन्तस्सिद्धा अतीताद्धायां तावन्त एव सेत्स्यन्त्यनागताद्धायामिति ॥ षष्ठशते तृतीयोद्देशकविवरणम् ॥

अनन्तरोद्देशके जीवा निरूपिताः, तानेव भङ्गान्तरेण चतुर्थोद्देशकेऽपि निरूपयन्नाह–'जीवे ण'मित्यादि (सू.२३८) 'कालाएसेणं'ति कालप्रकारेण कालमाश्रित्येत्यर्थः, 'सपएसे'त्ति सविभागः 'नियमा सपएस'त्ति अनादित्वेन जीवस्यानन्तसमयस्थितिकत्वात् सप्रदेशता, यो ह्येकसमयस्थितिकः सोऽप्रदेशः द्व्यादिसमयस्थितिकस्तु सप्रदेशः, इह चानया गाथया भावना कार्या, 'जो जस्स पढमसमए वट्टइ भावस्स सो य अपएसो । अन्नंमि वट्टमाणे कालाएसेण सपएसो (सू.२३८) ॥१॥ नारकस्तु यः प्रथमसमयोत्पन्नः सोऽप्रदेशः द्व्यादिसमयोत्पन्नः स सप्रदेशः अत उक्तम्–'सिय सपएसे सिय अपएसे' एप एकत्वेन जीवादिः सिद्धावसानः षड्विंशतिदण्डकः कालसप्रदेशत्वादिना चिन्तितो, अथायमेव तथैव पृथक्त्वेन चिन्त्यते 'सव्वेऽवि ताव होज्ज सपएस'त्ति उपपातविरहकाले असङ्ख्यातानां पूर्वोत्पन्नानां भावात् सप्रदेशाः सर्वेऽपि भवेयुः, तथा पूर्वोत्पन्नेषु मध्ये यदैकोऽन्यो

नारक उत्पद्यते तदा तस्य प्रथमसमयोत्पन्नत्वेन अप्रदेशत्वाच्छेषाणां च द्व्यादिसमयोत्पन्नत्वेन सप्रदेशत्वादुच्यते–सपएसा य अपएसे य'त्ति, एवं यदा बहव उत्पद्यमानाः स्युस्तदोच्यते–सपएसा अपएसा यत्ति, उत्पद्यन्ते चैकदैकादयो नारकाः, यदाह–"एगो व दो व तिन्नि व संखमसंखा व एगसमएणं। उववज्जंतेवइया उव्वट्टंतावि एमेव ॥१॥" 'पुढविकाइया णं'त्ति एकेन्द्रियाणां पूर्वोत्पन्नानां उत्पद्यमानानां च बहूनां सम्भवात् 'सपएसा अपएसावि'त्ति इत्युच्यते। 'सेसा जहा नेरइय'त्ति यथा नारका अभिलापत्रयेणोक्तास्तथा शेषा द्वीन्द्रियादयः सिद्धावसाना वाच्याः, सर्वेषामेषां विरहसम्भवादेकाद्युत्पत्तेश्चेति, एवमाहारकानाहारकशब्दविशेषितावेतावेवैकत्वपृथक्त्वदण्डकौ चिन्त्यौ, चिन्तनक्रमश्चायं–आहारए णं भंते! जीवे कालाएसेणं किं सपएसे अपएसे?, गो! सिय सप० सिय अपएसे'इत्यादि स्वधिया वाच्यं, तत्र यदा विग्रहे केवलिसमुद्घाते वाऽनाहारको भूत्वा पुनराहारकत्वं प्रतिपद्यते तदा तत्प्रथमसमयेऽप्रदेशो द्वितीयादिषु सप्रदेश उच्यते अतः 'सिय सपएसे सिय अपएसे'त्ति, एवमेकत्वे सर्वेष्वपि सादिभावेषु, अनादिभावेषु तु नियमा सपएसेत्ति वाच्यः, पृथक्त्वदण्डके त्वेवमभिलापो दृश्य–'आहारया णं भंते! जीवा कालाएसेणं किं सपएसा अपएसा?, गो! सपएसावि अपएसावि'त्ति, तत्र बहूनामाहारकत्वेनावस्थितानां भावात् सप्रदेशत्वं, तथा बहूनां विग्रहगतेरनन्तरं प्रथमसमये आहारकत्वसम्भवादप्रदेशत्वमप्याहारकाणां लभ्यते इति सप्रदेशा अप्रदेशा इत्युक्तं, एवं पृथिव्यादयोऽप्यध्येयाः, नारकादयः पुनर्त्रिकल्पत्रयेण वाच्याः, तथा 'आहारया णं भंते! नेरइया किं सपएसा अपएसा?, गो०! सव्वेऽवि ताव होज्ज सपएसा, अहवा सपएसा य अपएसे य, अहवा सपएसा य अपएसा य' एतदेवाह–'आहारगाणं जीवेगिंदियवज्जो तियभंगो'त्ति जीवपदमेकेन्द्रियपदपञ्चकं च वर्जयित्वा त्रिकरूपो भङ्गस्त्रिकभङ्गो, भङ्गत्रयं वाच्यमित्यर्थः, सिद्धपदं त्विह न वाच्यं, तेषा–

मनाहारकत्वात्, अनाहारकदण्डकद्वयमप्येवमनुसरणीयं, तच्चानाहारको विग्रहगत्यापन्नः समुद्घातगतकेवली अयोगी सिद्धो वा स्यात्, स चानाहारकत्वप्रथमसमयेऽप्रदेशः, द्वितीयादिषु तु सप्रदेशस्तेन स्यात् सप्रदेश इत्याद्युच्यते, पृथक्त्वदण्डके विशेषमाह— 'अणाहारगा णं'त्ति जीवानेकेन्द्रियांश्च वर्जयन्तीति जीवैकेन्द्रियवर्जाः, तान् वर्जयित्वेत्यर्थः, जीवपदे एकेन्द्रियपदे च सपएसा अपएसा इत्येवमेक एव भङ्गः, बहूनां विग्रहगत्यापन्नानां सप्रदेशानामप्रदेशानां च लाभात्, नारकादीनां द्वीन्द्रियादीनां चाल्पतराणामुत्पादः, तत्र चैकद्व्यादीनामनाहारकाणां भावात् षड्भङ्गिकासम्भवः, तत्र द्वौ बहुवचनान्तौ अन्ये तु चत्वार एकवचनबहुवचनसंयोगात्, केवलैकवचनभङ्गकाविह न स्तः, पृथक्त्वस्याधिकृतत्वादिति, 'सिद्धेहिं तियभंगो'त्ति सप्रदेशपदस्य बहुवचनान्तस्यैव सम्भवात्, 'भवसिद्धिय अभवसिद्धिय जहा ओहिय'त्ति, अयमर्थः औधिकदण्डकवदेषां प्रत्येकं दण्डकद्वयं, तत्र अभव्यो भव्यो वा जीवो नियमात् सप्रदेशः, नारकादिस्तु सप्रदेशोऽप्रदेशो वा, बहवस्तु जीवाः सप्रदेशा एव, नारकाद्यास्तु त्रिभङ्गवन्तः, एकेन्द्रियास्तु सप्रदेशा अप्रदेशाश्चेत्येकभङ्गा एवेति, सिद्धपदमिह न वाच्यं, सिद्धानां भव्याभव्यविशेषणानुपपत्तेरिति, 'नोभवसिद्धियनोअभवसिद्धिय'त्ति एतद्विशेषणं जीवादिदण्डकद्वयमध्येयम्, तत्रायमभिलापः—नोभवसिद्धिएनोअभवसिद्धिए णं भंते! जीवे सपएसे अपएसे? इत्यादि, एवं पृथक्त्वदण्डकोऽपि, केवलमिह जीवपदं सिद्धपदं चेति द्वयमेव, नारकादिपदानां तु नोभव्य० विशेषणस्यानुपपत्तेरिति, इह च पृथक्त्वदण्डके पूर्वोक्तं भङ्गत्रयमेव वाच्यं, अत आह—'जीवसिद्धेहिं तियभंगो'त्ति संज्ञिषु यौ दण्डकौ तयोर्द्वितीयदण्डके जीवादिपदेषु भङ्गत्रयं स्याद् अत आह—'सन्नीहिं'ति तत्र संज्ञिनो जीवाः कालतः सप्रदेशाः स्युश्चिरोत्पन्नानपेक्ष्य, उत्पादविरहानन्तरं चैकस्योत्पत्तौ तत्प्राथम्ये सप्रदेशाश्चाप्रदेशश्चेति स्यात्, बहूनामुत्पत्ति-

प्राथम्ये तु सप्रदेशा अप्रदेशाश्चेति स्यात्, तदेवं भङ्गत्रयमिति, एवं सर्वपदेषु, केवलमेतयोर्दण्डयोरेकेन्द्रियविकलेन्द्रियसिद्धपदानि न वाच्यानि, तेषु संज्ञिविशेषणस्यासम्भवादिति, 'असण्णीहिं'त्ति असंज्ञिषु असंज्ञिविषये द्वितीयदण्डके पृथिव्यादिपदेषु हि सप्रदेशा अप्रदेशाश्चेत्येक एव, सदा बहूनामुत्पादात् तेषां अप्रदेशबहुत्वस्यापि सम्भवात्, नैरयिकादीनां व्यन्तरान्तानां संज्ञिनामप्यसंज्ञिभ्य उत्पादाद्भूतभावतया अवसेयं, तथा नैरयिकादिष्वपि असंज्ञित्वस्य कादाचित्कत्वेनैकत्वबहुत्वसम्भवात् षड् भङ्गाः स्युः, ते च दर्शिता एव, एतदेवाह—'नेरइयदेवमणुएहिं'इत्यादि, ज्योतिष्कवैमानिकसिद्धास्तु न वाच्याः, तेषामसंज्ञित्वस्यासम्भवात्, तथा 'नोसण्णिणो'त्ति नोसंज्ञिनोनोअसंज्ञिनश्च नोसंज्ञिनो असंज्ञिविशेषणदण्डकयोर्द्वितीयदण्डके जीवमनुजसिद्धपदेपूक्तरूपं भङ्गत्रयं स्यात्, तेषु बहूनामवस्थितानां लाभात्, उत्पद्यमानानां चैकादीनां सम्भवादिति, एतयोर्दण्डकयोर्जीवमनुजसिद्धपदान्येव स्युः, नारकादिपदानां नोसंज्ञिनोअसंज्ञि इति विशेषणाघटनात्। 'सलेसे'त्ति सलेश्यदण्डकद्वये औघिकदण्डकवज्जीवनारकादयो वाच्याः, सलेश्यतायां जीवत्ववदनादित्वेन विशेषानुत्पादकत्वात्, केवलं सिद्धपदं नाधीयते, सिद्धानामलेश्यत्वात्, 'किण्हनील'त्ति कृष्णनीलकापोतलेश्याश्च जीवनारकादयः प्रत्येकं दण्डकद्वयेन आहारकजीवादिवदुपयुज्य वाच्याः, केवलं यस्य जीवनारकादेरेतास्सन्ति स एव वाच्यः, एताश्च ज्योतिष्कवैमानिकानां न स्युः, सिद्धानां तु सर्वा न स्युः, 'तेउलेसाए'त्ति तेजोलेश्याद्वितीयदण्डके जीवादिपदेषु त एव त्रयो भङ्गाः, 'पुढवि'त्ति पृथिव्यम्बुवनस्पतिषु षड् भङ्गाः, यत्तेषु तेजोलेश्याया एकादयो देवाः पूर्वोत्पन्ना उत्पद्यमानाश्च लभ्यन्ते, इति सप्रदेशानामप्रदेशानां चैकत्वबहुत्वसम्भवः, इह नारकतेजोवायुविकलेन्द्रियसिद्धपदानि न वाच्यानि, तेजोलेश्याया अभावात्, 'पम्हलेसाए'त्ति पद्मशुक्ललेश्ययोर्द्वितीयदण्डके जीवादिषु पदेषु त एव त्रयो भङ्गाः, इह पञ्चेन्द्रियतिर्यङ्मनुष्यवैमानिकप-

दानि वाच्यानि, अन्येष्वनयोरभावादिति, 'अलेसे'त्ति अलेश्यदण्डकयोर्जीवमनुष्यसिद्धपदान्येवोच्यन्ते, अन्येषामलेश्यत्वस्यासम्भवात्, तत्र जीवसिद्धयोर्भङ्गत्रयं, मनुष्येषु षट् भङ्गाः, अलेश्यतां प्रतिपन्नानां प्रतिपद्यमानानां चैकादीनां मनुष्याणां सम्भवेन सप्रदेशत्वाप्रदेशत्वयोरेकत्वबहुत्वसम्भवात्, इदमेवाह ॥ 'सम्मदिट्ठीहिं'ति सम्यग्दृष्टिदण्डकयोः सम्यक्त्वप्रतिपत्तिप्रथमसमयेऽप्रदेशत्वं द्वितीयादिषु तु सप्रदेशत्वं, तत्र द्वितीयदण्डके जीवादिपदेषु त्रयो भङ्गाः, विकलेन्द्रियेषु तु षट्, यतस्तेषु सास्वादनसम्यग्दृष्टय एकादयः पूर्वोत्पन्ना उत्पद्यमानाश्च लभ्यन्ते, अतः सप्रदेशत्वाप्रदेशत्वयोरेकत्वबहुत्वसम्भवः, इहैकेन्द्रियपदानि न वाच्यानि, तेषु सम्यक्त्वाभावात्, 'मिच्छदिट्ठीहिं'ति मिथ्यादृष्टिद्वितीयदण्डके जीवादिपदेषु त्रयो भङ्गाः, मिथ्यात्वं प्रतिपन्नाः सम्यक्त्वभ्रंशेन तत्प्रतिपद्यमानाश्चैकादयः स्युरितिकृत्वा एकेन्द्रियपदेषु सप्रदेशा अप्रदेशाश्चेत्येक एव, तेष्ववस्थितानामुत्पद्यमानानां बहूनां भावात्, इह सिद्धा न वाच्याः, तेषां मिथ्यात्वाभावादिति, 'सम्मामिच्छदिट्ठीहिं'ति सम्यग्मिथ्यादृष्टित्वं प्रतिपन्नकाः प्रतिपद्यमानाश्चैकादयोऽपि स्युरित्यतस्तेषु षट् भङ्गाः स्युः, इहैकेन्द्रियविकलेन्द्रियसिद्धपदानि न वाच्यान्यसम्भवात्, 'संजएहिं'ति संयतेषु—संयतशब्दविशेषितेषु जीवादिपदेषु त्रिकभङ्गः, संयमं प्रतिपन्नानां बहूनां प्रतिपद्यमानानां चैकादीनां भावाद्, इह जीवपदमनुष्यपदे एव वाच्ये, अन्यत्र संयतत्वाभावात्, 'असंजएहिं'त्ति असंयतद्वितीयदण्डकेऽसंयतत्वं प्रतिपन्नानां बहूनां संयतत्वादिप्रतिपातेन तत्प्रतिपद्यमानानां चैकादीनां सम्भवाद् भङ्गत्रयं, एकेन्द्रियाणां तु प्रागुक्तयुक्त्या सप्रदेशा अप्रदेशाश्चेत्येक एव भङ्गः, इह सिद्धपदं न वाच्यं, असम्भवादिति, 'संजयासंजए'त्ति इह देशविरतिप्रतिपन्नानां संयमादसंयमाद्वा निवृत्त्य तां प्रतिपद्यमानानां चैकादीनां भावाद् भङ्गत्रयम्, इह जीवपञ्चेन्द्रियतिर्यङ्मनुष्यपदान्येवाध्येयानि, अन्यत्र संयतासंयतत्वाभावादिति, 'नोसंजए'-

त्यादौ सैव भावना, नवरमिह जीवसिद्धपदे एव वाच्ये, अत एवोक्तं–'जीवसिद्धेहिं तियभंगो'। 'सकसाईहिं'ति सकषायाणां सदावस्थितत्वात् ते सप्रदेशा इत्येको भङ्गः, तथोपशमश्रेणीतः प्रच्यवमानत्वे सकषायत्वं प्रतिपद्यमाना एकादयो लभ्यन्ते, ततः सप्रदेशा अप्रदेशः, सप्रदेशा अप्रदेशाश्चेति अपरं भङ्गकद्वयं, नारकादिषु तु प्रतीतमेव भङ्गत्रयम्, 'एगिंदिएसु अभंगं'ति भङ्गानामभावोऽभङ्गकं, सप्रदेशा अप्रदेशाश्चेत्येक एव विकल्प इत्यर्थः, बहूनामवस्थितानामुत्पद्यमानानां च तेषु लाभादिति, इह सिद्धपदं नाध्येयमकषायित्वात्, 'कोहकसाईहिं'ति क्रोधकषायिद्वितीयदण्डके जीवपदे पृथिव्यादिपदेषु च सप्रदेशा अप्रदेशाश्चेत्येक एव भङ्गः, शेषेषु त्रयः, ननु सकषायिजीवपदवत् कथमिह भङ्गत्रयं न लभ्यते ?, उच्यते, इह मानमायालोभेभ्यो निवृत्ताः क्रोधं प्रतिपद्यमाना बहव एव लभ्यन्ते, प्रत्येकं तद्राशीनामनन्तत्वात्, नत्वेकादयो, यथोपशमश्रेणीतः प्रच्यवमानाः सकषायित्वप्रतिपत्तार इति। 'देवेहिं'ति देवपदेषु त्रयोदशस्वपि षड् भङ्गाः, तेषु क्रोधोदयवतामल्पत्वेनैकत्वे च सप्रदेशाप्रदेशत्वयोः सम्भवात्, 'माणकसाइ'त्ति मानकषायिद्वितीयदण्डकेऽप्येवं भङ्गत्रयं, 'नेरइयदेवेहिं'ति नारकाणां देवानां च मध्येऽल्पा एव मानमायोदयवन्तः स्युरिति प्राग्वत् षड् भङ्गाः स्युरिति, 'लोभकसाईहिं'ति एतस्य क्रोधवत्त्रद्भावना, 'णेरइएहिं'ति नारकाणां लोभोदयवतामल्पत्वात्प्रागुक्ताः षड् भङ्गाः स्युरिति, आह च–"कोहे माणे माया बोद्धव्वा सुरगणेहिं छब्भंगा। माणे माया लोभे नेरइएहिंपि छब्भंगा ॥१॥" देवा लोभप्रचुराः नारकाः क्रोधप्रचुरा इति, 'अकसायिजीव'त्ति अकषायिद्वितीयदण्डके जीवमनुष्यसिद्धपदेषु भङ्गत्रयं, अन्येषामसम्भवादिति। 'ओहियनाणे'त्ति औघिकज्ञानं मत्यादिभिरविशेषितं, तत्र मतिश्रुतज्ञानयोश्च बहुत्वदण्डके जीवादिपदेषु पूर्वोक्ता एव त्रयो भङ्गाः, तत्रौघज्ञानमतिश्रुतज्ञानिनां सदाऽवस्थितत्वेन सप्रदेशानां भावात् सप्रदेशा इत्येकः,

तथा मिथ्याज्ञानमात्रान्मत्यादिज्ञानमात्रं मत्यज्ञानान्मतिज्ञानं श्रुताज्ञानात् श्रुतज्ञानं प्रतिपद्यमानानामेकादीनां लाभात् सप्रदेशा अप्रदेशश्च, तथा सप्रदेशा अप्रदेशाश्चेति द्वितीयः, इत्येवं त्रयमपि, 'वियलिंदिएहिं छब्भंग'त्ति द्वित्रिचतुरिन्द्रियेषु सास्वादनसम्यक्त्वसम्भवेनाभिनिबोधिकादिज्ञानिनामेकादीनां सम्भवात् त एव षड् भङ्गाः, इह यथायोगं पृथिव्यादयः सिद्धाश्च न वाच्याः असम्भवादिति, 'ओहिणाणे मण'त्ति एवमवध्यादिषु भङ्गत्रयभावना, केवलमवधिदण्डकयोरेकेन्द्रियविकलेन्द्रियाः सिद्धाश्च न वाच्याः, मनःपर्यायदण्डकयोश्च जीवा मनुष्याश्च वाच्याः, केवलज्ञानदण्डकयोर्जीवमनुष्यसिद्धा वाच्याः, अत एव वाचनान्तरे दृश्यते 'विन्नेयं जस्स जं अत्थि'त्ति, 'ओहिए अण्णाणे'त्ति सामान्येऽज्ञाने मत्यज्ञानादिभिरविशेषिते मत्यज्ञाने श्रुताज्ञाने च जीवादिषु त्रिभङ्गी स्यात्, एते हि सदावस्थितत्वात् सप्रदेशा इत्येकः, यदा तु तदन्ये ज्ञानं विमुच्य मत्यज्ञानादितया परिणमन्ति तदैकादिसम्भवेन सप्रदेशा अप्रदेशः सप्रदेशा अप्रदेशाश्चेति भङ्गद्वयमित्येवं भङ्गत्रयमपि, पृथिव्यादिषु तु सप्रदेशा अप्रदेशाश्चेत्येक एव, अत आह—'एगिंदियवज्जो तियभंगो'त्ति इह भङ्गत्रये सिद्धा न वाच्याः, विभङ्गे तु जीवादिषु भङ्गत्रयं, तद्भावना च मत्यज्ञानादिवत्, केवलमिहैकेन्द्रियविकलेन्द्रियाः सिद्धाश्च न वाच्याः, 'सजोई जहा ओहिए'त्ति सयोगी जीवादिदण्डकद्वयेऽपि तथा वाच्यः यथौघिको जीवादिः, स चैवम्—सयोगी जीवो नियमात्सप्रदेशो, नारकादिस्तु सप्रदेशोऽप्रदेशो वा, बहवस्तु जीवाः सप्रदेशा एव, नारकाद्यास्तु त्रिभङ्गवन्तः, एकेन्द्रियाः पुनस्तृतीयभङ्गा इति, इह सिद्धपदं नाध्येयं, 'मणजोइ'त्ति मनोयोगिनो योगत्रयवन्तः, संज्ञिन इत्यर्थः, वाग्योगिन एकेन्द्रियवर्जाः, काययोगिनस्तु सर्वेऽप्येकेन्द्रियादयः, एतेषु जीवादिकस्त्रिविधो भङ्गः, तद्भावना च मनोयोग्यादीनामवस्थितत्वे प्रथमः, अमनोयोगित्वादित्यागाच्च मनोयोगित्वाद्युत्पादेन अप्रदेशत्व-

लाभेऽन्यत् भङ्गत्रयमिति, नवरं काययोगिनो ये एकेन्द्रियास्तेष्वभङ्गकं, सप्रदेशा अप्रदेशाश्चेत्येक एव भङ्गः, एषु योगत्रयदण्डकेषु जीवादिपदानि यथासम्भवमध्येयानि, सिद्धपदं च न वाच्यमिति, 'अजोगी जहा अलेस'त्ति दण्डकद्वयेऽपि अलेश्यसमानवक्तव्य-त्वात् तेषां, ततो द्वितीयदण्डकेऽयोगिषु जीवपदसिद्धपदयोर्भङ्गत्रयं, मनुष्येषु च षड्भङ्गीति, 'सागारोवउत्त'त्ति साकारोपयुक्तेषु अनाकारोपयुक्तेषु च नारकादिषु त्रयो भङ्गाः, जीवपदे पृथिव्यादिपदेषु च सप्रदेशा अप्रदेशाश्च एवमेक एव भङ्गः, तत्र चान्य-तरोपयोगादन्यतरगमने प्रथमेतरसमयेष्वप्रदेशत्वसप्रदेशत्वे भावनीये, सिद्धानामेकसमयोपयोगत्वेऽपि साकारस्येतरस्य चोपयो-गस्यासकृत्प्राप्त्या सप्रदेशत्वं सकृत्प्राप्त्या चाप्रदेशत्वमवसेयं, एवं चासकृदवाप्तसाकारोपयोगान् बहूनाश्रित्य सप्रदेशा इत्येको भङ्गः, तथा तानेव सकृदवाप्तसाकारोपयोगं चैकमाश्रित्य द्वितीयः, तथा तानेव सकृदवाप्तसाकारोपयोगांश्च बहूनाश्रित्य तृतीयः, अना-कारोपयोगे त्वसकृज्जातानाकारोपयोगानाश्रित्य प्रथमः, तानेव सकृत्प्राप्तानाकारोपयोगं चैकमाश्रित्य द्वितीयः, उभयेषामप्यनेकत्वे तृतीयः, 'सवेयगा जहा सकसायी' इति सवेदानामपि जीवादिपदेषु भङ्गत्रयभावात्, इह च वेदप्रतिपन्नान् बहून् उपशम-श्रेणिभ्रंशे च वेदप्रतिपद्यमानकानेकादीनाश्रित्य भङ्गत्रयं भावनीयं, 'इत्थि' वेदाद्वावेदान्तरसङ्क्रान्तौ प्रथमसमयेऽप्रदेशत्वमितरेषु च सप्रदेशत्वमवगम्य भङ्गत्रयं प्राग्वत् योज्यं, नपुंसकवेददण्डकयोस्त्वेकेन्द्रियेषु चैको भङ्गः सप्रदेशाश्च अप्रदेशाश्चेत्येवंरूपः, प्रागु-क्तयुक्तेरेवेति, स्त्रीदण्डकपुरुषदण्डकेषु देवपञ्चेन्द्रियतिर्यग्मनुष्यपदान्येव, नपुंसकदण्डकयोस्तु देववर्जानि वाच्यानि, सिद्धपदं च सर्वेष्वपि न वाच्यमिति, 'अवेयगा जहा अकसाई'त्ति जीवमनुष्यसिद्धपदेषु भङ्गत्रयमकषायिवद्वाच्यमित्यर्थः, 'ससरीरी जहा ओहिय'त्ति औघिकदण्डकवत्, सशरीरिदण्डकयोर्जीवपदे सप्रदेशतैव वाच्या, अनादित्वात् सशरीरत्वस्य, नारकादिषु तु

बहुत्वे भङ्गत्रयमेकेन्द्रियेषु तु तृतीयभङ्ग इति, 'ओरालिय'त्ति औदारिकादिशरीरसत्त्वेषु जीवपदे एकेन्द्रियपदेषु च बहुत्वे तृतीयभङ्ग एव, बहूनां प्रतिपन्नानां प्रतिपद्यमानानां चानुक्षणं लाभात्, शेषेषु भङ्गत्रयं, बहूनां तेषु प्रतिपन्नानां तथौदारिकवैक्रियत्यागेन औदारिकं वैक्रियं च प्रतिपद्यमानानामेकादीनां लाभात्, इहौदारिकदण्डकयोर्नारका देवाश्च न वाच्याः, वैक्रियदण्डकयोस्तु पृथिव्यप्तेजोवनस्पतिविकलेन्द्रिया न वाच्याः, यश्च वैक्रियदण्डके एकेन्द्रियपदे तृतीयभङ्गोऽभिधीयते स वायूनामसङ्ख्यातानां प्रतिसमयं वैक्रियकरणमाश्रित्य, तथा यद्यपि पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च वैक्रियलब्धिमन्तोऽल्पे तथापि भङ्गत्रयवचनसामर्थ्याद्बहूनां वैक्रियावस्थानसम्भवः तथैकादीनां तत्प्रतिपद्यमानता चावसेया, आहारकशरीरे जीवमनुष्ययोः षट् भङ्गाः पूर्वोक्ता एव, आहारकशरीरिणामल्पत्वात्, शेषजीवानां तु तन्न सम्भवतीति, 'तेयगे'त्ति तैजसकार्मणशरीरे समाश्रित्य जीवादयस्तथा वाच्याः यथौघिकास्त एव, तत्र च जीवाः सप्रदेशा एव वाच्याः, अनादित्वात्तैजसादिसंयोगस्य, नारकादयस्तु त्रिभङ्गाः, एकेन्द्रियास्तु तृतीयभङ्गाः, एतेषु शरीरादिदण्डकेषु सिद्धपदं नाध्येयमिति, 'असरीरेहिं'ति अशरीरेषु जीवादिपदेषु सप्रदेशतादित्वेन वक्तव्येषु जीवसिद्धपदयोः पूर्वोक्ता त्रिभङ्गी वाच्या, अन्यत्राशरीरत्वस्याभावादिति, 'आहारपज्जत्तीए'त्ति इह जीवपदे पृथिव्यादिपदेषु च बहूनामाहारादिपर्याप्तीः प्रतिपन्नानां तदपर्याप्तित्यागेनाहारपर्याप्त्यादिभिः पर्याप्तिभावं गच्छतां बहूनामेव लाभात् सप्रदेशा अप्रदेशाश्चेत्येक एव भङ्गः, शेषेषु त्रयो भङ्गाः, 'भासामण'त्ति इह भाषामनसोः पर्याप्तिर्भाषामनःपर्याप्तिः, भाषामनःपर्याप्त्योस्तु बहुश्रुताभिमतेन केनापि कारणेनैकत्वं विवक्षितं, ततश्च तया पर्याप्तकाः यथा संज्ञिनस्तथा सप्रदेशादितया वाच्याः, सर्वपदेषु भङ्गत्रयमित्यर्थः, पञ्चेन्द्रियपदान्येवेह वाच्यानि, पर्याप्तीनां चेदं स्वरूपमाहुः—येन करणेन भुक्तमाहारं खलं रसं च कर्त्तुं समर्थः स्यात्

जीवाः सप्रदेशा इतरे च एकत्वबहुत्वाभ्यामुक्ताः १, 'आहारग'त्ति आहारका अनाहारकाश्च तथैव २ 'भविय'त्ति भव्या अभव्यास्तदुभयनिषेधाश्च तथैव ३, 'सण्णि'त्ति संज्ञिनोऽसंज्ञिनो द्वयनिषेधवन्तश्च तथैव ४, 'सलेस'त्ति कृष्णादिलेश्यापट्कयुक्ताः अलेश्याश्च तथैव ५, 'दिट्ठि'त्ति दृक् दृष्टिः सम्यग्दृष्ट्यादिकाऽत्र तद्वन्तस्तथैव ६, 'संजय'त्ति संयता असंयता मिश्रास्त्रयनिषेधिनश्च तथैव ७, 'कसाय'त्ति कषायाः क्रोधादिमन्तः ४ अकषायाश्च तथैव ८, 'नाणि'त्ति मत्यादिज्ञानिनः ५ अज्ञानिनो मत्यज्ञानादिमन्तश्च ३ तथैव ९, 'जोग'त्ति सयोगा मनआदियोगिनः ३ अयोगिनश्च तथैव १०, 'उवओगे'त्ति साकारानाकारोपयोगाः ११, 'सवेद'त्ति स्त्रीवेदादिमन्तः ३ अवेदाश्च तथैव १२, 'ससरीर'त्ति औदारिकादिमन्तः ५ अशरीराश्च तथैव १३, 'पज्जत्त'त्ति पर्याप्तिमन्तः ५ तदपर्याप्तकाश्च तथैव ५ उक्ता इति ॥ 'पच्चक्खाणि'त्ति(सू. २३९)सर्वविरताः 'अपच्चक्खाणि'त्ति अविरताः 'पच्चक्खाणापच्चक्खाणि'त्ति देशविरताः, 'सेसा दो पडि'त्ति प्रत्याख्यानदेशप्रत्याख्याने प्रतिषेधनीये, अविरतत्वान्नारकादीनामिति, 'जे पंचिंदिया ते तिण्णिवि'त्ति नारकादयो दण्डकोक्तपञ्चेन्द्रियाः समनस्कत्वात् सम्यग्दृष्टित्वे सति ज्ञपरिज्ञया प्रत्याख्यानादित्रयं जानन्तीति, 'अवसेसे'त्यादि, एकेन्द्रियविकलेन्द्रियाः प्रत्याख्यानादित्रयं न जानन्ति, अमनस्कत्वादिति ॥ प्रत्याख्यानमायुर्बन्धहेतुः स्यात्, तत्र च 'जीवा य'त्ति जीवपदे जीवाः प्रत्याख्यानादित्रयनिबद्धायुष्का वाच्याः, वैमानिकपदे वैमानिका अप्येवं, प्रत्याख्यानादित्रयवतां तेषूत्पादात्, 'अवसेस'त्ति नारकादयोऽप्रत्याख्याननिर्वृत्तायुषो, यतस्तेषु तत्त्वेनाविरता एवोत्पद्यन्ते इति, उक्तार्थसङ्ग्रहगाथा—'पच्चक्खाणं'ति(* ४२)प्रत्याख्यानमिति, एतदर्थ एको दण्डकः, एवमन्ये त्रयः ॥ षष्ठशते चतुर्थ उद्देशकः ॥

जीवाः सप्रदेशा इतरे च एकत्वबहुत्वाभ्यामुक्ताः १, 'आहारग'त्ति आहारका अनाहारकाश्च तथैव २ 'भविय'त्ति भव्या अभव्यास्तदुभयनिषेधाश्च तथैव ३, 'सण्णि'त्ति संज्ञिनोऽसंज्ञिनो द्वयनिषेधवन्तश्च तथैव ४, 'सलेस'त्ति कृष्णादिलेश्याषट्कयुक्ताः अलेश्याश्च तथैव ५, 'दिट्ठि'त्ति दृक् दृष्टिः सम्यग्दृष्ट्यादिकाऽत्र तद्वन्तस्तथैव ६, 'संजय'त्ति संयता असंयता मिश्रास्त्रयनिषेधिनश्च तथैव ७, 'कसाय'त्ति कषायाः क्रोधादिमन्तः ४ अकषायाश्च तथैव ८, 'नाणि'त्ति मत्यादिज्ञानिनः ५ अज्ञानिनो मत्यज्ञानादिमन्तश्च ३ तथैव ९, 'जोग'त्ति सयोगा मनआदियोगिनः ३ अयोगिनश्च तथैव १०, 'उवओगे'त्ति साकारानाकारोपयोगाः ११, 'सवेद'त्ति स्त्रीवेदादिमन्तः ३ अवेदाश्च तथैव १२, 'ससरीर'त्ति औदारिकादिमन्तः ५ अशरीराश्च तथैव १३, 'पज्जत्त'त्ति पर्याप्तिमन्तः ५ तदपर्याप्तिकाश्च तथैव ५ उक्ता इति ॥ 'पच्चक्खाणि'त्ति(सू. २३९)सर्वविरताः 'अपच्चक्खाणि'त्ति अविरताः 'पच्चक्खाणापच्चक्खाणि'त्ति देशविरताः, 'सेसा दो पडि'त्ति प्रत्याख्यानदेशप्रत्याख्याने प्रतिषेधनीये, अविरतत्वान्नारकादीनामिति, 'जे पंचिंदिया ते तिण्णिवि'त्ति नारकादयो दण्डकोक्तपञ्चेन्द्रियाः समनस्कत्वात् सम्यग्दृष्टित्वे सति ज्ञपरिज्ञया प्रत्याख्यानादित्रयं जानन्तीति, 'अवसेसे'त्यादि, एकेन्द्रियविकलेन्द्रियाः प्रत्याख्यानादित्रयं न जानन्ति, अमनस्कत्वादिति ॥ प्रत्याख्यानमायुर्बन्धहेतुः स्यात्, तत्र च 'जीवा य'त्ति जीवपदे जीवाः प्रत्याख्यानादित्रयनिबद्धायुष्का वाच्याः, वैमानिकपदे वैमानिका अप्येवं, प्रत्याख्यानादित्रयवतां तेषूत्पादात्, 'अवसेस'त्ति नारकादयोऽप्रत्याख्याननिर्वृत्तायुषो, यतस्तेषु तत्त्वेनाविरता एवोत्पद्यन्ते इति, उक्तार्थसङ्ग्रहगाथा—'पच्चक्खाणं'ति(* ४२)प्रत्याख्यानमिति, एतदर्थ एको दण्डकः, एवमन्ये त्रयः ॥ षष्ठशते चतुर्थ उद्देशकः ॥

'तमुकाए'त्ति (सू. २४०) तमसां—तमिस्रपुद्गलानां कायो—राशिस्तमस्कायः, स च नियत एवेह स्कन्धः कश्चिद्विवक्षितः, स च तादृशः पृथ्वीरजःस्कन्धो वा उदकरजःस्कन्धो वा, नत्वन्यः, तदन्यस्यातादृशत्वादिति, पृथ्व्यब्विषयसन्देहादाह—'किं पुढवी'त्ति व्यक्तं, 'पुढविकाइए णं' पृथ्वीकायिकोऽस्त्येककः, 'सुभे'त्ति कश्चिच्छुभो—भास्वरः 'देसं'ति देशं विवक्षितक्षेत्रस्य प्रकाशयति, भास्वरत्वात् मण्यादिवत्, तथाऽस्त्येककः पृथ्वीकायो देशं पृथ्वीकायान्तरं प्रकाश्यमपि न प्रकाशयति, अभास्वरत्वादिति, नैवं पुनरप्कायः, तस्य सर्वस्याप्यप्रकाशकत्वात्, ततश्च तमस्कायस्यैव सर्वथाऽप्रकाशत्वादप्कायपरिणामतैव, 'एगपएसियाए'त्ति एक एव न द्व्यादयः औत्तराधर्यं प्रति प्रदेशो यस्यां सा तथा तया, समभित्तितयेत्यर्थः, न च वाच्यमेकप्रदेशप्रमाणतयेति, असङ्ख्यातप्रदेशावगाहस्वभावत्वेन जीवानां तस्यां जीवावगाहाभावप्रसङ्गात्, तमस्कायस्य च स्तिबुकाकाराप्कायिकजीवात्मकत्वात् बाहल्यमानस्य च प्रतिपादयिष्यमाणत्वादिति, 'एत्थ णं'ति प्रज्ञापकालेख्यलिखितस्यारुणोदसमुद्रादेरधिकरणतोपदर्शनार्थमुक्तवान्, 'अहे'त्ति अधस्तात् मल्लकमूलसंस्थितः—शरावबुध्नसंस्थानः समजलस्योपरि सप्तदशयोजनशतान्येकविंशत्यधिकानि यावद्वलयसंस्थितत्वात्, स्थापना चेयम्—[ ]'केवइयं विक्खंभेणं'ति, विस्तारेण, क्वचिद् 'आयामविक्खंभेणं'ति दृश्यते, तत्रायाम उच्चत्वमिति, 'संखिज्ज'त्ति सङ्ख्यातयोजनविस्तृतः, आदित आरभ्य ऊर्ध्वं सङ्ख्येययोजनानि यावत्, ततोऽङ्ख्यातयोजनविस्तृतः, उपरि तस्य विस्तारगामित्वेनोक्तत्वात्, 'असंखिज्जाइं'ति सङ्ख्यातयोजनविस्तृतत्वेऽपि तमस्कायस्यासङ्ख्याततमद्वीपपरिक्षेपतो बृहत्तरत्वात् परिक्षेपस्यासङ्ख्यातयोजनसहस्रप्रमाणत्वं, आन्तरबहिःपरिक्षेपविभागस्तु नोक्तः, उभयस्याप्यसङ्ख्याततया तुल्यत्वादिति, 'देवे णं'ति अथ किमैदंपर्यमिदं महद्ध्र्यादिविशेषणं देवस्य ?, जाव इणामेव'त्ति इह याव-

च्छन्द ऐदंपर्यार्थः, 'इणामेव २' इदं गमनमेवेति शीघ्रत्वावेदकचप्पुटिकारूपहस्तन्यापारोपदर्शनपरं, अनुस्वाराश्रवणं च प्राकृतत्वात्, द्विर्वचनं शीघ्रत्वातिशयोपदर्शनपरं 'इतिकट्टु' इतिः-उपदर्शनार्थः कृत्वा—विधाय 'केवलकप्पं'ति केवलज्ञानकल्पं, परिपूर्णमित्यर्थः, वृद्धव्याख्याने तु केवलः सम्पूर्णः, कल्पते इति कल्पः-स्वकार्यकरणसमर्थो वस्तुरूप इतियावत् केवलश्चासौ कल्पश्चेति केवलकल्पः तं, 'तिहिं अच्छराहिं'ति तिसृभिश्चप्पुटिकाभिरित्यर्थः, 'तिसत्त'त्ति त्रिगुणाः सप्त त्रिसप्त, त्रिसप्त वारान् त्रिसप्तकृत्वः, एकविंशतिवारानित्यर्थः, 'हव्वं'ति शीघ्रं, 'अत्थेगइय'त्ति सङ्ख्यातयोजनमानं व्यतिव्रजेद् इतरं तु नेति, 'उराल'त्ति महान्तो मेघाः 'संसेयंति' संस्विद्यन्ति, तज्जनकपुद्गलस्नेहसम्पत्त्या सम्मूर्च्छन्ति, पुद्गलमीलनात् तदाकारतयोत्पद्यन्ते, 'तं भंते'त्ति तत्संस्वेदनं सम्मूर्च्छनं वर्षणं च 'बायरे'त्ति इह न बादरतेजस्कायिका मन्तव्याः, इहैव तेषां निषेत्स्यमाणत्वात्, किन्तु देवप्रभावजनिता भास्वराः पुद्गलास्ते इति, 'नन्नत्थ विग्गहगइ'त्ति न इति योऽयं बादरपृथ्वीतेजसोर्निषेधः सोऽन्यत्र विग्रहगतिसमापन्नान्, विग्रहगत्यैव बादरे ते तत्र भवतः, पृथ्वी हि बादरा रत्नप्रभाद्यास्वष्टासु पृथिवीषु गिरिविमानेषु च, तेजस्तु मनुष्यक्षेत्र एवेति, तृतीया चेह पञ्चम्यर्थे प्राकृतत्वात्, 'पलियस्स'त्ति परिपार्श्वतः पुनस्संति तमस्कायस्य चन्द्रादय इति 'कादूसणिया पुण'त्ति, ननु तत्पार्श्वतश्चन्द्रादीनां सद्भावात् तत्प्रभाऽपि तत्रास्ति, सत्यं, केवलं कं-आत्मानं दूषयति तमस्कायपरिणामेन परिणमनात् कदूषणा सैव कदूषणिका, दीर्घता च प्राकृतत्वात्, 'कालोभास'त्ति कालोऽपि कश्चित् कुतोऽपि कालो नावभासते अत आह-कालावभासः, कालदीप्तिर्वा, 'गंभीरलोम'त्ति गम्भीरश्चासौ भीषणत्वात् रोमहर्षजननश्चेति गम्भीररोमहर्षजननः भीष्मः, 'उत्तासण'त्ति उत्रासनक उत्कम्पहेतुः 'तप्पढम'त्ति दर्शनप्रथमतायां 'खोभाए'त्ति स्कभीयात्—क्षुभ्येत्,

'अहे णं'ति अथैनं तमस्कायमभिसमागच्छेत्–प्रविशेत्, भयात् 'सीहं'न्ति कायगतिवेगेन 'तुरियं'त्ति मनोगतेरतिवेगेन 'खिप्पामेव'त्ति क्षिप्रमेव 'वीईव'त्ति व्यतिव्रजेदिति, 'तमे'त्ति तमः अन्धकाररूपत्वात् १ तमस्कायो वा २ अन्धकाररात्रिरूपत्वात् अन्धकारं ३ महान्धकारं ४ लोकान्धकारं ५ लोकमध्ये तादृगन्धकारस्यान्यस्यासम्भवात्, लोकतमिश्रं वा ६ देवान्धकारं ७ देवानामपि तत्रोद्योताभावेन तमोरूपत्वात्, एवं देवतमिश्रं वा ८, देवारण्यं ९ बलवद्देवभयान्नश्यतां देवानां तथाविधारण्यमिव शरणभूतत्वात्, देवव्यूहः १० देवानां दुर्भेदत्वात् व्यूह इव देवव्यूहः, 'देवफलिहे'त्ति देवपरिघः, देवानां भीत्युत्पादकत्वेन गमनविघातहेतुत्वात् ११ 'देवपलिक्खोभे'त्ति देवप्रतिक्षोभहेतुत्वात् १२ 'अरुणोदए'त्ति अरुणोदक इति वा समुद्रः, १३, अरुणोदकाब्धिजलविकारत्वादिति, 'तमुकाए'त्ति बादरवायुवनस्पतयस्त्रसाश्च तत्रोत्पद्यन्ते, अप्काये तदुत्पत्तिसम्भवात्, न त्वितरे, अस्थानत्वात्, अत उक्तं–'नो चेव ण'मित्यादि ॥ अथ कृष्णराजिप्रकरणम्–'कण्हराईओ'त्ति (सू. २४१) कृष्णवर्णपुद्गलरेखाः 'अक्खाडग'त्ति इहाखाटकः–प्रेक्षास्थाने आसनविशेपलक्षणस्तत्संस्थिताः, स्थापना चेयम्–



'नो असुरो'त्ति असुरनागकुमाराणां तत्र गमनासम्भवादिति, 'कण्हराई'त्ति प्राग्वत् १ 'मेघराई'त्ति कालमेघरेखातुल्यत्वात् २ 'मघा इ'त्ति तमिश्रतया षष्ठनरकपृथ्वीतुल्यत्वात् ३ 'माघवइ'त्ति तथैव सप्तमपृथ्वीतुल्यत्वात् ४ 'वायफलिहे'त्ति वातो-वात्या तद्वद्यतिमिश्रत्वात्, परिघश्च दुर्लङ्घ्यत्वात् वातपरिघः ५, 'वायपलिक्खोभे'ति वातोऽत्र वात्या तद्वद्यतिमिश्रत्वात् परिक्षोभश्च परिक्षोभहेतुत्वाद्वातपरिक्षोभ इति ६, शेषे नाम्नी प्राग्व्याख्याते स्तः, 'अट्ठसु'त्ति द्वयोरन्तरं अवकाशान्तरं, तत्राभ्यन्तरोत्तरपूर्वयोरेकं पूर्वयोर्द्वितीयं

अभ्यन्तरपूर्वदक्षिणयोस्तृतीयं दक्षिणयोश्चतुर्थं अभ्यन्तरदक्षिणपश्चिमयोः पञ्चमं पश्चिमयोः षष्ठं अभ्यन्तरपश्चिमोत्तरयोः सप्तमं, उत्तरयोरष्टमम्, 'लोगंतिय'त्ति लोकस्यान्ते—समीपे भवानि लोकान्तिकानि तानि च तानि विमानानि चेति समासः, लोकान्तिका वा देवाः तेषां विमानानि इति समासः, अत्र च अवकाशान्तरवर्त्तिष्वष्टसु अर्चिःप्रभृतिविमानेषु यत् कृष्णराजीमध्यभागवर्त्ति रिष्ठं विमानं नवममुक्तं तद्विमानप्रस्तावादवसेयं, 'सारस्सयमाइच्चाणं'ति सारस्वतादित्ययोः समुदितयोः सप्त देवशतानि परिच्छदः इत्यक्षरानुसारेणावगम्यते, एवमुत्तरत्रापि, 'अवसेसाणं'ति अव्याबाधाग्नेयरिष्ठानां, 'एवं नेयव्वं'ति पूर्वोक्तप्रश्नानुसारेण लोकान्तिकविमानवक्तव्यताजातं नेतव्यं, 'विमाणाण पइट्ठाणं'ति तत्र विमानानां प्रतिष्ठानं दर्शितमेव, विमानानां पृथ्वीबाहल्यं, तच्च पञ्चविंशतियोजनशतानि, उच्चत्वं तु योजनसप्तशतानि, संस्थानमेषां नानाविधमनावलिकाप्रविष्टत्वात्, आवलिकाप्रविष्टानि हि वृत्तत्र्यस्रचतुरस्रभेदात् त्रिसंस्थानानि स्युः, 'बंभलोए'त्ति ब्रह्मलोके या विमानानां देवानां च जीवाभिगमोक्ता वक्तव्यता सा तेषु ज्ञेया, सा चैवं लेशतः—'लोयंतियविमाणा णं भंते! कइवन्ना?, तिवन्ना, लोहिया हालिद्दा सुक्किल्ला', एवं पभाए निच्चालोया गंधेणं इट्ठगंधा एवं इट्ठफासा एवं सव्वरयणामया, तेसु देवा समचउरंसा अल्लमहुगसमवण्णा पम्हलेसा। लोयंतियविमाणेसु णं भंते! सव्वे पाणा ४ पुढवित्ताए देवत्ताए उववण्णपुव्वा?, हंते'त्यादि लिखितमेव, 'केवइयं'ति छान्दसत्वात् कियत्या अबाधया—अन्तरेण लोकान्तः प्रज्ञप्तः॥ षष्ठशते पञ्चम उद्देशकः॥

'से णं भंते! तत्थगए'त्ति (सू. २४८) नरकावासमाप्त एव 'आहारेज्ज'त्ति पुद्गलानादद्यात्, 'परिणामेज्ज'त्ति तेषामेव खलरसविभागं कुर्यात्, 'सरीरं'ति तैरेव शरीरं निष्पादयेत्, 'अत्थेगइए'त्ति यस्तस्मिन्नेव समुद्घाते म्रियते, ततः प्रतिनिवर्त्तते,

ततो नरकावासात् समुद्घाताद्वा, इहमागच्छति स्वशरीरे, 'केवइयं गच्छेज्ज' त्ति कियद् दूरं गच्छेत् ?, गमनमाश्रित्य, 'पाउणेज्ज' त्ति कियद् दूरं प्राप्नुयात्, अवस्थानमाश्रित्य, 'अंगुलस्स' त्ति इह द्वितीया सप्तम्यर्थे द्रष्टव्या, अङ्गुले, इह यावत्करणादिदं दृश्यं 'विहत्थिं वा रयणिं वा कुच्छिं वा धणुं वा कोसं वा जोयणं वा जोयणसयं वा जोयणसहस्सं वा जोयणसयसहस्सं वा लोगंतं 'गच्छेज्ज' त्ति अत्र गत्वेति शेषः, ततश्चायमर्थः–उत्पादस्थानानुसारेणाङ्गुलासङ्ख्येयभागमात्रादिके क्षेत्रे समुद्घाततो गत्वा, कथमित्याह–'एगपदेसियं सेढिं मोत्तूण' त्ति यद्यप्यसङ्ख्येयप्रदेशावगाहस्वभावो जीवस्तथापि नैकप्रदेशश्रेणीवर्त्यसङ्ख्येयप्रदेशावगाहनेन गच्छति, तथाभावत्वादित्यतस्तां मुक्त्वेत्युक्तमिति ॥ षष्ठशते षष्ठ उद्देशकः ॥

'सालीणं' ति कलमादीनां 'वीहीणं' ति सामान्यतः 'जवजवाणं' ति यवविशेषाणां 'कोट्ठाउत्ताणं' ति कोष्ठे–कुशूले आगुप्तानितत्क्षेपणेन संरक्षितानि कोष्ठागुप्तानि तेषां 'पल्लाउत्ताणं' ति इह पल्यो–वंशादिमयो धान्यस्थानं 'मंचाउत्ताणं मालाउत्ताणं' ति मञ्चमालयोर्भेदः 'अकुड्डो होइ मंचो, मालो य घरोवरिं होइ' त्ति, 'ओलित्ताणं' ति द्वारदेशे गोमयादिनाऽवलिप्तानां 'लित्ताणं' ति गोमयादिनैव लिप्तानां 'पिहियाणं' स्थगितानां तथाविधाच्छादनेन 'मुद्दियाणं' ति मृत्तिकादिमुद्रावतां 'लंछियाणं' ति रेखादिकृतलाञ्छनानां, 'जोणि' त्ति अङ्कुरोत्पत्तिहेतुः, 'तेण परं' ततः परं, 'कल' त्ति कलायाः, वृत्तचनका इत्यन्ये, 'मसूर' त्ति देशविशेषसस्यम्, 'निप्फाव' त्ति वल्लाः 'कुलत्थ' त्ति चवलकाकाराश्चिप्पिटकाः स्युः 'आलिसंदग' त्ति चवलप्रकाराः, चवलका इत्यन्ये, 'सघीण' त्ति तुवराः 'पलिमंथग' त्ति वृत्तचनकाः, कालचनका इत्यन्ये, 'अयसि' त्ति अतसी भङ्गी 'कुसुंभ' त्ति लटा 'वरग' त्ति वरट्टो 'रालग' त्ति कङ्गुविशेषः, 'कोदूसग' त्ति कोद्रवविशेषः 'सण' त्ति त्वक्प्रधाननालो धान्यविशेषः 'सरिसव' त्ति सिद्धार्थकाः

'मूलगबीय'त्ति मूलकबीजानि, शाकविशेषबीजानीत्यर्थः, 'ऊसासद्धा वियाहिय'त्ति (सू. २४७) उच्छ्वासाद्धाः–उच्छ्वासप्रमितकालविशेषाः, व्याहृता भगवद्भिः, अत्रोत्तरं–'असंखिज्ज'त्ति असङ्ख्यातानां समयानां सम्बन्धिनो ये समुदया–वृन्दानि तेषां याः समितयो–मीलनानि तासां यस्समागमः–संयोगः तेन यत्कालमानं स्यात् सैकावलिका प्रोच्यते,'संखेज्जावलिय'त्ति किल षट्पञ्चाशदधिकशतद्वयेन आवलिकानां क्षुल्लकभवग्रहणं स्यात्, तानि सप्तदश सातिरेकाणि उच्छ्वासनिःश्वासकालः, एवं सङ्ख्याता आवलिका उच्छ्वासकालमानं,' हट्ठस्स 'त्ति हृष्टस्य ' अणवगल्लस्स ' (*४६) अनवकल्पस्य—जरानभिभूतस्य 'निरुवकिट्ठस्स' व्याधिना प्राक् साम्प्रतं चाक्लिष्टस्य जन्तोः–प्राणिन एकोच्छ्वासेन सह निःश्वास उच्छ्वासनिःश्वासो य एष प्राण इत्युच्यते, 'सत्त पाणु'त्ति (*४७) प्राकृतत्वात्, सप्त प्राणा–उच्छ्वासनिश्वासाः, तैस्सप्तभिरेकः स्तोकः, सप्तस्तोकैरेको लवो, लवसप्तसप्तत्या मुहूर्त्तः,'तिन्नि सहस्सा(*४८)गाह'त्ति अस्या भावार्थोऽयम्–सप्तभिः प्राणैः स्तोकः, तैस्सप्तभिर्लवः,ततो लवस्सप्तभिर्गुणितो जाता एकोनपञ्चाशदुच्छ्वासाः, एवं मुहूर्त्ते च सप्तसप्ततिः लवाः स्युः, सा एकोनपञ्चाशद्गणने जातं यथोक्तं मानमिति, 'एताव ताव गणियस्स विसए'त्ति एतावान् शीर्षप्रहेलिकाप्रमेयराशिप्रमाणः, तावदिति क्रमागतः गणितविषयो–गणितगोचरो,गणितप्रमेय इत्यर्थः,'उवमिए'त्ति उपमया निर्वृत्तमौपमिकं, उपमामन्तरेण यत्कालप्रमाणमनतिशयिना ग्रहीतुं न शक्यते तदौपमिकमिति भावः, (*४९) छेत्तुं–द्विधाकर्त्तुं खड्गादिना भेत्तुं–सूच्यादिना सच्छिद्रं कर्त्तुं'सिद्ध'त्ति ज्ञानसिद्धाः केवलिनः, न तु सिद्धाः सिद्धिं गताः, तेषां वदनस्यासम्भवादिति,'पमाणाणं'ति वक्ष्यमाणप्रमाणानामुच्छ्लक्ष्णश्लक्ष्णिकादीनामिति,'अणंताणं'ति अनन्तानां व्यावहारिकपरमाणूनां समुदाया–द्व्यादिरूपास्तेषां समितयो–मीलनानि तासां समागमः–परिणामवशादेकीभवनं तेन

समुदयसमितिसमागमेनैका उत्-प्राबल्येन श्लक्ष्णिका उच्छ्लक्ष्णश्लक्ष्णिका, एते चोच्छ्लक्ष्णश्लक्ष्णिकादयोऽङ्गुलान्ता दश प्रमाणभेदा यथोत्तरमष्टगुणाः सन्तोऽपि प्रत्येकमनन्तपरमाणुत्वं न व्यभिचरन्ति अत उक्तम्-उच्छ्लक्ष्णश्लक्ष्णिका, एतदष्टगुणत्वात् ऊर्ध्वरेण्वपेक्षया तु अष्टभागत्वात् 'सण्हसण्हिय'त्ति श्लक्ष्णश्लक्ष्णिका 'उद्धरेणु'त्ति ऊर्ध्वाधस्तिर्यग्गमनलक्षणो रेणुरूर्ध्वरेणुः 'तसरेणु'त्ति त्रसति-वायुप्रेरितो गच्छेदिति त्रसरेणुः रथोत्खातो रेणू रथरेणुः, वालाग्रलिक्षादयः प्रतीताः, 'नालिय'त्ति यष्टिविशेषः, 'अक्खे'-त्ति अक्षः-शकटावयवः, 'तं तिउणं सविसेसं'ति तं पल्यं त्रिगुणं सविशेषं, वृत्तपरिधेः किञ्चिन्न्यूनषड्भागाधिकत्रिगुणत्वात्, 'एगाहिये'त्यादि एकाहिकद्व्याहिकत्र्याहिकानां 'उक्कोस'त्ति उत्कर्षतः सप्तरात्रप्ररूढानां 'संमट्ठे'त्ति सम्मृष्ट-आकण्ठभृतः सन्निचितो-व्याप्तो निबिडः, 'कुत्थेज्ज'त्ति न कुथ्येयुः-नासारतां गच्छेयुः 'परिविद्धंसेज्ज'त्ति तानि वालाग्राणि न परिविध्वंसेरन्-विनाशं न गच्छेयुः 'नो पूइत्ताए'त्ति न पूतितया 'अवहाय'त्ति तद्वालाग्रमपनीय 'खीणे' क्षीणो वालाग्राकर्षणात् 'नीरए' निर्गतरजाः अपकृष्टधान्यरजःकोष्ठागारवत्, 'निम्मले' निर्मलः विगतमलः, मलः सूक्ष्मतरवालाग्रः, प्रमार्जनिकाप्रमृष्टकोष्ठागारवत्, 'निट्ठिए' अपनेयद्रव्यापनयनमाश्रित्य निष्ठां गतः, प्रयत्नप्रमार्जितकोष्ठागारवत्, 'निल्लेव'त्ति अतिसंश्लेषात् तन्मयतां गतो (लेपः, तथाविध)-वालाग्रापहारात्, अपनीतभित्त्यादिगतधान्यकोष्ठागारवत्, 'अवहडे' निःशेषवालाग्रापहारात्, विशुद्धो रजोमलकल्पवालाग्राकर्षणात् विशेषेण शुद्धो विशुद्धः, एकार्थाश्चैते शब्दाः, व्यावहारिकं चेदमद्धापल्योपमं, इदमेवासङ्ख्येयखण्डीकृतैकैकवालाग्रभृतपल्यात् वर्षशते २ य उद्धारस्तत्सूक्ष्मं स्यात्, समयोद्धारे तु उद्धारपल्योपमं, तैरेवासंख्येयखण्डैः समयोद्धारे सूक्ष्ममुद्धारं, तथा तैरेव वालाग्रैः स्पृष्टाः ये प्रदेशाः तेषां प्रतिसमयोद्धारेण यः कालस्तद् व्यावहारिकं क्षेत्रपल्योपमं, एवं यः पुनस्तैरेवासङ्ख्येयखण्डीकृतैः स्पृष्टास्पृष्टानां

तथैवोद्धारकालस्तत् सूक्ष्मं क्षेत्रपल्योपमं, एवं सागरोपममपि विज्ञेयमिति, 'उत्तमट्ठपत्ताए'त्ति उत्तमान् उत्कृष्टानर्थान् आयुष्कादीन् प्राप्ता, उत्तमकाष्ठां प्राप्ता वा–प्रकृष्टावस्थां गता, तस्यां 'आगारभावपडोआरि'त्ति आकारस्य–आकृतेः भावाः–पर्यायास्तेषां प्रत्यवतारः–अवतरणमाविर्भाव आकारभावप्रत्यवतारः, 'आलिंगपुक्खरे'त्ति मरुजमुखपुटं, 'एवं'ति उत्तरकुरुवक्तव्यता जीवाभिगमोक्ता च दृश्या, 'मुइंगपुक्खरेइ वा सरतलेइ वा' सरस्तलं–सर एव वा करतले–कर एव, एवं भूमिसमतायाः भूभागगततृणमणीनां वर्णपञ्चकस्य सुरभिगन्धस्य मृदुस्पर्शस्य शुभशब्दस्य वाप्यादीनां वाप्याद्यनुगतोत्पातपर्वतादीनामुत्पातपर्वताश्रितानां हंसासनादीनां लतागृहादीनां शिलापट्टकादीनां च वर्णको वाच्यः, तदन्ते चैवं दृश्यं–तत्थ २ णं बहवे भारहया मणुस्सा मणुस्सीओ आसयंति ५''तत्थ २'त्ति तत्र तत्र भारतस्य खण्डे २ देशे २, देशे २–खण्डांशे २ 'तहिं तहिं'ति देशस्यांशे २ उद्दालकादयो वृक्षविशेषाः, यावत्करणात् 'कयमाला नट्टमाला' इत्यादि दृश्यं, 'कुस'त्ति कुशा–दर्भाः, विकुशाः–तृणविशेषास्तैर्विशुद्धानि–सहितानि वृक्षमूलानि येषां ते तथा, 'जाव'त्ति यावत्करणात् 'कन्दमंतो मूलमन्त' इति दृश्यं, 'अणुसज्जित्थ'त्ति अनुसक्तवन्तोऽनुवृत्तवन्तः, 'छव्विह'त्ति पद्मगन्धयः १ मियगंध'त्ति मृगमदगंधयः २ 'अमम'त्ति ममकाररहिताः ३ 'तेयली'त्ति तेजश्च तलं च–रूपं येषां ते तेजस्तलिनः ४ 'सह'त्ति सहिष्णवः–समर्थाः ५ 'सणंचर'त्ति शनैः–मन्दमुत्सुकत्वाभावाच्चरन्तीत्येवंशीलाः शनैश्चारिणः ॥

॥ षष्ठशते सप्तमः उद्देशकः ॥

'बायरे अगणिकाए'त्ति ननु यथा बादराग्नेर्मनुष्यक्षेत्र एव सद्भावान्निषेध इहोच्यते–एवं बादरपृथिवीकायस्यापि निषेधो वाच्यः स्यात्, पृथिव्यादिष्वेव स्थानेषु तस्य भावादिति, सत्यं, किन्तु नेह यद्यत्र नास्ति तत्तत्र सर्वं निषिध्यते, मनुष्यादिवत्, विचित्र-

त्वात् सूत्रगतेः, अतोऽसतोऽपीह पृथ्वीकायस्य न निषेध उक्तः, अप्कायवायुवनस्पतीनां त्विह घनोदध्यादिभावेन निषेधाभावः सुगम एव, 'नो नाओ'त्ति नागकुमारस्य तृतीयायाः पृथिव्या अधो गमनं नास्तीत्यनुमीयते, 'नो असुरो नो नागो'त्ति इहाप्यत एव चतुर्थ्यादीनामधोऽसुरनागकुमारयोर्गमनं नास्तीत्यनुमीयते, सौधर्मेशानयोस्त्वधोऽसुरो व्रजेच्चमरवत्, न नागकुमारोऽशक्तत्वाद्, अत एवाह—'देवो पकरेइ'इत्यादि, इह बादरपृथ्वीतेजसोर्निषेधः सुगम एव, अस्वस्थानात्, तथा अब्वायुवनस्पतीनामनिषेधः सुगम एव च, तयोरुदधिप्रतिष्ठितत्वेनाब्वनस्पतिसम्भवात्, वायोश्च सर्वत्र भावादिति, 'एवं सणंकुमार'त्ति इहातिदेशतो बादराब्वनस्पतीनां सम्भवोऽनुमीयते, स च तमस्कायसद्भावतोऽवसेयः, 'सव्वहिं'ति अच्युतं यावदित्यर्थः, परतो देवस्यापि गमो नास्तीति न तत्कृतबलाहकादेर्भावः, 'पुच्छेयव्वो'त्ति बादराप्कायः अग्निर्वनस्पतिश्च प्रष्टव्यः, 'अण्णं तं चेव'त्ति वचनान्निषेधश्च, यतोऽनेन विशेषोक्तादन्यत् सर्वं पूर्वोक्तमेव वाच्यमिति सूचितं, तथा ग्रैवेयकादीषत्प्राग्भारान्तेषु पूर्वोक्तं सर्वं गेहादिकमधिकृतवाचनायामनुक्तमपि निषेधतोऽध्येयमिति, प्रागुक्तसङ्ग्रहगाथामाह—'तमुकाय'त्ति (*५१) तमस्कायप्रकरणे प्रागुक्ते 'कप्पपणए' सौधर्मादिकल्पपञ्चके 'अगणि'त्ति अग्निपृथ्वीकायावध्येतव्यौ, 'अत्थि णं भंते ! बादरे पुढविकाए बादरे अगणिकाए ?, नो इणमट्ठे समट्ठे, णण्णत्थ विग्गहगइसमावण्णगेणं, इत्यनेनाभिलापेन, तथा 'अगणि'त्ति अग्निकायोऽध्येतव्यः, 'पुढवीसु'त्ति रत्नप्रभादिपृथिवीसूत्रेषु, 'अत्थि णं भंते ! इमीसे रयणप्पभाए पुढवीए अहे बादरे अगणिकाए' इत्याद्यभिलापेनेति, तथा 'आऊतेउ वणस्सइ'त्ति अप्तेजोवनस्पतयोऽध्येतव्याः, 'अत्थि णं भंते ! बादरे आउकाए बादरे तेउकाए बादरे वणस्सकाए ? नो इणट्ठे समट्ठे'इत्यादिनाऽभिलापेन, केष्वित्याह—'कप्पुवरिम'त्ति कल्पपञ्चकोपरितनकल्पसूत्रेषु, तथा 'कण्हराईसु'त्ति

प्रागुक्तकृष्णराजीसूत्रे, इह च ब्रह्मलोकोपरिस्थानानामधो योऽव्वनस्पतिनिषेधः स यान्यत्र वायुप्रतिष्ठितानि स्थानानि तेषामध आनन्तर्येण वायोरेव भावात् आकाशप्रतिष्ठितानां त्वाकाशस्यैव भावादवगन्तव्यः, अग्नेरस्थानादिति, 'जाइनामनिहत्ताउए'त्ति (सू. २४९) तत्र जातिः-एकेन्द्रियजात्यादिः सैव पञ्चधा, नाम इति नामकर्मण उत्तरप्रकृतिः तया निधत्तं-निषिक्तं यदायुस्तज्जातिनामनिधत्तायुः, निषेकश्च कर्मपुद्गलानां प्रतिसमयमनुभवनार्थं रचनेति १ 'गतिनाम०'त्ति गतिः-नारकादि चतुर्द्धा, शेषं तथैव २, 'ठिइनाम'त्ति स्थितिरिति यत्स्थातव्यं क्वचिद्विवक्षितभवे जीवेनायुःकर्मणो वा सैव नामः—परिणामो धर्मः स्थितिनाम तेन निधत्तं यदायुर्दलिकरूपं तत् स्थितिनामनिधत्तायुः ३, ओगाहनामनिधत्त० ४ अवगाहते यस्यां जीवः सा अवगाहना-शरीरमौदारिकादि तस्य नाम—औदारिकादिशरीरनामकर्मेत्यवगाहनानाम शेषं प्राग्वत्, 'पएसनाम'त्ति प्रदेशानां—आयुःकर्मद्रव्याणां नामः-परिणतिः, प्रदेशनामः शेषं प्राग्वत् ५ 'अणुभागनाम'त्ति अनुभागः आयुर्द्रव्याणामेव विपाकस्तल्लक्षणो नामः-परिणतिः, शेषं तथैव ६, अथ किमर्थं जात्यादिनामकर्मणाऽऽयुर्विशेष्यते ?, उच्यते, आयुष्कस्य प्राधान्योपदर्शनार्थं, यस्मान्नारकाद्यायुरुदये सति जात्यादिनामकर्मणामुदयः स्यात्, नारकादिभवोपग्राहकं चायुरेव, यस्मादुक्तं इहैव—"नेरइए णं भंते ! नेरइएसु उववज्जइ, अनेरइए नेरइएसु उ०?, गो० ! नेरइए नेरइएसु उव०, नो अनेरइए नेरइएसु उ०' अयमर्थः—नारकायुःप्रथमसमयवेदन एव नारक उच्यते, तत्सहचारिणां च पञ्चेन्द्रियजात्यादिनामकर्मणामप्युदय इति, इह च आयुर्बन्धस्य षड्विधत्वे उपन्यस्ते यदायुः षड्विधमुक्तं तदायुषो बन्धाव्यतिरेकाद् बद्धस्यैवायुर्व्यपदेशविषयत्वादिति, 'दंडओ'त्ति 'जीवाणं भंते ! कइविहे आउबंधे पण्णत्ते' इत्यादि वैमानिकान्तश्चतुर्विंशतिदण्डको वाच्यः, अत आह—'जाव वेमाणियाणं'ति एवं जीवपदस्यैकत्वबहुत्वाभ्यां आयुर्ब-

न्धषड्विधत्वे द्वादश दण्डकाः स्युरिति, अथ कर्मविशेषाधिकारात् तद्विशेषितानां जीवादिपदानां द्वादश दण्डकानाह–'जीवा णं भंते ! जातिनामनिहत्ता' जातिनाम निधत्तं निषिक्तं विशिष्टबन्धं वा कृतं यैस्ते जातिनामनिधत्ताः यावत्करणाद् एवं गत्यादिनाम० षट् प्रकारा वाच्याः अयमेको दण्डको वैमानिकान्तो वाच्यः १, 'जातिणामनिहत्ताउया' जातिनामनिधत्तायुषः, एवमन्यो दण्डकः २, जातिनामनिउत्ता० तत्र जातिनाम नियुक्तं–नितरां संयुक्तं–संबद्धं निकाचितं वेदने वा नियुक्तं यैस्ते जातिनामनियुक्ताः ३ 'जातिनामनिउत्ताउया' तत्र जातिनाम्ना सह नियुक्तं–निकाचितं वेदयितुमारब्धं वाऽऽयुर्यैस्ते जातिनामनियुक्तायुषः ४ 'जातिगोयनिहत्ता०' तत्र जातेः–एकेन्द्रियादिकाया यदुचितं गोत्रं–नीचैर्गोत्रादि तज्जातिगोत्रं तन्निधत्तं यैस्ते जातिगोत्रनिधत्ताः ५, एवमन्यान्यपि, 'जातिगोयनिहत्ताउया' जातिगोत्रेण समं निधत्तमायुर्यैस्ते जातिगोत्रनिधत्तायुषः ६, एवमन्यान्यपि ५, 'जाइगोयनिउत्ता' जातिगोत्रं नियुक्तं यैस्ते जातिगोत्रनियुक्ताः, एवमन्यान्यपि ७, जातिगोयनिउत्ताउया जातिगोत्रेण समं नियुक्तमायुर्यैस्ते जातिगोत्रनियुक्तायुषः ८, एवमन्यान्यपि ५ जाइणामगोयनिहत्ता जातिनाम गोत्रं च निधत्तं यैस्ते तथा ९, एवमन्यान्यपि ५, जातिनाम्ना गोत्रेण च सह निधत्तमायुर्यैस्ते तथा १० एवमन्यान्यपि ५, 'जाइनामगोयनिउत्ता' जातिनाम गोत्रं च नियुक्तं यैस्ते ११ एवमन्यान्यपि ५, जातिणामगोयनिउत्ताउया जातिनाम्ना गोत्रेण च समं नियुक्तमायुर्यैस्ते १२ एवमन्यान्यपि ५ । अथ लवणसमुद्रस्वरूपं प्ररूपयन्नाह–'उस्सिओदए'त्ति (सू. २५०) उच्छ्रितोदकः—ऊर्ध्ववृद्धिगतजलः, तद्वृद्धिश्च साधिकषोडशयोजनसहस्राणि 'पत्थडोदए'त्ति प्रस्तृतोदकः–समजलः,'खुभिय'त्ति वेलावशात्, वेला च महापातालकलशगतवायुक्षोभादिति,'एत्तो'त्ति इतः सूत्रादारब्धं सर्वथा 'जीवाभिगमे' तथाऽध्येतव्यं, तच्चेदम्–'जहा णं भंते !

लवणे समुद्दे ऊसिओदए, नो पत्थडोदए, खुभियजले नो अखुभियजले, तहा णं बाहिरगा समुद्दा ऊसिओदगा ४ ?, गोयमा! बाहिरगा समुद्दा नो ऊसिओदग्गा पत्थडोदगा, नो खुभियजला अखुभियजला, पुण्णा पुण्णप्पमाणा वोलट्टमाणा वोसट्टमाणा समभर०, अत्थि णं भंते! लवणसमुद्दे बहवे ओराला बलाहया संसेयंति संमुच्छंति ?, हंता! अत्थि,जहा णं भंते! लवणसमुद्दे ओराला ५ तहा णं बाहिरेसुवि समुद्देसु ओराला ५ ?,नो इणमट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ–बाहिरगा णं समुद्दा पुन्ना जाव घडत्ताए चिट्ठंति ?, गोयमा! बाहिरेसु णं समुद्देसु बहवे उदगजोणिया जीवा य पोग्गला य उदगत्ताए वक्कमंति विउक्कमंति उववज्जंति', शेषं तु लिखितमेवास्ते, व्यक्तं चेदमिति, 'संठाणओ एग'त्ति एकेन विधिना–प्रकारेण चक्रवाललक्षणेन विधानं–स्वरूपस्य करणं येषां ते एकविधिविधानाः, विस्तारतोऽनेकविधिविधानाः, कुत इत्याह–'दुगुणे'त्यादितः,'जाव अस्सिं'ति यावत्करणादिदं दृश्यं—'पवित्थरमाणो २ बहुउप्पलपउमकुमुयणलिणसुभगसोगंधियपुंडरीयमहापुंडरीयसयवत्तसहस्सपत्तकेसरफुल्लोवइया' उत्पलादीनां केसरैः फुल्लैश्चोपपेता इत्यर्थः, 'सुभा णाम'त्ति स्वस्तिकादीनि, 'सुभा रूव'त्ति शुक्लपीतादीनि देवादीनि वा 'सुभा गंध'त्ति कर्पूरादयः 'सुभा रस'त्ति मधुरादयः, 'सुभा फास'त्ति मृदुप्रभृतयः स्पर्शवन्तो वा नवनीतादयः,'एव'मिति द्वीपसमुद्राभिधायकतया नेतव्यानि, शुभनामानि प्रागुक्तानि 'उद्धारो'त्ति द्वीपसमुद्रेषूद्धारो नेतव्यः, स चैवम्–'दीवसमुद्दा णं भंते! केवइया उद्धारसमएणं पण्णत्ता ?, गो०! जावइया अड्ढाइज्जाणं उद्धारसागरोवमाणं उद्धारसमया एवइया दीवसमुद्दा उद्धारसमएणं पण्णत्ता', येनैकैकेन समयेन वालाग्रमेकैकमुद्ध्रियते असावुद्धारसमयोऽतस्तेन, 'परिणामो'त्ति परिणामो ज्ञेयो द्वीपसमुद्रेषु, स चैवं–'दीवसमुद्दा णं भंते! किं पुढविपरिणामा आउपरिणामा जीवपरिणामा पुग्गलपरिणामा ?, गोयमा! पुढविपरिणामावि'-

इत्यादि, 'सव्वजीवाणं'ति सर्वजीवानां द्वीपसमुद्रेषु उत्पादो ज्ञेयः, स चैवम्—'दीवसमुद्देसु णं भंते ! सव्वे पाणा ४ पुढविकाइयत्ताए जाव तसकाइयत्ताए उववण्णपुव्वा ?, हंता ! गोयमा ! असइं अदुवा अणंतखुत्तो'त्ति ॥ षष्ठशते अष्टम उद्देशकः॥

'सत्तविहबंधए'त्ति (सू. २५१) आयुरबन्धकाले, 'अट्ठविह'त्ति आयुर्बन्धकाले, 'छव्विह'त्ति सूक्ष्मसम्पराये मोहायुषोरबन्धकत्वात्, 'बंधुद्देस'त्ति बन्धोद्देशकः, प्रज्ञापनाचतुर्विंशतितमपदेऽध्येतव्यः, स चायम्—'नेरइए णं ! नाणावरणिज्जं कम्मं बंधेमाणे कइ कम्मपगडीओ बंधइ ?, गो० ! अट्ठविहबंधए वा सत्तविहबंधए वा जाव वेमाणिए, णवरं मणुस्से जहा जीवे'इत्यादि, 'एगवण्ण'त्ति (सू. २५२) कृष्णाद्येकवर्णं एकरूपं—एकविधाकारं स्वशरीरादि 'इहगए'त्ति इहगतान् प्रज्ञापकासन्नक्षेत्रस्थितान् 'तत्थ गए'त्ति देवः किल प्रायो देवस्थान एव वर्त्तते इति तत्र गतान्—देवलोकगतान् 'अण्णत्थगए'त्ति प्रज्ञापकक्षेत्राद्देवस्थानाच्चान्यत्र स्थितान्, तत्र च स्वस्थान एव प्रायो विकुरुते, यतः—कृतोत्तरवैक्रियरूप एवान्यत्र गच्छति, इति नो इहगतान् पुद्गलान् पर्यादायेत्युक्तमिति, 'कालयं पुग्गलं नीलपुग्गलत्ताए' इत्यादौ कालनीललोहितहालिद्रशुक्ललक्षणानां पञ्चवर्णानां दशद्विकसंयोगसूत्राण्यध्येयानि, 'गंधरसफास'त्ति इह सुरभिदुरभिगन्धद्वयस्यैकमेव तिक्तकटुकषायाम्लमधुरलक्षणानां पञ्चरसानां दश सूत्राणि, अष्टानां स्पर्शानां च चत्वारि सूत्राणि, परस्परविरुद्धेन कर्कशमृद्वादिना द्वयेनैकैकसूत्रनिष्पादनादिति, 'अविसुद्धलेसे'त्ति (सू. २५३) अविशुद्धलेश्यो विभङ्गज्ञानी देवः, 'असमोहए'त्ति असमवहतेन—अनुपयुक्तेनात्मना, इहाविशुद्धलेश्यो देवः १ असमवहतात्मा २ अविशुद्धलेश्यं देवादिकं ३ इत्यस्य पदत्रयस्य १२ विकल्पास्सन्ति, तद्यथा—'अविसुद्धलेसे णं देवे १असमोहएणं अप्पाणेणं२ अविसुद्धलेसं देवं ३ जाणइ पासइ, नो इणमट्ठे समट्ठे इत्येकः प्रथमो विकल्पः, अविसुद्धले० १असमो०२अप्पाणेणं विसुद्ध० देवं

३,नो इणमट्ठेत्ति २ विकल्पः, अविसुद्धलेसे समो० अप्पाणेणं अविसुद्धलेसं देवं ३,नो इणत्ति ३,अविसुद्धलेसे स० अप्पाणेणं विसुद्धलेसं देवं ३ नो इणत्ति ४, अविसुद्ध० समोहयासमोहएणं अप्पाणेणं अविसु० देवं ३ नो इणमट्ठे ५, अविसु० समोहयासमो० अप्पाणेणं विसुद्धलेसं देवं ३ नो इणमट्ठे ६, विसुद्धलेसे असमोहएणं अप्पाणेणं अविसु० देवं ३ नो इणट्ठे समट्ठे ७, विसुद्ध० देवे असमो० अप्पाणेणं विसुद्धलेसं देवं ३ नो इणमट्ठे ८, एभिरष्टभिर्विकल्पैर्न जानाति, तत्र षड्भिर्मिथ्यादृष्टित्वात् द्वाभ्यां त्वनुपयुक्तत्वात् न जानाति, विसुद्धलेसे समोहएणं अविसुद्धलेसं देवं ३ जाणइ ?, हंता ! जाणइ ९, विसुद्ध० देवे समोहएणं विसुद्ध० देवं जाणइ ?, हंता १०, विसुद्ध० देवे समोहयासमोहएणं अविसुद्धलेसं देवं जाणइ ? हंता ११, विसुद्धलेसे समोहयासमोहएणं विसुद्धलेसं देवं ३ जाणइ ? हंता ! जाणइत्ति १२, एभिश्चतुर्भिर्विकल्पैस्सम्यग्दृष्टित्वादुपयुक्तत्वानुपयुक्तत्वाच्च जानाति, उपयोगानुपयोगपक्षे उपयोगांशस्य ज्ञानहेतुत्वादिति, एतदेवाह–'हेट्ठिल्लेहिं अट्ठहिं'इत्यादि ॥ षष्ठशते नवम उद्देशकः॥

'नो चक्किय'त्ति (सू. २५४) न शक्नुयात्,'जाव कोलट्ठिय'त्ति यावत्कुवलास्थिकमात्रमपि, कुवलास्थिकं–वदरकुवलकः 'निप्फाव'त्ति वल्लः 'कल'त्ति कलाया धान्यविशेषः 'जूय'त्ति यूका लिक्षामात्रमपि सुखं दुःखं वा 'अभिनिव्वट्टित्ता' अभिनिर्वृत्य–प्रादुष्कृत्य 'उवदंसित्तए'त्ति उपदर्शयितुं, न शक्नुयात्–न समर्थः स्यात्, 'अयण्ण'मित्यादि दृष्टान्तोपनय एवं, यथा–गन्धपुद्गलानामतिसूक्ष्मत्वेन अमूर्त्तकल्पत्वात् कुवलयास्थिकमात्रमप्युपदर्शयितुं न शक्यते तथा सर्वजीवानां सुखदुःखमपि, 'जीवे णं भंते ! जीवे' (सू. २५५) इहैकेन जीवशब्देन 'जीव एव गृह्यते, द्वितीयेन च चैतन्यमित्यतः प्रश्नः, उत्तरं पुनर्जीवचैतन्ययोर्मिथोऽविनाभूतत्वात् जीवश्चैतन्यमेव चैतन्यमपि जीव एवेत्येवमर्थो गृह्यते, नारकादिषु पदेषु एवं—जीवे णं भंते !

नेरइए नेरइए णं जीवे'त्ति नारकादिषु पदेषु पुनर्जीवत्वमव्यभिचारि जीवेषु तु नारकादित्वं व्यभिचारि इत्यत आह–'जीवे पुण सिय नेरइए सिय अनेरइए' इति, जीवाधिकारादिदमाह–'जीवति भंते ! जीवे'त्ति जीवति–प्राणान् धारयति यः स जीवः, उत यो जीवः स जीवति इति प्रश्नः, उत्तरं तु यो जीवति स तावन्नियमाज्जीवः, अजीवस्य आयुष्कर्माभावेन जीवनाभावात्, जीवस्तु स्याज्जीवति स्यान्न जीवति, सिद्धस्य जीवनाभावाद् अशरीरत्वेनेति, 'जीवति भंते ! नेरइए'त्ति नारकादिस्तु नियमाज्जीवति, संसारिणः सर्वस्य प्राणधारणधर्मकत्वात्, जीवतीति पुनः स्यान्नारकादिः स्यादनारकादिः, प्राणधारणस्य सर्वेषां सद्भावादिति। 'आहच्च सायं'ति (सू. २५६) कदाचित् सातां–वेदनां, कथमिति चेत्, उच्यते—'उववाएण व सायं णेरइओ देवकम्मुणा वावि।" 'आहच्च असायं'ती'ति देवा आहननप्रियविप्रयोगादिष्वसातां वेदनां वेदयन्ति, 'वेमायाए'त्ति विविधया मात्रया, कदाचित् सातां कदाचिदसातामित्यर्थः। 'अत्तमायाए'त्ति ( सू. २५७ ) यान् पुद्गलान् आत्मना आदाय–गृहीत्वा 'आयसरीर'त्ति स्वपुरवगाढक्षेत्रावस्थितानिति, 'अणंतर'त्ति स्वपुःक्षेत्रापेक्षयाऽनन्तरक्षेत्रावगाढानिति, 'परंपर'न्ति आत्मक्षेत्राद्यत्परं क्षेत्रं तत्रावगाढानिति। 'आयाणेहिं'ति (सू. २५८) आदानैः–इन्द्रियैः 'जीवाण य सुहदुक्खं'ति (※२२) दशमोद्देशकसङ्ग्रहगाथा गतार्था ॥ दशमोद्देशकविवरणम् ॥

इति श्रीलक्ष्मीसागरसूरिशिष्यशतार्थिश्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तहंसगणिशिष्य-
श्रीदानशेखरगणिसमुद्धृतायां भगवतीलघुवृत्तौ षष्ठशतविवरणं सम्पूर्णम् ॥

अथ सप्तमशतं व्याख्यायते–तत्र दशोद्देशकादिसङ्ग्रहगाथामाह–'आहार'त्ति(*२३)आहारकानाहारकव्यक्तिरूपः१ विरतिः–प्रत्याख्यानार्थः२,'थावर'त्ति वनस्पतिवक्तव्यतार्थः३,'जीव'त्ति संसारिजीवप्रज्ञापनार्थः४,'पक्खि'त्ति खचरजीवयोनिवक्तव्यतार्थः५,आयुष्कवक्तव्यतार्थः६,'अणगार'त्ति अनगारवक्तव्यतार्थः७,'छउमत्थ'त्ति छद्मस्थमनुष्यवक्तव्यतार्थः८,'असंवुड'त्ति असंवृतानगारवक्तव्यतार्थः ९ 'अण्णउत्थि'त्ति कालोदायिप्रभृतिपरतीर्थिकवक्तव्यतार्थः १०॥ 'कं समयं'ति(सू.२५९)परभवं गच्छन् कस्मिन् समये अनाहारकः स्यादिति प्रश्नः, उत्तरन्तु–जीवो यदा ऋजुगत्योत्पादस्थानं गच्छेत् तदा परभवायुषः प्रथमसमये आहारकः स्यात्,यदा विग्रहगतया गच्छति तदा प्रथमसमये वक्रेणानाहारकः स्यात्, उत्पत्तिस्थानानवाप्तौ तदाहरणीयपुद्गलानामभावाद् ,अत आह–'पढमे समए सिय अणाहारए'त्ति यदा तु एकेन वक्रेण द्वाभ्यां समयाभ्यामुत्पद्यते तदा प्रथमेऽनाहारको द्वितीये त्वाहारकः,यदा तु वक्रद्वयेन त्रिभिस्समयैरुत्पद्यते तदा प्रथमे द्वितीये त्वनाहारकः,यदा तु वक्रत्रयेण चतुर्भिस्समयैरुत्पद्यते तदाऽऽद्यसमयत्रये अनाहारकः,चतुर्थे नियमादाहारक इतिकृत्वा 'तइयसमए सिये'त्याद्युक्तं,वक्रत्रयमित्थं स्यात्–नाड्या बहिर्विदिक्ष्ववस्थितस्य यस्याधोलोकादूर्ध्वलोके उत्पादो नाड्या बहिरेव दिशि स्यात् सोऽवश्यमेकेन समयेन विश्रेणितः समश्रेणिं प्रतिपद्यते,द्वितीयेन नाडिं प्रविशति, तृतीयेनोर्ध्वलोकं गच्छेत् ,चतुर्थेन लोकनाडीतो निर्गत्योत्पत्तिस्थान उत्पद्यते, इह चाद्यसमयत्रये वक्रत्रयं ज्ञेयं,समश्रेण्यैव गमनात् ,अन्ये त्वाहुः–वक्रचतुष्कमपि स्यात् , यदा हि विदिशो विदिश्येवोत्पद्यते, तत्र समयत्रयं प्राग्वत् , चतुर्थसमये तु नाडीतो निर्गत्य समश्रेणिं प्रतिपद्यते, पञ्चमेनोत्पत्तिस्थानं प्राप्नोति, तत्राद्यसमयचतुष्के वक्रचतुष्कं स्यात् तत्रानाहारक इति, इदं च सूत्रे न दर्शितं, प्रायेणेत्थमनुत्पत्तेरिति, 'एवं दंडओ'त्ति अमुना प्रकारेण चतुर्विंशतिदण्डको वाच्यः, तत्र जीवपदे एकेन्द्रियपदेषु च पूर्वोक्त-

भावनयैव चतुर्थे समये नियमादाहारक इति वाच्यं, शेषेषु पदेषु तृतीयसमये नियमादाहारक इति, तत्र यो नारकादिस्त्रसः त्रसे-ष्वेवोत्पद्यते तस्य नाड्या बहिस्तादागमनं गमनं च नास्तीति तृतीयसमये नियमादाहारकत्वं, तथाहि-यो मत्स्यादिर्भरतस्य पूर्वभागादैरवतपश्चिमभागस्याधो नरके उत्पद्यते स एकेन समयेन भरतस्य पूर्वभागात् पश्चिमभागं याति, द्वितीयेन तु ऐरवतपश्चिमभागं, ततस्तृतीये नरक इति, अत्र चाद्ययोरनाहारकस्तृतीये त्वाहारकः, एतदेव दर्शयति-'जीवा य एगिंदिया य चउत्थे समये सेसा तइए समये'त्ति, 'कं समयं सव्वप्पाहारए'त्ति कस्मिन् समये सर्वाल्पः-सर्वस्तोक आहारो यस्य स सर्वाल्पाहारः स एव सर्वाल्पाहारकः स्यात्, 'चरमसमयभवत्थे'त्ति चरमसमये भवस्य-जीवितस्य तिष्ठति यः स चरमभवस्थः, आयुश्चरमसमये इत्यर्थः, इदानीं प्रदेशानां संहृतत्वेनाल्पेषु शरीरावयवेषु स्थितत्वात् सर्वाल्पाहारतेति। 'सुपइट्ठग'त्ति (सू. २६०) सुप्रतिष्ठकं-शरावत्रिकं तत्रेहोपरिस्थापितकलशादिकं ग्राह्यं, तद्वत् संस्थितो लोकः, 'जाव'त्ति यावत्करणात् 'मज्झे संखित्ते उप्पिं विसाले अहे पलियंकसंठाणसंठिए, मज्झे वरवइरविग्गहिए'त्ति दृश्यं, व्याख्या प्राग्वत्, 'सामाइयकडस्स'त्ति(सू.२६१) कृतसामायिकस्य श्रमणोपाश्रये-साधुवसतावासीनस्य-तिष्ठतः साम्परायिकी क्रिया स्यात्, विशेषणद्वययोगे पुनरैर्यापथिकी युक्ता, निरुद्धकषायत्वादित्याशङ्का अतोऽयं प्रश्नः, उत्तरन्तु-'आया अहिगरणी वट्टइ' आत्मा जीवः, अधिकरणानि-हलशकटादीनि कषायाश्रयभूतानि यस्य सन्ति सोऽधिकरणी, यतश्च 'आयाहिगरणवत्तियं'ति आत्मनोऽधिकरणानि आत्माधिकरणानि, तान्येव प्रत्ययः-कारणं यत्र क्रियाकरणे तदात्माधिकरणप्रत्ययं साम्परायिकी क्रिया इति ॥ 'नो खलु'त्ति(सू. २६२)न खल्वसौ तस्य त्रसप्राणस्य अतिपाताय-वधाय आवर्त्तते इति न सङ्कल्पवधोऽसौ, सङ्कल्पवधादेव निवृत्तोऽसाविति नासावतिचरति व्रतं।

'किं चयइ'त्ति (सू. २६३) किं ददातीत्यर्थः 'जीवियं वम(चय)इ'त्ति जीवितमिव ददात्यन्नं 'दुच्चयं'ति दुस्त्यजं दानं ददाति, त्यागस्य दुष्करत्वाद्, आह-'दुक्करं'ति दुष्करं करोति, अथवा किं त्यजति, जीवितमिव जीवितं-कर्मणो दीर्घां स्थितिं,'दुच्चयं'ति दुष्टं चयं-कर्मद्रव्यसञ्चयं,'दुक्करं'ति दुष्करमपूर्वकरणतो ग्रन्थिभेदं 'दुल्लहं'ति दुर्लभम्-अनिवृत्तिकरणं लभते, 'बोहिं'ति बोधिं-सम्यग्दर्शनं बुध्यते ,दानविशेषस्य बोधिकारणत्वं,यदाह-'अणुकम्पऽकामनिज्जरबालतवे दाणविणयविब्भंगे। संजोगविप्पओगे वसणूसवइड्ढिसक्कारे ॥१॥ केई तेणेव भवेण निव्वुया सव्वकम्मउम्मुका। केई तइयभवेणं, सिज्झिस्संति जिणसगासे ॥२॥" 'गइ'त्ति गतिः प्रज्ञायते-अभ्युपगम्यते 'निस्संगयाए'त्ति निःसङ्गतया कर्ममलापगमेन 'निरंग'त्ति नीरागतया मोहापगमेन 'गइपरिणामेणं'ति गतिस्वभावतया अलाबुद्रव्यस्येव 'बंधण'त्ति बन्धनच्छेदनेन एरण्डफलस्येव 'नीरंधणयाए' कर्मेन्धनविमोचनेन धूमस्येव, 'पुव्वप्पओगेण'त्ति सकर्मतायां गतिपरिणामवत्त्वेन बाणस्येवेति, 'निरुवहतं' वाताद्यनुपहतं दर्भैस्समूलैः कुशैर्निर्मूलैर्दर्भैरिति, 'भूइं भूइं'ति भूयो भूयः 'अथाहं'ति इह मकारौ प्राकृतप्रभवौ अतः अस्ताघे अतः अतारे, अतः अपौरुषेये-अपुरुषप्रमाणे 'कलसिंबलि'त्ति कलायाख्यधान्यफलिका, सिंबलि-वृक्षविशेषः, 'एगतमन्तं गच्छइ'त्ति एक इत्येवमन्तो-निश्चयो यत्रासौ एकान्त एक इत्यर्थः अतस्तं अन्तं-भूभागं गच्छति, 'वीससाए'त्ति विश्रसया-स्वभावेन निर्व्याघातेन कटाद्याच्छादनाभावात् ॥ 'दुक्खी भंते'त्ति (सू. २६५) दुःखहेतुत्वाद्दुःखं-कर्म तद्वान् जीवो दुःखी भदन्त ! दुःखेन कर्मणा स्पृष्टो-बद्धः 'नो अदुक्खी'त्ति नो-नैव अदुःखी-अकर्मा दुःखेन स्पृष्टः, सिद्धस्यापि तत्प्रसङ्गात्, एवं पञ्च दण्डका ज्ञेयाः, दुःखी दुःखेन स्पृष्टः १ 'दुक्खी दुक्खं परियायइ'त्ति दुःखी-कर्मवान् दुःखं-कर्म पर्याददाति-सामस्त्येनोपादत्ते, निधत्तादिकं करोतीत्यर्थः २ उदी-

रेइ ३ वेएइ ४ निज्जरेइ ५' उदीरणावेदननिर्जरणानि प्राग् व्याख्यातानि, 'अणाउत्तं'ति (सू. २६६) अनायुक्तं–अनुपयोगं अयतनयेत्यर्थः, 'वोच्छिण्ण'त्ति अनुदिताः स्युरिति। 'सइंगाल'त्ति (सू. २६७) चारित्रेंधनमङ्गारमिव यः कुर्यात्, भोजनविषयरागाग्निः सोऽङ्गार एवोच्यते, तेन सह यद्विद्यते पानकादि तत् साङ्गारं तस्य, 'सधूमस्स'त्ति चारित्रेंधनधूमहेतुत्वात्, धूमो–द्वेषः, तेन सह यद् भक्तादि तत् सधूमं, 'मुच्छिए'त्ति मोहवान् दोषानभिज्ञानात् 'गिद्धे'त्ति तद्विशेषाकाङ्क्षावान् 'गढिए'त्ति तद्गतस्नेहतन्तुसन्दर्भितः 'अज्झोवव'त्ति अध्युपपन्नः–तदेकाग्रतां गत आहारयति। 'महया अप्पत्तियं'ति महदप्रीतिकं 'कोहकिलामं'ति क्रोधात् क्लमः–शरीरायासः क्रोधक्लमस्तं क्रोधक्लमं 'गुणुप्पायणाहेउं'ति गुणोत्पादनहेतुकं 'अण्णदव्वेणं'ति रसविशेषोत्पादनाय, संयोज्येत्यर्थः, 'वीइं'ति वीतो—गतः अङ्गारो यस्मात्तद्वीताङ्गारं। 'खित्ताइक्कं'ति (सू. २६८) क्षेत्रं–सूर्यतापक्षेत्रं, दिनमित्यर्थः, 'अणुग्ग'त्ति अनुद्गते सूर्ये अशनादि लात्वा उद्गते रवौ भुङ्क्ते, तदतिक्रान्तं यत्तत् क्षेत्रातिक्रान्तं तस्य 'कालाइक्कं'ति कालं–दिनप्रहरत्रयलक्षणं,शेषं तथैव,'मग्गाइक्कं'ति अर्द्धयोजनातिक्रान्तस्य 'पमाणाइक्कं'ति द्वात्रिंशत्कवललक्षणं प्रमाणं तदतिक्रान्तस्य, 'उवायणावित्त'त्ति उपादापय्य, प्रापय्येत्यर्थः, 'अद्धजोयणमेराए वीइक्कमावइत्त'त्ति अर्द्धयोजनमर्यादायाः परतो व्यतिक्रमय्य, नीत्वेत्यर्थः,'कुकुडिअंडग'त्ति कुकुट्यण्डकस्य प्रमाणं येषां अथवा कुटीव–कुटीरकमिव जीवस्याश्रयत्वात् कुटी–शरीरं कुत्सिता अशुचिप्रायत्वात् कुटी कुक्कुटी तस्या अण्डकमिवाण्डकं उदरपूरकत्वादाहारः कुकुट्यण्डकं तस्य प्रमाणतो मात्रा–द्वात्रिंशत्तमांशरूपा येषां ते कुकुट्यण्डकप्रमाणमात्राः अतस्तेषां, अयं अभिप्रायः–यावान् यस्य नरस्याहारस्तस्याहारस्य द्वात्रिंशत्तमो भागस्तत्पुरुषापेक्षया कवलः,इदमेव कवलमानमाश्रित्य प्रसिद्धकवलचतुःषष्ट्यादिमानाहारस्यापि पुरुषस्य द्वात्रिंशतां

कवलैः प्रमाणप्राप्ततोपपन्ना स्यात्, न हि स्वभोजनस्यार्द्धं भुक्तवतः प्रमाणप्राप्तत्वमुपपद्यते, 'अवड्ढोमोयरिय'त्ति अवमस्य–ऊनस्योदरस्य करणमवमोदरिका, अपकृष्टं किञ्चिदूनमर्द्धं यस्यां सा अपार्द्धा, द्वात्रिंशत्कवलापेक्षया द्वादशानामपार्द्धरूपत्वात्, अपार्द्धा चासाववमोदरिका चेति समासः, एवं धर्मधर्मिणोरभेदादपार्द्धावमोदरिकः साधुः स्यात्, एवं ज्ञेयं, 'दुभागपत्ते'त्ति द्विभागः–अर्द्धं तत्प्राप्तो द्विभागप्राप्तः आहारः स्यात् इति गम्यं, 'ओमोयरिय'त्ति अवमोदरिकः साधुरिति ज्ञेयं 'पगाम'त्ति प्रकामं, अत्यर्थं रसभोगीति। 'सत्थाइय'त्ति (सू. २६९) शस्त्राद्–अग्नेरतीतं–उत्तीर्णं शस्त्रातीतं पृथुकादि 'सत्थपरि'त्ति वर्णाद्यन्यथाकरणेनाचित्तीकृतस्य 'एसिय'त्ति एषणीयस्य गवेषणा विशुद्धस्य 'वेसिय'त्ति व्येषितस्य ग्रहणैषणाग्रासैषणाविशोधितस्य, अथवा वेषो–मुनिरूपो वेषः स हेतुर्लाभे यस्य तद्वैषिकं, 'सामुदाणि'त्ति भिक्षारूपस्य, 'निक्खित्त'त्ति त्यक्तशस्त्रमुशलः, 'ववगय'त्ति व्यपगतपुष्पमालाचन्दनानुलेपनः, 'ववगयचुयचत्तदेहं'ति व्यपगताः—स्वाश्रयपृथग्भूताः कृम्यादयः च्युता–मृताः स्वतः परतो वा पृथ्व्यादयः, 'चइय'त्ति त्याजिता भोज्यद्रव्याद्दायकेन 'चत्त'त्ति स्वयमेव दायकेन भक्ष्यद्रव्यात् त्यक्ता देहा–अभेदविवक्षया देहिनो यस्मात् स तमाहारं जीवैर्विप्पजढं रहितमिति, अकयं अकृतं साध्वर्थं, अकारितं दायकेनेति, विशेषणद्वयेनानाधाकर्मिक उपात्तः, असङ्कल्पितं साध्वर्थं, अणाहूयं न विद्यते आह्वानं–आमत्रणं नित्यं मद्गृहे पोषमात्रमन्नं ग्राह्यमिति, 'अकीय'न्ति न क्रीतकृतं, क्रयेण–मूल्येन साध्वर्थं न कृतं, अनुद्दिष्टं 'नवकोडि'त्ति इह कोटयो–विभागाः, ताश्चेमाः–न जीवं हन्ति न घातयति घ्नन्तं नानुमन्यते ३, एवं न पचति ३ न क्रीणाति ३ एवंरूप ९ कोटिपरिशुद्धं, दशदोषविप्रमुक्तं, दोषाः शङ्कितम्रक्षितादयः, 'संकियमक्खिय निक्खित्ते'त्यादि, 'उग्गम'त्ति उद्गमश्च आधाकर्मादिदोषाः १६ उत्पादनादोषाः १६ 'धाई दूई निमित्ते'इत्यादि,

एतद्विषया एषणा पिण्डविशुद्धिस्तया शुद्धं 'असुरसुरं अचवचव'मिति द्वावेतावनुकरणशब्दौ, अद्रुतं अद्रुतं अविलम्बितं—नाति-मन्दं 'अपरिसाडि'त्ति अनवयवोज्झनं 'अक्खोवंजण'त्ति अक्षोपाञ्जनं—शकटधूर्म्रक्षणं व्रणानुलेपनं च—व्रणौषधं च अक्षोपाञ्ज-नव्रणानुलेपने ते इव विवक्षितार्थसिद्धेः रसादिनिरभिष्वंगतया अक्षोपाञ्जनव्रणानुलेपनभूतोऽस्तं, 'संयमजायं'ति संयमयात्रा—संय-मानुपालनं सैव मात्रा—आलम्बनसमूहांशः संयमयात्रामात्रा तदर्थं वृत्तिः—प्रवृत्तिर्यत्राहारे स संयमयात्रामात्रावृत्तिकस्तं, संयमभार-वहनार्थतायै इति ॥ सप्तमशते प्रथम उद्देशकः ॥

'सुपच'त्ति सर्वेभ्यः सत्त्वादिभ्यश्चतुर्भ्यः प्रत्याख्यातं—प्रत्याख्यानं कृतं मयेति वदतस्तस्य नरस्य 'सिय दुप्पचक्खायं' 'पच्चक्खायं'ति (सू. २७०) सर्वेभ्यः सत्त्वादिभ्यश्चतुर्भ्यः प्रत्याख्यातं—प्रत्याख्यानं कृतं मयेति वदतस्तस्य नरस्य 'सिय सुप्पचक्खायं' सिय दुप्पचक्खायं सुप्रत्याख्यातमिति सुष्ठु प्रत्याख्यानं कृतं स्यात्, नो—नैव दुष्प्रत्याख्यातमिति, 'सिय सुप्पचक्खायं' सिय दुप्पचक्खायं इति प्रतिपाद्य यत् प्रथमं दुष्प्रत्याख्यातत्ववर्णनं कृतं तद्यथासङ्ख्यन्यायत्यागेन यथासन्नतान्यायमङ्गीकृत्येत्ति द्रष्टव्यं 'णो एवं अभिसम'त्ति नो—नैव 'एवं'ति वक्ष्यमाणप्रकारेण अभिसमन्वागतं—अवगतं स्यात्, 'नो सुप्पचक्खायं'ति ज्ञानाभावेन यथा-वदपरिपालनात् सुप्रत्याख्यातत्वाभावः, 'तिविहं तिविहेणं'ति त्रिविधं—कृतकारितानुमतिभेदभिन्नं योगमाश्रित्य त्रिविधेन—मनो-वाक्कायलक्षणेन करणेन, 'असंजय'त्ति संयतो—वधादिपरिहारप्रयतः विरतो—वधादेर्निवृत्तः प्रतिहतानि—अतीतकालसम्बन्धीनि निन्दातः प्रत्याख्यातानि च—अनागतप्रत्याख्यानेन पापकर्माणि येन स तथा, संयतादिपदानां कर्मधारयः, ततस्तन्निषेधादसंयत-विरतप्रतिहतप्रत्याख्यातपापकर्मा, 'सकिरिए'त्ति कायिक्यादिक्रियः, 'असंवुडि'त्ति असंवृताश्रवद्वारः, 'एगंतदंडे'त्ति एका-न्तेन—सर्वथा परान् दण्डयति यस्स एकान्तदण्डः, एकान्तबालः, सर्वथा बालिशः, अज्ञ इत्यर्थः, 'मूलगुणे'त्ति(सू. २७१) प्राणा- ॥१०३॥

तिपातादिविरमणादयः ५, उत्तरगुणाः–पिण्डविशुद्ध्यादयः, 'देसमूलगुण'त्ति स्थूलप्राणातिपातादयः, सर्वमूलगुणप्रत्याख्यानं साधूनां देशमूलगुणप्रत्याख्यानं श्राद्धानां, 'अणागय'गाह (*५४) त्ति, पर्युषणादावाचार्यादिवैयावृत्त्यकरणमनागतमित्यर्थः, आह च–'होही पज्जोसवणे'त्यादि, एवमतिक्रान्तं स्यात्,उक्तं च–"पज्जोसवणाइ तवो"त्ति ॥१॥"सो दाइ तव्वोकम्म०॥२॥"-मित्यादि, 'कोडी'त्ति कोटीसहितं मीलितप्रत्याख्यानद्वयकोटि, चतुर्थादि कृत्वाऽनन्तरमेव चतुर्थादिकरणमित्यर्थः,आह च–पट्ठवणओ य दिवसो०'त्ति ॥१॥ 'नियंटियं'ति नियन्त्रितं–नितरां यन्त्रितं–बद्धं प्रतिज्ञातदिनादौ ग्लानत्वाद्यन्तरायभावेऽपि नियमात् कर्त्तव्यमिति हृदयं, यदाह–'मासे मासे य तवो०'त्ति ॥१॥ 'एयं पच्चक्खाणं०'ति ॥२॥" 'साकार'त्ति आक्रियन्ते इत्याकाराः–प्रत्याख्यानापवादहेतवो महत्तराकारादयः, सहाकारैर्वर्त्तत इति साकारं, अविद्यमानाकारं अनाकारं,'परिमाणकडं'ति दत्त्यादिभिः कृतपरिमाणं परिमाणकृतं, आह च–'दत्तीहि व कवलेहि व०'त्ति ॥१॥ 'णिरवसेसं'ति निरवशेषं समग्राशनादिविषयं, आह च–'सव्वं असणं सव्वं च पाणगं०' ति॥१॥ 'संकेयं चेव'त्ति सङ्केतः–चिह्नं, सङ्केतयुक्तत्वात् सङ्केतमङ्गुष्ठादि, यदाह–'अंगुट्ठमुट्ठि गंठी०'ति ॥१॥" अद्धा–कालस्तस्याः प्रत्याख्यानं पौरुष्यादिकालस्य नियमनं,आह–'अद्धापच्चक्खाणं'ति ॥१॥" उक्तमिति दशविधप्रत्याख्यानं 'अपच्छिम'त्ति अपश्चिमा मरणं प्रतीतं, यद्यपि प्रतिक्षणमावीचीमरणमस्ति तथापि तन्न गृह्यते, किं तर्हि ?, विवक्षितं सर्वायुष्कक्षयलक्षणमिति, मरणमेवान्तो मरणान्तस्तत्र भवा मारणान्तिकी, संलिख्यते–कृशीक्रियते अनया शरीरकषायादि इति संलेखना–तपोविशेषलक्षणा, तस्या जोषणं–सेवनं तस्याराधना–अखण्डकालकरणं, तद्भावोऽपश्चिममारणान्तिकसंलेखनाजोषणाराधनता, इह च सप्त दिग्व्रतादयो देशोत्तरगुणाः, संलेखना तु भजनया, तथाहि–सा देशोत्तरगुणवतो देशोत्तरगुणः, आव-

श्यके तथाभिधानात्, इतरस्य तु सर्वोत्तरगुणः, साकारानाकारादिप्रत्याख्यानरूपत्वात्, इति ॥ 'पंचिंदियतिरिक्खजोणिय'त्ति (सू. २७२) मनुष्या नार्यश्च मूलदेशगुणप्रत्याख्यानिनः अप्रत्याख्यानिनश्च, नवरं पञ्चेन्द्रियतिर्यञ्चो देशत एव मूलगुणप्रत्याख्यानिनः, सर्वविरतेस्तेषामभावात्, इह चोद्यं गाथया—"तिरियाणं चारित्तं निवारियं अहव तो पुणो तेसिं। सुव्वइ बहुयाणं चिय महव्वयारोवणं समए ॥ १ ॥" परिहारोऽपि गाथयैव "ण महव्वयसब्भावेऽवि चरणपरिणामसंभवो तेसिं। ण बहुगुणाणंपि जहा केवलसंभूइपरिणामो ॥२॥" अथ मूलगुणप्रत्याख्यानादिव्रतामल्पत्वादि चिन्तयति—'सव्वत्थोवा जीवा मूलगुण'त्ति देशतः सर्वतो वा ये मूलगुणवन्तस्ते स्तोकाः, देशसर्वाभ्यामुत्तरगुणव्रतामसङ्ख्येयगुणत्वात्, इह च सर्वविरतेषु ये उत्तरगुणवन्तस्तेऽवश्यं मूलगुणवन्तः, देशमूलगुणवन्तस्तु स्यादुत्तरगुणवन्तः स्यात्तद्विकलाः, य एव च तद्विकलास्त एवेह मूलगुणवन्तो ग्राह्याः, ते चेतरेभ्यः स्तोका एव, बहुतरयतीनां दशविधप्रत्याख्यानयुक्तत्वात्, तेऽपि च मूलगुणेभ्यः सङ्ख्यातगुणा एव नासङ्ख्यातगुणाः, सर्वयतीनामपि सङ्ख्यातत्वात्, देशविरतेषु पुनर्मूलगुणवद्भ्यो भिन्ना अपि उत्तरगुणिनो लभ्यन्ते, ते च मधुमांसादिविचित्राभिग्रहवशाद्बहुतराः स्युरिति च कृत्वा देशविरतोत्तरगुणव्रतोऽधिकृत्योत्तरगुणवतां मूलगुणवद्भ्योऽसङ्ख्यातगुणत्वं स्याद् अत आह—'उत्तरगुणपच्चक्खाणा असंखिज्जगुण'त्ति, 'अपच्चक्खाणी अणंतगुण'त्ति मनुष्यपञ्चेन्द्रियतिर्यञ्च एव प्रत्याख्यानिनो अन्ये त्वप्रत्याख्यानिन एव, वनस्पतिप्रभृतिकत्वात्तेषामनन्तगुणत्वमिति, मनुष्यसूत्रे 'अपच्चक्खाणी असंखिज्जगुण'त्ति यदुक्तं तत् सम्मूर्छिमग्रहणेनावसेयं, इतरेषां सङ्ख्यातत्वात्, 'एवं अप्पाबहुगाणि तिण्णिवि जहा पढमिल्लए दंडए'त्ति तत्रैकं जीवानामिदमेव, द्वितीयं पञ्चेन्द्रियतिरश्चां, तृतीयं तु मनुष्याणां, एतानि च यथा निर्विशेषेण मूलगुणादिप्रतिबद्धे दण्डके उक्तानि

एवमिह त्रीण्यपि वाच्यानि, विशेषमाह–'नवरं' इत्यादि, '**पंचिंदिया तिरिक्खजोणिया मणुस्सा य एवं चेव**'त्ति यथा जीवाः सर्वोत्तरगुणप्रत्याख्यान्यादय उक्ताः एवं पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च वाच्याः, इह च पञ्चेन्द्रियतिर्यञ्चोऽपि सर्वोत्तरगुणप्रत्याख्यानिनः स्युरित्येवमवसेयं, देशविरतानां लेशतः सर्वोत्तरगुणप्रत्याख्यानस्याभिमतत्वादिति। मूलगुणप्रत्याख्यानिप्रभृतयश्च संयतादयः स्युरिति संयतादिसूत्रं 'तिन्निवि'त्ति जीवास्त्रिविधा अपीत्यर्थः, 'एवं जहेवे'त्यादि, एवं–अनेनैवाभिलापेन यथैव प्रज्ञापनायां तथैव सूत्रमिदमध्येयं, तच्चैवम्–नेरइया णं भंते! किं संजया १ असंजया २ संजयासंजया ३?, गो०! नो संजया असंजया नो संजयासंजया'इत्यादि, 'अप्पे'त्यादि, अल्पबहुत्वं संयतानां तथैव यथा प्रज्ञापनोक्तं, 'तिण्णिवि'त्ति जीवानां पञ्चेन्द्रियतिरश्चां मनुष्याणां च, तत्र सर्वस्तोकाः संयता जीवाः, संयतासंयता असङ्ख्येयगुणाः, असंयता अनन्तगुणाः, पञ्चेन्द्रियतिर्यञ्चस्तु सर्वस्तोकाः संयतासंयताः, असंयता असङ्ख्येयगुणाः, मनुष्यास्तु सर्वस्तोकाः संयताः संयतासंयताः सङ्ख्येयगुणाः, असंयता असङ्ख्येयगुणा इति। संयतादयस्तु प्रत्याख्यानादिमत्त्वे सति स्युरिति प्रत्याख्यानादिसूत्रं, ननु षष्ठशते चतुर्थोद्देशके प्रत्याख्यानादयः प्ररूपिता इति किं पुनस्तत्प्ररूपणेन?, सत्यमेतत्, किन्त्वल्पबहुत्वचिन्तारहितास्तत्र प्ररूपिताः, इह तु तद्युक्ताः सम्बन्धान्तरद्वारायाताश्चेति ॥ जीवाधिकारात्तच्छाश्वतत्वसूत्राणि–'दव्वट्ठयाए'त्ति जीवद्रव्यत्वेनेत्यर्थः, 'भावट्ठयाए'त्ति नारकादिपर्यायत्वेनेति ॥ **सप्तमशते द्वितीयोद्देशकविवरणम्** ॥

'पाउसे'त्ति (सू. २७४) प्रावृडादौ बहुत्वाज्जलस्नेहस्य महाहारतोक्ता, प्रावृट् च श्रावणादि वर्षारात्रोऽश्वयुजादिः 'सरदे'त्ति शरद् मार्गशीर्षादिः, तत्र चाल्पाहाराः स्युरिति, ग्रीष्मे सर्वाल्पाहारतोक्तेः, अत एव शेषे स्वल्पाहारता क्रमेण ज्ञेया, 'हरियगरे-

रिज्जमाण'त्ति हरितकाश्च–नीलकाः रेरिज्यमाना–देदीप्यमानाः 'सिरीए' श्रिया वनलक्ष्म्या 'उसिणजोणिय'त्ति उष्णमेव योनिर्येषां ते उष्णयोनिकाः॥'मूला मूलजीव'त्ति (सू. २७५) मूलानि मूलजीवैः स्पृष्टानि–व्याप्तानि,'जाव' यावत्करणात् 'खंधा खंधजीवफुडा, एवं तया साला पवाला पुप्फा फला' इत्यादि दृश्यं, 'जइ णं'ति यदि भदन्त ! मूलानि मूलादिजीवैः स्पृष्टानि तदा 'कम्हा'त्ति कस्मात्–केन हेतुना वनस्पतय आहारयन्ति ?, आहारस्य भूमिगतत्वात्, अत्रोत्तरं–मूलानि मूलजीवस्पृष्टानि, केवलं पृथ्वीप्रतिबद्धानि,'तम्हा'त्ति तस्मात् प्रतिबन्धात् पृथ्वीरसं मूलजीवा आहारयन्ति, कन्दाः कन्दजीवस्पृष्टाः केवलं मूलजीवप्रतिबद्धाः, तस्मात् मूलजीवोपात्तं पृथ्वीरसमाहारयन्तीति, एवं स्कन्धादिष्वपि वाच्यं ॥ 'आलुए'त्ति (सू. २७६) एतेऽनन्तकायभेदा लोकरूढिगम्याः, 'तहप्पगार'त्ति तथाप्रकारा–आलुकादिसदृशाः, 'विविहसत्त'त्ति विविधा–बहुप्रकारा वर्णादिभेदात् सत्त्वा येषां ते विविधसत्त्वास्ते तथा, अथवा विविधा–विचित्रकर्मतया अनेकविधाः सत्त्वा येषु ते तथा ॥ 'सिय भंते ! कण्हलेसे नेरइए' इत्यादि (सू. २७७)'ठिइं पडुच्च'त्ति, अत्रेयं भावना–सप्तमपृथिवीनारकः कृष्णलेश्यस्तस्य स्वस्थितौ बहुक्षपितायां तत्क्षेपे वर्त्तमाने पञ्चमपृथिव्यां सप्तदशसागरस्थितिर्नारको नीललेश्यस्समुत्पन्नस्तमपेक्ष्य स कृष्णलेश्योऽल्पकर्मा व्यपदिश्यते, एवमुत्तरसूत्राण्यपि भावनीयानि, 'जोइसियस्स'त्ति एकस्या एव तेजोलेश्यायास्तस्य सद्भावात् संयोगो नास्तीति। सलेश्यजीवाश्च वेदनावन्तः स्युरिति वेदनासूत्राणि 'कम्म वेयणा'त्ति (सू. २७८) उदयप्राप्तं कर्म वेदना,धर्मधर्मिणोरभेदविवक्षणात्, 'नोकम्मं णिज्जरइ'ति 'नोकम्मं णिज्जरिंसु'त्ति वेदितरसं कर्म नोकर्म्म तन्निर्जरितवन्तः, कर्मभूतस्य कर्माभावो निर्जरा, तस्या एवंस्वरूपत्वादिति 'अव्वोच्छित्तिनयट्ठाए'त्ति (सू. २७९) अव्यवच्छित्तिप्रधानो नयोऽव्यवच्छित्तिनयस्तस्यार्थोऽकर्मणो निर्जरणासम्भवादिति,

व्यवच्छित्तिनयार्थस्तद्भावस्तत्ता तया अव्यवच्छित्तिनयार्थतया, द्रव्यमाश्रित्य शाश्वता इति, 'वोच्छित्तिनय'त्ति व्यवच्छित्तिप्रधानो यो नयस्तस्यार्थो यः पर्यायलक्षणस्तस्य यो भावः सा व्यवच्छित्तिनयार्थता तया पर्यायानाश्रित्याशाश्वता नारका इति॥ सप्तमशते तृतीय उद्देशकः॥

'एते जहा जीवाभिगमे'त्ति ( सू. २८१ ) एवं च तत्सूत्रं–पुढविकाइया जाव तसकाइया, से किं तं पुढविकाइया ?, पुढविकाइया दुविहा पण्णत्ता, तं०–सुहुमपुढविकाइया बादरपुढविका०'इत्यादि, अंतः पुनरस्य एवं 'एगे जीवे एगेणं समएणं एगं किरियं पकरेइ, तंजहा–सम्मत्तकिरियं मिच्छत्तकिरियं वा' अत एवोक्तम्–'जाव कम्मत्ते'त्यादि, वाचनान्तरे त्विदं दृश्यते–जोवा छव्विह पुढवी जीवाणं ठिइ भवठिई काए। निल्लेवण अणगारो किरिया सम्मत्तमिच्छत्ते ॥५५*॥त्यादि, तत्र च षड्विधा जीवा दर्शिता एव, 'पुढवि'त्ति षड्विधा बादरपृथ्वी श्लक्ष्णा १ शुद्धा २ वालुका ३ मनःशिला ४ शर्करा ५ खरपृथ्वी ६ भेदात्, एषामेव पृथ्वीभेदजीवानां स्थितिरन्तर्मुहूर्त्तिका जघन्या यथायोगं द्वाविंशतिसहस्रान्ता वाच्या, तथा नारकादिषु भवस्थितिर्वाच्या, सा च सामान्यतोऽर्मुहूर्त्तादिका त्रयस्त्रिंशत्सागरोपमान्ता, तथा कायस्थितिर्वाच्या, सा च जीवस्य जीवकाये सर्वाद्धमित्यादिका, तथा निर्लेपना वाच्या, सा चैवम्–प्रत्युत्पन्नपृथिवीकायिकाः समयापहारेण जघन्यपदेऽसङ्ख्याताभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते, एवमुत्कृष्टपदेऽपि, किन्तु जघन्यपदादुत्कृष्टपदमसङ्ख्येयगुणमित्यादि॥ 'अणगार'त्ति अनगारवक्तव्यता वाच्या, सा चेयम्–अविशुद्धलेश्योऽनगारः असमवहतेनात्मना अविशुद्धलेश्यं देवं देवीमनगारं च जानाति, नायमर्थः'इत्यादि'किरिया सम्मत्तमिच्छत्ते'ति एवं दृश्यम्–अन्ययूथिका एवमाख्यान्ति–एको जीव एकेन समयेन द्वे क्रिये कुर्यात्–सम्यक्त्वक्रियां च मिथ्यात्वक्रियां चेति, मिथ्या

नैतद्विरोधादिति ॥ सप्तमशते चतुर्थ उद्देशकः ॥

'जोणिसंगहे'त्ति योनिः-उत्पत्तिहेतुर्जीवस्य तया सङ्ग्रहो योनिसङ्ग्रहः, 'अंडय'त्ति अंडजा-हंसादयः, 'पोय'त्ति पोतजाः-पोतवद्-वस्त्रवज्जरायुवर्जिततया शुद्धदेहा योनिविशेषाज्जाताः पोता इव वा-वस्त्रसम्मार्जिता इव जाताः पोतजाः-वल्गुल्यादयः,'संमुच्छिम'त्ति समूर्च्छनयोनिविशेषधर्मेण निर्वृत्ताः सम्मूर्च्छिमाः-वहिकादयः,एवं 'जहा जीवाभिगमे'त्ति,तत्सूत्रं चैवम्-अंडया तिविहा पण्णत्ता, तंजहा—इत्थी पुरिसा नपुंसगा, एवं पोययावि, तत्थ णं जे ते संमुच्छिमा ते सव्वे नपुंसगा'इत्यादि, अन्तसूत्रं चेदम्-'अत्थि विमाणाइं विजयाइं वेजयाइं जयंताइ अपराजियाइं ?, अत्थि, ते णं भंते ! विमाणा केमहालया पण्णत्ता ?, गोयमा ! जावइयं च णं सूरिए उदेइ जावइयं च णं सूरिए अत्थमेइ, यावताऽन्तरेणेत्यर्थः, एयारूवाइं नव ओवासंतराइं अत्थेगइयस्स देवस्स एगे विक्कमे सिया, से णं देवे ताए उक्किट्ठाए तुरियाए जाव दिव्वाए देवगईए वीईवयमाणे २ एगाहं वा दुयाहं वा उक्कोसेणं छम्मासे वीईवयति' शेषं तु लिखितमेवास्ति, एतदेव च पर्यन्तसूत्रतया 'जाव'त्ति यावत्करणेन दर्शितमिति ॥ सप्तमशते पञ्चम उद्देशकः॥

'जे भविए'त्ति (सू. २८२) यो जीवो भविको, नैरयिकेषु उपपत्तुकामः स्यादित्यर्थः,'एगंतदुक्खं वेयणं वेयंति'त्ति एकान्तदुःखरूपां वेदनां-वेदनीयकर्मानुभूतिं 'आहच्च सायं'ति कदाचित्सुखरूपां, नरकपालादीनामसंयोगकाले, 'एगंतसायं'ति भवप्रत्ययात् 'आहच्चअसायं'ति प्रहाराद्युपनिपातात्, 'कक्कस'त्ति (सू. २८४) कर्कशैः- रौद्रदुःखैर्वेद्यन्ते यानि तानि कर्कशवेदनीयानि स्कन्दकाचार्यसाधूनामिव, 'अकक्कस'त्ति अकर्कशेन—सुखेन वेद्यन्ते यानि तानि अकर्कशवेदनीयानि भरतादीनामिव, 'पाणाइवायवेरमणेणं'ति(सू. २८५)संयमेनेत्यर्थः, नारकादीनां तु संयमाभावात्तदभावोऽवसेयः, 'अदुक्खणयाए'त्ति

न दुःखस्य करणं अदुःखनं तद्भावस्तत्ता तया अदुःखनतया, अदुःखकरणेनेत्यर्थः, 'असोयण'त्ति अशोचनतया दैन्यानुत्पादनेनेत्यर्थः,'अजूरण'त्ति शरीरापचयकारिशोकानुत्पादनेनेत्यर्थः,'अतिप्पण'त्ति अश्रुलालादिक्षरणकारणशोकानुत्पादनेन,'अपिट्टण'त्ति यष्ट्यादिताडनपरिहारेण 'अपरिताव'त्ति शरीरपरितापानुत्पादनेन। दुःखप्रस्तावादिदमाह–'उत्तमकट्ठपत्ताए'त्ति उत्तमकाष्ठाप्राप्तायां, उत्तमावस्थां गतायामित्यर्थः, 'आगारभावपडोयारे'त्ति आकारभावस्य–आकृतिलक्षणपर्यायस्य प्रत्यवतारः–अवतरणं आकारभावप्रत्यवतारः 'हाहाभूए'त्ति (सू. २८५) हाहेतिशब्दस्य दुःखार्त्तेन करणं हाहोच्यते तत् गतः–प्राप्तो यः कालः स हाहाभूतः 'भंभाभूए'त्ति भंभेतिशब्दस्य दुःखार्त्तगवादिभिः करणं भम्भोच्यते, शेषं तथैव, 'कोलाहल'त्ति कोलाहल इहार्त्तशकुनिवृन्दध्वनिः, शेषं तथैव,'समाणुभावे'त्ति समा-दुष्षमदुष्षमाकालस्तस्यानुभावेन–सामर्थ्येन 'खरफरुस'त्ति अतिकठोरा धूल्या च मलिना ये वातास्ते 'दुव्विसहा' दुस्सहाः 'वाउल'त्ति व्याकुलाः 'संवट्टय'त्ति तृणकाष्ठादिसंवर्त्तका 'वाहिंति'त्ति वास्यन्ति, 'इह'त्ति अस्मिन् काले,'अभिक्खं' अभीक्ष्णं 'धूमाहिंति य दिस'त्ति धूमायिष्यन्ते च–धूममुद्वमिष्यन्ति च पुनर्दिशः, ताः किंभूताः ?–'समंतारउ'त्ति समन्तात् रजःस्वला–रजोयुक्ताः अत एव 'रेणु०' धूल्या मलिनाः, अन्धकारवृन्देन निरस्तदृष्टिप्रसराः 'सम०' कालरूक्षतयेत्यर्थः, 'अहियं'ति अधिकं अहितं वा–अपथ्यं चन्द्राः शीतं मोक्ष्यन्ति 'अदुत्तरं'ति अथापरं च 'अरस'त्ति अमनोज्ञरसा मेघाः 'विरस'त्ति नीरसमेघाः, 'खार'त्ति सर्जादिक्षारसदृग्मेघाः 'खत्त'त्ति करीपसदृग्मेघाः, 'अग्गि'त्ति अग्निवद्दाहकजलाः, 'विज्जु'त्ति विद्युन्निपातवन्तः 'विस०' विषसदृशाः, 'असणि'त्ति करकनिपातवन्तः, अथवा गिरिविदारणत्वाद्वज्रमेघाः, 'अपियणिज्जे'त्ति अपातव्यजला इत्यर्थः, क्वचित् 'अजावणिज्जो'त्ति अया-

पनीयोदकाः न यापनाहेतुर्नीरं येषां ते तथा 'चण्डानिल'त्ति चण्डवायुना प्रहतानां तीक्ष्णानां वेगवतीनां नीरधाराणां निपातप्रचुराः, 'वासंति' वर्षा–वृष्टिं 'वासिहिंति' वर्षिष्यन्ति, 'जेणं'ति येन वर्षेण प्रागुक्ता मेघाः पट्टणाश्रमगतं 'जणवयं'ति जनपदं–मनुष्यलोकं, चतुष्पदशब्देन महिष्यादयो गृह्यन्ते, 'गवेलग'त्ति गोशब्देन गावः एलका–उरभ्राः 'खहयर'त्ति खहचरान्–पक्षिसङ्घातान्, 'गामारण्ण'त्ति ग्रामारण्यप्रचारनिरतान् त्रसप्राणान् बहुप्रकारान् द्वीन्द्रियादीन् 'रुक्ख'त्ति वृक्षाः–चूतादयः गुच्छा–वृंताकीप्रभृतयः गुल्मा–नवमालिकादयः लता–अशोकलतादयः वल्ल्यो–वालुङ्क्यादयः तृणानि–वीरणादीनि पर्वगा–इक्षुप्रमुखाः हरितानि–दूर्वादीनि औषध्यः–शाल्यादयः प्रवालाः–पल्लवादयः शाल्यादिबीजसूचयः, ते आदौ येषां ते तानि, आदिशब्दात् कदलीपत्रादिग्रहः, 'तणवणस्स'त्ति बादरवनस्पतिप्रभृतीनित्यर्थः, 'विद्धंसेहिंति' विध्वंसयिष्यन्तीति सम्बन्धः, 'पव्वय'त्ति पर्वतननात्–उत्सवविस्तारणात् पर्वताः–क्रीडापर्वताः उज्जयन्तादयः गृणंति-शब्दायन्ते जननिवासभूतहेतुत्वेनेति गिरयो गोपालगिरिचित्रकूटप्रमुखाः 'डोंगर।' शिलोच्चयमात्ररूपाः 'उत्थल'त्ति उत्–उन्नतानि धूलिस्थलानि उत्थलानि, 'भट्ठ'त्ति भ्राष्ट्राः–पांश्वादिवर्जितभूमयः, ततस्ते आदिर्येषां ते तान्, आदिशब्दात् प्रासादशिखरादिपरिग्रहः, 'विरावेहिंति' विद्रावयिष्यन्ति 'सलिलबिलानि' भूमिनिर्झराः 'गर्त्ताः' प्रतीताः 'दुर्गाणि' खातिकाप्राकारादिदुर्गमाणि विषमभूस्थितानि 'निण्णु'त्ति निम्नोन्नतानि प्रतीतानि 'समाक'त्ति समाकरिष्यंति 'तत्तसम'त्ति तप्तेन–तापेन समा–तुल्या ज्योतिषा–वह्निना भूता–जाता या सा तथा, रेणुः–वालुका 'चलणि'त्ति चरणप्रमाणश्चलनीति कर्दम उच्यते, 'दुन्निक्क'त्ति दुःखेन नितरां क्रमणं यस्यां सा दुर्निष्क्रमाः 'अणाइज्ज'त्ति अनादेये वचनप्रत्याजाते येषां ते अनादेयवाक्प्रत्याजाताः, प्रत्याजातं तु जन्म, 'कूडकवड'त्ति कूटं–कूटनाणकं

कपटं—वञ्चनाय यद्वेषान्तरादिकरणं 'गुरुनिओग'त्ति गुरुषु—मात्रादिषु नियोगेन—अवश्यंतया यो विनयस्तेन रहिताः, 'खरफरुस'त्ति खरपरुषाः स्पर्शतोऽतीवकठोरा 'ध्यामवर्णा' धूमवर्णाः 'फुट्ट'त्ति विकीर्णकेशाः 'बहुण्हारु'त्ति बहुस्नायुभिः संपिनद्धं—सम्बद्धं दुर्दर्शनीयं रूपं येषां ते तथा, 'संकुडिय'त्ति सङ्कुचितं वलीलक्षणतरङ्गैः परिवेष्टितमङ्गं येषां ते तथा, के इवेत्याह—'जरापरिणय'त्ति जरापरिगतस्थविरनरा इव, प्रविरला दन्तविरलत्वेन परिशटिता च दन्तश्रेणिर्येषां ते तथा विकरालतुच्छदशनश्रेणिमुखाः, 'वंकवली'त्ति वंकं—वक्रं वलिभिः विकृतं—विकरालं भेषणं—भयकृन्मुखं येषां ते तथा, 'कच्छु'त्ति कच्छुः—पामा तया 'कसर'त्ति कशरैः—खसरैरभिभूता—व्याप्ता ये ते 'खरनख'त्ति खरतीक्ष्णनखानां कण्डूयनेन 'विक'त्ति विकृताकृतिव्रणा तनुर्येषां ते तथा, 'दद्दूकिटिभ'त्ति दर्द्रूकिटिभसिध्मानि क्षुद्रकुष्ठविशेषास्तैः स्फुटिताः—परुषा च्छविः—वपुस्त्वक् येषां ते तथा, 'चित्तलंग'त्ति चित्राङ्गाः, 'टोल'त्ति टोलगतयो—विषमगतयो यद्वा विषमाकृतयः, 'विसम'न्ति विषमाणि दीर्घह्रस्वादिना सन्धिरूपाणि बन्धनानि येषां ते तथा, 'उक्कुड्डय'त्ति उत्कुड्डकानि—असम्बद्धानि अस्थिकानि-कीकसानि येषां ते तथा 'विभक्ता' भोजनविशेषरहिताः दुर्बलाः—कुत्सितसंहननाः कुप्रमाणाः—प्रमाणहीनाः असंस्थिताः—कुसंस्थानाः—सनाकुशयाः कुभोजिनः खलती-स्खलन्ती विह्वला गतिर्येषां ते 'विगयचिट्ठ'त्ति विकृतचेष्टा नष्टतेजसश्च, 'सीय'त्ति शीतोष्णखरपरुषवातेन 'विज्झडिय'त्ति व्याप्तं मलिनं च पांशुरूपेण रजसा 'उग्गुंडिय'त्ति उद्गुण्डितं—उद्धूलितं अङ्गोपाङ्गं येषां ते तथा, 'उस्सण्णं'ति प्रायः 'धम्मसण्ण'त्ति धर्मश्रद्धा, 'रयणि' रत्नेः—हस्तस्य प्रमाणं चतुर्विंशत्यङ्गुलमानं तेन मात्रा—परिमाणं येषां ते तथा, 'सोलसवासाइ'ति षोडशविंशतिवर्षपरमायुषः, 'पुत्त'त्ति पुत्रनप्तृपरिवारप्रणयबहुलाः, अनेनाल्पायुष्टत्वेऽपि बह्वपत्यता तेषामुक्ता, अल्पेनापि कालेन यौवनसद्भावादिति, 'निस्साए'त्ति

निश्राय, निश्रां कृत्वेत्यर्थः,'निगोदाः' कुडुम्बानि, 'बीयं'ति वीजमिव वीजं भविष्यज्जनहेतुत्वात् 'वीयमेत्त'त्ति वीजस्येव मात्रा-परिमाणं येषां ते वीजमात्राः, स्वल्पाः स्वरूपत इत्यर्थः,'रह'त्ति रथपथः-शकटचक्रद्वयमितमार्गः,'अक्खसोय'त्ति अक्षश्रोतः-चक्रे धुरः प्रवेशरन्ध्रः तदेव प्रमाणमक्षःश्रोतःप्रमाणं तेन मात्रा—परिमाणं समवगाहतो यस्य तत्तथा 'वोज्झिहिंति' वक्ष्यतः, 'आउबहुले' वह्वप्कायमित्यर्थः,'निद्धाहिंति' निर्द्धाविष्यन्ति-निस्सरिष्यंति 'गाहिंति' ग्राहयिष्यन्ति, स्थलेषु स्थापयिष्यन्तीत्यर्थः, 'निस्सील'त्ति महाव्रताणुव्रतविकलाः निर्गुणाः-उत्तरगुणवियुक्ताः निर्मराः कुलादिमर्यादारहिताः 'खोदाहार'त्ति क्षौद्रं-मधु तद्भोजिनः, 'कुणिम'त्ति कुणपः-शवस्तद्रसोऽपि वसादिः कुणपस्तदाहारयन्तीति-कुणपाहाराः,'उववज्जिहिन्ति' उत्पत्स्यन्ते 'ते णं'ति ते अच्छा-ऋक्षाः तरच्छा-व्याघ्रविशेषाः,'परस्सरा' शरभाः,'ढंका' काकाः ढिलकाः-मधुगा मद्गवो-जलवायसाः 'सिहि'त्ति शिखिनो मयूरा इत्यर्थः ॥ सप्तमशते षष्ठ उद्देशकः ॥

'आउत्तं'ति ( सू. २८८ ) आयुक्तं यथा स्यात् तथा, आयुक्तं तु सावधानता, 'उस्सुत्तं'ति उत्सूत्रं यथा स्यात् तथा, सूत्रातिक्रमेणेत्यर्थः, 'रीयमाणे'त्ति रीयतो गच्छत इत्यर्थः ॥ 'रूवी'त्यादि ( सू. २८९ ) सूत्रवृन्दमाह, तत्र रूपं—मूर्त्तता तदस्ति येषां ते रूपिणः, तद्विपरीतास्त्वरूपिणः, 'काम'त्ति काम्यन्ते—अभिलष्यन्ते येनेति कामाः मनोज्ञाः शब्दाः संस्थानानि वर्णाश्च, अत्रोत्तरम्-रूपिणः कामाः, नो अरूपिणः, पुद्गलधर्मत्वेन तेषां मूर्त्तत्वादिति,'सचित्त'त्ति सचित्ता अपि कामा स्युः, समनस्कप्राणिरूपापेक्षया, अचित्ता अपि ते शब्दद्रव्यापेक्षया असंज्ञिजीवशरीररूपापेक्षया चेति, 'जीवा णं'ति जीवा अपि कामाः स्युः जीवशरीररूपापेक्षया, अजीवा अपि ते शब्दापेक्षया चित्रशालभञ्जिकारूपापेक्षया चेति, 'जीवाणं'ति जीवानामेव कामाः, काम-

हेतुत्वात्, नो अजीवानां कामाः, कामासम्भवादिति। 'रूवि'मित्यादि, भुज्यन्ते—उपभुज्यन्ते वपुषा इति भोगा—गन्धरसस्पर्शत्रयरूपाः रूपिणो भोगाः, नो अरूपिणः, पुद्गलधर्मत्वेन तेषां मूर्त्तत्वादिति, सचित्ता अपि भोगा गन्धादिप्रधानजीवशरीराणां केषाञ्चित् समनस्कत्वात्, अचित्ता अपि ते, गन्धादिप्रधानजीवशरीराणां केषांचिदमनस्कत्वात्, 'जीवावि भोगि'त्ति जीवशरीराणां गन्धयुक्तत्वाज्जीवा भोगाः, 'अजीवावि भोगि'त्ति अजीवद्रव्याणां गन्धादिगुणोपेतत्वादिति। 'सव्वत्थोवा कामभोगि'त्ति ते हि चतुरिन्द्रियाः पञ्चेन्द्रियाश्च स्युः, ते च स्तोका एव, नोकामिनो नोभोगिनस्ते च सिद्धा एव, ते च तेभ्यः प्रागुक्तेभ्योऽनन्तगुणाः, 'भोगि'त्ति एकद्वित्रीन्द्रियास्तेभ्योऽनन्तगुणाः, वनस्पतीनामनन्तगुणत्वादिति॥ 'से नूणं'ति (सू. २९०) स नरो नूनं—निश्चितं भदन्त! 'खीण'त्ति भोगास्सन्ति यस्य तद्भोगि—वपुस्तत्क्षीणं यस्य तपोरोगादिभिः स क्षीणभोगी—क्षीणतनुः, दुर्बल इत्यर्थः, 'उट्ठाणेणं' उत्थानेन—ऊर्ध्वीभवनेन 'कम्मेणं'ति गमनादिना 'बलेणं'ति देहप्राणेन 'वीरिएणं'ति जीवबलेन 'पुरिसकार'त्ति पुरुषाभिमानेन, साधितस्वप्रयोजनेनेत्यर्थः, 'भोगभोगाइं'ति मनोज्ञशब्दादीन् 'से नूणं'ति अथ भदन्त एवं—अनन्तरोक्तमर्थं वदथ यूयमिति प्रश्नः, पृच्छतोऽयमभिप्रायो—यद्यसौ न प्रभुस्तदाऽसौ भोगभोजनासमर्थत्वात् न भोगी, अत एव न भोगत्यागी, अतः कथं निर्जरावान्?, कथं वा स्वर्गमनपर्यवसानोऽस्तु?, उत्तरं तु 'नो इण'त्ति, कस्माद्?, यतः—'पभू णं से'त्ति स क्षीणभोगी प्रभुः—समर्थः। 'आहोहिए णं'ति अधोऽवधिको—नियतक्षेत्रविषयावधिज्ञानी 'परमाहोहि'त्ति परमावधिज्ञानी॥ 'एगइया' (सू. २९१) एके केचन, न सर्वे सम्मूर्च्छिमा इत्यर्थः, 'अंध'त्ति अन्धा—अज्ञानाः मूढो—मूर्खस्तत्त्वश्रद्धानं प्रति, एत एवोपमयोच्यन्ते—'तमं'ति तमःप्रविष्टा इव तमःप्रविष्टाः 'तमपडल'त्ति तमः पटलमिव तमःपटलं—ज्ञानावरणं मोहो—मोह-

नीयं तदेव जालं मोहजालं ताभ्यां प्रतिच्छन्ना–आच्छादिता ये ते तथा, 'अकाम'त्ति अकामो–वेदनानुभवे अनिच्छा अमनस्कत्वात् स एव निकरणं–कारणं यत्र तदकामनिकरणं–अज्ञानप्रत्ययमिति यथा स्यात्तथैव, वेदनां सुखदुःखरूपां वेदनं वा संवेदनमनुभवन्तीत्यादि,'अत्थी'त्यादि, अस्त्ययं पक्षो यदुत 'पभूवि'त्ति प्रभुरपि–संज्ञित्वेन यथा तद्रूपवेदनादिज्ञाने समर्थोऽपि, आस्तामसंज्ञित्वेनाप्रभुरित्यपिशब्दार्थः, अकामनिकरणं अनिच्छाप्रत्ययमनाभोगात् यथा स्यादेवं वेदनां वेदयन्तीति प्रश्नः, उत्तरं तु 'जे णं'ति यः प्राणी संज्ञित्वेनोपायसद्भावेन च हेयादीनां हानादौ समर्थोऽपि 'नो पहु'त्ति न प्रभुः–समर्थः विना प्रदीपेनान्धकारे रूपाणि 'पासित्तए'त्ति द्रष्टुं एषोऽकामप्रत्ययं वेदनां वेदयतीति सम्बन्धः,'पुरओ'त्ति पुरतः 'अणिज्झाएत्ताणं'ति अनिध्याय–चक्षुरव्यापार्य 'पासि'त्ति द्रष्टुं 'मग्गउ'त्ति मार्गतः–पृष्ठतः 'अणवयक्खित्ताणं'ति अनवेक्ष्य–पश्चाद्भागमनवलोक्येति, 'पभूवि'त्ति प्रभुरपि संज्ञित्वेन रूपदर्शनसमर्थोऽपि 'पकामनिकरणं'ति प्रकामः–ईप्सितार्थाप्राप्तितः प्रवर्द्धमानतया प्रकृष्टोऽभिलापः स एव निकरणं यथा स्यादेवं वेदनां वेदयन्तीति प्रश्नः, उत्तरं तु 'जे णं'त्ति यो न प्रभुः समुद्रस्य पारं गन्तुं तद्गतद्रव्यप्राप्त्यर्थित्वे सत्यपि तथाविधशक्तिवैकल्याद्, अत एव च यो न प्रभुः–समर्थः समुद्रस्य पारंगतानि रूपाणि द्रष्टुं स तद्गताभिलापातिरेकात् प्रकामनिकरणं वेदनां वेदयन्तीति ॥ सप्तमशते सप्तम उद्देशकः ॥

'एवं जहा रायप्पसेणइज्जे'त्ति (सू. २९३) तत् सूत्रं चेदम्–'समे चेव जीवे, से नूणं भंते ! हत्थीउ कुंथू अप्पकम्मतराए चेव अप्पकिरियतराए चेव अप्पासवतराए चेव, कुंथूओ हत्थी महाकम्मतराए चेव ३ ?, हंता ! गोयमा !, कम्हा णं भंते ! हत्थिस्स य कुंथुस्स य समे चेव जीवे ?, गोयमा ! से जहानामए कूडागारसाला सिया दुहओ लित्ता गुत्ता गुत्तदुवारा निवाया निवाय- ॥१०९॥

गंभीरा, अहे णं केइ पुरिसे पईवं च जोइं च गहाय तं कूडागारसालं अंतो २ अणुपविसइ २ तीसे कूडागारसालाए सव्वओ समंता घणनिचियनिरंतरनिच्छिड्डाइं दुवारवयणाइं पिहेइ, तीसे बहुमज्झदेसभाए तं पईवं पलीवेज्जा, से य पदीवे कूडागारसालमंतो ओभासेइ उज्जोएइ तवेइ पभासेइ, नो चेव णं कूडागारसालाए बाहिं, तए णं से पुरिसे तं पईवं इड्डरेणं पिहेइ, तएणं से पईवे इड्डरस्स अंतो ओभासेइ ४, नो चेव णं इड्डरस्स बाहिं, एवं गो०! कलिंजएणं गंडवाणियाए पच्छिपिडएणं आढएणं अद्धाढएणं पत्थएणं कुडवेणं अद्धकुडवेणं चउभाइयाए अट्ठभाइयाए सोलसियाए बत्तीसियाए चउसट्ठियाए, तए णं से पुरिसे तं पदीवं दीवाचंपणएणं पिहेइ, तएणं से पदीवे तं दीवाचंपणयं अंतो ओहासेइ ४, नो चेव णं दीवाचंपणयस्स बाहिं, एवं चउसट्ठियाए बाहिं जाव नो चेव णं कूडागारसालाए बाहिं, एवामेव गोयमा! जीवे जारिसयं पुव्वकम्मनिबद्धं बोंदिं निव्वत्तेइ तं असंखिज्जेहिं जीवपदेसेहिं सचित्तीकरेइ' शेषं तु लिखितमेवास्ति, अस्यायमर्थः—कूटाकारेण—शिखराकृत्या युक्ता शाला कूटाकारशाला 'दुहओ लित्ता' अंतर्बहिश्च गोमयादिलिप्ता 'गुत्ता' प्राकाराद्यावृत्ता 'गुत्तदुवारा' कपाटादियुक्तद्वारा 'निवाता निवायगंभीरा' निवातविशालेत्यर्थः, 'जोइओ'त्ति ज्योतिषः, अग्नेरित्यर्थः, 'घणनिचिय'त्ति घननिचितानि कपाटादिद्वारपिधानानां द्वारशाखादिषु गाढनियोजनेन निचितानि निरन्तरं कपाटान्तराभावात् निश्छिद्राणि 'इड्डरेणं'ति गन्त्रीढंचनकेन 'गोकलिंजएणं'ति गोभक्तार्थं वंशभाजनविशेषेण, डल्लकेनेत्यर्थः, 'गंडवाणियाए'त्ति गंडपाणिका वंशभाजनविशेष एव यो गण्डेन—हस्तेन गृह्यते डल्लाउ लघुतरः 'पिच्छिपिडएणं'ति पिच्छिकालक्षणपिटकेन, आढकादीनि प्रतीतानि, 'चउब्भाइय'त्ति घटकस्य रसमानविशेषस्य चतुर्थभागमात्रो मानविशेषः, 'अट्ठभाइय'त्ति तस्यैवाष्टभागमानविशेष एव, 'सोलसिय'त्ति षोडशभागमाना 'बत्तीसिय'त्ति तस्यैव

द्वात्रिंशद्भागमाना, चतुःषष्टिका तस्यैव चतुःषष्टितमांशस्वभावा, पलमिति तात्पर्यं, 'दीवाचंपएणं'ति दीपकचम्पनकेन—दीपाच्छादनेन, कोशकेनेत्यर्थः, एतच्च सर्वमपि वाचनान्तरे साक्षाल्लिखितमेव दृश्यते इति ॥ 'सव्वे से दुक्खे'त्ति (सू. २९४) दुःखहेतुसंसारनिबन्धनत्वाद्दुःखं, 'से सुहे'त्ति सुखस्वरूपमोक्षहेतुत्वात् यन्निर्जीर्णं कर्म तत्सुखमुच्यते। नारकादयश्च संज्ञिन इति संज्ञा आह—'सण्ण'त्ति (सू. २९५) संज्ञानं संज्ञा, आभोग इत्यर्थः, अष्टौ संज्ञाः कण्ठ्याः, मतिज्ञानावरणक्षयोपशमाच्छब्दाद्यर्थगोचरा सामान्यावबोधक्रियैव संज्ञायते वस्त्वनयेत्योघसंज्ञा, एवं शब्दार्थगोचरा विशेषावबोधक्रियैव संज्ञायतेऽनयेति लोकसंज्ञा, ततश्चौघसंज्ञा दर्शनोपयोगः लोकसंज्ञा ज्ञानोपयोग इति, 'परज्झं'ति पारवश्यं 'पंडियत्तं असासयं'ति अयमर्थो—जीवः शाश्वतः पण्डितत्वमशाश्वतं, चारित्रभ्रंशादिति ॥ सप्तमशतेऽष्टम उद्देशकः ॥

'असंवुडे'त्ति (सू. २९८) असंवृतः—प्रमत्तः 'इहगए'त्ति इह प्रच्छको गौतमादिस्तदपेक्षया इहशब्दवाच्यो मनुष्यलोकः, ततश्चेहगतान्—नरलोकगतान् 'तत्थगए'त्ति वैक्रियं कृत्वा यत्र यास्यति तत्र व्यवस्थितानित्यर्थः, 'अन्नत्थ'त्ति उक्तस्थानद्वयादन्यत्र व्यवस्थितानित्यर्थः, 'नवरं'ति अयं विशेषः—'इहयं'ति इह शते अनगारो यतिरिहगतान् पुद्गलानिति वाच्यं, तत्र तु देव इति तत्रगतानित्युक्तं चेति। 'णायमेयं'ति (सू. ३००) ज्ञातं सामान्यतः एतद् वक्ष्यमाणं वस्त्वर्हता भगवता वीरेण, सर्वज्ञत्वात्, तथा 'सुयं'ति स्मृतमिव स्मृतं, स्पष्टप्रतिभाससद्भावात्, विज्ञातं विशेषतः, किं तदित्याह—'महासिलाकण्टको' जीवितभेदकत्वान्महाशिलाकण्टकः, यत्र तृणशूकादिनाऽभिहतस्य हस्त्यादेर्महाशिलाकण्टकेनेव पीडितस्य वेदना स्यात् स संग्रामो महाशिलाकण्टकसङ्ग्राम उच्यते, अयं सङ्ग्राम एवं जातः, यथा—चम्पायां कोणिको नृपोऽभूत्, तस्यानुजौ हल्लविहल्लाख्यौ भ्रातरौ

सेचनाख्यगन्धगजे समारूढौ दिव्यकुण्डलदिव्यवस्त्रालङ्कृतौ दृष्ट्वा कूणिकराजपत्नी पद्मावती मत्सराद्दन्तिनोऽपहाराय तं प्रेरितवती, तेन तौ तं याचितौ, तौ च तद्भयाद्वैशालीनगर्यां निजमातामहचेटकराज्ञोऽन्तिकं सगजौ सान्तःपुरपरिच्छदौ गतवन्तौ, कूणिकेन च दूतप्रेषणतो मार्गितौ, न च तेन प्रेषितौ, ततः कूणिकेन भाणितं—यदि न प्रेषयसि तौ तदा युद्धसज्जो भव, तेनापि भणितं—एष सज्जोऽस्मि, ततः कूणिकेन कालादयो दश स्वकीयभिन्नमातृकाः भ्रातरो राजानश्चेटकेन सह सङ्ग्रामायाहूताः, तत्रैकैकस्य त्रीणि गजानां सहस्राणि, एवं रथानामश्वानां, नराणां च प्रत्येकं तिस्रः कोटयः, कूणिकस्याप्येवमेव, एनं व्यतिकरं मत्वा चेटकेनापि अष्टादश गणराजा मीलिताः, तेषां चेटकस्य चैवमेव प्रत्येकं गजादिपरिमाणं, मिथो युद्धं लग्नं, चेटकराजश्च प्रतिपन्नप्रतिज्ञतया दिनमध्ये एकमेव शरं मुञ्चति, अमोघबाणश्च सः, तत्र कूणिकसैन्ये गरुडव्यूहः चेटकानीके शकटव्यूहो विरचितः, ततश्च कूणिकस्य कालो दण्डनायको युद्ध्यमानस्तावद् गतो यावच्चेटकः, ततस्तेनैकशरपातेनासौ निपातितः, भग्नं च कूणिकबलं, गते च द्वे अपि बले निज २ स्थानं, एवं च दशसु दिनेषु चेटकेन विनाशिता दशापि कालादयः, एकादशे दिने चेटकजयार्थं देवताराधनाय कूणिकोऽष्टमभक्तं जग्राह, ततः शक्रचमरावागतौ, शक्रो बभाषे—चेटकः श्राद्ध इत्यहं न तं प्रति प्रहरामि, नवरं भवन्तं संरक्षामि, ततोऽसौ तद्रक्षार्थं वज्रसदृशं अभेद्यकवचं कृतवान्, चमरस्तु द्वौ संग्रामौ विकुर्वितवान्—महाशिलाकण्टकं रथमुशलं चेति ॥'जइत्थ'त्ति(सू. ३०१) जितवान्, 'पराजइत्थ'त्ति पराजितवान्, हारितवानित्यर्थः, 'वज्जी'वज्री—शक्रः, 'विदेह'त्ति कूणिकः, एतावेव तत्र जेतारौ, नान्यः कश्चित्, 'मल्लइ'त्ति मल्लकिनामानो नव राजानः 'कासीकोसल'त्ति काशी—वाराणसी तत्सम्बन्धिनः आद्या नव कोशला—अयोध्या, तद्वासिनो भूपा इत्यर्थः, नव द्वितीयाः,'गणरायाणो'त्ति कार्ये समुत्पन्ने ये गणं कुर्वन्ति ते गणराजाः, सामन्ता इत्यर्थः,

ते च चेटकराजस्य साहाय्याय गणं कृतवन्त इति, 'उदाइ'त्ति उदायिनामानं 'पडिकप्पेह' सन्नद्धं कुरुत, 'पच्चप्पिणह' प्रत्यर्पयत, निवेदयत इत्यर्थः, 'हट्ठतुट्ठचित्त'त्ति हृष्टं-विसितं तुष्टं-तोषवत् चित्तं-मनो यथा स्यात्, 'छेयारिउवएस'त्ति छेको-निपुणो य आचार्यः-शिल्पोपदेशदाता तदुपदेशाद्या मतिकल्पना—विकल्पाकृतिभेदास्तैस्सुनिपुणैः, एवं भीमं दुष्प्रधर्षं साङ्ग्रामिकं, रणे योग्यमित्यर्थः, 'अउज्झं'ति अयोध्यं 'कयबलि'त्ति कृतबलिकर्मा गृहदेवतानां, 'कयकोउय'त्ति कृतानि कौतुकमङ्गलान्येव दुःस्वप्नादिव्यपोहायावश्यं कर्त्तव्यत्वात् प्रायश्चित्तानि तत्तथा, तत्र कौतुकानि मषीपुण्ड्रादीनि मङ्गलानि-सिद्धार्थकादीनि, 'सन्नद्ध'त्ति सन्नद्धः संनहनिकया, तथा बद्धः कसाबन्धनतो, वर्मितो वर्म्मतया कृतोऽङ्गे निवेशनात् कवचः—कंकटो येन स तथा, ततः कर्मधारयः, 'उप्पीडिय'त्ति उत्पीडिता- गुणसारणेन दृढीकृता शरासनपट्टिका—धनुर्दण्डा येन स तथा, उत्पीडिता वा बाहौ बद्धा शरासनपट्टिका-बाहुपट्टो येन स तथा, 'पिणद्ध'त्ति पिनद्धं-परिहितं ग्रैवेयकं-ग्रीवाऽऽभरणं येन स तथा, 'चिंधपट्टो' योधचिह्नपट्टः 'गहियाउह'त्ति गृहीतानि आयुधानि-शस्त्राणि प्रहरणाय-परेषां प्रहारदानाय येन सः, अथवा आयुधानि-अक्षेप्यशस्त्राणि खड्गादीनि प्रहरणानि तु-क्षेप्यशस्त्राणि नाराचादीनि येन स तथा, 'सकोरेंट'त्ति सह कोरण्टकाख्यैः कुसुमगुच्छैः—माल्यदामभिः-पुष्पमालाभिर्यत्तत्तथा तेन ध्रियमाणेन, 'मंगल'त्ति मङ्गलो-माङ्गल्यो जयशब्दः कृतो-जनैर्विहितः आलोके-दर्शने यस्य स तथा, 'हारोत्थय'त्ति हारावस्तृतेन-हारावच्छादनेन सुष्ठु कृतरतिकं वक्षः-उरो यस्य स तथा, 'महयाभड'त्ति महाभटानां 'चडगर'त्ति देशीशब्देन विस्तारवत्सङ्घेन परिवृत इत्यर्थः, 'ओयाए'त्ति उपयातः, उपागतः इत्यर्थः, 'अभिज्ज'त्ति परशस्त्रागम्यमिति कवचं 'वइर'त्ति वज्रसमं 'पराजिणित्तए' पराजयितुं, परानभिभवितुमित्यर्थः, 'हयमहिय'त्ति हताः-प्रहारदानतः

मथिता–माननिर्मथनतः प्रवरवीरा घातिताश्च येषां ते तथा, 'निवडिय'त्ति निपतिता, चिह्नध्वजाः पताकाश्च तदन्या येषां ते तथा, 'किच्छ'त्ति कृच्छ्रेण–कष्टेन गतप्राणाः तान् 'पडिसेहित्थ'त्ति प्रतिषेधितवान्, युद्धान्निर्वर्त्तितवानित्यर्थः, 'रहमुसलः' यत्र रथो मुशलेन युक्तः परिधावन् महाजनक्षयं कृतवान् स रथमुशलः 'उवट्ठियं' उपस्थितं, प्राप्तमित्यर्थः, 'मग्गउ'त्ति पृष्ठतः, 'आयसं'ति अयस्संबन्धिनं लोहमयं 'कढिण'त्ति कठिनं–वंशमयं तापसभाजनविशेषं तत्प्रतिरूपकं–सदृशं 'अणासए'त्ति अश्वरहितः असारथिकः अनारोधको–योधवर्जितः 'महया' महाजनक्षयं जनवधं जनव्यथां वा जनप्रमर्द–चूर्णनं 'जणसंवट्टं'न्ति जनसंवर्त्त इव–संहार इव कल्पः–सदृग् अतस्तं ॥ 'पुव्वसंगइए'त्ति (सू. ३०२) कार्त्तिकश्रेष्ठिभवे शक्रस्य कूणिकजीवो मित्रमभवत्, 'परियायसंगइए'त्ति पूरणतापसभवे चमरस्यासौ तापसपर्यायवर्त्ती मित्रमासीत्, 'दलइत्थ'त्ति दत्तवान् ॥ 'अणिक्खित्तेणं'ति (सू. ३०३) अनिक्षिप्तेन, अखण्डितेनेत्यर्थः, 'आणत्त'त्ति आज्ञप्ते सति 'जुतामेव'त्ति युक्तमेव रथसामग्र्येति, 'सरिसए'त्ति सदृशः, 'सरित्तए' सदृशत्वक् 'सरिव्वए'त्ति सदृग्वयाः, 'सरिसभंड'त्ति सदृशी भाण्डमात्रा–प्रहरणकोशादिरूपा उपकरणं–कङ्कटादिकं यस्य स तथा, 'पडिरहं'ति रथं प्रति, 'आसुरुत्ते'त्ति आशु–शीघ्रं रुतः–कोपोदयात् विमूढः 'रूप् लुप् विमोहने' इति धातोः, 'जाव'त्ति यावत्करणादिदं दृश्यम्–'रुट्ठे कुविए चंडक्किए'त्ति चाण्डक्यः–प्रकटितरौद्ररूपः 'मिसिमिसे'त्ति क्रोधाग्निना दीप्यमान इव 'ठाणं'ति पादन्यासविशेषलक्षणं 'ठाइ'त्ति कुर्यात्, 'आयय'त्ति आयतः–आकृष्टः सामान्येन कर्णायतं–आकर्णकृष्टं आयतकर्णायतस्तं 'एगाहच्चं'ति एका हत्या–हननं प्रहारो यत्र तदेकाहत्यं 'कूडाहच्चं'ति कूटे इव तथाविधपाषाणसम्पुटादौ आहत्या—आहननं यत्र तत् कूटाहत्यं 'अथामा' अस्थामा सामान्येन शक्तिरहितः 'अबले' वपुश्शक्तिविकलः 'अवीरिए'त्ति

मानसशक्तिशून्यः 'अपुरिसक्त'त्ति पुरुपकारः-पुरुषाभिमानः स एव कृतप्रयोजनः पराक्रमः,'अधारणिज्जं'ति आत्मनो धरणं कर्त्तुमशक्यं इतिकृत्वा 'एगंतं'ति एकान्तं-विजनं अन्तं-भूमिभागं,'सीलाइं'तिं फलानपेक्षाः क्रियाप्रवृत्तयः शुभाः 'वयाइं' अणुव्रतादीनि 'वेरमणाइं'ति रागविरतयः गीतं-गानं गन्धर्वं मुरुजादिसहितं तल्लक्षणो निनादः, 'कालमासे'त्ति मरणमासे, कालदिने इति द्रष्टव्यं, (सू. ३०४) महाविदेहे सेत्स्यति ॥ सप्तमशते नवमः ॥

'एगयउ'त्ति ( सू. ३०५ ) एकतस्समुपागतानां, स्थानान्तरेभ्य एकत्र मिलितानां, 'संनिवि'त्ति सन्निविष्टानां उत्कटुकत्वात् 'सन्निस'त्ति सङ्गततया निषण्णानां, सुखासीनानामित्यर्थः, 'अत्थिकाए'त्ति प्रदेशराशीन् 'अजीवकाए'त्ति अजीवा--अचेतनाश्च ते कायाश्च-राशयः अजीवकायास्तान् अरूविकायं अमूर्त्तमिति भावः,'जीवकायं'ति जीवनं जीवो-ज्ञानाद्युपयोगस्तत्प्रधानः कायो जीवकायस्तं, 'से कहमेयं'ति अथ कथमेतद् अस्तिकायवस्तु मन्ये एवं-अमुना अचेतनादिविभागेन तेषां समुल्लाप इति स्यात् 'अविप्पकड'त्ति इयं कथा अस्तिकायवक्तव्यतारूपा न विशेषेण प्रकटा प्रतीता-अविप्रकटा,'अविउप्पकड'त्ति पाठान्तरे अविद्वत्प्रकृता-अविज्ञप्रस्तुता, अथवा न विशेषतः उत् प्राबल्यतश्च प्रकटा अव्युत्प्रकटा,'तं चेयस'त्ति तत् तस्मात् चेतसा-मनसा 'वेदस'त्ति पाठान्तरे वेदसा-ज्ञानेन 'एयमट्ठं' अमुमस्तिकायस्वरूपमर्थं 'पच्चुविक्खह'त्ति प्रत्युत्प्रेक्षध्वं, पर्यालोचयतेति,'एयंसि णं'ति एतस्मिन्-उक्तरूपेऽस्तिकाये 'चक्किय'त्ति शक्नुयात् कश्चित्, 'एयंसि'ति अयमस्य भावार्थः-जीवसम्बन्धीनि पापकर्माणि अशुभविपाकदायीनि पुद्गलास्तिकाये न स्युः, अचेतनत्वेन अनुभववर्जितत्वात्तस्य, जीवास्तिकाये तानि तथा स्युरनुभवयुक्तत्वात् तस्येति, 'अत्थि णं'ति (सू.३०६) अस्तीदं वस्तु 'जीवाणं'ति जीवानां पापानि कर्माणि पापफलविपाकसंयुक्तानि 'कज्जंति'त्ति

भवन्तीत्यर्थः, 'थालीपाग'त्ति स्थाल्यां–उखायां पाको यस्य तत् स्थालीपाकशुद्धं, भक्तदोषवर्जितं, 'अट्ठारसवंजण'त्ति व्यञ्जनानि–शालनकानि तैराकुलं–व्याप्तम्, अष्टादश भेदाश्चैते–"सूओ १ दणो २ जवण्णं ३, तिण्णि य मंसाइं ६ गोरसो ७ जूसो ८। भक्खा ९ गुललावणिया १०, मूलफला ११ हरियगं १२ डागो १३ ॥ १ ॥ होइ रसालू य १४ तहा पाणं १५ पाणीय १६ पाणगं चेव १७। अट्ठारसमो सागो १८ निरुवहओ लोइओ पिंडो ॥ २ ॥" मांसत्रयं जलचरादि, जूषो–मुद्गतन्दुलजीरककटुभाण्डादिरसं, भक्ष्याणि–खण्डखाद्यादीनि, गुललावणिया–गुलपर्पटिका गुलधानिका वा, मूलफलान्येकमेव पदं, हरितकं जीरकादेः, डागो वा मूलकादिभर्जिका रसालू–मर्जिका, तल्लक्षणं चेदम्–"दो घयपला महु पलं दहियस्सद्धाढयं मिरियवी(मा)सो। दस खंडगुडपलाइं एस रसालू निवइजोगो ॥१॥" पानं–सुरादि, पानीयं–जलादि पानकं–द्राक्षापानकादि शाकः–तक्रसिद्ध इति, आपातः–तत्प्रथमतया संसर्गः, 'भद्दए'त्ति मधुरत्वान्मनोज्ञः, 'महस्सवए'त्ति षष्ठशततृतीयोद्देशको महाश्रवको यथा तथेहाप्यध्येयं 'परिणम'न्ति परिणमत्–परिणामान्तरं गच्छत् प्राणातिपातादि कार्यं कारणोपचारात् प्राणातिपातहेतुकं कर्म, 'दुरूवत्ताए' दुरूपताहेतुतया परिणमति, दूरूपतां कुर्यादित्यर्थः, 'ओसहमिस्सं'ति महातिक्तकटुघृतादिपक्वमौषधं, 'नो भद्दए'त्ति इन्द्रियप्रतिकूलत्वात्, 'से'त्ति (सू. ३०७) द्वौ नरौ समारभेते, उपद्रवयत इत्यर्थः, 'अप्पतरागं तेउकायं'ति तत्रोज्ज्वलने बहुतरतेजससमुत्पादेऽपि अल्पतराणां विनाशोऽप्यस्ति, तथैव दर्शनात्, 'महावेयण'त्ति महती वेदना जीवानां यस्मात् स महावेदनतराक इति, 'अचित्तावि'त्ति (सू. ३०९) सचेतना अग्निकायादयः तावदवभासन्त एवेत्यपिशब्दार्थः 'ओभासंति' अवभासंते प्रकाशकाः स्युः, 'उज्जोवेंति' वस्तूद्योतयन्ति, 'तावन्ति' तापं कुर्युः 'पभासंति' तथाविधवस्तुदाहकत्वेन प्रभासते, दूरं निपतति–दूरे दूरे

गत्वा दूरे निपततीत्यर्थः, 'देसगय'त्ति अभिप्रेतस्य गन्तव्यस्य क्रमशतादेः देशे—तदर्द्धादौ, गमनस्वभावेऽपि देशे तदर्द्धादौ निपततीत्यर्थः ॥ सप्तमशते दशम उद्देशकः ॥

इतिश्रीलक्ष्मीसागरसूरिशिष्यशतार्थिश्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तहंसगणिशिष्य-
श्रीदानशेखरगणिसमुद्धृतायां भगवतीलघुवृत्तौ सप्तमशतविवरणं सम्पूर्णम् ॥

## अथाष्टमं शतकं

'पुग्गल'त्ति (*५७) पुद्गलपरिणामार्थः १ 'आसिविस'त्ति आशीविषादिविषयः २ 'रुक्ख'त्ति सङ्ख्यातजीवादिवृक्षरूपः ३ 'किरिय'त्ति क्रियारूपः ४ 'आजीव'त्ति आजीविकवक्तव्यतारूपः ५,'फासुग'त्ति प्रासुकदानादिरूपः ६ 'अदत्त'त्ति अदत्तादानरूपः ७ 'पडिणीय'त्ति प्रत्यनीकतार्थरूपः ८ 'बंध'त्ति प्रयोगबन्धादिरूपः ९ देशाराधनादिरूपः १० इत्योघतः सङ्ग्रहगाथा उक्ता। 'पओगपरिणय'त्ति (सू. ३०९) जीवव्यापारेण शरीरादिप्रयोगपरिणताः १ 'मीसा परिणता' (सू. ३१०) प्रयोगविस्रसाभ्यां परिणताः, प्रयोगपरिणाममत्यजन्तो विश्रसया स्वभावान्तरमापादिताः मुक्तकलेवरादिरूपाः २, अथवा औदारिकादिवर्गणारूपा विश्रसया कृतास्सन्तो ये जीवप्रयोगेणैकेन्द्रियादिवपुःप्रभृतिपरिणामान्तरमापादिताः ते मिश्रपरिणताः, ननु प्रयोगपरिणतेषु विस्रसा सत्यपि न विवक्षिता इति, 'विस्ससापरिणय'त्ति (सू. ३११) स्वभावपरिणताः ॥ अथ 'पओगपरिणया ण'मित्यादिना (सू. ३१२) ग्रन्थेन नवभिर्दण्डकैः प्रयोगप्रयोगपरिणामोऽप्येवमेव ततः क एषां विशेषः?, सत्यं, किन्तु

...परिणामप्ररूपणात्, तत्र च 'एगिंदिए'त्यादि, एकेन्द्रियादिसर्वार्थसिद्धदेवान्तजीवभेदविशेषितप्रयोगपरिणतानां पुद्गलानां प्रथमो दण्डकः, तत्र च 'आउकाइएगिंदिय एवं चेव'त्ति पृथ्वीवदप्कायप्रयोगपरिणता वाच्या इत्यर्थः, एवं 'दुपओ'त्ति पृथिव्यप्कायप्रयोगपरिणतेष्विव द्विपदो भेदः सूक्ष्मबादरविधानाभ्यां कृतस्तेजस्कायादिषु वाच्यः, 'अणेगविह'त्ति पुलाकक्रमिकादिभेदत्वात् द्वीन्द्रियाणामनेकविधाः, त्रीन्द्रियप्रयोगपरिणता अपि एवमनेकविधाः कुन्थुपिपीलिकादिभेदात्, एवं चतुरिन्द्रिया मक्षिकामशकादयोऽनेकविधाः, एवं सर्वेऽपि वाच्याः १, अथैकेन्द्रियादिसर्वार्थसिद्धदेवान्तः पर्याप्तकापर्याप्तकविशेषणो द्वितीयो दण्डकः प्रारभ्यते, तत्र–'एक्केक्के'त्यादि, एकैकस्मिन् काये सूक्ष्मबादरभेदा द्विविधाः पुद्गला वाच्याः, ते च प्रत्येकं पर्याप्तकापर्याप्तकभेदात् पुनर्द्विधा वाच्या इत्यर्थः २, 'जे पज्जत्तसुहुमपुढवी'त्यादि, औदारिकादिवपुर्विशेषणस्तृतीयो दण्डकः, तत्र च 'ओरालियतेयाकम्मसरीरपओग'त्ति औदारिकतैजसकार्मणवपुषां यः प्रयोगस्तेन परिणता ये ते तथा, पृथिव्यादीनां हि एतदेव वपुस्त्रयं स्यादितिकृत्वा तत्प्रयोगपरिणता एव ते स्युः, 'जे पज्जत्ता बायर'त्ति बादरपर्याप्तकवायूनां त्वाहारकवर्जवपुश्चतुष्टयं स्यात्, एवं 'गब्भवक्कंतियअपज्जत्तग'त्ति वैक्रियाहारकशरीराभावाद् गर्भव्युत्क्रान्तिका अपि अपर्याप्तका नरास्त्रिशरीरा एवेति ३, अथ सर्वजीवेन्द्रियविशेषणश्चतुर्थो दण्डकः४, 'जे अपज्जत्तसुहुमपुढवी'त्यादिः, औदारिकादिशरीरस्पर्शादीन्द्रियार्थः पञ्चमः, 'एवं चेव'त्ति एवमेव सर्वैकेन्द्रियजीवेषु 'चउक्कएणं'ति सूक्ष्म १ बादर २ पर्याप्तक ३ अपर्याप्तक ४ चतुष्कभेदेन भावात्, अथ सर्वजीववर्णगन्धरसस्पर्शसंस्थानवाच्यः षष्ठः, एवमौदारिकादिशरीरवर्णादिभावविशेषणस्सप्तमः, इन्द्रियवर्णादिविशेषणोऽष्टमः, शरीरेन्द्रियवर्णादिविशेषणो नवमः, मिश्रपरिणतेष्वप्येत एव नव दण्डका वाच्याः। 'एवं जहा पण्णवणाए'त्ति, तत्रैवमिदं सूत्रम्–

'जे रसपरिणया ते पंचविहा, तंजहा-तित्तरसपरिणया कडुयरस० कसाय० अंबिल० महुररसपरिणया, जे फासपरिणया ते अट्ठविहा पण्णत्ता, तंजहा-कक्खडफासपरिणया एवं मउय० गुरुय० लहुय० सीय० उसिण० सिणिद्ध० लुक्खफासपरिणया'इत्यादि ॥ अथैकं पुद्गलद्रव्यमाश्रित्य परिमाणं चिन्तयन्नाह-'एगे'इत्यादि,'मणप्पओ'त्ति मनस्तया परिणतं 'वइप्पओ'त्ति भाषाद्रव्यं काययोगेन गृहीत्वा वाग्योगेन सृज्यमानं वाक्प्रयोगपरिणतं, 'कायप्पओ'त्ति औदारिकादिकाययोगेन गृहीतमौदारिकादिवर्गणा द्रव्यमौदारिकादिकायतया परिणतं कायप्रयोगपरिणतं, 'सच्चमणे'त्ति सद्भूतार्थचिन्तनहेतोर्मनसः प्रयोगः सत्यमनःप्रयोगः, एवमन्येऽपि, नवरं मृषा-असद्भूतोऽर्थः, सत्यामृषा-मिश्रो, यथा पञ्चसु दारकेषु जातेषु दश दारका जाता इति,सत्यमृषाविपरीता असत्यामृषा, तत्स्वरूपमिदं-यथा देहीति, 'आरंभसच्च'त्ति आरम्भो-जीवोपघातः तत्सत्कं सत्यमारंभसत्यं तद्विषयो मनःप्रयोगस्तेन परिणतं यत्तत्तथा, एवमुत्तरत्रापि, अनारम्भो-जीवदया, 'सारंभ'त्ति संरम्भो-वधसङ्कल्पः, समारम्भस्तु परिताप इति, 'ओरालिय'त्ति औदारिकशरीरकायप्रयोगः स पर्याप्तकस्यैव वेदितव्यः तेन यत्परिणतं तत्तथा, 'ओरालियमीस'त्ति औदारिकमुत्पत्तिकालेऽसम्पूर्णं सत् मिश्रं कार्मणेनेत्यौदारिकमिश्रं तल्लक्षणं शरीरं औदारिकमिश्रशरीरं तदेव कायः तस्य यः प्रयोगस्तेन परिणतं यत्तथा, अयं पुनरपर्याप्तकस्यैव, यदुक्तम्-"जोएण कम्मएणं आहारेई अणंतरं जीवो। तेण परं मीसेणं जाव सरीरस्स निप्फत्ती ॥१॥" एवं तावत्कार्मणेनौदारिकवपुषो मिश्रता, उत्पत्तिमाश्रित्य तस्य प्रधानत्वात्, यदा पुनरौदारिकशरीरी वैक्रियलब्धिसम्पन्नो नरः १ पञ्चेन्द्रियतिर्यग्योनिकः २ पर्याप्तबादरवायुकायिको वा ३ वैक्रियं कुर्यात् तदौदारिककायप्रयोग एव वर्त्तमानः प्रदेशान् विक्षिप्य वैक्रियवपुर्योग्यान् पुद्गलान् गृहीत्वा यावद्वैक्रियवपुःपर्याप्त्यां पर्याप्तिं व्रजेत् तावद्वैक्रियेणौदारिकवपुषो

मिश्रता, प्रारम्भकत्वेन तस्य प्रधानत्वाद्, एवमाहारकेणाप्यौदारिकशरीरस्य मिश्रता वेदितव्या, 'वेउव्विय'त्ति वैक्रियवपुःकायप्रयोगो वैक्रियपर्याप्तकस्येति 'वेउव्वियमीस'त्ति वैक्रियमिश्रवपुःकायप्रयोगो देवनारकेषूत्पद्यमानस्यापर्याप्तकस्य, मिश्रता चेह वैक्रियशरीरस्य कार्मणेनैव, लब्धिवैक्रियपरित्यागे त्वौदारिकप्रवेशाद्धायामौदारिकोपादनाय प्रवृत्तेर्वैक्रियप्राधान्यादौदारिकेणापि वैक्रियस्य मिश्रतेति, 'आहारग'त्ति आहारकशरीरकायप्रयोग आहारकवपुर्निर्वृत्तौ सत्यां, तदा तस्यैव प्राधान्यात्, 'आहारगमीस'त्ति आहारकस्यौदारिकेण मिश्रतायां, सा चाहारकत्यागेनौदारिकग्रहणाभिमुखस्य, एतदुक्तं स्यात्—यदाऽऽहारकशरीरीभूत्वा कृतकार्यः पुनरप्यौदारिकं गृह्णाति तदा आहारकस्य प्राधान्यादौदारिकप्रवेशं प्रति व्यापारभावान्न परित्यजति यावत् सर्वथैवाहारकं तावदौदारिकेण सह मिश्रतेति, ननु तत्तेन न सर्वथा मुक्तं, पूर्वनिर्वर्त्तितं तिष्ठत्येव तत्कथं गृह्णाति ?, सत्यं, तिष्ठति तत्, तथाऽप्यौदारिकशरीरोपादानार्थं प्रवृत्त इति गृह्णात्येवेत्युच्यते, 'कम्मासरीर'त्ति इह कार्मणशरीरकायप्रयोगो विग्रहे, समुद्घातगतस्य च केवलिनः तृतीयचतुर्थपञ्चमसमयेषु स्याद्, उक्तञ्च—"कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये चे"ति, एवं प्रज्ञापनाटीकानुसारेणौदारिकशरीरकायप्रयोगादीनां व्याख्या, शतकटीकानुसारतः पुनर्मिश्रकायप्रयोगाणामेवं—औदारिकमिश्र औदारिक एवापरिपूर्णो मिश्र उच्यते, यथा गुडमिश्रं दधि नो दधितया नापि गुडतया व्यपदिश्यते, तत्त्वाभ्यामपरिपूर्णत्वात्, एवमौदारिकं मिश्रं कार्मणेन नौदारिकतया नापि कार्मणतया व्यपदेष्टुं शक्यमपरिपूर्णत्वादिति तस्यौदारिकमिश्रव्यपदेशः, एवं वैक्रियाहारकमिश्रावपीति, 'नवरं बायरवाउक्काइय'त्ति यथौदारिकशरीरकायप्रयोगपरिणते सूक्ष्मपृथ्वीकायिकादि प्रतीत्य आलापकोऽधीतः तथौदारिकमिश्रशरीरकायप्रयोगपरिणतेऽपि वाच्यः, नवरमयं विशेषः—तत्र सर्वेऽपि सूक्ष्मपृथ्वीकायिकादयः पर्याप्तापर्याप्तविशेषणा अधीताः

इह तु बादरवायुकायिका गर्भजपञ्चेन्द्रियतिर्यङ्मनुष्याश्च पर्याप्तकविशेषणा अध्येतव्याः, शेषास्त्वपर्याप्तकविशेषणा एव, यतः— बादरवायुकायिकादीनां पर्याप्तावस्थायामपि वैक्रियारंभणत औदारिकमिश्रशरीरकायप्रयोगो लभ्यते, शेषाणां पुनरपर्याप्तकावस्थायामेवेति। 'जहा ओगाहणसंठाणे'त्ति प्रज्ञापनाया एकविंशतितमपदे, तत्रेदं सूत्रम्—'जइ वाउकाइयएगिंदिय वेउव्वियसरीरकायप्पओगपरिणए किं सुहुमवाउकाइयएगिंदिय जाव परिणए बायरवाउकाइयएगिंदियजाव परिणए?, गोयमा! नो सुहुम जाव परिणए, बायर जाव परिणए'इत्यादि, 'एवं जहा ओगाहणसंठाणे'त्ति तत्रेदं सूत्रम्—गोयमा! नो अमणुस्साहारगसरीरकायप्पओगपरिणए, मणुस्साहारगसरीरकायप्पओगपरिणए'इत्यादि, 'एवं ओगाह'त्ति, 'कम्मगस्स भेओ'त्ति, स चायं भेदः—'बेंदियकम्मासरीरकायप्पओगपरिणए, एवं तेंदिय० चउरिंदिय०' इत्यादि॥ अथ द्रव्यद्वयं चिन्तयन्नाह—'दो भंते'इत्यादि (सू. ३१३) इह प्रयोगपरिणतादिपदत्रये एकत्वे त्रयो विकल्पाः, द्विकयोगेऽपि त्रय एव, एवं जाताः षट्, एवं मनःप्रयोगादित्रयेऽपि षट्, सत्यमनःप्रयोगपरिणतादीनि तु चत्वारि पदानि, तेष्वेकत्वे चत्वारः, द्विकयोगे तु षट्, एवं सर्वेऽपि दश, आरम्भसत्यमनःप्रयोगपरिणतादीनि षट् पदानि, तेष्वेकत्वे षट्, द्विकयोगे तु पञ्चदश, सर्वेऽप्येकविंशतिः, सूत्रे च 'अहवेगे आरंभसच्चमणप्पओगपरिणए'इत्यादिनेह द्विकयोगप्रथम एव भङ्गको दर्शितः, शेषांस्तदन्यपदसम्भवांश्चातिदेशेन दर्शयतोक्तम्—'एवं एएणं गमेणं'ति एवमेतेन गमेन आरम्भसत्यमनःप्रयोगादिपदप्रदर्शितेन द्विकसंयोगेन नेतव्यं समस्तं द्रव्यद्वयसूत्रं द्विकसंयोगस्य चैकत्वविकल्पाभिधानपूर्वकत्वादेकत्वविकल्पैश्चेति हृदयं, तत्र च यत्रारम्भसत्यमनःप्रयोगादिपदसमूहे यावन्तो द्विकसंयोगात्पद्यंते सर्वे ते तत्र वाच्याः, तत्रारम्भसत्यमनःप्रयोगादिषु दर्शिता एव, आरम्भादिपदषट्कविशेषितेषु पुनरित्थमेव, त्रिषु मृषामनःप्रयोगादिषु चतुर्षु च सत्यवाक्प्र-

योगादिषु प्रत्येकमेकत्वे षड् विकल्पाः, द्विकसंयोगे तु १५ प्रत्येकं, एवं सर्वेष्वपि एकविंशतिः, औदारिकादिशरीरकायप्रयोगादिषु सप्तसु पदेषु एकत्वे सप्त, द्विकसंयोगे तु एकविंशतिः, एवं सर्वे जाता अष्टाविंशतिः, एवमेकेन्द्रियादिपृथ्वीप्रभृतिपञ्चपदैः पूर्वोक्तक्रमेण औदारिकादिकायप्रयोगपरिणतद्रव्यद्वयं प्रपञ्चनीयं, कियद्दूरं?, यावत्सर्वार्थसिद्धाः, एतच्चैवं-'जइ सव्वट्ठसिद्धअणुत्तरोववाइयकप्पाईयवेमाणियदेवपंचिंदियकम्मासरीरकायप्पओगपरिणया किं पज्जत्तसव्वट्ठसिद्ध जाव परिणया अपज्जत्तसव्वट्ठ जाव परिणया?, गोयमा! पज्जत्तसव्वट्ठजावपरिणया वा, अहवेगे पज्जत्तसव्वट्ठजाव परिणए अहवेगे अपज्जत्तसव्वट्ठ जाव परिणए'त्ति, 'एवं वीससापरिणयावि'त्ति प्रयोगपरिणतद्रव्यद्वयवत् प्रत्येकविकल्पैर्द्विकसंयोगैश्च विश्रसापरिणतेऽपि द्रव्ये वर्णगन्धरसस्पर्शसंस्थानेषु पञ्चादिभेदेषु वाच्यं, कियद्दूरं यावदित्याह-'अहवेगे'इत्यादि, अयं च पञ्चभेदसंस्थानस्य दशानां द्विकसंयोगानां दशम इति ॥ अथ द्रव्यत्रयं चिन्तयन्नाह-'तिण्णि भंते! दव्व'त्ति इह प्रयोगपरिणतादिपदत्रये एकत्वे त्रयो विकल्पाः, द्विकयोगे तु षट्, कथं?, आद्यस्यैकत्वे शेषयोः क्रमेण द्वित्वे द्वौ, तथाऽऽद्यस्य द्वित्वे शेषयोः क्रमादेकत्वेऽन्यौ द्वौ, तथा द्वितीयस्यैकत्वे तृतीयस्य च द्वित्वेऽन्यः, तथा द्वितीयस्य द्वित्वे तृतीयस्यैकत्वे अन्य इत्येवं षट्, त्रिकयोगे एक एव, जातास्सर्वे दश, एवं मनःप्रयोगादिपदत्रयेऽपि, अत एवाह-'एक्कसंजोगो'इत्यादि, सत्यमनःप्रयोगादिषु चैकत्वे चत्वारः, द्विकयोगे तु द्वादश, कथं?, आद्यस्यैकत्वेन शेषाणां त्रयाणां क्रमादनेकत्वेन त्रयो लब्धाः, पुनरन्ये त्रय आद्यस्य बहुत्वेन शेषाणामेकत्वेन, तथा द्वितीयस्यैकत्वेन शेषयोः क्रमादनेकत्वेन द्वौ, पुनर्द्वितीयस्य बहुत्वेन शेषयोरेकत्वेन द्वावेव, तृतीयचतुर्थयोरेकत्वबहुत्वाभ्यामेकः, पुनस्तद्विपर्ययेणैकः, एवं द्वादश, त्रिकयोगे चत्वारः सर्वेऽपि २० 'एवं दुयासंजोग'इत्यादि 'एत्थवि तहेव'त्ति अत्रापि द्रव्यत्रयाधिकारे तथैव वाच्यं सूत्रं यथा द्रव्यद्वयाधिकारे

उक्तं, तत्र च मनोवाकायप्रभेदतो यः प्रयोगपरिणामो मिश्रतापरिणामो वर्णादिभेदतश्च विश्रसापरिणाम उक्तः स इहापि वाच्यः, किमंतं तत्सूत्रं वाच्यम्?, 'जावे'त्यादि, इह च परिमण्डलादीनि पञ्च पदानि, तेषु नैकत्वेन पञ्च विकल्पाः, द्विकयोगे तु २०, कथं?, आद्यस्यैकत्वे शेषाणां क्रमेण बहुत्वे ४, आद्यस्य बहुत्वे शेषाणामेकत्वे ८, द्वितीयस्यैकत्वे बहुत्वे द्वयोरेकत्वे अनेकत्वे च ४, चतुर्थस्यैकत्वबहुत्वे पञ्चमस्य वा बहुत्वे द्वावित्येवं सर्वे २०, त्रिकयोगे १०, तत्र 'अहवा एगे तंससंठाणे'इत्यादिना त्रिकयोगानां दशमो दर्शितः। अथ चतुष्कमाश्रित्याह–'चत्तारि भंते! दव्व'त्ति इह प्रयोगपरिणतादित्रयेण एकत्वे ३, द्विकयोगे ९; कथं?, आद्यस्यैकत्वे द्वयोः क्रमेण बहुत्वे द्वौ, आद्यस्य द्वित्वे द्वयोर्द्वित्वे अन्यौ द्वौ, आद्यस्य त्रित्वे द्वयोरेकत्वे द्वौ, द्वितीयस्यैकत्वे अन्त्यस्य त्रित्वे द्वयोर्द्वित्वे तथा द्वितीयस्य त्रित्वे अन्त्यस्यैकत्वे त्रयोऽन्ये एवं सर्वेऽपि ९, त्रिकयोगे तु त्रय एव स्युः, एवं सर्वे पञ्चदशेति,'जइ पओगपरिणया किं मणपओगे'त्यादिना चोक्तशेषं द्रव्यचतुष्कप्रकरणमुपलक्षितम्, तच्च पूर्वोक्तानुसारेण संस्थानसूत्रं समुचितभङ्गकोपेतं समस्तमध्येयमिति ॥ अथ पञ्चादिद्रव्यप्रकरणान्यतिदेशतो दर्शयन्नाह–'एवं एएणं कमेणं'ति; एवं चाभिलापः–पंच भंते! दव्वा किं पओगपरिणया? ३, गोयमा! पओगपरिणया वा ३ अहवा एगे पओगपरिणए चत्तारि मीसापरिणया'इत्यादि, इह च द्विकसंयोगे विकल्पाः १२, कथं?, एकं चत्वारि च १ द्वे त्रीणि च २ त्रीणि द्वे ३ चत्वार्येकं चेत्येवं ४ विकल्पाः, द्रव्यपञ्चकमाश्रित्य एकत्र द्विकयोगे पदत्रयस्य त्रयो द्विकयोगाः, ते च चतुर्भिर्गुणिता द्वादशेति, त्रिकयोगे तु पट्, कथं?, त्रीण्येकमेकं च १ एकं त्रीण्येकं च २ एकमेकं त्रीणि च ३ द्वे द्वे एकं च ४ द्वे एकं द्वे च ५ एकं द्वे द्वे चेति ६ 'जाव दससंजोएणं'ति इह यावत्करणाच्चतुष्कादिसंयोगास्सूचिताः, तत्र द्रव्यपञ्चकापेक्षया सत्यमनःप्रयोगादिषु चतुर्षु पदेषु

द्विकत्रिकचतुष्कसंयोगाः स्युः, तत्र द्विकसंयोगाः २४, कथं ?, चतुर्णां पदानां षट् द्विकसंयोगाः, तत्रैकैकस्मिन् प्रागुक्तक्रमेण ४ विकल्पाः, षण्णां चतुर्भिर्गुणने २४, त्रिकसंयोगा अपि २४, कथं ?, चतुर्णां पदानां त्रिकसंयोगाः ४, एकैकस्मिंश्च प्रागुक्तरीत्या षट् विकल्पाः, चतुर्णां षड्भिर्गुणने २४, चतुष्कसंयोगे तु ४, कथं ?, आदौ द्वे त्रिषु चैकैकं १ द्वितीयस्थाने द्वे शेषेषु चैकैकं २ तृतीयस्थाने द्वे शेषेषु चैकैकं ३ चतुर्थे द्वे शेषेषु चैकैकं ४ एवं चत्वार इति, एकेन्द्रियादिषु पञ्चपदेषु द्विकत्रिकचतुष्कपञ्चकसंयोगाः स्युः, तत्र द्विकसंयोगे ४० विकल्पाः, कथं ?, पञ्चानां पदानां दश द्विकसंयोगाः, एकैकस्मिंश्च द्विकसंयोगे प्रागुक्तरीत्या ४ विकल्पाः, दशानां चतुर्भिर्गुणने चत्वारिंशत्, त्रिकसंयोगे तु षष्टिः, कथं ?, पञ्चानां पदानां दश त्रिकसंयोगाः, एकैकस्मिन् त्रिकसंयोगे प्रागुक्तरीत्या ६ विकल्पाः, दशानां च षड्भिर्गुणने षष्टिरिति, चतुष्कसंयोगाः २०, कथं ?, पञ्चानां पदानां चतुष्कसंयोगे ५ विकल्पाः, एकैकस्मिंश्च प्रागुक्तरीत्या ४ विकल्पाः, पञ्चानां चतुर्भिर्गुणने २०, पञ्चकसंयोग एक एव, एवं षट्कादिसंयोगा अपि वाच्याः, नवरं षट्कसंयोगा आरम्भसत्यमनःप्रयोगादिषु स्यात्, सप्तकसंयोगस्त्वौदारिककायादिप्रयोगमाश्रित्य, अष्टकसंयोगस्तु व्यन्तरभेदान्, नवकसंयोगो ग्रैवेयकदेवभेदान्, दशकसंयोगस्तु भवनपतिदेवभेदानाश्रित्य वैक्रियशरीरकायप्रयोगापेक्षया समवसेयः, एकादशसंयोगः शून्यः नारकादिपदेषु तस्यासम्भवात्, द्वादशसंयोगः कल्पोपपन्नदेवभेदानाश्रित्य वैक्रियशरीरकायप्रयोगापेक्षया चेति, 'पवेसणाए'त्ति नवमशततृतीयोदेशके गाङ्गेयाभिधानानगारकृतनरकादिगतिप्रवेशनविचारे, कियन्ति तदनुसारेण द्रव्याणि वाच्यानीत्याह–'जाव असंखेज्ज'त्ति असङ्ख्यातान्तनारकादिवक्तव्यताश्रयं हि तत्सूत्रं, इह यो विशेषस्तमाह–'अणंते'त्यादि ॥ अथैषामेवाल्पबहुत्वमाह–'सव्वत्थोव'त्ति (सू. ३१४) कायादिरूपतया जीवपुद्गलसंबन्धकालस्य स्तोकत्वात्, 'मीसाप० अणंत-

गुण'त्ति कायादिप्रयोगपरिणतेभ्यः सकाशात् मिश्रकपरिणता अनन्तगुणाः, यतः प्रयोगकृतमाकारमपरित्यजन्तो विश्रसया ये परिणामान्तरमुपागता मुक्तकलेवराद्यवयवरूपास्तेऽनन्तानन्ताः, विश्रसापरिणतास्तु तेभ्योऽप्यनन्तगुणाः, परमाण्वादीनां जीवाग्रहणयोग्यानामप्यनन्तत्वादिति ॥ अष्टमशते प्रथमोद्देशकविवरणम् ॥

'आसीविस'त्ति (सू. ३१५) आशीविषा--दंष्ट्राविषाः, 'जाइआसी'त्ति जात्या–जन्मना आशीविषाः, 'कम्मआसी'ति कर्मणा–क्रियया शापादिनोपघातकरणेनाशीविषाः कर्माशीविषाः, तत्र पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च कर्माशीविषाः, पर्याप्तका एव, एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणतः खल्वाशीविषाः स्युः, शापप्रदानेनैव व्यापादयन्तीत्यर्थः, एते चाशीविषलब्धिस्वभावाः सहस्रारान्तदेवेष्वेवोत्पद्यंते, देवास्त्वेत एव ये देवत्वेनोत्पन्नाः ते पर्याप्तकावस्थायामनुभूतभावतया कर्माशीविषाः, उक्तं च शास्त्रकारेण–"आसी दाढा तग्गय महाविसाऽऽसीविसा भवे दुविहा। ते कम्मजाइभेएण णेगहा चउविहविगप्पा ॥१॥" 'केवइए विसए'त्ति कियान् विषयो–गोचरो, विषस्येति गम्यं, 'अद्धभरह'त्ति अर्द्धभरतस्य यत् प्रमाणं सातिरेकत्रिषष्ट्यधिकयोजनशतद्वयलक्षणं तदेव मात्रा–प्रमाणं यस्यां सा तथा, 'बोंदि'त्ति तनुं विषेण निजाशीप्रभवेन 'विसपरि'त्ति विषपरिगतां 'विसट्टमाणि'न्ति विकसन्तीं 'करित्तए' कर्तुं, 'विसट्ठयाए'त्ति विषमेवार्थो विषार्थस्तद्भावस्तत्ता तया विषार्थतया, विषत्वस्य तस्यां वा, 'नो चेव'त्ति नैवेत्यर्थः, 'संपत्तीए' सम्पत्त्या एवंविधबोन्दिसम्प्राप्तिद्वारेण, 'करेंसु'त्ति अकार्षुः, वृश्चिका इति गम्यते, 'समयखेत्तं'ति समयक्षेत्रं 'एवं जहा वेउव्वियसरीरस्स भेओ'त्ति यथा वैक्रियं भणता जीवभेदो भणितः तथेहापि वाच्योऽशीविषत्यर्थः, स चायं–गोयमा! नो संमुच्छिमपंचिंदियतिरिक्खजोणियकम्मासीविसे गब्भवक्कंतियपंचिंदियतिरिक्खासीविसे, जइ गब्भ-

वक्कंतियपंचिंदियतिरिक्ख० विसे किं संखेज्जवासाउयगब्भवक्कंतियपंचिंदियतिरिक्ख० विसे असंखेज्जवासाउयगब्भवक्कंतियपंचिंदियतिरिक्ख० विसे ?, गो०! संखिज्जवासाउय जाव कम्मासीविसे जइ संखिज्ज जाव कम्मासीविसे किं पज्जत्तसंखेज्ज जाव कम्मासीविसे अपज्जत्तसंखेज्ज जाव कम्मासीविसे ?, गो०! शेषं लिखितमेवास्ते ॥ 'दस ठाणाइं'ति (सू. ३१६) दश स्थानानि—वस्तूनि, गुणपर्यायाश्रितत्वात्, छद्मस्थ इहावध्यादिज्ञानरहितो गृह्यते, अन्यथा अमूर्त्तत्वेन धर्मास्तिकायादीनजानन्नपि परमाण्वादि जानात्येवासौ, मूर्त्तत्वात् तस्य, समस्तमूर्त्तविषयत्वाच्चावधिविशेषस्य, 'सव्वभावेणं'ति इत्युक्तं, ततश्च तत्कथञ्चिज्ज्ञानन्नपि अनन्तपर्यायतया न जानातीति, सत्यं, परं दशेति सङ्ख्यानियमो व्यर्थः स्यात्, बहूनामपि घटादीनामर्थानामकेवलिना सर्वपर्यायतया ज्ञातुमशक्यत्वात्, सर्वभावेन च साक्षात्करणं चक्षुःप्रत्यक्षेणेति हृदयं, श्रुतज्ञानादिना त्वसाक्षात्कारेण जानात्यपि, 'जीवं'ति अशरीरप्रतिबद्धं—देहमुक्तं, सिद्धमित्यर्थः, 'सव्वभावेणं'ति केवलज्ञानेनेति हृदयं ॥'आभिणिबोहिय'त्ति (सू. ३१७) अर्थाभिमुखोऽपि पर्यायरूपत्वात् नियतोऽसंशयरूपत्वाद् बोधो—ज्ञानमभिनिबोधः स्वार्थिकप्रत्ययोपादानादाभिनिबोधिकं, 'उग्गहे'त्ति अत्र इति—प्रथमतो वस्तुग्रहणमवग्रहः, 'ईह'त्ति सदर्थविशेपालोचनमीहा, 'अवाय'त्ति प्रक्रान्तार्थविनिश्चयोऽवायः, अवगतार्थविशेषधरणं धारणा ४, 'जहे'ति यथा 'राजप्रश्नीये' ज्ञानानां भेदो—विचारो भणितः तथेहापि भणितव्यः, स चैवम्—'से किं तं उग्गहे पण्णत्ते ?, उग्गहे दुविहे पण्णत्ते, तं०—अत्थोवग्गहे वंजणोव०'इत्यादि, 'विभंगनाणे'त्ति विरुद्धा भङ्गा—विकल्पा यस्मिन् तद्विभङ्गज्ञानं, 'वंजणोवग्गहे'त्ति व्यज्यतेऽर्थोऽनेन दीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेन्द्रियं तेनावग्रहो व्यञ्जनावग्रहः, 'जहा आभिणि'त्ति यथा मतिज्ञानं तथा मत्यज्ञानमप्यध्येयं, तच्चैवम्—'से किं तं वंजणावग्गहे ?, २ चउव्विहे पं०, तं० सोइंदियवं० जिब्भि-

दियवं० घाणिंदियवं० फासिंदियवंजणुग्गहे 'एगडियवज्जं'ति इहापि आभिणिबोहियनाणे अगिण्हणयाए अवधारणाए अवलंबणयाए मेहाए'इत्यादिपदानि पञ्चैकार्थिकान्यवग्रहादीनामधीतानि, मत्यज्ञाने तु न तान्यध्येयानि इति भावः, 'जाव नोइंदियधारण'त्ति इदमन्त्यपदं यावदित्यर्थः,'जं इमं अण्णाणिएहिं' यदिदं मत्यज्ञानिकैः,अत आह–'मिच्छादिट्ठीहिं'ति मिथ्यादृष्टिभिः 'जहा नंदीए'त्ति तत्रैतत्सूत्रं सच्छंदबुद्धिमइविगप्पियं, तं०–भारहं रामायण'मित्यादि, 'संगोवंग'त्ति इहाङ्गानि–शिक्षादीनि पट् उपाङ्गानि–तद्व्याख्यारूपाणि,'गामसंठिए'त्ति ग्रामालम्बनत्वात् ग्रामाकारमेव, एवमन्यान्यपि 'वाससंठिए' भरतादिवर्षाकारं 'वासहर'त्ति हिमवदादिवर्षधरपर्वताकारं 'पसय'त्ति पसय आटव्यो द्विखुरश्चतुष्पदविशेषः, एवं विविधसंस्थानसंस्थितमिति, 'अत्थेगइया एगनाणी' केवलज्ञानीति, 'नेरइयाणं'ति 'तिन्नाणी'ति सम्यग्दृष्टिनारकाणां भवप्रत्ययमवधिज्ञानमस्तीतिकृत्वा नियमात् त्रिज्ञानिनः, 'अन्नाणी ते अत्थेगइया दुअन्नाणी'ति, कथं स्यात् ?, असंज्ञिनस्संतो ये नारकेषूत्पद्यन्ते तेषामपर्याप्तावस्थायां विभङ्गाभावादाद्यमेवाज्ञानद्वयमस्ति, ततो द्व्यज्ञानिनः, ये तु मिथ्यादृशः संज्ञिभ्य उत्पद्यते तेषां भवप्रत्ययविभङ्गे सति ते त्र्यज्ञानिनः, 'बेइंदियाणं'ति द्वीन्द्रियाः केचित् ज्ञानिनः सास्वादनसम्यग्दर्शनभावादपर्याप्तकावस्थायां स्युरित्युच्यते 'नाणी'ति ॥ अथ गत्यादि २० द्वारगाथाद्वयमाह–"गइ १ इंदिए य २ काए ३ सुहुमे ४ पज्जत्तए ५ भवत्थे य ६। भवसिद्धिए य ७ सन्नी ८ लद्धी ९ उवओग १० जोगे य ११ ॥ १ ॥ लेसा १२ कसाय १३ वेयण १४ आहारे १५ नाणगोयरे १६ काले १७। अंतर १८ अप्पाबहुयं १९ पज्जवा २० चेव दाराइं ॥२॥" 'निरयगइ'त्ति(सू.३१८)निरये गतिर्येषां ते निरयगतिकास्तेषां, इह च सम्यग्दृष्टयो मिथ्यादृष्टयो वा ज्ञानिनोऽज्ञानिनो वा ये पञ्चेन्द्रियतिर्यङ्मनुष्येभ्यो नरके उत्पत्तुकामा अन्तरगतौ वर्त्तन्ते ते निरयगतिका विव-

क्षिताः, एतत्प्रयोजनत्वाद् गतिग्रहणस्येति, 'तिन्नि नाणाइं नियम'त्ति अवधेर्भवप्रत्ययेनान्तरगतावपि भावात्, 'तिण्णि अण्णाणाइं भयणाए'त्ति असंज्ञिनां नरके गच्छतां द्वे अज्ञाने, अपर्याप्तकत्वे विभङ्गाभावात्, संज्ञिनां मिथ्यादृष्टीनां त्रीण्यज्ञानानि भवप्रत्ययविभङ्गसद्भावात् अतस्त्रीण्यज्ञानानि भजनयेत्युच्यते, 'तिरियगइयाणं'ति तिर्यग्गतिकानां तदपान्तरालवर्त्तिनां 'दो नाण'त्ति सम्यग्दृष्टयोऽवधिज्ञाने पतित एव तिर्यक्षु गच्छन्ति तेन तेषां द्वे एव ज्ञाने 'दो अन्नाणे'त्ति मिथ्यादृष्टयो विभङ्गज्ञाने पतित एव तिर्यक्षु गच्छन्ति तेन तेषां द्वे अज्ञाने, 'मणुस्सगइयाणं'ति 'तिण्णि नाणाइं भयणाए'त्ति मनुष्यगतौ गच्छन्तः केचिज्ज्ञानिनोऽवधिज्ञानेन सहैव गच्छन्ति, तीर्थकरवत्, केचिच्च तद्विमुच्येति, तेषां त्रीणि वा द्वे वा ज्ञाने स्यातामिति, ये पुनरज्ञानिनो मनुष्यगतावुत्पत्तुकामास्तेषां पतित एव विभङ्गे तत्रोत्पत्तिः स्यात् अत उक्तम्–'दो अन्नाणाइं नियम'त्ति, 'देवगइय'त्ति देवगतौ ये ज्ञानिनो यातुकामास्तेषामवधिर्भवप्रत्ययो देवायुःप्रथमसमय एवोत्पद्यते अतस्तेषां नारकाणामिवोच्यते 'तिन्नि नाणाइं नियम'त्ति, ये त्वज्ञानिनस्तेऽसंज्ञिभ्य उत्पद्यमाना द्व्यज्ञानिनः, अपर्याप्तकत्वे विभङ्गाभावात्, संज्ञिभ्य उत्पद्यमानास्तु त्र्यज्ञानिनो, भवप्रत्ययविभङ्गसद्भावात्, अतस्तेषां नारकाणामिवोच्यते 'तिण्णि अण्णाणाइं भयणाए' 'जहा सिद्ध'त्ति यथा सिद्धाः केवलज्ञानिन एव, एवं सिद्धिगतिका अपि वाच्या इति भावः, यद्यपि सिद्धानां सिद्धगतिकानां चान्तरगत्यभावान्न विशेषोऽस्ति तथापि इह गतिद्वारबलायातत्वात्ते दर्शिताः, 'सइंदिया णं भंते'त्ति सेन्द्रिया–इन्द्रियोपयोगवन्तः, ते च ज्ञानिनोऽज्ञानिनश्च, ज्ञानिनां चत्वारि ज्ञानानि भजनया, स्यात् द्वे स्यात् त्रीणि स्यात् चत्वारि, केवलज्ञानं नास्ति तेषां, अनिन्द्रियज्ञानत्वात्तस्य, द्व्यादिभावो ज्ञानानां लब्ध्यपेक्षया, उपयोगापेक्षया तु सर्वेषामेकदैकमेव ज्ञानं, अज्ञानिनां तु त्रीण्यज्ञानानि भजनयैव, स्यात् द्वे स्यात् त्रीणि

इति, 'जहा पुढविकाइय'त्ति एकेन्द्रिया मिथ्यादृष्टित्वादज्ञानिनस्ते च द्व्यज्ञाना एवेत्यर्थः,'बेंदिये'त्यादि, एषां द्वे ज्ञाने सास्वादनस्तेपूत्पद्यते इतिकृत्वा, सास्वादनश्चोत्कृष्टतः षडावलिकामानः, अतो द्वे ज्ञाने तेषु लभ्येते, 'अणिंदि'त्ति अनिन्द्रियाः—केवलिनः 'सकाइया णं'ति सह कायेन—औदारिकादिशरीरेण पृथ्व्यादिषट्कायान्यतरेण वा ये ते सकायिकाः, ते च केवलिनोऽपि स्युरिति सकायिकानां सम्यग्दृशां पञ्च ज्ञानानि, मिथ्यादृशां तु त्रीण्यज्ञानानि भजनया स्युरिति, अकायिकास्सिद्धा एवेति। सूक्ष्मद्वारे 'जहा पुढवि'त्ति द्व्यज्ञानिनः सूक्ष्माः, मिथ्यादृक्त्वात्, 'जहा सकाइ'त्ति बादराः केवलिनोऽपि स्युरिति ते सकायिकवद् भजनया पञ्चज्ञानिनः त्र्यज्ञानिनश्च वाच्याः। पर्याप्तकद्वारे चतुर्विंशतिदण्डके पर्याप्तकनारकाणां त्रीण्यज्ञानानि नियमात्, अपर्याप्तकानामेवासंज्ञिनारकाणां विभङ्गाभाव इति पर्याप्तावस्थायां तेषामज्ञानत्रयमेवेति 'एवं जाव चउरिंदिय'त्ति द्वित्रिचतुरिन्द्रियाः पर्याप्तका द्व्यज्ञानिन एवेत्यर्थः, 'पज्जत्ता णं भंते! पंचिंदियतिरिक्ख'त्ति पर्याप्तकपञ्चेन्द्रियतिरश्चामवधिर्विभङ्गो वा केषांचित् स्यात् केषांचिन्नेति त्रीणि ज्ञानानि अज्ञानानि वा द्वे ज्ञाने अज्ञाने वा तेषां स्यातामिति,'बेंदियाणं दो नाण'त्ति अपर्याप्तकद्वीन्द्रियादीनां केषांचित्सास्वादनसम्यग्दर्शनसद्भावात् द्वे ज्ञाने, केषांचित्तु तदभावात् द्वे अज्ञाने, अपर्याप्तकनराणां सम्यग्दृशामवधिभावे ज्ञानत्रयं यथा तीर्थकृतां, तदभावे तु द्वे ज्ञाने, मिथ्यादृशां तु द्वे अज्ञाने, तेषामपर्याप्तकत्वे विभङ्गाभावात्, अत एवोक्तम्—'तिन्नि नाणाइं भयणाए दोण्णि अण्णाणा नियम'त्ति,'वाणमंतर'त्ति व्यन्तरा अपर्याप्तका नारका इव त्रिज्ञानाः त्र्यज्ञाना वा वाच्याः, तेष्वसंज्ञिभ्य उत्पद्यमानानामपर्याप्तकानां विभङ्गाभावात्, शेषाणां चावधेर्विभङ्गस्य च भावादिति, 'जोइसिय'त्ति एतेषु संज्ञिभ्य एवोत्पद्यन्ते, तेषामपर्याप्तकत्वेऽपि भवप्रत्ययस्यावधेर्विभङ्गस्य वाऽवश्यंभावात् त्रीणि ज्ञानानि अज्ञानानि वा स्युरिति।

भवस्थद्वारे 'निरयभवत्थाणं'ति निरयभवे तिष्ठन्तीति निरयभवस्थाः—प्राप्तोत्पत्तिस्थानाः, ते च यथा निरयगतिकास्त्रिज्ञाना द्व्यज्ञानाश्चोक्तास्तथा वाच्या इति। भव्यद्वारे 'जहा सकाइय'त्ति भवसिद्धिकाः केवलिनोऽपि ते सकायिकवद् भजनया पञ्चज्ञानाः, तथा यावत् सम्यक्त्वं न प्रतिपन्नास्तावद् भजनयैव त्र्यज्ञानाश्च वाच्या इति, अभवसिद्धिकानां त्वज्ञानत्रयं भजनया स्यात्, सदा मिथ्यादृष्टित्वात्तेषां, अत उक्तम्—'नो नाणी, अन्नाणी'त्यादि। संज्ञिद्वारे 'जहा सइंदिय'त्ति ज्ञानानि चत्वारि भजनया, अज्ञानानि च त्रीणि तथैव, 'असन्नी जहा बेंदिय'त्ति अपर्याप्तकत्वे ज्ञानद्वयमपि सास्वादनतया स्यात्, पर्याप्तत्वेऽज्ञानद्वयमेवेति। लब्धिद्वारे 'कइविहा णं'ति (सू. ३१९) तत्र लब्धिः—आत्मनो ज्ञानादिगुणानां तत्कर्मक्षयापादितो लाभः, स च दशधा, ज्ञानपञ्चकस्य ज्ञानावरणक्षयक्षयोपशमाभ्यां लब्धिर्ज्ञानलब्धिः, एवमन्यत्रापि, नवरं दर्शनं रुचिरूप आत्मपरिणामः, चरित्रं—चारित्रमोहनीयकर्मक्षयक्षयोपशमोपशमजो वा जीवपरिणामः, तथा चरित्रं च तदचरित्रं च चरित्राचरित्रं—संयमासंयमः, तच्चाप्रत्याख्यानकषायक्षयोपशमजो जीवपरिणामः, दानादिलब्धयः पञ्चान्तरायक्षयक्षयोपशमजाः, 'इंदियलद्धि'त्ति स्पर्शनाद्येकेन्द्रियादि इन्द्रियलब्धिमतिज्ञानावरणक्षयक्ष योपशमजा पञ्चान्तरायक्षयक्षयोपशमजा, 'सम्मदंसणलद्धी'त्ति इह सम्यग्दर्शनं मिथ्यात्वमोहनीयकर्माणुवेदनो १ पशम २ क्षय ३ समुत्थ आत्मपरिणामः, मिथ्यादर्शनं त्वशुद्धमिथ्यात्वदलिकोदयसमुत्थजीवपरिणामः, 'सामाइयचरित्तलद्धि'त्ति सावद्ययोगविरतिरूपं सामायिकचारित्रं तल्लब्धिः, सामायिकचारित्रं द्विधा—इत्वरं यावत्कथिकं च, इत्वरं अल्पकालं, तच्च भरतैरावतप्रथमान्तिमजिनतीर्थेष्वनारोपितव्रतस्य शैक्षकस्येति, यावत्कथिकं तु यावज्जीविकं, तच्च विदेहमध्यमजिनतीर्थगतसाधूनामवसेयं, तेषामुपस्थापनाभावात्, नन्वितरस्यापि यावज्जीवतया प्रतिज्ञानात् तस्यैवोपस्थापनायां परित्यागात् कथं न

प्रतिज्ञालोपः ?, अत्रोच्यते, अतिचाराभावात्, तस्यैव सामान्यतः सावद्ययोगनिवृत्तिरूपेणावस्थितस्य शुद्ध्यन्तरापादनेन संज्ञामात्रविशेषादिति, 'छेओवट्ठाव'त्ति छेदे-प्राक्तनसंयमपर्यवच्छेदे सति यदुपस्थापनीयं-महाव्रतारोपणीयं तत् छेदोपस्थापनीयं-पूर्वपर्यायच्छेदेन महाव्रतारोपणमिति, तच्च सातिचारमनतिचारं च, तत्रानतिचारं यदित्वरसामायिकस्य शिष्यस्यारोप्यते, तीर्थान्तरसंक्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वीरतीर्थं संक्रामतः पञ्चयामधर्मप्राप्तौ, सातिचारं तु मूलगुणघातिनो व्रतारोपणं तच्छेदोपस्थापनीयं। 'परिहार'त्ति परिहारः-तपोविशेषः तेन विशुद्धिर्यस्मिन् तत्परिहारविशुद्धिकं, तत् द्विधा-निर्विशमानकं निर्विष्टकायिकं चेति, निर्विशमानकास्तदासेवकास्तदव्यतिरेकात् तदपि निर्विशमानकं, आसेवितविवक्षितचारित्रकायास्तु निर्विष्टकायास्त एव निर्विष्टकायिकाः तदव्यतिरेकात् तदपि निर्विष्टकायिकं, इह च नवको गणः स्यात्, तत्र चत्वारः परिहारिका स्युः अन्ये तदन्ये तद्वैयावृत्त्यकराश्चत्वार एवानुपरिहारिकाः, एकस्तु कल्पस्थितो वाचनाचार्यो गुरुभूतः, एतेषां च निर्विशमानकानामयं परिहारः—"परिहारियाण उ तवो जहण्ण मज्झो तहेव उक्कोसो। सीउण्हवासकाले भणिओ वीरेहिं पत्तेयं ॥१॥ तत्थ जहण्णो गिम्हे चउत्थ छट्ठं तु होइ मज्झिमओ। अट्ठममिह उक्कोसो इत्तो सिसिरे पवक्खामि ॥२॥ सिसिरे उ जहण्णाई छट्ठाई दसमचरमगा हुंति। वासासु अट्ठमाई बारसपज्जंतओ नेओ ॥३॥ पारणगे आयामं पंचसु गह दोसऽभिग्गहो भिक्खे। कप्पट्ठिया य पइदिण करेंति एमेव आयामं ॥४॥" इह सप्तस्वेषणासु मध्ये आद्ययोरग्रह एव, पंचसु पुनर्ग्रहः, तत्राप्येकतरया भक्तं वा पानकं वा, एवं द्वयोरभिग्रहोऽवगन्तव्य इति, "एवं छम्मासतवं चरिउं परिहारगा अणुचरंति। अणुचरगे परिहारियपयट्ठिए जाव छम्मासा ॥५॥ कप्पट्ठिओऽवि एवं छम्मास तवं करेइ सेसा उ। अणुपरिहारगभावं वयंति कप्पट्ठियत्तं च ॥६॥ (इय एसो) अट्ठारसमासपमाणो य वण्णिओ कप्पो। संखेवओ विसेसो सुत्ता एयस्स

नायव्वो ॥७॥ कप्पसम्मत्तीइ तयं जिणकप्पं वा उविंति गच्छं वा । पडिवज्जमाणगा पुण जिणस्सगासे पवज्जंति ॥८॥ तित्थयरसमीवासेवगस्स पासेऽवि नेव अन्नस्स । एएसिं जं चरणं परिहारविसुद्धियं तं तु ॥९॥' अन्यैस्तु व्याख्यातम्—परिहारतो मासिक चतुर्लघ्वादि तपश्चरति यः तस्य परिहारचरित्रलब्धिः स्यात्, इदं च परिहारतपो यथा स्यात् तथोच्यते—"णवमस्स तइय वत्थुं जहण्ण उक्कोस ऊणगा दस उ । सुत्तत्थभिग्गहा पुण दव्वाइ तवो रयणमाई ॥१॥" अयमर्थः—जघन्यतो यस्य नवमपूर्वतृतीयं वस्तु यावद्भवति, उत्कर्षतस्तु दश पूर्वाणि न्यूनानि सूत्रतोऽर्थतश्च स्युः, द्रव्यादयश्चाभिग्रहाः, रत्नावल्यादि तपः, तस्य परिहारतपो दीयते, तद्दाने च निरुपसर्गार्थं कायोत्सर्गो विधीयते, शुभे क्षणे तत्प्रतिपत्तिः, गुरुस्तं ब्रूते—यथाऽहं तव वाचनाचार्यः अयं गीतार्थसाधुस्सहायस्ते, शेषसाधवोऽपि वाच्याः, यथा—'एस तवं पडिवज्जइ न कंचि आलवइ मा य आलवह । अत्तट्ठचिंतगस्सा वाघाओ भे ण कायव्वो' ॥१॥ तथा कथमहमिहालापादिरहितस्सन् तपः करिष्यामि एवं बिभ्यतस्तस्य भयापहारः कार्यः, कल्पस्थितस्य तस्यैतत्कुर्यात्—किइकम्मं च पडिच्छइ परिण्ण पडिपुच्छयंपि सो देइ । सोवि य गुरुमुवचिट्ठइ, उदन्तमवि पुच्छिओ कहइ ॥ २ ॥ इह परिण्णा—परिज्ञा प्रत्याख्यानं, प्रतिपृच्छा त्वालापकः, यदा स ग्लानीभूत उत्थानादिकर्तुकामोऽस्मि (इति ब्रूते) ततोऽनुपरिहारिकस्तूष्णीक एव तदभिप्रेतं सर्वमपि कुर्यात्, आह च—"उट्ठेज्ज निसीइज्जा भिक्खं हिंडेज्ज भंडगं पेहे । कुवियपियबंधवस्स व करेइ इयरोऽवि तुसिणीओ ॥३॥" तपश्च तस्य ग्रीष्मशिशिरवर्षासु जघन्यादिभेदेन चतुर्थादिद्वादशान्तं प्रागुक्तमेवेति, उक्तः परिहारतपोविधिः। 'सुहुमसंपराय'न्ति संपरैति संसारमेभिरिति सम्परायाः, सूक्ष्मा—लोभांशावशेषरूपाः सम्परााया यत्र तत्सूक्ष्मसम्परायं, एतदपि द्विधा—विशुद्ध्यमानकं संक्लिश्यमानकं चेति, तत्र विशुद्ध्यमानकं क्षपकोपशमश्रेणिमारूढस्य स्यात्, सङ्क्लिश्यमानकं तु उपशमश्रे-

णीतः प्रत्ययमानस्येति, 'अहक्खायचरित्त'त्ति यथा–येन प्रकारेणाख्यातं–अभिहितं अकषायतयेति तथैव यत् तत् यथाख्यातं, तदपि द्विधा–उपशमकक्षपकश्रेणिभेदात्, शेषं तथैव, 'चरित्ताचरित्ते'त्ति 'एगागारा' मूलोत्तरगुणादीनां तद्भेदानामविवक्षणात् द्वितीयकषायक्षयोपशमलक्षणपरिणाममात्रस्यैव विवक्षणाच्चरित्राचरित्रलब्धेरेकाकारत्वमवसेयं, एवं दानादिलब्धीनामेकाकारत्वं भेदानामविवक्षणात्, 'बालवीरिय'त्ति बालस्य–असंयतस्य यद्वीर्यमसंयमयोगप्रवृत्तिहेतुभूतं तस्य या लब्धिश्चारित्रमोहोदयाद्वीर्यान्तरायक्षयोपशमाच्च सा तथा, एवमन्ये अपि यथायोगं वाच्ये, नवरं पण्डितः–संयतः बालपण्डितः–संयतासंयतः श्राद्धः। 'तस्स अलद्धियाणं'ति तस्य–ज्ञानस्य अलब्धिकाः, ज्ञानलब्धिरहिता इत्यर्थः, 'आभिणिबोहियनाणे'त्यादि, आभिनिबोधिकज्ञानलब्धिकानां चत्वारि ज्ञानानि भजनया, केवलिनो नास्ति आभिनिबोधिकज्ञानमिति। मतिज्ञानस्यालब्धिकास्तु ये ज्ञानिनस्ते केवलिनस्ते एकज्ञानिन एव, ये त्वज्ञानिनस्ते अज्ञानद्वयवन्तः अज्ञानत्रयवन्तो वा, एवं श्रुतेऽपि, 'ओहिनाणलद्धि'त्ति अवधिज्ञानलब्धिकास्त्रिज्ञानाः केवलमनःपर्यायाभावे, चतुर्ज्ञाना वा केवलाभावात्, अवधिज्ञानस्यालब्धिका ये ज्ञानिनस्ते द्विज्ञानिनो मतिश्रुतभावात्, त्रिज्ञाना वा मतिश्रुतमनःपर्यायभावात्, एकज्ञाना वा केवलभावात्, ये त्वज्ञानिनस्ते द्व्यज्ञाना वा मत्यज्ञानश्रुताज्ञानभावात्, त्र्यज्ञाना वा विभङ्गभावात्, 'मणपज्जव'त्ति मनःपर्यवज्ञानलब्धिकास्त्रिज्ञानाः, अवधिकेवलाभावात्, चतुर्ज्ञाना वा, केवलाभावात्, मनःपर्यवज्ञानालब्धिकास्त्रिज्ञाना अवधिकेवलाभावात्, अलब्धिकास्तु ये ज्ञानिनस्ते द्विज्ञानाः, आद्यद्वयभावात्, त्रिज्ञाना वा आद्यत्रयभावात्, एकज्ञाना वा केवलभावात्, ये त्वज्ञानिनस्ते द्व्यज्ञाना आद्याज्ञानद्वयभावात्, त्र्यज्ञाना वा अज्ञानत्रयभावात्, 'केवलनाण'त्ति केवलज्ञानलब्धिकाः केवलज्ञानिन एव, केवलज्ञानालब्धिकास्तु ये ज्ञानिनस्तेषामाद्यं ज्ञानद्वयं, त्रयं मतिश्रुत-

मनःपर्यायज्ञानानि वा केवलज्ञानवर्जानि चत्वारि वा ज्ञानानि स्युः, ये त्वज्ञानिनस्तेषामाद्यमज्ञानद्वयं तत्रयं वा स्याद्, एवं भजना अवसेयेति। 'अन्नाणलद्धियाणं'ति अज्ञानलब्धिका अज्ञानिनस्तेषां त्रीण्यज्ञानानि भजनया, द्वे अज्ञाने त्रीण्यज्ञानानि वा, अज्ञानालब्धिकास्तु ज्ञानिनः, तेषां च पञ्च ज्ञानानि भजनया पूर्वोपदर्शितया वाच्यानि, 'जहा अन्नाणे'त्यादि, यथा अज्ञानलब्धिकानां त्रीण्यज्ञानानि भजनयोक्तानि मत्यज्ञानश्रुताज्ञानलब्धिकानामपि तानि तथैव, तथा अज्ञानालब्धिकानां पञ्च ज्ञानानि भजनयोक्तानि मत्यज्ञानश्रुताज्ञानालब्धिकानामपि पञ्च ज्ञानानि भजनयैव वाच्यानि, विभङ्गज्ञानलब्धिकानां त्रीण्यज्ञानानि नियमात्, तदलब्धिकानां पञ्च ज्ञानानि भजनया, अज्ञानिनां च द्वे अज्ञाने नियमादिति। 'दंसणलद्धि'त्ति दर्शनलब्धिकाः, श्रद्धानमात्रलब्धिका इत्यर्थः, ते च सम्यक्श्रद्धानवन्तो ज्ञानिनस्तदितरे त्वज्ञानिनः, तत्र ज्ञानिनां पञ्च ज्ञानानि भजनया, अज्ञानिनां तु त्रीण्यज्ञानानि भजनयैवेति, 'तस्स अलद्धिया नत्थि'त्ति तस्य–दर्शनस्य येषामलब्धिस्ते न संत्येव, सर्वजीवानां रुचिमात्रस्यास्तित्वादिति, 'सम्मदंसणलद्धि'त्ति सम्यग्दर्शनलब्धिकानां 'तस्स अलद्धि'त्ति तस्यालब्धिकानां–सम्यग्दर्शनस्यालब्धिमतां मिथ्यादृष्टीनां मिश्रदृष्टीनां च त्रीण्यज्ञानानि भजनया, यतो मिश्रदृष्टीनामप्यज्ञानमेव, तात्त्विकसद्बोधाहेतुत्वान्मिश्रस्येति, 'मिच्छादंसणलद्धि'त्ति मिथ्यादृशां, 'तस्स अलद्धि'त्ति तस्यालब्धिकानां मिथ्यादर्शनालब्धिमतां सम्यग्दृशां मिश्रदृष्टीनां च क्रमात् पञ्च ज्ञानानि त्रीण्यज्ञानानि च भजनयेति, 'चरित्तलद्धि'त्ति चरित्रलब्धिका ज्ञानिन एव, तेषां पञ्च ज्ञानानि भजनया, यतः केवल्यपि चारित्री, चरित्रालब्धिकास्तु ये ज्ञानिनस्तेषां मनःपर्यववर्जानि चत्वारि ज्ञानानि भजनया स्युः, कथं ?, असंयतत्वे आद्यं ज्ञानद्वयं तत्रयं वा, सिद्धत्वे च केवलज्ञानं, सिद्धानामपि चारित्रलब्धिशून्यत्वाद्, यतस्ते 'नो चारित्रिणो नो अचारित्रिण' इति, ये त्वज्ञानिनस्तेषां

त्रीण्यज्ञानानि भजनया, 'सामाइय'त्ति सामायिकचारित्रलब्धिका ज्ञानिन एव, तेषां च केवलवर्जानि चत्वारि ज्ञानानि भजनया, सामायिकचारित्रालब्धिकास्तु ये ज्ञानिनस्तेषां पञ्च ज्ञानानि भजनया, छेदोपस्थापनीयादिभावेन सिद्धत्वेन वा, ये त्वज्ञानिनस्तेषां त्रीण्यज्ञानानि भजनया, एवं छेदोपस्थापनीयादिष्वपि वाच्यं, एतदेवाह-'एवं'ति तत्र छेदोपस्थापनीयादिचारित्रत्रयलब्धयो ज्ञानिन एव, तेषां चाद्यानि चत्वारि ज्ञानानि भजनया, ये त्वज्ञानिनस्तेषामज्ञानत्रयं भजनयैव, यथाख्यातचारित्रलब्धिकानां तु विशेषोऽस्ति अतस्तद्दर्शनायाह-'नवरमहक्खाय'त्ति सामायिकादिचारित्रचतुष्टयलब्धिमतां छद्मस्थत्वेन चत्वार्येव ज्ञानानि भजनया, यथाख्या-तचारित्रलब्धिमतां छद्मस्थेतरभावेन पञ्चापि भजनया स्युरिति तेषां तथैव तान्युक्तानि, 'चरित्ताचरित्त'त्ति 'तस्स अलद्धि'त्ति चारित्राचारित्रालब्धिकाः श्रावकादन्ये, ते च ये ज्ञानिनस्तेषां पञ्च ज्ञानानि भजनया, ये त्वज्ञानिनस्तेषां त्रीण्यज्ञानानि भजनयैव, 'दाणलद्धि'त्ति दानान्तरायक्षयक्षयोपशमाद् दाने दातव्ये लब्धिर्येषां ते दानलब्धिकाः, ते ज्ञानिनोऽज्ञानिनश्च, तत्र ये ज्ञानिनस्तेषां पञ्च ज्ञानानि भजनया, केवलिनामपि दानलब्धियुक्तत्वात्, ये त्वज्ञानिनस्तेषां त्रीण्यज्ञानानि भजनयैव, दानालब्धिकास्सिद्धास्ते दाना-न्तरायक्षयेऽपि दातव्याभावात् सम्प्रदानासत्त्वात् दानप्रयोजनाभावाच्च दानालब्धय उक्ताः, ते च नियमात् केवलज्ञानिन इति, 'एवं'ति लाभभोगोपभोगवीर्यलब्धय एवं ज्ञेयाः, तदलब्धयः सिद्धानामेवोक्तन्यायादवसेयाः, ननु दानाद्यन्तरायक्षयात् केवलिनां दानादयः कस्मान्न स्युः ?, उच्यते, प्रयोजनाभावात्, कृतकृत्यास्ते भगवन्तः, 'बालवीरिय'त्ति बालवीर्यलब्धयोऽसंयताः तेषां ज्ञानिनां त्रीणि ज्ञानानि, अज्ञानिनां च त्रीण्यज्ञानानि भजनया, तदलब्धिकास्तु संयतासंयताः संयताश्च ते च ज्ञानिन एव, तेषां पञ्च ज्ञानानि भजनया, 'पंडियवीरिय'त्ति 'तस्स अलद्धि'त्ति असंयतानां संयतासंयतानां सिद्धानां चेत्यर्थः, तत्रासंयतानामाद्यं

ज्ञानत्रयं अज्ञानत्रयं च भजनया, संयतासंयतानां तु ज्ञानत्रयं भजनयैव स्यात्, सिद्धानां तु केवलज्ञानमेव, 'मणपज्जव'त्ति मनःपर्यायज्ञानं तु पण्डितवीर्यवतामेव स्यात्, नान्येषां, अत उक्तम्—मनःपर्यायवर्जानि, सिद्धानां च वीर्यालब्धिकत्वं पण्डितवीर्यवाच्यप्रत्युपेक्षणादिअनुष्ठाने प्रवृत्त्यभावात्, 'बालपंडिए'त्ति 'तस्स अलद्धि'त्ति अश्रावकाणामिति, 'इंदियलद्धि'त्ति इन्द्रियलब्धिका ये ज्ञानिनस्तेषां चत्वारि ज्ञानानि भजनया, केवलं तु नास्ति तेषां, केवलिनामिन्द्रियोपयोगाभावात्, ये त्वज्ञानिनस्तेषामज्ञानत्रयं भजनयैव, इन्द्रियालब्धिकाः केवलिन एव, तेषामेवेन्द्रियोपयोगाभावात्, 'तस्स लद्धि'त्ति श्रोत्रेन्द्रियलब्धिका इन्द्रियलब्धिकवद्वाच्याः, ते च ये ज्ञानिनस्ते अकेवलित्वादाद्यज्ञानचतुष्टयवन्तो भजनया, अज्ञानिनस्तु भजनया द्वित्र्यज्ञानाः, श्रोत्रेन्द्रियालब्धिका ये ज्ञानिनस्ते आद्यद्विज्ञानिनः, ते चापर्याप्तकाः सास्वादनसम्यग्दर्शनिनो विकलेन्द्रियाः, एकज्ञानिनः केवलज्ञानिनः, ते हि श्रोत्रेन्द्रियालब्धिका इन्द्रियोपयोगाभावात्, ये त्वज्ञानिनस्ते चाद्याज्ञानद्वयवन्तः, 'चक्खिंदिय'त्ति अयमर्थः—यथा श्रोत्रेन्द्रियलब्धिमतां भजनया चत्वारि ज्ञानानि त्रीणि वा तदलब्धिकानां द्वे ज्ञाने अज्ञाने वा एकं च ज्ञानमुक्तं एवं चक्षुर्घ्राणलब्धिकानां तदलब्धिकानां च वाच्यं, तत्र चक्षुर्घ्राणलब्धिकाश्च ये पञ्चेन्द्रियास्तेषां केवलवर्जानि चत्वारि ज्ञानानि त्रीणि वा भजनया, ये तु विकलेन्द्रियाश्चक्षुर्घ्राणलब्धिकास्तेषां सास्वादनसम्यग्दर्शनभावे आद्यज्ञानद्वयं, तदभावे त्वाद्यमज्ञानद्वयं, चक्षुर्घ्राणेन्द्रियालब्धिका यथायोगं त्रिद्व्येकेन्द्रियाः केवलिनश्च, तत्र त्रीन्द्रियादीनां सास्वादनसद्भावे आद्ये ज्ञाने, तदभावे आद्ये अज्ञाने, केवलिनामेकं केवलज्ञानं, 'जिब्भिदिय'त्ति, 'तस्स अलद्धिया' जिह्वालब्धिवर्जितास्ते केवलिन एकेन्द्रियाश्च, ये अज्ञानिनस्ते नियमात् द्व्यज्ञानिनः, एकेन्द्रियाणां सास्वादनभावतोऽपि सम्यग्दर्शनासद्भावाद्विभङ्गाभावाच्चेति, 'फासिंदिय'त्ति स्पर्शनेन्द्रियलब्धिकाः केवलवर्जज्ञानच-

तुष्कवन्तो भजनया, तथैव द्व्यज्ञानिनो वा त्र्यज्ञानिनो वा, स्पर्शनेन्द्रियालब्धिकास्तु केवलिन एव, इन्द्रियलब्ध्यलब्धिमन्तोऽप्येवंविधा एव 'जहा इंदिय'त्ति यथा इन्द्रियलब्धिका अलब्धिका वा, उपयोगद्वारे 'सागारोवउत्त'त्ति(सू. ३२०)आकारो-विशेपस्तेन यो बोधस्स साकारो-विशेपग्राहको बोधस्तेनोपयुक्ताः—तत्संवेदका ये ते साकारोपयुक्ताः ज्ञानिनोऽज्ञानिनश्च, तत्र ज्ञानिनां पञ्च ज्ञानानि भजनया, स्यात् द्वे स्यात्त्रीणि स्याच्चत्वारि स्यादेकं, यच्च स्याद् द्वे इत्युच्यते तल्लब्धिमात्रमङ्गीकृत्य, उपयोगापेक्षया एकदा एकमेव ज्ञानमज्ञानं च, अज्ञानिनां तु त्रीण्यज्ञानानि भजनया, 'आभिणि'त्ति 'ओहिनाणे'त्ति अवधिज्ञानसाकारोपयुक्ताः, यथा तल्लब्धिकाः प्रागुक्ताः, स्यात् त्रिज्ञानिनो मतिश्रुतावधियोगात्, स्याच्चतुर्ज्ञानिनो मतिश्रुतावधिमनःपर्यवाभिसम्बन्धात् तथा वाच्याः,'मणपज्जव'त्ति मनःपर्यवज्ञानसाकारोपयुक्ता यथा मनःपर्यवलब्धिकाः प्रागुक्ताः, स्यात्त्रिज्ञानिनो मतिश्रुतमनःपर्यवयोगात्, स्याच्चतुर्ज्ञानिनः केवलवर्जज्ञानयोगात्,'अणागारोवउत्त'त्ति न विद्यते आकारो यत्र तदनाकारं—दर्शनं तत्रोपयुक्ता ये ते ज्ञानिनोऽज्ञानिनश्च, तत्र ज्ञानलब्ध्यपेक्षया पञ्च ज्ञानानि भजनया, अज्ञानिनां तु त्रीण्यज्ञानानि भजनया,'एवं'ति यथा अनाकारोपयुक्ता ज्ञानिनोऽज्ञानिनश्चोक्ता एवं चक्षुर्दर्शनाद्युपयुक्ता अपि, 'नवरं'ति विशेपः पुनरयं—चक्षुर्दर्शनेतरोपयुक्ताः केवलिनो न स्युः, तेषां चत्वारि ज्ञानानि भजनयेति, 'ओहिदंसणअणागारो'त्ति अज्ञाना(अनाकारा)धिकारेऽवधिविभङ्गसाधारणत्वं, यतः-"सागारा, ओहिविभंगा जहण्णगा तुल्ला" इत्युक्तेः अवधिदर्शनयुक्ता अज्ञानिन उच्यन्ते। योगद्वारे 'सजोगिणं'ति, 'जहा सकाइय'त्ति प्रागुक्तकायद्वारे यथा सकायिका भजनया पञ्चज्ञानास्त्र्यज्ञानाश्च उक्तास्तथा सयोगा अपि वाच्याः, एवं मनोयोग्यादयोऽपि, केवलिनोऽपि मनोयोगादीनां भावात् तथा मनोयोगित्वादिमतां मिथ्यादृशामज्ञानत्रयभावाच्च, 'अजोगी'ति

अयोगिनः केवलिन इति । 'जहा सकाइय'त्ति सलेश्याः सकायिकवद् भजनया पञ्चज्ञानाः त्र्यज्ञानाश्च वाच्याः, केवलिनोऽपि शुक्ललेश्यासम्भवेन सलेश्यत्वात्, 'कण्हलेस'त्ति कृष्णलेश्याश्चतुर्ज्ञानिनद्व्यज्ञानिनश्च भजनया, 'सुक्कलेसा जहा सलेस'त्ति पञ्चज्ञानिनो भजनया त्र्यज्ञानिनश्चेति, 'जहा सिद्ध'त्ति एकज्ञानिन इति । कषायद्वारे 'सकसाइ'त्ति केवलवर्जचतुर्ज्ञानिनो भजनयाऽज्ञानिनश्च, 'अकसाईणं'ति अकषायिणां पञ्च ज्ञानानि भजनया, कथं ?, उच्यते छद्मस्थवीतरागः केवली वा अकषायः, तत्र च छद्मस्थवीतरागस्याद्यज्ञानचतुष्कं भजनया स्यात्, केवलिनस्तु पंचममिति । वेदद्वारे 'सवेयग'त्ति सवेदकाः सेन्द्रियवद्भजनया केवलवर्जचतुर्ज्ञानिनद्व्यज्ञानिनश्च वाच्याः,'अवेदग'त्ति अवेदका अकषायिवद्भजनया पञ्चज्ञाना वाच्याः, ततोऽनिवृत्तिबादरादयोऽवेदकास्स्युः,तेषु च छद्मस्थानां चत्वारि ज्ञानानि भजनया केवलिनां तु पञ्चममिति । आहारकद्वारे 'आहारग'त्ति सकषाया भजनया चतुर्ज्ञानाद्व्यज्ञानाश्चोक्ताः, आहारका अप्येवमेव, नवरमाहारकाणां केवलमप्यस्ति, केवलिन आहारकत्वादिति, 'अणाहारग'त्ति मनःपर्यवज्ञानमाहारकाणामेव, आद्यं पुनर्ज्ञानत्रयं च विग्रहे, केवलं वा केवलिसमुद्घातशैलेशीसिद्धावस्थास्वनाहारकाणामपि स्यादत उक्तम्–'मणपज्जवे'त्यादि । आएसेणं'ति (सू. ३२२) आदेशः–प्रकारः सामान्यविशेषरूपः, तत्र चादेशेन–ओघतो द्रव्यमात्रतया, नतु तद्गतसर्वविशेषापेक्षयेति भावः, अथवा आदेशेन श्रुतपरिकर्मिततया सर्वद्रव्याणि–धर्मास्तिकायादीनि जानाति अवायधारणापेक्षयाऽवबुद्ध्यते, ज्ञानस्यावायधारणारूपत्वात्, 'पासइ'त्ति पश्यति अवग्रहेहापेक्षया अवबुद्ध्यते, यतः अवग्रहेहयोर्दर्शनत्वं, आह भाष्यकारः–"णाणमवायधिईओ दंसणमिट्ठं जहोग्गहेहाओ । तह तत्तरुई सम्मं रोइज्जइ जेण तं नाणं ॥१॥ जं सामन्नग्गहणं दंसणमेयं विसेसियं नाणं ।" अवग्रहेहे च सामान्यरूपे, अवायधारणे च विशेषरूपे, 'खेत्तओ'त्ति सर्वं क्षेत्रं

लोकालोकरूपं, एवं कालतो भावतश्चेति, आह च भाष्यकारः—'आएसुत्ति पगारो ओघादेसेण सव्वदव्वाइं। धम्मत्थिकाइयाइं जाणइ न उ सव्वभावेणं ॥१॥ खित्तं लोगालोगं कालं सव्वद्धमहव तिविहंपि। पंचोदइयाईए भावे जा णेयमेवइयं ॥२॥' 'उवउत्ते'त्ति भावश्रुतोपयुक्तः, 'जाणइ'त्ति जानाति विशेषतोऽवगच्छति, श्रुतज्ञानस्य तत्स्वरूपत्वात्, 'पासइ'त्ति पश्यति च श्रुतानुवर्त्तिना मानसेन अचक्षुर्दर्शनरूपेण सर्वद्रव्याणि, अथवा पश्यत्यभिन्नदशपूर्वधरादिः श्रुतकेवली, तदारतस्तु भजना, सा पुनर्मतिविशेषतो ज्ञातव्येति, ननु 'भावओ णं सुयनाणी उवउत्ते सव्वभावे जाणइ'त्ति यदुक्तमिह तत् 'सुए चरित्ते ण पज्जवा सव्वे' इत्यनेन सह कथं न विरुध्यते ?, उच्यते, इह सूत्रे सर्वकथनेन पंचौदयिकादयो भावा गृह्यन्ते, तांश्च सर्वान् जातितो जानाति, 'रूविदव्वाइं'ति रूपिद्रव्याणि पुद्गलद्रव्याणि, तानि च जघन्यतोऽनन्तानि तैजसभापाद्रव्याणामपान्तरालवर्त्तीनि, यदुक्तं—'तेयाभासादव्वाण अंतराइत्थ लहइ पट्ठवओ'त्ति, उत्कृष्टतस्तु सर्ववादरसूक्ष्मभेदभिन्नानि जानाति विशेषाकारेण, ज्ञानत्वात् तस्य, पश्यति सामान्यतः, अवधिज्ञानिनोऽवधिदर्शनस्यावश्यंभावात्, नन्वादौ दर्शनं ततो ज्ञानमिति क्रमस्तत्किमर्थमेनंत्यक्त्वा प्राग्जानातीत्युक्तं, अत्रोच्यते, इहावधिज्ञानाधिकारात् प्राधान्यख्यापनार्थमादौ जानातीत्युक्तं, अवधिदर्शनस्यावधिविभङ्गसाधारणत्वेनाप्रधानत्वात् पश्चात् पश्यतीति, अथवा सर्वा एव लब्धयः साकारोपयोगोपयुक्तस्य उत्पद्यन्ते, लब्धिश्चावधिज्ञानमिति साकारोपयोगोपयुक्तस्यावधिज्ञानलब्धिः स्यात् इत्येतस्यार्थस्य ज्ञापनार्थं साकारोपयोगाभिधायकं जानातीति प्रागुक्तं, ततः क्रमेणोपयोगप्रवृत्तेः पश्यतीति, 'जहा नंदीए' तत्रेदं सूत्रम्—'खेत्तओ णं ओहिनाणी जहण्णेणं अंगुलस्सासंखेज्जभागं० जाणइ पासइ'त्ति, व्याख्या पुनरेवं—क्षेत्रतोऽवधिज्ञानी जघन्येनाङ्गुलस्यासङ्ख्येयभागमुत्कृष्टतोऽसङ्ख्येयान्यलोके शक्तिमपेक्ष्य लोकमितानि खण्डानि जानाति पश्यति, कालतो जघन्यमावलि-

कासङ्ख्येयभागमुत्कृष्टतः असङ्ख्येया उत्सर्प्पिण्यवसर्पिणीरतीता(श्यति)अनागताश्च जानाति पश्येत्, तद्गतरूपिद्रव्यावगमात्, इदं सूत्रं कियद्दूरं वाच्यं 'जाव भावओ'त्ति भावाधिकारं यावदिति, स चैवं—भावतो जघन्यतोऽनन्तान् भावान्, आधारद्रव्यानंतत्वात्, न तु प्रतिद्रव्यमिति, उत्कृष्टतोऽपि तानेवानन्तान् भावान् जानाति पश्यति च, तेऽपि चोत्कृष्टपदिनः सर्वपर्यायाणामनन्तभाग इति। 'उज्जुमइ'त्ति ऋजुमतिर्घटोऽनेन चिन्तित इत्यध्यवसायलक्षणा मनोद्रव्यपरिच्छित्तिरित्यर्थः, 'अणंतपएसिए'त्ति अनन्तपरमाण्वात्मकात्, यथा नन्दीसूत्रे 'खंधे जाणइ पासइ'त्ति तत्र स्कन्धान् पर्याप्तसंज्ञिभिः प्राणिभिरर्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिभिर्मनस्त्वेन परिणमितानित्यर्थः, 'जहा नन्दीए'त्ति कियन्नन्दीसूत्रमिहाध्येयमिति 'जाव भावओ'त्ति भावसूत्रं यावदिति, तच्चैवम्—'भावओ णं उज्जुमई अणंते भावे जाणइ पासइ, सव्वभावाणमणंतं भागं जाणइ पासइ, तं चेव विउलमई विसुद्धतरागं वितिमिरतरागं जाणइ पासइ'त्ति, व्याख्या—विपुला—विशेषग्राहिणी मतिर्घटोऽनेन चिन्तितः, स च सौवर्णः पाटलिपुत्रकोऽद्यतनो महान् इत्यध्यवसायलक्षणा मनोद्रव्यविज्ञप्तिरित्यर्थः, विशुद्धतरकं—निर्मलतरं वितिमिरतरकं—तिमिरकल्पतदावरणक्षयोपशमभावादिति, 'केवलनाणस्स'त्ति इह नन्दीसूत्रम्—'खेत्तओ सव्वं खित्तं, कालओ णं सव्वं कालं, भावओ णं केवली सव्वभावे जाणइ पासइ'त्ति, 'मइअन्नाण'त्ति यावत्करणात् 'खेत्तओ णं मइअन्नाणी मइअन्नाणपरिगयं खित्तं जा० पा० कालओ णं मइ० णी मइ०गयं कालं जाण०, 'सुयअन्नाणपरिगयाइं'ति श्रुताज्ञानेन मिथ्यादृग्गृहीतसम्यक्श्रुतेन लौकिकश्रुतेन वा परिगतानि—विषयीकृतानि, 'आघवेइ'त्ति आग्रहयति, अर्थापयति वा आख्यापयति वा, प्रत्यापयतीत्यर्थः, 'पण्णवेइ' प्रज्ञापयति भेदतः, प्ररूपयति युक्तितः, 'जाणइ'त्ति विभङ्गज्ञानेन 'पासइ'त्ति अवधिदर्शनेनेति, कालद्वारे 'साइए'त्ति इहाद्यः केवली द्वितीयो मत्यादिमान्, तत्राद्यस्य साद्यपर्यव-

सितेतिशब्दतः कालः प्रतीयत इति द्वितीयस्यैव जघन्येतरभेदमाह—'तत्थ णं जे साइए'त्ति 'अंतोमुहुत्तं'ति आद्यज्ञानद्वयमाश्रित्योक्तं, तस्यैव जघन्यतोऽन्तर्मुहूर्त्तमात्रत्वात्, 'छावट्ठिं सागरोवमाइं'ति यदुक्तं तदाद्यज्ञानत्रयमाश्रित्य, तस्यैवोत्कर्षेणैतावत्येव स्थितिः 'दो वारे विजयाइसु' इति वचनात्, 'नाणीआभिणिबोहिय'त्ति ज्ञान्याभिनिबोधिकज्ञानिश्रुतज्ञानिअवधिज्ञानिमनःपर्यायज्ञानिकेवलज्ञानिअज्ञानिमत्यज्ञानिश्रुताज्ञानिविभङ्गज्ञानिनां 'दसण्हं'ति दशानां भेदानां 'संचिट्ठण'त्ति अवस्थितिकालो यथा प्रज्ञापनाष्टादशपदे कायस्थितौ अभिहितस्तथा वाच्यः, तत्र ज्ञानिनां पूर्वमुक्त एवावस्थितिकालः, यत्र प्रागुक्तस्य पुनर्भणनं तदेकप्रकरणपतितत्वात् इति ज्ञेयं, आद्यज्ञानद्वयस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टं तु साधिकानि ६६ सागराणि, अवधिज्ञानेऽप्येवं, नवरं जघन्यतो विशेषः, स चायं—ओहिनाणी जहण्णेणमेक्कं समयं, कथं ?, यदा विभंगज्ञानी सम्यक्त्वं प्रतिपद्यते तत्प्रथमसमय एव विभङ्गमवधिज्ञानं जातं, तत्क्षणमेव तदवधिज्ञानं प्रतिपतति तदा एकं समयमवधिरित्युक्तः, 'मणपज्जवणाणीणं भंते ! पुच्छा जहण्णेणमेक्कं समयं उक्कोसेणं देसूणा पुव्वकोडी'त्ति, कथं ?, संयतस्याप्रमत्ताद्धायां वर्त्तमानस्य मनःपर्यायज्ञानमुत्पन्नं तत उत्पत्तिसमयसमनन्तरमेव विनष्टं इत्येकं समयं, तथा चरणकाल उत्कृष्टो देशोना पूर्वकोटी तत्प्रतिपत्तिसमनन्तरमेव यदा मनःपर्यवज्ञानमुत्पन्नं आजन्म स्थितं तदा मनःपर्यायज्ञानस्योत्कर्षतो देशोना पूर्वकोटी स्यादिति, 'केवलनाणीणं पुच्छा, गोयमा ! साइए अपज्जवसिए, अन्नाणी १ मइअ० २ सुयअण्णाणीणं ३ पुच्छा, गो० ! एए तिण्णिवि तिविहे पण्णत्ते, तंजहा—अणाइए अपज्जवसिए १ अभव्यानां, अणाइए सपज्जवसिए २ भव्यानां, साइए सपज्जवसिए ३ सम्यक्त्वभ्रष्टानां, 'तत्थ णं जे से साइए सपज्जवसिए से जहण्णेणमंतोमुहुत्तं, सम्यक्त्वपतितस्य अन्तर्मुहूर्त्तोपरि सम्यक्त्वप्रतिपत्तौ, उक्कोसेणमणंतं कालं अणंता ओस-

प्पिणिउस्सप्पिणीओ कालओ, खेत्तओ अवड्ढपोग्गलपरियट्टं देसूणं, सम्यक्त्वभ्रष्टस्य वनस्पत्यादिष्वनन्ता उत्सर्पिणीरतिवाह्य पुनः प्राप्तसम्यग्दर्शनस्येति, विभङ्गणाणीणं भंते ! पुच्छा, गो० ! जह० एक्कं समयं, उत्पत्तिसमयानन्तरमेव प्रतिपाते, 'उक्कोसेणं तेत्तीसं सागरोवमाइं देसूणपुव्वकोडीअब्भहियाइं, देशोनां पूर्वकोटिं विभङ्गवत्तया मनुष्येषु जीवित्वा अप्रतिष्ठानादावुत्पन्नस्येति । अन्तर-द्वारे ज्ञानानामज्ञानानामन्तरं सर्वं यथा जीवाभिगमे, तच्चैवं—'आभिणिवोहियनाणिस्स णं भंते ! अंतरं कालओ केवच्चिरं होइ ?, गो०! जहण्णेणं अंतोमु० उक्कोसेणं अणंतं कालं जाव अवड्ढपुग्गलपरियट्टं देसूणं, सुयनाणि ओहिनाणि मणपज्जवनाणि एवं चेव, केवलनाणिस्स पुच्छा, गो०! नत्थि अंतरं, मइअन्नाणि सुयअन्नाणि पुच्छा, जहण्णेणं अंतो मु० उक्को० छावट्ठिसागराइं साइरेगाइं, विभंगनाणिस्स पुच्छा, गो० जह० अंतोमु० उक्को० वणप्फइकालो'त्ति । अल्पबहुत्वद्वारे 'अप्पाबहुगाणि तिण्णि'त्ति अल्पबहुत्वानि त्रीणि ज्ञानिनां १ मिथोऽज्ञानिनां च २ ज्ञान्यज्ञानिनां ३ च यथा अल्पबहुत्ववक्तव्यतायां प्रज्ञापनोक्तायां त्रीण्युक्तानि तथा वाच्यानीति, तानि चैवं—एएसिणं भंते ! जीवाणं आभिणिवोहियणाणिणं० कयरे कयरेहिंतो अप्पा वा ४ ?, गो०! सव्वत्थोवा जीवा मणपज्जवनाणी, ओहिनाणी असंखिज्जगुणा, आभिणिवोहियनाणी सुयनाणी दोवि तुल्ला विसेसा०, केवलनाणी अणंतगुणा, इत्येको भेदः, शेषौ द्वौ भेदावित्यत्र ग्रन्थगौरवभयान्न तावुच्यते । अथ पर्यायद्वारे 'केवइया आभिणिवोहिय'त्ति, आभिनिबोधिकज्ञानस्य पर्यवा—विशेषधर्माः, ते च द्विधा—स्वपरपर्यायभेदात्, तत्र येऽवग्रहादयो मतिविशेषाः क्षयोपशमवैचित्र्यात् ते स्वपर्यायाः तेऽनन्ताः, कथं ?, एकस्मादवग्रहादेरन्यः अवग्रहादिरनन्तभागवृद्ध्या विशुद्धः अन्यस्त्वसङ्ख्येयभागवृद्ध्या अपरस्सङ्ख्येयभागवृद्ध्या अन्यतरस्सङ्ख्येयगुणवृद्ध्या तदन्योऽसङ्ख्येयगुणवृद्ध्या अपरस्त्वनन्तगुणवृद्ध्येति, एवं च सङ्ख्यातस्य सङ्ख्यातभेदत्वात्

असङ्ख्यातस्यासङ्ख्यातभेदत्वात् अनन्तस्य अनन्तभेदत्वाच्चानन्ता विशेषाः स्युरिति, अथवा तज्ज्ञेयस्यानन्तत्वात् प्रतिज्ञेयं च तस्य
भिद्यमानत्वात्, अथ चैतत् ज्ञानमविभागपरिच्छेदैर्बुद्ध्या परिच्छिद्यमानमनन्तखण्डं स्यादित्येवमनन्ता इति, तथा ये पदार्थान्तरप-
र्यायाः ते तस्य परपर्यायाः, ते च स्वपर्यायेभ्योऽनन्तगुणाः, परेषामनन्तगुणत्वादिति, ननु यदि ते परपर्यायास्तदा तस्येति न व्यपदेष्टुं
युक्तं, परसम्बन्धित्वात्, अथ तस्य ते तदा न परपर्यायास्ते व्यपदेष्टव्याः, स्वसम्बन्धित्वादिति, अत्रोच्यते—यस्मात् तत्रासम्बद्धास्ते
तस्मादेषां परपर्यायव्यपदेशः, यस्माच्च ते(त्यागेन)परिच्छिद्यमानत्वेन च तस्मिन्नुपयुज्यन्ते तस्मात्तस्य पर्याया इति व्यपदिश्यन्ते, यथा
असम्बद्धमपि धनं स्वधनं इति, उपयुज्यमानत्वात्, आह च—'जइ ते परपज्जाया न तस्स ? अह तस्स न परपज्जाया । आचार्यः प्राह—
जं तम्मि असंबद्धा तो परपज्जायववदेसो ॥१॥ चायसपज्जायविसेसणाइणा तस्स जमुवजुज्जंति । सधणमिवासंबद्धं हवंति ते पज्जवा
तस्स ॥२॥' 'केवइया णं सुयनाणपज्जव'त्ति, 'एवं चेव' श्रुतज्ञानपर्यायाः प्रज्ञप्ताः, ते तथैव द्विधा, तत्र स्वपर्याया ये श्रुत-
ज्ञानस्य स्वगताक्षरश्रुतादयो भेदास्तेऽप्यनन्ताः, क्षयोपशमवैचित्र्यस्य पदार्थानां चानन्त्याभ्यां श्रुतानुसारिणां बोधानामनन्तत्वा-
दिति, अविभागपरिच्छेदानंत्याच्च, परपर्यायास्त्वनन्ताः सर्वभावानां प्रतीता एव, अथवा श्रुतग्रन्थानुसारिज्ञानं श्रुतज्ञानं, श्रुतग्र-
न्थश्चाक्षरात्मकः अक्षराणि चाकारादीनि तेषामेकैकमक्षरं यथायोगमुदात्तानुदात्तस्वरितभेदात् सानुनासिकनिरनुनासिकभेदादल्प-
प्रयत्नमहाप्रयत्नभेदात् संयुक्तासंयुक्तद्व्यादिसंयोगभेदादभिधेयानन्त्याच्च भिद्यमानमनन्तभेदं स्यात्, ते च तस्य स्वपर्यायाः,
परपर्यायाश्चानन्ता एव, एवमनन्तपर्यायं तत्, आह च—'एक्केक्कमक्खरं पुण सपरपज्जायभेयओ भिन्नं । तं सव्वदव्वपज्जायरासि-
माणं मुणेयव्वं ॥१॥ जे लहइ केवलो से सवण्णसहिओ य पज्जवेऽणारो । ते तस्स सपज्जाया सेसा परपज्जवा तस्स ॥२॥''त्ति, एव-

मक्षरात्मकत्वेनाक्षरपर्यायोपेतत्वादनन्ताः श्रुतज्ञानपर्याया इति, 'जाव'त्ति यावत्करणादिदं दृश्यं, 'केवइया ओहिनाणपज्जवा पण्णत्ता ? गोयमा ! अणंता, केवइया भंते ! मणपज्जवनाणपज्जवा पण्णत्ता ?, गो०! अणंता, केवइया केवलनाणपज्जवा पं०?, गो०! अणंता' तत्रावधिज्ञानस्वपर्याया येऽवधिज्ञानभेदाः, भवप्रत्ययक्षयोपशमभेदात्, नारकतिर्यङ्मनुष्यदेवरूपतत्स्वामिभेदात् असङ्ख्यातभेदतद्विषयक्षेत्रकालभेदादनन्ततद्विषयद्रव्यपर्यायभेदादविभागपरिच्छेदाच्च, ते चैवमनन्ता इति, मनःपर्यायकेवलज्ञानस्वपर्यायाः परिच्छेदापेक्षया अविभागपलिच्छेदापेक्षया चेति, एवं मत्यज्ञानादित्रयमभ्यूह्यमिति, अथ पर्यवाल्पबहुत्वमाह, इह स्वपर्यायापेक्षयैवैषामल्पबहुत्वमवसेयं, स्वपरपर्यायापेक्षया सर्वेषां तुल्यपर्यायत्वादिति, तत्र सर्वस्तोका मनःपर्यायज्ञानपर्यायाः, तस्य मनोमात्रविषयत्वात्, तेभ्योऽवधिज्ञानस्य अनन्तगुणाः, द्रव्यपर्यायतोऽनन्तगुणविषयत्वात्, तेभ्यः श्रुतज्ञानपर्याया अनन्तगुणाः, तस्य रूप्यरूपिद्रव्यविषयत्वेनानन्तगुणविषयत्वात्, ततोऽप्याभिनिबोधिकज्ञानपर्याया अनन्तगुणाः, तस्याभिलाप्यानभिलाप्यद्रव्यादिविषयत्वेनानन्तगुणविषयत्वात्, ततः केवलज्ञानपर्याया अनन्तगुणास्सर्वद्रव्यपर्यायविषयत्वात् तस्येति, अज्ञानसूत्रेऽप्यल्पबहुत्वं सूत्रानुसारेणोहनीयं; मिश्रसूत्रे स्तोका मनःपर्यायपर्यवाः, इहोपपत्तिः प्राग्वत्, तेभ्यो विभङ्गपर्यवा अनन्तगुणाः, मनःपर्यायापेक्षया विभङ्गस्य बहुतमविषयत्वात्, तथाहि—विभङ्गज्ञानं ऊर्ध्वाधः उपरिमग्रैवेयकादारभ्य सप्तमपृथिव्यन्तक्षेत्रे तिर्यक् चासङ्ख्यातद्वीपसमुद्ररूपे यानि रूपिद्रव्याणि तानि कानिचिज्जानाति कांश्चित्पर्यायांश्च, तानि च मनःपर्यायापेक्षयाऽनन्तगुणानि, तेभ्योऽवधिपर्याया अनन्तगुणाः, अवधेः सकलरूपिद्रव्यप्रतिद्रव्यासङ्ख्यातपर्यायत्वेन विभङ्गापेक्षया अनन्तगुणविषयत्वात्, तेभ्योऽपि श्रुताज्ञानपर्यवा अनन्तगुणाः, श्रुताज्ञानस्य श्रुतज्ञानवदोघादेशेन समस्तमूर्त्तामूर्त्तद्रव्यासर्वपर्यायविषयत्वेनावधिज्ञानापेक्षया अनन्तगुणविषयत्वात्, तेभ्यः श्रुतज्ञा-

नपर्यवा विशेषाधिकाः, केषाञ्चित् श्रुताज्ञानाविषयीकृतपर्यायाणां विषयीकरणाद्, यतो ज्ञानत्वेन स्पष्टा अवभासन्ते, तेभ्योऽपि मत्यज्ञानपर्याया अनन्तगुणाः, यतः श्रुतज्ञानमभिलाप्यवस्तुविषयमेव, मत्यज्ञानं तु तदनन्तगुणानभिलाप्यवस्तुविषयमपीति, ततोऽपि मतिज्ञानपर्यवा विशेषाधिकाः, केषाञ्चिदपि मत्यज्ञानाविषयीकृतभावानां विषयीकरणात्, तद्धि मत्यज्ञानापेक्षया स्फुटतरमिति, ततोऽपि केवलज्ञानपर्यवा अनन्तगुणाः, सर्वाद्धाभाविनां समस्तद्रव्यपर्यायाणामनन्यसाधारणावभासेनावभासनादिति ॥

॥ अष्टमशते द्वितीयः ॥

'संखिज्जजीविय'त्ति ( सू. ३२३ ) सङ्ख्यातजीविकाः, एवमन्यदपि पदद्वयं, 'जहा पण्णवणाए'त्ति यथा प्रज्ञापनायां तथाऽत्र वाच्यं, तदेतत्—ताले तमाले तक्कलि तेतलि साले य सालकल्लाणे। सरले जावइ केयइ, कंदलि तह चम्मरुक्खे य ॥१॥ चूयरुक्खहिंगुरुक्खे लवंगरुक्खे य होइ बोद्धव्वे। पूयफले खज्जूरी बोद्धव्वा नालिएरी य ॥ २ ॥ 'जे यावण्णे'त्ति ये चान्ये तथाप्रकाराः वृक्षविशेषास्ते सङ्ख्यातजीविकाः, 'एगट्ठिय'त्ति एकमस्थिकं—मध्ये बीजं येषां ते एकास्थिकाः, 'बहु'त्ति बहूनि बीजानि येषां ते बहुबीजकाः, निम्बाम्रजम्बुइत्याद्येकास्थिकाः यथा प्रज्ञापनायां प्रथमपदे, 'से किं तं बहुबीयगा ?, २ अणेगविहा पं० तं०—अत्थियतिंदु कविट्ठे अंबाडग माउलिंग बिल्ले य। आमलग फणस दाडिम आसोढे ऊंबर वडे य ॥१॥'इत्यादि। (सू. ३२४) कूर्म्मः—कच्छपः, कूर्म्मावलिका गोधा तदावलिका वा, 'जे अंतर'त्ति यान्यन्तरालानि 'तेऽवि य णं'ति तान्यपि च णं वाक्यालङ्कारे, 'तेहिं'ति तैः जीवप्रदेशैः स्पृष्टानि—व्याप्तानि 'कलिंचेण'त्ति क्षुद्रकाष्ठरूपेण वा 'आमुस'न्ति आमृशन्—ईषत् स्पृशन् 'संमुस'न्ति संमृशन्—सामस्त्येन स्पृशन् 'आलिह'न्ति आलिखन्—ईषत् सकृद्वा कर्षन् 'विलिह'न्ति विलिखन् विशेषेण कर्षन् 'अच्छि-

द'न्ति आच्छिदन् 'विच्छिंद'न्ति विशेषेण छिन्दन् 'समोडह'त्ति समुपदहन् आबाधां–ईषत्पीडां व्याबाधां–प्रकृष्टपीडां ॥ 'कइ-णं'ति(सू. ३२१)अथ केयं चरमाचरमपरिभाषा इति, अत्रोच्यते–चरमं नाम प्रान्तं पर्यन्तवर्त्ति, आपेक्षिकं चरमत्वं, चरमं यदुक्तं तदन्यद्रव्यापेक्षया इदं चरमद्रव्यमिति, यथा पूर्वशरीरापेक्षया चरमं वपुरिति, तथा अचरमं नाम अप्रान्तं मध्यवर्त्ति, आपेक्षिकं अचरमत्वं, यदुक्तं अन्यद्रव्यापेक्षया इदमचरमद्रव्यं, यथा अन्यशरीरापेक्षया मध्यशरीरमिति, इह स्थाने प्रज्ञापनादशमं पदं वाच्यं, तदेवाह–तत्र पदद्वयं दर्शितमेव, शेषं तु दर्श्यते–चरिमाइं अचरिमाइं चरिमंतपदेसा अचरिमन्तपदेसा ?, गो०! इमा णं रयणप्पभा पुढवी नो चरिमा नो अचरिमा नो चरिमाइं नो अचरिमाइं नो अचरिमंतपदेसा, नियमा अचरिमं चरिमाणि य चरिमंतपदेसा य अचरिमंतपदेसा य, तत्थ किं चरिमा अचरिमा एकवचनान्तः प्रश्नः, चरिमाइं इति बहुवचनान्तः प्रश्नः, चरिमंतपदेसा अचरिमंतपदेसत्ति, चरिमाण्येवान्तवर्त्तित्वान्ताश्चरमान्तास्तेषां प्रदेशा इति समासः, तथा अचरिममेवान्तो–विभागोऽचरमान्तस्तत्प्रदेशा अचरमान्तप्रदेशाः, गो०! नो चरिमा नो अचरिमा इत्युत्तरं, चरिमत्वं ह्येतदापेक्षिकं, अपेक्षणीयस्याभावाच्च कथं चरिमा भविष्यति ?, अचरमत्वमप्यपेक्षयैव स्यात्, ततः कथमन्यस्यापेक्ष्यस्याभावे अचरिमत्वं स्यात् ?, यदि हि रत्नप्रभाया मध्येऽन्या पृथ्वी स्यात् तदा तस्याश्चरिमत्वं युज्यते, न चास्ति सा, तस्मान्न चरमाऽसौ, तथा यदि तस्या बाह्यतोऽन्या पृथ्वी स्यात् तदा तस्या अचरमत्वं युज्यते, न चास्ति सा, तस्मान्नाचरमाऽसाविति, अत्रायं वाक्यार्थः–किमियं रत्नप्रभा पश्चिमा उत मध्यमेति, तदेतद् द्वितयमपि यथा न सम्भवति तथा चोक्तं, अथ नो चरिमाइं नो चरमाइं, कथं ?, यदा तस्याश्चरमव्यपदेशोऽपि नास्ति, तदा चरमाणीति कथं भविष्यति ?, एवमचरमाण्यपि, तथा नो चरमंतपएसा नो अचरमंतपएसा, अत्रापि चरमत्वस्याचरमत्वस्य चाभावात्, तत्प्र-

देशकल्पनाया अप्यभाव एव, अत उक्तम्–'नो चरमांतप्रदेशा नो अचरमांतप्रदेशा रत्नप्रभे'ति, तर्हि किं?, नियमात् निश्चयेन अचरिमं चरमाणि च, एतदुक्तं स्यात्–अवश्यतयेयं केवलभङ्गवाच्या न स्यात्, अवयवावयविरूपतया असङ्ख्येयप्रदेशावगाढत्वाद्यथोक्तनिर्वचनविषयैव, तथाहि–रत्नप्रभा तावदनेन प्रकारेण व्यवस्थिता इति, तत्स्थापना विनेयजनानुग्रहाय लिख्यते, एवमवस्थितायां यानि प्रान्तेषु व्यवस्थितानि तदध्यासितक्षेत्रखण्डानि तानि तथाविधवियुक्तत्वाच्चरमाणि, यत्पुनर्विशिष्टैकपरिणामं मध्ये महत् रत्न प्रभाक्रान्तं क्षेत्रखण्डं तदपि तथाविधपरिणामयुक्तत्वादचरमं, तदुभयसमुदायरूपा चेयं, अन्यथा तदभावप्रसङ्गात्, प्रदेशपरिकल्पनायां तु चरमान्तप्रदेशा अचरमान्तप्रदेशाश्च, कथं?, ये बाह्यखण्डप्रदेशाः ते चरमान्तप्रदेशाः, ये च मध्यप्रदेशास्ते अचरमान्तप्रदेशा इति, अनेन चैकान्तदुर्णयनिरासप्रधानेन निर्वचनसूत्रेणावयवावयविरूपं वस्त्वित्याह, तयोश्च भेदाभेद इति, एवं शर्करादिष्वपि, अथ कियद् दूरं तद्वाच्यमित्याह–'जाव'त्ति ये वैमानिकभवसम्भवं स्पर्शनं न लप्स्यन्ते पुनस्तत्रानुत्पादेन मुक्तिगमनात् ते वैमानिकस्पर्शनमपेक्ष्य चरमाः, ये तु पुनर्लप्स्यन्ते तेऽचरमा इति ॥ अष्टमशते तृतीयः॥

'किरियापयं'ति (सू. ३२६) एवं क्रियापदं प्रज्ञापनाद्वाविंशतितमं पदं वाच्यं, 'जाव'त्ति इह गाथे—"मिच्छाऽपच्चक्खाणे

परिग्गहाऽऽरंभमायकिरियाओ। कमसो मिच्छाअविरयमीसपमत्तऽप्पमत्ताणं ॥१॥ मिच्छत्तवत्तियाउ मिच्छद्दिट्ठीण ते भंवे थोवा। सेसाणं एक्केक्को वड्ढइ रासी तओ अहिय ॥२॥"त्ति, अन्तिमसूत्रमिदम्—'आरंभियाणं परिग्गहियाणं अप्पच्चक्खाणकिरियाणं मायावत्तियाणं मिच्छादंसणवत्तियाणं कयरे २ हिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा मिच्छादंसणवत्तिया, मिथ्यादृशामेव तद्भावात्, 'अपच्च० किरिया विसेसाहिया' मिथ्यादृशामविरतसम्यग्दृशां च तासां भावात्, परिग्गहिया विसे०, देशविरतानां प्रागुक्तानां च तासां भावात्, आरंभिया विसेसा०, प्रागुक्तानां प्रमत्तसंयतानां च तासां भावात्, मायावत्तिया विसे०, पूर्वोक्तानामप्रमत्तसंयतानां च तद्भावात्, एतदन्तं सूत्रं वाच्यमिति ॥ अष्टमशते चतुर्थोद्देशकः॥

'रायगिहे'त्ति गौतमो भगवन्तमेवमवादीत् 'आजीविया णं'ति (सू. ३२७) आजीविका गोशालकशिष्या भदन्त! स्थविरान् निर्ग्रन्थान् भवतः एवं—वक्ष्यमाणप्रकारमवादिषुः, यत्र ते तान् प्रत्यवादिषुस्तद्गौतमः स्वयमेव पृच्छन्नाह—'सामाइयकडस्स'त्ति कृतसामायिकस्य प्रतिपन्नाद्यशिक्षाव्रतस्य, श्रमणोपाश्रये हि श्राद्धः सामायिकं प्रतिपद्यते, अतः 'समणोवस्सए' श्रमणोपाश्रये 'अच्छमाणस्स' आसीनस्य 'केइ' कश्चित् 'भंडं'ति वस्त्रादिकं वस्तु गृहवर्त्ति साधूपाश्रयवर्त्ति वा 'अवहरेज्ज' अपहरेत् 'से णं'ति स श्रमणोपासकः 'तं भंडं'ति तदपहृतं भाण्डं 'अणुगवे'त्ति सामायिकसमाप्त्यनन्तरं गवेषयन् 'सभंडं'ति स्वभाण्डं 'परायगं'ति परकीयं वा, पृच्छतोऽयमभिप्रायः—स्वसम्बन्धित्वात् स्वकीयं, सामायिकप्रतिपत्तौ च परिग्रहस्य प्रत्याख्यातत्वादस्वकीयं अतः प्रश्नः, अत्रोत्तरम्—'सभंडं'ति स्वकीयं भाण्डं, नो परकीयं, 'तेहिं सील'त्ति शीलव्रतानि—अणुव्रतानि गुणव्रतानि विरमणानि—रागादिविरतयः प्रत्याख्यानं—नमस्कारसहितादि पौषधोपवासाश्चेति शीलव्रतादिभिः, इह च शीलव्रतादीनां ग्रहणेऽपि

सावद्ययोगविरत्या विरमणशब्दोपात्तया प्रयोजनं, तथा एव परिग्रहस्यापरिग्रहताहेतुभूतत्वेन भाण्डस्याभाण्डताभवनहेतुत्वादिति, 'से भंडे'त्ति तदपहृतं भाण्डं अभाण्डं स्यात्, असंव्यवहार्यत्वात्, 'से केणं'ति अथ केन 'खाइणं'ति पुनः 'अट्ठेण' अर्थेन–हेतुना 'तस्स णं एवं'ति तस्य एवं मनःपरिणामः स्यात् 'नो मे हिरण्णे'त्ति हिरण्यादिपरिग्रहस्य द्विविधत्रिविधेन प्रत्याख्यातत्वात्, 'नो मे'त्ति धनं गच्छिमादि (गवादि धान्यं व्रीह्यादि) रत्नानि–कर्केतनादीनि मणयः–चन्द्रकान्तादयः शिलाप्रवालानि–विद्रुमाणि रक्तरत्नानि–पद्मरागादीनि, 'संत'न्ति सत्–विद्यमानं सारं–प्रधानं 'सावएज्जं' स्वापतेयं द्रव्यं 'ममत्त'त्ति ममत्वभावः पुनः–हिरण्यादिविषये ममतापरिणामोऽपरिज्ञातो–न प्रत्याख्यातः स्यात्, अनुमतेरप्रत्याख्यातत्वात्, ममत्वभावस्य चानुमतिरूपत्वात्, 'केई जायं चरिज'त्ति कश्चित् उपपतिस्तस्य श्राद्धस्य जायां पत्नीं चरेत्–सेवेत, 'सुण्हं'ति स्नुषां–पुत्रभार्यां, 'पिज्जबंधणे'त्ति प्रेम एव बन्धनं तत् पुनस्से–तस्य श्राद्धस्य न व्यवच्छिन्नं स्यात्, अनुमतेरप्रत्याख्यानात्, प्रेमानुबन्धस्यानुमतिरूपत्वात्, 'समणोवासगस्स'त्ति (सू. ३२८) तृतीयार्थत्वात् षष्ठ्याः श्रमणोपासकेन, सम्बन्धमात्रविवक्षया वा षष्ठीयं, 'पुव्वामेव'त्ति प्राक्काल एव–सम्यक्त्वप्रतिपत्तिसमनन्तरमेव 'अपच्चक्खाए'त्ति न प्रत्याख्यातस्स्यात्, तदा देशविरतेरज्ञातत्वात्, ततश्च 'से णं'ति सः–श्राद्धश्चेत् प्राणातिपातविरतिकाले 'पच्चक्खाइ'त्ति प्रत्याचक्षाणः, प्राणातिपातमिति गम्यते, किं कुर्यादिति प्रश्नः ?, 'तीतं'ति तीतम्–अतीतकालकृतं प्राणातिपातं प्रतिक्रामति, ततो निन्दाद्वारेण निवर्त्तते इत्यर्थः, 'पडुप्पन्नं'ति प्रत्युत्पन्नं–वर्त्तमानकालीनं प्राणातिपातं संवृणोति, न करोतीत्यर्थः, अनागतं–भविष्यत्कालविषयं प्रत्याख्याति–न करिष्यामीति प्रतिजानीते, 'तिविहं तिविहेणं'ति इह नव विकल्पाः, तत्र गाथा–तिन्नि तिया तिन्नि दुया तिण्णि-

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ |

क्खा हवंति जोगेसु। तिदुइक्कं तिदुइक्कं तिदुइक्कं चेव करणाइं ॥१॥' एषु विकल्पेषु एकादयो विकल्पा लभ्यन्ते, आह—"एगो तिन्नि य तिगगा दो नवगा तहय तिन्नि नव नव य। भंगनवगस्स एवं भंगा एगूणपन्नासं ॥२॥" स्थापना चेयम् ॥ तत्र 'तिविहं तिविहेणं'ति त्रिविधं करणकारणानुमतिभेदात्, प्राणातिपातमिति गम्यते, त्रिविधेन मनोवाक्कायलक्षणेन करणेन प्रतिक्रामति—ततो निन्दनेन निवर्त्तते इति, 'तिविहं दुविहेणं'ति त्रिविधं करणादिभेदात् द्विविधेन करणेन मनःप्रभृत्येकतरवर्जितेन द्वयेन, 'तिविहं एगविहेणं'ति त्रिविधं तथैव एकविधेन मनःप्रभृत्येकतमेन करणेन, 'दुविहं तिविहेणं'ति द्विविधं कृतादीनामन्यतमद्वयरूपयोगं त्रिविधेन मनःप्रभृतिकरणेन, एवमन्येऽपि, त्रिविधं त्रिविधेनेत्येको विकल्पः, द्वितीयतृतीयचतुर्थेषु त्रयस्त्रयः, पञ्चमषष्ठयोर्नव नव, सप्तमे त्रयः, अष्टमनवमयोर्नव नव, एवं सर्वे एकोनपञ्चाशत्, 'सीयालं भंगसयं'ति अतीतानागतवर्त्तमानकालैस्त्रिगुणीकरणे सप्तचत्वारिंशदधिकं भङ्गशतं स्यात्, 'एए खलु'त्ति एते खलु—एत एव दृश्यमाना निर्ग्रन्थसत्का इति 'नो खलु'त्ति नैव 'आजीविकसमयस्स'त्ति ॥ (सू. ३२९) आजीविकसमयस्य गोशालकसिद्धान्तस्यायमर्थः—इदमभिधेयमिति, 'अक्खीणपरिभोइणो सव्वसत्त'त्ति अक्षीणायुष्कं—अप्रासुकं परिभुञ्जन्त इत्येवंशीला अक्षीणपरिभोजिनः सर्वसत्त्वा असंयताः सर्वप्राणिनः, यद्येवं ततः किमाह—'से'त्ति ततः हंता—हत्वा लगुडादिना, छित्त्वा—असिना द्विधा कृत्वा, भित्त्वा—शूलादिना भिन्नं कृत्वा, लुप्त्वा—पक्षादिलोपनेन, विलुप्य—त्वचो विलोपनेन, अपद्राव्य—विनाश्याहारमाहारयन्ति, 'तत्थ'त्ति तत्र असंयतसत्त्ववर्गहननादिदोषपरायणे 'दुवालस'त्ति द्वादश विशेषानुष्ठानत्वात् परिगणिताः, आनन्दादिश्राद्धवत्, अन्यथा बहवस्ते, 'एवं ताले'त्ति तालाख्यादयोऽपि 'अरिहंतदेवयाग'त्ति गोशालके कल्पनयाऽर्हत्त्वात् 'पंचफलपडि०' फलपञ्चकान्निवृत्ताः 'सयरेहिं'न्ति फलविशेषैः 'पिलंखूहिं'

पुच्छैः 'अणालंछिएहिं' अवर्द्धितकैः, अखण्डैरित्यर्थः, 'अनक्क'त्ति अनकभिन्नैः-अनस्तितैः 'गोणेहिं'ति गोणैः—वृषभैरिति 'छेत्तेहिं'ति क्षेत्रैरिति, 'एएवि ताव'त्ति एतेऽपि तावत् विशिष्टयोग्यताविकलाः एवमिच्छन्ति-अमुना प्रकारेण वाञ्छन्ति, धर्ममिति गम्यम्, 'किमंग पुण'त्ति किं पुनर्ये श्रमणोपासका इमे ? ते नेच्छन्तीति गम्यम्, इच्छन्त्येवेति, विशिष्टदेवगुरुप्रवचनसमाश्रितत्वात् तेषां, 'कम्मादाणाणि' कर्म्माणि च तानि आदानानि च—कर्म्महेतव इति, 'केसवाणिज्जे'त्ति केशवज्जीवानां गोमहिषीस्त्रीप्रभृतीनां विक्रयः, 'निल्लंछण'न्ति वर्द्धितककरणं निर्लाञ्छनकर्म्म, 'इच्चेए'त्ति इत्येवंप्रकाराः एते निर्ग्रन्थसत्काः 'सुक्क'त्ति शुक्लाः-अभिन्नवृत्ताः अमत्सरिणः कृतज्ञाः सदारम्भिणो हितानुबन्धाश्च 'सुक्काभिजाए'त्ति शुक्लाभिजाताः शुक्लप्रधानाः ॥ (सू० ३३०) ॥ अष्टमशते पञ्चमः ॥

'किं कज्जइ'त्ति (सू० ३३१) किं फलं स्यादित्यर्थः, 'एगंतसो'त्ति एकान्तेन 'नत्थि य से'त्ति नास्ति चैतत् 'से' तस्य पापकर्म क्रियते-स्यात्, 'बहुतरियाए'त्ति पापकर्मापेक्षया 'अप्पतराए'त्ति अल्पतरं निर्जरापेक्षया, अयमर्थो-गुणवत्पात्रायाप्रासुकाशनादिदाने चारित्रोपष्टम्भो जीवोपघातो वा व्यवहारतस्तच्चारित्रबाधा च स्यात्, ततश्चारित्रोपष्टम्भात् निर्जरा जीवघातादेस्तु पापकर्म, तद्वस्तुहेतुसामर्थ्यात्, पापापेक्षया बहुतरा निर्जरा निर्जरापेक्षया चाल्पतरं पापं स्यात्, असंस्तरणादिकारणत एवाप्रासुकादिदानेन बह्वी निर्जरा स्यात्, नाकारणे, यदुक्तम्—"संथरणंमि असुद्धं दोण्हवि गिण्हंतदिंतयाणऽहियं। आउरदिट्ठंतेणं तं चेव हियं असंथरणे ॥१॥" अन्ये त्वाहुः-अकारणेऽपि गुणवत्पात्रायाप्रासुकादिदानेन परिणामवशाद्बहुतरा निर्जरा स्यात्, अल्पतरं पापकर्मेति, निर्विशेषणत्वात् सूत्रस्य, परिणामस्य च प्रमाणत्वात्, आह च—"परमरहस्समिसीणं समत्तगणिपिडगझरियसाराणं।

परिणामियं पमाणं निच्छयमवलंबमाणाणं ॥१॥" यच्चोच्यते—'संथरणम्मि असुद्धं'ति, अशुद्धं द्वयोरपि दातृगृहीत्रोरहितायेति तद् ग्राहकस्य व्यवहारतः संयमविराधना(त्)दायकस्य च लुब्धकदृष्टान्तभावितत्वेन वा ददतः शुभाल्पायुष्कतानिमित्तत्वात्, शुभमपि चायुरल्पमहितं विवक्षया, शुभाल्पायुष्कतानिमित्तत्वं च अप्रासुकादिदानस्याल्पायुष्कताफलप्रतिपादकसूत्रे प्राक् चर्चितं, यत् पुनरिह तत्त्वं तत् केवलिगम्यमिति ॥ तृतीयसूत्रे 'असंजये'त्यादिना अगुणवान् पात्रविशेष उक्तः, 'फासुएण अफासुएण'त्ति प्रासुकाप्रासुकादेर्दानस्य पापकर्मफलता निर्जराया अभावश्चोक्तः, असंयमोपष्टम्भस्योभयत्र तुल्यत्वात्, यश्च प्रासुकादौ जीवघाताभावेन अप्रासुकादौ जीवघातसद्भावेन विशेषः सोऽत्र न विवक्षितः, पापकर्मणो निर्जराऽभावस्यैव विवक्षितत्वादिति, सूत्रत्रयेणापि चानेन मोक्षार्थमेव दानं यत् तच्चिन्तितं, यत्पुनरनुकम्पादानं औचित्यदानं च न ते चिन्तिते, निर्जरायास्तत्रानपेक्षणीयत्वात्, अनुकम्पौचित्ययोरपेक्षणीयत्वाच्चेति, उक्तं च—"मोक्खत्थं जं दाणं तं पइ एसो विही समक्खाओ । अणुकंपादाणं पुण जिणेहिं न कयाइ पडिसिद्धं ॥१॥ति'॥ दानाधिकारादेवेदमाह—'निग्गंत्थे गाहावइकुलं'ति(सू. ३३२) गृहपतिकुलं—गृहिगृहं 'पिंडवाय'त्ति पिण्डस्य भोजनस्य पातः—पात्रे ग्रहः पात्रे गृहस्थानिपतनं तत्र प्रतिज्ञानं पिण्डपातप्रतिज्ञा तया, पिण्डस्य पातो मम पात्रे भवत्विति बुद्धिरित्यर्थः, 'उवनिमंतिज्ज'त्ति उपनिमन्त्रयेत्, भिक्षो ! गृहाणेदं पिण्डद्वयमित्यभिदध्यादित्यर्थः, 'से य'त्ति स साधुस्तं पिण्डं 'थेरा य से'त्ति स्थविराश्च तस्य अनुगवेषयितव्याः स्युरिति, 'दावए'त्ति दद्याद् दापयेद्वा अदत्तादानप्रसङ्गात्, गृहिणा विवक्षितस्थविरेभ्य एव पिण्डो दत्तो, नान्यस्मै, एकान्ते—जनरहिते 'अणावाए' अनापाते जनसम्पातरहिते ॥ निग्गंथेण ये'त्यादि (सू. ३३३) स्थविरनिर्ग्रन्थं कश्चित्पिण्डपातप्रतिज्ञया प्रविष्टमुपनिमन्त्रयेत्, तेन निर्ग्रन्थेन 'अकिच्चट्ठाणे'त्ति अकृत्यस्थानं—मूलगुणविपरीतो कार्य-

विशेषः, 'तस्स णं'ति तस्य साधोः सञ्जातानुतापस्य 'एवं हवइ' एवं प्रकारं मनस्स्यात् 'एयस्स ठाणस्स'त्ति विभक्तिपरिणामात् एतत्स्थानं अनन्तरं 'से किंचि तं' आलोचयामि–स्थापनाचार्यनिवेदनेन, प्रतिक्रमामि मिथ्यादुष्कृतदानेन, निन्दामि स्वसमक्षं, गर्हे–गुरुसमक्षं, विउट्टामि–वित्रोटयामि तदनुबन्धं छिनद्मि, विशोधयामि प्रायश्चित्तपङ्कं प्रायश्चित्ताभ्युपगमेन, अकरणतया अभ्युपतिष्ठामि, अभ्युत्थितो भवामीत्यर्थः, 'अमुहा सिय'त्ति अमुखा–निर्वाचः स्युरिति 'आराहए'त्ति आराधकः शुद्ध इति, आलोचनापरिणतौ सत्यां तदप्रामाण्येऽप्याराधकत्वं, यतः–"आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसगासे। जो मरइ अंतरन्निय तहावि सुद्धत्ति भावाओ ॥१॥"त्ति, स्थविरात्मभेदेन ३ अमुखसूत्रे ३ कालगतसूत्रे, एवं चत्वारि असम्प्राप्तिसूत्राणि, सम्प्राप्तिसूत्राण्यपि ४, एवमष्टौ पिण्डपातार्थं गृहिगृहे प्रविष्टस्य, एवं विचारभूम्यादावष्टौ, ग्रामगमनेऽप्यष्टौ, एवमेतानि २४ सूत्राणि, साध्व्या अपि ज्ञेयानि, अनालोचित एव कथमाराधक इत्याशङ्कायामुत्तरं (दृष्टान्तं) चाह–'तणग्गयं व'त्ति तृणाग्रं वा 'छिज्जमाणे छिण्णे'त्ति क्रियाकालनिष्ठाकालयोरभेदेन प्रतिक्षणं निष्पत्तेः छिन्नमिति उच्यते, एवमसावालोचनापरिणतौ सत्यां आराधनाप्रवृत्तः आराधक एवेति, 'तंतुग्गयं'ति तन्त्रोद्गतं तुरिवेमादेः उत्तीर्णमात्रं, 'मंजिट्ठादोणीए'त्ति मञ्जिष्ठाद्रोण्यां, भाजने इत्यर्थः॥ आराधको दीपदीप्यते इति दीपस्वरूपं निरूपयन्नाह–'झियायमाणस्स'त्ति (सू. ३३४) ध्मायतो ध्मायमानस्य वा, ज्वलत इत्यर्थः, 'पदीवे'त्ति प्रदीपो दीपवर्त्तिसमुदायः 'झियाइ' ध्मायति ध्मायते वा ज्वलति 'लट्ठि'त्ति दीपयष्टिः 'वत्ति'त्ति दशा 'दीवचंपए'त्ति दीपस्थगनकं 'जोइ'त्ति अग्निः ॥ ज्वलनाधिकारादिदमाह–'कूडे'त्ति भित्तयः 'कडण'त्ति वक्रिकाः 'धारण'त्ति वलहरणाधारभूते स्थूणे 'वलहरण'त्ति धारणयोरुपरिवर्त्ति तिर्यगायतकाष्ठं(लोके)मोभ इति, 'वंस'त्ति वंशाः छिद्राधाराः लोके छप्पराधारा इति 'मल्ल'त्ति

कुड्यावरणभस्थाणवः वलहरणाश्रितानि वा, ऊर्ध्वायतानि काष्ठानि वा, 'वग्ग'त्ति वल्का वंशादिबन्धनभूता वटादित्वचः 'छित्त-र'त्ति वंशादिमयानि छादनाधारभूतानि कलिंजानि, 'छाणे'त्ति छादनं दर्भादिमयं कुटीरमिति ॥ 'ओरालियसरीराओ'त्ति (सू. ३३५) औदारिकादिशरीरात्-परकीयमौदारिकवपुराश्रित्य कतिक्रियो जीव इति प्रश्नः, उत्तरं 'सिय तिकिरिए'त्ति यदैको जीवोऽन्यस्य पृथ्व्यादेः सम्बन्ध्यौदारिकं शरीरमाश्रित्य कायं व्यापारयति तदा त्रिक्रियः, कायिक्यधिकरणीप्राद्वेषिकाणां भावाद्, एतासां च मिथोऽविनाभावात् स्यात् त्रिक्रिय इत्युक्तं, न पुनः स्यादेकक्रियः स्याद् द्विक्रिय इति, अविनाभावश्च तासामेव-अधिकृतक्रिया ह्यवीतरागस्यैव, नेतरस्य, तथाविधकर्मबन्धहेतुत्वात्, अवीतरागकायस्य चाधिकरणत्वेन प्रद्वेषान्वितत्वेन च कायक्रियासद्भावे इतरयोरवश्यंभावः, इतरभावे च कायकीसद्भावः, उक्तं च प्रज्ञापनायामिहार्थे-जस्स णं जीवस्स काइया किरिया कज्जइ तस्स अहिगरणिया नियमा किरिया कज्जइ, जस्स अहिगरिणिया किरिया कज्जइ तस्सवि काइया किरिया नियमा कज्जई'त्यादि, तथाऽऽद्यक्रियात्रयसद्भावे उत्तरं क्रियाद्वयं भजनया स्यात्, यदाह-"जस्स णं जीवस्स काइया किरिया कज्जइ तस्स पारियावणिया सिय कज्जइ सिय नो कज्जइ"इत्यादि, ततश्च यदा जीवः कायव्यापारेणाद्यक्रियात्रय एव वर्त्तते नतु परितापयति न चातिपातयति तदा त्रिक्रिय एव स्यात्, अत उक्तं-स्यात् त्रिक्रिय इति, यदा तु परितापयति तदा चतुष्क्रियः, आद्यक्रियात्रयस्यावश्यंभावात्, उक्तं च-'जस्स परियावणिया किरिया कज्जइ तस्स काइया किरिया नियमा कज्जइ'इत्यादि, अत एवाह-'सिय चउकिरिए सिय पंचकिरिए'त्ति, तथा सिय अकिरिए'त्ति वीतरागावस्थामाश्रित्य, तस्यां हि वीतरागत्वादेव न सन्त्यधिकृतक्रिया इति, 'नेरइए णं'मिति नारको यस्मादौदारिकवपुर्व(प्म)न्तं पृथिव्यादिकं स्पृशति परितापयति विनाशयति च तस्मादौदारिकात् स्यात्

त्रिक्रियः, अक्रियस्त्वयं न स्यात्, अवीतरागत्वेन क्रियाणामवश्यंभावित्वात्, 'एवं चेव'त्ति स्यात्त्रिक्रिय इत्यादि सर्वेष्वसुरादिपदेषु वाच्यमिति, 'मणुस्से जहा जीवे'त्ति जीवपदे इव मनुष्यपदे अक्रियत्वमपि वाच्यमित्यर्थः, जीवपदे मनुष्यसिद्धापेक्षयैवाक्रियत्वस्याधीतत्वात्, 'ओरालियसरीरेहिंतो'त्ति औदारिकशरीरेभ्य इत्येवं बहुत्वापेक्षोऽयमपरो दण्डकः, एवमेतौ जीवस्यैकत्वेन द्वौ दण्डकावेवमेव बहुत्वेनापरौ द्वौ, एवं औदारिकशरीरापेक्षया चत्वारो दण्डका इति, 'जीवे णं'ति जीवः परकीयं वैक्रियवपुराश्रित्य कतिक्रियः?, उच्यते, स्यात् त्रिक्रियः स्यात् चतुष्क्रियः, पञ्चक्रियश्चेह नोच्यते, प्राणातिपातस्य वैक्रियवपुषः कर्त्तुमशक्यत्वात्, अविरतिमात्रस्येह विवक्षितत्वात्, अत एवोक्तं 'पंचकिरिया न भण्णइ एवं जहा वेउव्वियं तहा आहारगंपि तेयगंपि कम्मगंपि भाणियव्वं'ति अनेनाहारकादिवपुस्त्रयमप्याश्रित्य दण्डकचतुष्टयेन नैरयिकादिजीवानां त्रिक्रियत्वं चतुष्क्रियत्वं चोक्तं, पञ्चक्रियत्वं तु निवारितं, मारयितुमशक्यत्वात् तस्य वपुस्त्रयस्येति, अथ नारकस्याधोलोकवर्त्तित्वाद् आहारकस्य नरक्षेत्रवर्त्तित्वेन तत्क्रियाणामविषयत्वात् कथं आहारकवपुराश्रित्य नारकः स्यात् त्रिक्रियः स्यात् चतुष्क्रिय इति, अत्रोच्यते, यावत् तत्पूर्ववपुरव्युत्सृष्टं जीवनिर्वर्त्तितपरिणामं न त्यजति तावत्पूर्वभावप्रज्ञापनानयमतेन निर्वर्त्तकजीवस्यैवेति व्यपदिश्यते, घृतघटन्यायेनेति, अतो नारकपूर्वभवदेहो नारकस्यैव, तद्देशेन च मनुष्यलोकवर्त्तिना अस्थ्यादिरूपेण यदाहारकशरीरं स्पृश्यते परिताप्यते वा तदाहारकदेहान्नारकस्त्रिक्रियश्चतुक्रियश्चेति, कायिकीभावे इतरयोरवश्यंभावात् परितापनिकीभावे चाद्यत्रयस्यावश्यं भावादिति, एवमिहान्यदपि विषममवगन्तव्यमिति, यच्च तैजसकार्मणवपुरपेक्षया जीवानां परितापकत्वं तदौदारिकाद्याश्रितत्वेन तयोरवसेयं, स्वरूपेण तयोः परितापयितुमशक्यत्वादिति ॥ अष्टमशते षष्ठः ॥

'हे अज्जो'त्ति (सू. ३३७) हे आर्याः! 'तिविहं तिविहेणं'ति त्रिविधं करणादिकं योगमाश्रित्य त्रिविधेन मनःप्रभृतिकरणेन 'एगंत'त्ति एकान्तबाला मिथ्यात्विनो भवथ 'साइज्जह'त्ति अदत्तं स्वदध्वे, अनुमन्यध्वे इत्यर्थः, 'दिज्जमाणे अदिण्णे'त्ति दीयमानमदत्तं, दीयमानस्य वर्त्तमानकालत्वात् दत्तस्य चातीतकालत्वात् वर्त्तमानातीतयोश्चात्यन्तं भिन्नत्वात् दीयमानं दत्तं न स्यात्, दत्तमेव दत्तं व्यपदिश्यते, एवं प्रतिगृह्यमाणादावपि, तत्र दीयमानं दायकापेक्षया, प्रतिगृह्यमाणं ग्राहकापेक्षया, निसृज्यमाणं–क्षिप्यमाणं पात्रापेक्षया, 'अंतरे'ति अवसरे, अयमभिप्रायो–यदि दीयमानं पात्रेऽपतितं सद् दत्तं स्यात् तदा तस्य दत्तस्य सतः पात्रपतनलक्षणं ग्रहणं कृतं स्यात्, यदा तु तद्दीयमानं अदत्तं तदा पात्रपतनलक्षणमदत्तस्येति प्राप्तमिति, निर्ग्रन्थोत्तरवाक्ये तु 'अम्हाणं अज्जो! दिज्जमाणे दिण्णे'इत्यादि यदुक्तं तत्र क्रियाकालनिष्ठाकालयोरभेदाद्दीयमानत्वादेर्दत्तत्वादि (भावात् नादत्तास्वादना) अथ दीयमानमदत्तमित्यादेर्भवन्मतत्वात् यूयमेवासंयतत्वादिगुणा इत्यावेदनायान्ययूथिकान् प्रति स्थविराः प्राहुः—'तुब्भे णं अज्जो! अप्पणा रीयं रीयमाणे'त्ति रीतं–गमनं रीयमाणा–गच्छन्तो, गमनं कुर्वाणा इत्यर्थः, 'पुढविं पेच्चह'त्ति पृथ्वीं आक्रमथ 'अभिहणह'त्ति पद्भ्यामाभिमुख्येन हत्वा 'वत्तेह'त्ति पद्भ्यां वर्त्तयथ–श्लक्ष्णतां नयथ, 'लेसेह'त्ति श्लेषयथ–भूम्यां श्लिष्टां कुरुथ 'संघाएह' सङ्घातयथ–संहतां कुरुथ 'संघट्टेह'त्ति संघट्टयथ–स्पृशथ 'परियावेह'त्ति परितापयथ, समन्ताज्जातं सन्तापं कुरुथ, 'किलामेह'त्ति क्लमयथ–मारणान्तिकसमुद्घातं गमयथ 'उवद्दवेह'त्ति उपद्रवयथ, मारयथेत्यर्थः, 'कायं'ति कायं–वपुः, उच्चारादिकायकार्यमित्यर्थः, 'जोयं'ति योगं ग्लानादिवैयावृत्त्यादि व्यापारं वा 'रियं' ऋतं सत्यं प्रतीत्य–आश्रित्येति युज्यते, अप्कायादिजीवरक्षामाश्रित्येत्यर्थः, 'देसं देसेणं'ति प्रभूतायाः पृथ्व्या ये विवक्षिता देशास्तैर्व्रजामो, नाविशेषेण, ईर्या-

समितिपरायणत्वेन सचेतनदेशपरिहारतोऽचेतनदेशैर्व्रजाम इत्यर्थः, 'एवं पदेसं पदेसेणं'ति इत्यपि, नवरं देशो भूमेर्महत् खण्डं, प्रदेशस्तु लघुतरमिति। अथोक्तगुणायोगेन नास्माकमिवैषां गमनमस्तीत्यभिप्रायतः स्थविराः यूयमेव पृथ्व्यादिकायाक्रमणतोऽसंयतत्वादिगुणा इति प्रतिपादनायान्ययूथिकान् प्रत्याहुः-'अम्हे णं अज्जो'त्ति, 'गइप्पवायं'ति गतिः प्रोद्यते-प्ररूप्यते यत्र तद् गतिप्रवादं अथवा गतेः-गमनक्रियायाः प्रपातः-प्रपतनं सम्भवः प्रयोगादिष्वर्थेषु वर्त्तनं गतिप्रपातः तत्प्रतिपादकमध्ययनं गतिप्रपातं तत् प्रज्ञापितवन्तो गतिविचारप्रस्तावादिति। अथ गतिप्रपातमेव गतिभेदतोऽभिधातुमेवाह-'पओगगइ'त्ति (सू. ३३८) प्रयोगस्य-सत्यमनःप्रभृतिकस्य पञ्चदशविधा गतिः-प्रवृत्तिः प्रयोगगतिः, 'ततगइ'त्ति ततस्य-ग्रामनगरादिकं गन्तुं प्रवृत्तत्वे तदप्राप्तत्वेन तदन्तरालपथे वर्त्तमानतया प्रसारितक्रमतया विस्तारं गतस्य गतिस्ततगतिः, अस्मिंश्च स्थाने इतः सूत्रादारभ्य प्रज्ञापनायां षोडशप्रयोगपदं ज्ञेयं, 'से तं विहायगई' एतत्सूत्रं यावद्वाच्यं, एतदेवाह-'इत्तो'त्ति इतः प्रारब्धं, तच्चैवम्—'बंधणछेयणगई उववायगई विहायगई' तत्र बन्धनच्छेदनगतिः-बन्धनस्य कर्मणः छेदने-अभावे गतिः, जीवस्य शरीरात् जीवाच्छरीरस्य, मोक्षगतिरित्यर्थः, उपपातगतिस्त्रिधा-क्षेत्र १ भव २ नोभव ३ भेदात्, तत्र नारकतिर्यग्नरदेवसिद्धानां यत् स्वक्षेत्रे उपपाताय-उत्पादाय गमनं सा क्षेत्रोपपातगतिः, या च नारकादीनामेव स्वभवे उपपातरूपा गतिस्सा भवोपपातगतिः, यच्च सिद्धपुद्गलयोर्गमनमात्रं सा नोभवोपपातगतिः, विहायोगतिश्च स्पृशद्गत्यादिका अनेकविधेति ॥ अष्टमशते सप्तमोद्देशकविवरणम् ॥

(सू. ३३८) आचार्योऽर्थव्याख्याता १ उपाध्यायः सूत्रदाता २ स्थविरस्तु जाति १ श्रुत २ पर्यायैः ३, तत्र जात्या षष्टिवर्षजातः १ श्रुतस्थविरः समवायधरः २ पर्यायस्थविरो विंशतिवर्षपर्यायः ३। 'गईणं'ति गतिं-नरत्वादिकां प्रतीत्य, तत्रेहलोकस्य-नरत्व-

लक्षणस्य प्रत्यनीक इन्द्रियार्थप्रतिकूलकारित्वात्, पञ्चाग्नितपस्वी चेहलोकप्रत्यनीकः, 'परलोकप्रत्यनीकः' परलोको—जन्मान्तरं तत्प्रत्यनीक इन्द्रियार्थतत्परो, राज्यादिलाभापेक्षयेत्यर्थः, द्विधालोकप्रत्यनीकश्च चौर्यादिभिरिन्द्रियार्थसाधनपरः। 'समूहंणं'ति समूहं–साधुसमुदायं प्रतीत्य, तत्र कुलं चान्द्रादिकं, तत्समूहो गणः कोटिकादिः, तत्समूहस्संघः, प्रत्यनीकता चैतेषामवर्णवादादिभिरिति, कुलादिलक्षणं त्विदम्–"एत्थ कुलं विण्णेयं एगायरियस्स संतई जा उ। तिण्ह कुलाण मिहो पुण सावेक्खाणं गणो होइ ॥१॥ सव्वोऽवि नाणदंसणचरणगुणविभूसियाण समणाणं। समुदाओ पुण संघो गुणसमुदाओत्ति काऊणं ॥२॥" 'अणुकंपपण्णं'ति अनुकम्पा–भक्तपानादिभिरुपष्टम्भस्तां प्रतीत्य, तत्र तपस्वी–क्षपकः ग्लानो–रोगाद्यसमर्थः, शैक्षः–अभिनवदीक्षितः, एते ह्यनुपकम्पनीयाः स्युः, तदकरणाकारणाभ्यां प्रत्यनीकता चेति, 'सुयपण्णं'ति श्रुतं–सूत्रं व्याख्येयं अर्थः–तद्व्याख्यानं निर्युक्त्यादिः तदुभयं–एतद्द्वितयं चेति, तत्प्रत्यनीकता चैवम्–"काया वया य ते च्चिय ते चेव पमाय अप्पमाया य। मोक्खाहिगारियाणं जोइसजोणीहिं किं कज्जं ? ॥१॥" इति दूषणोद्भावनं, 'भावपण्णं'ति भावः–पर्यायः, स च जीवाजीवगतः, तत्र जीवस्य प्रशस्तोऽप्रशस्तश्चेति, तत्र प्रशस्तः क्षायिकादिः, अप्रशस्तो विवक्षयौदयिकः, क्षायिकादिः पुनर्ज्ञानादिरूपः अतो भावं–ज्ञानादिं प्रति प्रत्यनीकः, तेषां वितथप्ररूपणतो दूषणतो वा, यथा–"पागयसुत्तनिबद्धं, को वा जाणइ पणीय केणेयं ?। किं वा चरणेणं तु दाणेण विणा उ हवउत्ति ॥१॥" 'ववहारे'त्ति (सू. ३३९) व्यवहरणं व्यवहारः–मुमुक्षुप्रवृत्तिनिवृत्तिरूपः, 'आगम'त्ति आगम्यन्ते–परिच्छिद्यन्ते अर्था अनेनेत्यागमः–केवलमनःपर्यायावधिपूर्वचतुर्दशकनवकरूपः१ तथा श्रुतं–शेषमाचारप्रकल्पादि, नवादिपूर्वाणां च श्रुतत्वेऽपि अतीन्द्रियार्थेषु विशिष्टज्ञानहेतुत्वेन सातिशयित्वादागमव्यपदेशः केवलवदिति २ आज्ञा–यदगीतार्थस्य पुरतो गूढार्थपदैर्देशान्तर-

स्वगीतार्थनिवेदनायातिचारालोचनमितरस्यापि तथैव शुद्धिदानं ३ तथा धारणा गीतार्थसंविग्नेन द्रव्याद्यपेक्षया यत्रापराधे यथा या विशुद्धिः कृता तामवधार्य यदन्यस्तत्रैव तथैव तामेव प्रयुङ्क्ते इति, वैयावृत्त्यकरादेर्वा गच्छोपग्रहकारिणो शेषानुचितस्य प्रायश्चित्तपदानां प्रदर्शितानां धरणमिति ४, तथा जीतं—द्रव्यक्षेत्रकालभावपुरुषप्रतिसेवानुवृत्त्या संहननधृत्यादिहानिमवेक्ष्य यत् प्रायश्चित्तदानं, यो वा यत्र गच्छे सूत्रातिरिक्तः कारणतः प्रायश्चित्तव्यवहारः प्रवर्त्तितो बहुभिरन्यैश्चानुवर्त्तित इति ५। आगमादीनां व्यापारणे उत्सर्गापवादावाह—'जहा से'त्ति 'यथे'ति यथाप्रकारः केवलादीनामन्यतमः 'से' तस्य व्यवहर्त्तुः स वा उक्तलक्षणो व्यवहारः 'तत्थ'त्ति तत्र तेषु पञ्चमुख्यव्यवहारेषु मध्ये तस्मिन् वा—प्रायश्चित्तदानादिव्यवहारकाले व्यवहर्त्तव्ये वस्तुनि विषये आगमः—केवलादिः 'सिय'त्ति स्याद्—भवेत् 'आगमेणं'ति आगमेन, तादृशेनेति शेषः, ववहारं—प्रायश्चित्तदानादिकं व्यवहारं प्रस्थापयेत्—प्रवर्त्तयेत्, न शेषैः, आगमेऽपि षड्विधे केवलेन, अवन्ध्यबोधत्वात् तस्य, तदभावे मनःपर्यायेण, एवं प्रधानतराभावे इतरेणागमेनेति, 'नो य से तत्थ'त्ति अथ नो—नैव चशब्दो यदिशब्दार्थः 'से' तस्य स वा तत्र—व्यवहर्त्तव्यादावागमः स्यात् तदा प्रायश्चित्तादिकं आगमंति नाम दद्यात् इत्यर्थः 'जहा से तत्थ सुए'त्ति यथाप्रकारं 'से' तस्य 'तत्थे'ति तत्र—व्यवहर्त्तव्यादौ श्रुतं स्यात् तादृशेन श्रुतेन व्यवहारं प्रस्थापयेत्, 'जहा जहा से'त्ति विशेषनिगमनमिति, एतैर्व्यवहर्त्तुः किं फलं स्यादिति प्रश्नद्वारेणाह—'से किमाहु'त्ति अथ किं हे भदन्त! आहुः—प्रतिपादयन्ति, के आगमबलिकाः?, श्रमणा निर्ग्रन्थाः, 'इच्चेयं'ति इति—उक्तरूपं एतं—प्रत्यक्षरूपं व्यवहारं पञ्चविधं प्रायश्चित्तदानादिरूपं 'सम्मं ववहरमाणे'त्ति सम्यक् व्यवहरन्, प्रवर्त्तयन्नित्यर्थः, कथं सम्यगित्याह—यदा यदा यस्मिन् २ अवसरे यत्र २ प्रयोजने क्षेत्रे वा यो य उचितस्तं तमिति शेषः, तदा २ काले तस्मिन् २

प्रयोजनादौ कथंभूतमित्याह—'अणिस्सिओवस्सियं'ति अनिश्रितैः—सर्वाशंसारहितैरुपाश्रितः-अंगीकृतोऽनिश्रितोपाश्रितस्तं, अथवा निश्रितं—रागः उपाश्रितं च द्वेषस्ते अथवा निश्रितं—आहारादिलिप्सा उपाश्रितं—शिष्यप्रतीच्छककुलाद्यपेक्षा ते न स्तः, सर्वथापेक्षया रहितत्वेन, यथावदित्यर्थः, तथेति क्रियाविशेषणं ॥ 'इरियावहियाबंध'त्ति ईर्या—गमनं तस्य पन्था ईर्यापथस्तत्र भवमैर्यापथिकं—केवलयोगप्रत्ययं कर्म तद्बन्धः, स चैकस्य वेदनीयस्य, 'संपराइ'त्ति संसारं पर्यटत्येभिरिति सम्परायाः—कषायाः तेषु भवं साम्परायिकं कर्म तद्बन्धस्साम्परायिकबन्धः, स चावीतरागगुणस्थानकेषु सर्वेषु, 'नो नेरइओ'त्ति मनुष्यस्यैव तद्बन्धः, यस्मादुपशान्तमोहक्षीणमोहसयोगिकेवलिनामेव तद्बन्धनमिति, 'पुव्वपडिवन्नए'त्ति पूर्वं—प्राक्काले प्रतिपन्नं ऐर्यापथिकबन्धकत्वं यैस्ते तान् तद्बन्धकत्वद्वितीयादिसमयवर्त्तिनः, ते च सदैव बहवः पुरुषाः स्त्रियश्च सन्ति, उभयेषां केवलिनां सदैव भावात्, अत उक्तं—'मणुस्सा मणुस्सी बंधंति' 'पडिवज्जमाणए'त्ति प्रतिपद्यमानकान् ऐर्यापथिककर्मबन्धनप्रथमसमयवर्त्तिन इति, एतेषां च विरहसम्भवात् एकदा मनुष्यस्य स्त्रियाश्च एककयोगे एकत्वबहुत्वाभ्यां चत्वारो विकल्पाः, द्विकयोगे तथैव चत्वारः, एवं सर्वेऽष्टौ, स्थापना चेयम् ॥ एतदेवाह—'मणुस्सो'वेत्यादि, एषां च पुंस्त्वादि तल्लिङ्गापेक्षया, नतु वेदापेक्षया, क्षीणोपशान्तवेदत्वात्, अथ वेदापेक्षं स्त्रीत्वाद्यधिकृत्याह—'तं भंते! किमिति त्यादिना च पदत्रयनिषेधेनावेदकः प्रश्नितः, उत्तरे तु षण्णां पदानां निषेधः, सप्तमपदोक्तस्तु व्यपगतवेदः, तत्र 'पुव्वपे'—च पूर्वं प्रतिपन्नाः प्रतिपद्यमानकश्च स्युः, तत्र पूर्वप्रतिपन्नानां विगतवेदानां सदा बहुत्वभावात्, आह च—त्यादि, प्रतिपद्यमानकानां तु सामयिकत्वाद्विरहभावेनैकादिसम्भवात् विकल्पद्वयं, अत एवाह—'पडिव-

| | |
|---|---|
| पु. १ | |
| स्त्री. १ | |
| पु. ३ | |
| स्त्री. ३ | |
| एकक. योगाः ४ | |

| पुं. | स्त्री. |
|---|---|
| १ | १ |
| १ | ३ |
| ३ | १ |
| ३ | ३ |
| द्विक-योगाः ४ | |

नो इत्थी-

ज्जमाणे'त्ति अपगतवेदमेवमपगतवेदांश्च, ऐर्यापथिकं बन्धमाश्रित्य स्त्रीत्वादि भूतभावापेक्षया विकल्पयन्नाह—'जइ भंते'त्ति, 'तं भंते'त्ति तदा भदन्त ! तच्च कर्म 'इत्थीपच्छाकडो'त्ति भावप्रधानत्वान्निर्देशस्य स्त्रीत्वं पश्चात्कृतं-भूततां नीतं येनावेदके-नासौ स्त्रीपश्चात्कृतः, एवमन्यावपि, इहैककयोगे एकत्वबहुत्वाभ्यां षड् विकल्पाः सूत्रोक्ता एव ज्ञेयाः, त्रिषु द्विकयोगेषु १२, त्रिकयोगेषु पुनस्तथैवाष्टौ, एते सर्वे २६, इयमेषां स्थापना, चतुर्भङ्ग्याष्टभङ्गीनां प्रथमविकल्पाः सूत्रे दर्शिताः सर्वान्तिमाश्चेति । अथैर्यापथिककर्मबन्धमेव कालत्रयेणाह—'तं भंते'त्ति तदैर्यापथिकं कर्म बध्नीत—बद्धवान् १ बध्नाति २ भंत्स्यति वा ३ इत्येको भेदः, एवमन्येऽपि, स्थापना चेयम्, उत्तरं तु 'भवागरिस'त्ति अनेकत्र भवे उपशमादिश्रेणिप्राप्त्या आकर्षणैर्यापथिककर्माणुग्रहणं भवाकर्षस्तं प्रतीत्य 'अत्थेगइए'त्ति अस्त्येको-भवत्येकः कश्चिज्जीवः प्रथमविकल्पिकः,तथाहि—पूर्वभवे उपशान्तमोहत्वे सत्यैर्यापथिकं कर्म बद्धवान् वर्त्तमानभवे च उपशान्तमोहत्वे बध्नाति अनागते च उपशान्तमोहत्वे भंत्स्यतीति १ द्वितीयस्तु यः पूर्वस्मिन् भवे उपशान्तमोहत्वं लब्धवान् वर्त्तमाने च क्षीण-मोहत्वं संप्राप्तः स पूर्वं बद्धवान् वर्त्तमाने च बध्नाति, शैलेश्यवस्थायां पुनर्न भंत्स्यतीति २ तृतीयः पूर्वजन्मनि उपशान्त-मोहत्वे बद्धवान् तत्प्रतिपतितो न बध्नाति पुनर्यदोपशान्तमोहत्वं प्रतिपत्स्यते तदा भंत्स्यतीति ३ चतुर्थस्तु शैलेशी-पूर्वकाले बद्धवान् शैलेश्यां च न बध्नाति न पुनर्भंत्स्यतीति ४ पञ्चमस्तु पूर्वजन्मनि नोपशान्तमोहत्वं लब्धवान् इति

| पुं | न |
|---|---|
| १ | १ |
| १ | २ |
| २ | १ |
| २ | २ |

| पुं | स्त्री |
|---|---|
| १ | १ |
| १ | २ |
| २ | १ |
| २ | [illegible] |

| स्त्री | पुं | न |
|---|---|---|
| १ | १ | १ |
| १ | १ | २ |
| १ | २ | १ |
| १ | २ | २ |
| २ | १ | १ |
| २ | १ | २ |
| २ | २ | १ |
| २ | २ | २ |

| स्त्री. | पुं. | न. |
|---|---|---|
| १ | १ | १ |

| स्त्री. | पुं. | न. |
|---|---|---|
| २ | २ | २ |

| स्त्री. | न. |
|---|---|
| १ | १ |
| १ | २ |
| २ | १ |
| २ | २ |

| | | |
|---|---|---|
| ऽ | ऽ | ऽ |
| ऽ | ऽ | । |
| ऽ | । | ऽ |
| ऽ | । | । |
| ऽ | ऽ | । |
| । | ऽ | । |
| । | । | ऽ |
| । | । | । |

न बद्धवान् अधुना लब्धमिति बध्नाति पुनरेष्यत्काले उपशान्तमोहा(द्य)वस्थायां भंत्स्यतीति ५ षष्ठश्च क्षीणमोहत्वादि न लब्धवान् इति न प्राग् बद्धवान् अधुना तु क्षीणमोहत्वं लब्धमिति बध्नाति शैलेश्यवस्थायां पुनर्न भंत्स्यतीति ६ सप्तमः पुनर्भव्यस्य, स हि अनादिकाले न बद्धवान्, अधुनाऽपि कश्चिन्न बध्नाति, कालान्तरे तु भंत्स्यतीति ७, अष्टमोऽभव्यस्य ८, स प्रतीत एव। 'गहणागरिसं पडुच्च'त्ति एकस्मिन्नेव भवे ऐर्यापथिककर्मपुद्गलानां ग्रहणरूपो य आकर्षोऽसौ ग्रहणाकर्षः तं प्रतीत्य अस्त्येकः कश्चित् जीवः प्रथमवैकल्पिकः, तथाहि-उपशान्तमोहादिर्यदा ऐर्यापथिकं कर्म बद्ध्वा बध्नाति, तदा अतीतसमयापेक्षया बद्धवान् वर्त्तमानसमयापेक्षया न बध्नाति अनागतसमयापेक्षया च भंत्स्यतीति १ द्वितीयस्तु केवली, स ह्यतीतकाले बद्धवान् वर्त्तमाने च बध्नाति शैलेश्यवस्थायां पुनर्न भंत्स्यतीति २ तृतीयस्तु उपशान्तमोहत्वे बद्धवान् (पतितो न बध्नाति)पुनस्तत्रैव भवे उपशमश्रेणिं प्रतिपद्य भंत्स्यतीति ३, एकभवे चोपशमश्रेणी द्विः प्राप्यत एवेति, तुर्यस्तु स सयोगित्वे बद्धवान् शैलेश्यवस्थायां न बध्नाति न भंत्स्यतीति ४, पञ्चमस्तु आयुषः पूर्वभागे उपशान्तमोहत्वादि न लब्धमिति न बद्धवान् अधुना तु लब्धमिति बध्नाति तदद्धाया एव चैष्यत्समयेषु पुनर्भन्त्स्यतीति ५, न लब्धमिति न बद्धवान्, तल्लाभसमये च बध्नाति, ततोऽनन्तरसमयेषु च भन्त्स्यत्येव, न तु न भन्त्स्यतीति वाच्यम्, समयमात्रस्य बन्धस्येहाभावात्, यस्तु मोहोपशमनिर्ग्रन्थस्य समयानन्तरमरणेनैर्यापथकर्मबन्धः समयमात्रः स्यात् नासौ षष्ठविकल्पहेतुः, तदनन्तरैर्यापथकर्मबन्धाभावस्य भवान्तरवर्त्तित्वात्, ग्रहणाकर्षस्येह च प्रक्रान्तत्वात्, यदि पुनः सयोगिचरमसमये बध्नाति, ततोऽनन्तरं न भन्त्स्यतीति विवक्ष्येत तदा यत् सयोगिचरमसमये बध्नातीति तद्बन्धपूर्वकमेव स्यात्, नाबन्धपूर्वकं, तत्पूर्वसमयेषु तस्य बन्धकत्वाद्, एवं च द्वितीयभङ्ग एव स्यात्, न पुनः षष्ठ इति ६, सप्तमो भव्यविशेषस्य ७, अष्टमस्त्वभव्यस्येति ८,

इह न भवाकर्षविशेषेणाष्टसु भङ्गकेषु 'बंधी बंधइ बंधिस्सइ' इत्यत्र प्रथमभङ्गे उपशान्तमोहः, 'बंधी बंधइ न बंधिस्सइ' इति द्वितीये क्षीणमोहः, 'बंधी न बंधइ बंधिस्सइ' इति तृतीये उपशान्तमोहः, 'बंधी न बंधइ न बंधिस्सइ' इति तुर्ये शैलेशीगतः 'न बंधी बंधइ बंधिस्सइ' इति पञ्चमे उपशान्तमोहः 'न बंधी बंधइ न बंधिस्सइ' इत्यत्र षष्ठे क्षीणमोहः 'न बंधी न बंधइ बंधिस्सइ' इति सप्तमे भव्यः, 'न बंधी न बंधइ न बंधिस्सइ' इत्यष्टमेऽभव्यः, ग्रहणाकर्षविशेषेषु पुनरेतेष्वेव प्रथमे उपशान्तमोहः क्षीणमोहो वा, द्वितीये तु केवली, तृतीये उपशान्तमोहः, चतुर्थे शैलेशीगतः, पञ्चमे उपशान्तमोहः क्षीणमोहो वा, षष्ठः शून्यः, सप्तमो भङ्गो भाविमोहोपशमो भाविमोहक्षयो वा, अष्टमे त्वभव्य इति। अथैर्यापथिककर्मबन्धमेव निरूपयन्नाह-'तं भंते'त्ति तदैर्यापथिकं कर्म 'साइयं सपज्जवसियं'-मित्यादि चतुर्भङ्गी, तत्रैर्यापथिककर्मणः प्रथम एव भङ्गे बन्धः, अन्येषु तदसम्भवादिति, 'तं भंते! किं देसेणं'ति तदैर्यापथिकं कर्म देशेन-जीवदेशेन देशं-कर्मदेशं बध्नाति इत्यादि चतुर्भङ्गी, तत्र न देशेन कर्मणो देशः, सर्वं वा कर्म सर्वात्मना वा कर्मणो देशो बध्यते. किं तर्हि ?, सर्वात्मना सर्वं बध्यते, तथास्वभावत्वाज्जीवस्येति ॥ अथ साम्परायिकबन्धनिरूपणायाह-'संपराइयं' इत्यादि, 'किं नेरइओ' इत्यादयस्सप्त प्रश्नाः, उत्तराणि च सप्तैव, एतेषु च मनुष्यमानुषीवर्जाः पञ्च साम्परायिकबन्धका एव सकषायत्वात्, नरनार्यौ तु सकषायत्वे सति साम्परायिकं बध्नीतो, न पुनरन्यदिति। साम्परायिकबन्धमेव स्त्र्याद्यपेक्षया प्राह-'तं भंते'त्ति इह स्त्र्यादयो विवक्षितैकत्वबहुत्वा षड् भेदाः सर्वदा साम्परायिकं बध्नन्ति, अपगतवेदश्च कदाचिदेव, तस्य कादाचित्कत्वात्, ततश्च स्त्र्यादयः केवला बध्नन्त्यपगतवेदयुक्ताश्च, ततश्च यदा अपगतवेदयुक्तास्तदोच्यन्ते, अथवैते स्त्र्यादयो बध्नन्ति अपगतवेदश्च, तस्यैकस्यापि सम्भवात्, अथवैते च स्त्र्यादयो बध्नन्त्यपगतवेदाश्च, तेषां बहूनामपि सम्भवात्, अपगतवेदश्च साम्परायिकबन्धको वेदत्रये

उपशान्तमोहे क्षीणे वा यावद्यथाख्यातं न प्राप्नोति तावल्लभ्यत इति, इह च पूर्वप्रतिपन्नप्रतिपद्यमानकविवक्षा न कृता, द्वयोरप्येकत्वबहुत्वयोर्भावेन निर्विशेषत्वात्, तथाहि—अपगतवेदत्वे साम्परायिकबन्धोऽल्पकालीन एव, तत्र च योऽपगतवेदत्वं प्रतिपन्नपूर्वः साम्परायिकं बध्नाति असावेकोऽनेको वा स्यात्, एवं प्रतिपद्यमानकोऽपीति। अथ साम्परायिककर्मबन्धनमेव कालत्रयेणाह—'तं भंते! किं'मिति, इह प्रागुक्तेष्वष्टसु विकल्पेषु आद्याश्चत्वार एव सम्भवन्ति, नेतरे, जीवानां साम्परायिककर्मबन्धस्यानादित्वेन न पर्यन्तस्यानुपपद्यमानत्वात्, तत्र प्रथमः सर्व एव संसारी यथाख्यातासम्प्रा(सः अप्रा)प्तोपशमक्षपकावसानः, स हि प्राग् बद्धवान् वर्त्तमानकाले बध्नात्यनागतकालापेक्षया तु भन्त्स्यति १, द्वितीयस्तु मोहक्षयात् पूर्वमतीतकालापेक्षया बद्धवान् वर्त्तमानकाले तु बध्नाति भाविमोहक्षयान्न भन्त्स्यति २, तृतीयस्तु उपशान्तमोहत्वात् पूर्वं बद्धवान् उपशान्तमोहत्वे न बध्नाति तस्माच्च्युतः पुनर्भन्त्स्यतीति ३, चतुर्थस्तु मोहक्षयात् पूर्वं साम्परायिकं कर्म बद्धवान् मोहक्षये तु न बध्नाति न च भन्त्स्यतीति ४। साम्परायिककर्मबन्धमाश्रित्याह—'त'मित्यादि,'साइयं सपज्जवसियं बंधइ'त्ति उपशान्तमोहाच्च्युतः पुनरुपशान्तमोहतां क्षीणमोहतां वा प्रतिपत्स्यमानः, 'अणाइयं वा सपज्जवसियं बंधइ'त्ति आदितः क्षपकापेक्षमिदं,'अणाइयमपज्जवसियं बंधइ'त्ति एतदभव्यापेक्षं,'नो चेव णं साइयं अपज्जवसियं बंधइ'त्ति सादिसाम्परायिकबन्धो हि मोहोपशमाच्च्युतस्यैव स्यात्, तस्यावश्यं मोक्षयायित्वात् साम्परायिकबन्धस्य व्यवच्छेदसम्भवः, ततश्च न सादिरपर्यवसानः साम्परायिकबन्धोऽस्तीति॥'परीसह'त्ति(सू. ३४२)'परी'ति समन्तात् निर्जरार्थं साध्वादिभिः सह्यन्त इति परीषहाः,'दिगिंछा' बुभुक्षा १ अरतिः—संयमाधृतिस्तद्विपरीतेऽसंयमे रतिस्तत्परीषहः ७, चर्या—ग्रामानुग्रामविहरणरूपा ९ नैषेधिकी—श्मशानादिस्वाध्यायभूमिः १० सत्कारो—वस्त्रादिपूजनं पुरस्कारः-अभ्युत्थानादिकरणम् १९ प्रज्ञा-

स्वयं विमर्शपूर्विका २०, मतिः ज्ञानं, तद्विपरीतमज्ञानं २१ दर्शनं-सम्यक्त्वं तदेव क्रियावादिप्रभृतिमतश्रवणेऽपि निश्चलचित्ततया धार्यमाणं दर्शनपरीषहः २२ इति । कियन्तोऽर्थतः कथिताः, 'समोयरंति' समवतरन्ति, समवतारं व्रजन्तीत्यर्थः, 'पंचेव'त्ति (*५८) क्षुत् १ पिपासा २ शीतो ३ ष्ण ४ दंशमशकाः ५, एतेषु पीडैव वेदनीयोत्था, तदधिसहनं तु चारित्रमोहनीयक्षयोपशमादिसम्भवं, अधिसहनस्य चारित्ररूपत्वादिति, 'दंसणपरीसहे'त्ति यतो दर्शनं तत्त्वश्रद्धानरूपं दर्शनमोहनीयस्य क्षयोपशमादौ स्यात्, उदये तु न स्यात्, अतस्तत्र दर्शनपरीषहः समवतरतीति, 'अरइ'त्ति गाथोक्ताः सप्तैते चारित्रमोहनीये समवतरन्ति, 'अलाभ'त्ति लाभान्तरायः, तदुदय एव लाभाभावात्, तदधिसहनं चारित्रमोहनीयक्षयोपशमे । अथ बन्धस्थानान्याश्रित्य परीषहानाह-'सत्तविह'त्ति सप्तविधबन्धकः-आयुर्वर्जशेषकर्मबन्धकः, 'जं समयं चरियापरी'ति तत्र चर्या-ग्रामादिषु संचरणं नैषेधिकी-ग्रामादिषु प्रतिपत्तिमासकल्पादेः स्वाध्यायादिनिमित्तं वा शय्यातो विविक्तोपाश्रये गत्वा निषदनं, 'छव्विहबंधग'त्ति षड्विधबन्धकस्यायुर्मोहवर्जबन्धकस्य, सूक्ष्मलोभाणूनां वेदनात् सरागः अनुत्पन्नकेवलत्वात् छद्मस्थः, 'चोद्दस'त्ति अष्टानां मोहनीयसम्भवानां तस्य मोहाभावेनाभावात् द्वाविंशतेः शेषाः १४ परीषहाः, 'एगविहबंधग'त्ति एकविधबन्धकस्य, वेदनीयबन्धकस्येत्यर्थः, कस्य तस्येत्याह— 'वीयरागछउमत्थस्स'त्ति उपशान्तमोहस्य क्षीणमोहस्य चेति 'एवं'ति १४ प्रज्ञप्ताः, द्वादश पुनर्वेदयतीत्यर्थः, शीतोष्णयोश्चर्यानिषद्ययोश्च क्रमशो वेदनादिति ॥ 'दूरे य मूले य'त्ति (सू. ३४३) दूरे च द्रष्टृस्थानापेक्षया व्यवहितो देशे मूले-आसन्ने द्रष्टुः प्रतीत्यपेक्षया रवी दृश्येते, द्रष्टा हि स्वरूपतो बहुभिर्योजनसहस्रैर्व्यवहितमुद्गमास्तमययोः सूर्यं पश्यति, आसन्नं पुनर्मन्यते, सद्भूतं विप्रकर्षं सन्तमपि न प्रतिपद्यते, 'मज्झंतिय'त्ति मध्ये—मध्यमोऽन्तो हि भागो नभसो दिवसस्य वा मध्यान्तः स यस्य मुहूर्त-

स्थानि स मध्यान्तिकः स चासौ मुहूर्त्तश्चेति मध्यान्तिकमुहूर्त्तः, तत्र मूले-आसन्ने द्रष्टृस्थानापेक्षया देशे दूरे च-व्यवहिते देशे द्रष्टृप्रतीत्यपेक्षया रवी दृश्येते, द्रष्टा हि मध्याह्ने उदयास्तमयदर्शनापेक्षया आसन्नं रविं पश्यति, योजनशताष्टकेनैव तदा तस्य व्यवहितत्वात्, मन्यते पुनरुदयास्तमयप्रतीत्यपेक्षया व्यवहितमिति। 'सव्वत्थ समा उच्चत्तेणं'ति समभूतलापेक्षया सर्वत्रोच्चत्वमष्टौ योजनशतानीतिकृत्वा, 'लेसापडिघाएणं'ति तेजसः प्रतिघातेन, दूरत्वात् तादृशस्य तदप्रसरणेनेत्यर्थः, लेश्याप्रतिघाते हि सुखदृश्यत्वेन दूरस्थोऽपि स्वरूपेण रविरासन्नप्रतीतिं जनयति, 'लेसाहितावेणं'ति तेजसोऽभितापेन, मध्याह्ने ह्यासन्नतरत्वात् सूर्यः प्रकर्षेण तपति, तेजःप्रतापेन दुर्दृश्यत्वेन प्रत्यासन्नोऽप्यसौ दूरप्रतीतिं जनयति, 'नो तीतं'ति अतीतक्षेत्रस्यातिक्रान्तत्वात् 'पडुप्पन्नं'ति प्रत्युत्पन्नं-वर्त्तमानं, गम्यमानमित्यर्थः, 'अणागयं'ति अनागतं गमिष्यमाणमिति, इह यदाकाशखण्डं रविस्वतेजसा व्याप्नोति तत्क्षेत्रमुच्यते, 'ओभास'त्ति अवभासयतः-ईषदुद्योतयतः 'पुट्ठं'ति तेजसा स्पृष्टः, 'जाव छद्दिसं'ति यावत्करणादिदं दृश्यम्-'तं भंते! किं ओगाढं ओभासेइ अणोगाढं?, गोयमा! ओगाढं, नो अणोगाढमिति, तं भंते! कइदिसं ओभासेइ?, गोयमा! इत्येतदंतमिति, 'उज्जोवेंति' उद्योतयतः इति अर्थं द्योतयतः 'तवंति'त्ति तापयतः, उष्णरश्मित्वात् तयोः, भासंति-भासयतः-शोभयतः 'किरिया कज्जइ'त्ति क्रिया-अवभासरूपा 'कज्जइ'त्ति भवतीत्यर्थः, 'पुट्ठ'त्ति तेजसा स्पृष्टा 'एगं जोयणसयं'ति ऊर्ध्वमतिविमानोपरि योजनशतप्रमाणस्यैव तापक्षेत्रभावात्, 'अहे तवयंति' कथं?, सूर्यादष्टासु योजनशतेषु समभूतलं, समभूतलाच्चाधोलोकग्रामा योजनसहस्रे स्युः तांश्च यावद् द्योतनात्, 'तिरियं'ति 'सीयालीसं'ति एतच्च सर्वोत्कृष्टदिवसे चक्षुःस्पर्शापेक्षया ज्ञेयमिति, 'जहा जीवाभिगमे'त्ति तच्चेदम्-कप्पोववण्णगा विमाणोववण्णगा चारोववण्णगा विमाणोववण्णगा चारट्ठिइया गइरइया

गइसमावण्णगा ?, गोयमा ! ते णं देवा उड्ढोववण्णगा, नो कप्पोववण्णगा; ज्योतिश्चक्रचरणोलक्षितक्षेत्रोत्पन्ना इत्यर्थः; 'नो चार-ठिइया' इह चारो-ज्योतिषामवस्थानकक्षेत्रं 'नो' नैव चारे स्थितिः—अवस्थितिर्येषां ते, अत एव 'गइसमावण्णगा'इत्यादि; 'जाव'त्ति यावत्करणादिदं ज्ञेयम्—'विमाणोववण्णगा चारोववण्णगा,(तं)ठाणे णं भंते ! केवइयं कालं विरहिए उववाएणं ?, गोयमा ! जहण्णेणमेगं समयं उक्कोसेणं छम्मासं''जहा जीवाभिगमे' तच्चेदम्—'जे चंदिमसूरियगहगणनक्खत्ततारारूवा णं भंते ! देवा(ते)किं उड्ढोववण्णगा'इत्यादि प्रश्नः, उत्तरं तु 'गोयमा ! ते णं देवा नो उड्ढोववण्णगा नो कप्पोवव०, विमाणोववण्णगा, नो चारोववण्णगा, नारठिइया, नो गइसमावण्णगा'इत्यादि ॥ अष्टमशतेऽष्टमोद्देशकविवरणम् ॥

'बंधे'त्ति (सू. ३४४) बन्धः—पुद्गलादिविषयस्सम्बन्धः 'पओग'त्ति जीवप्रयोगकृतः 'वीसस'त्ति विश्रसास्वभावसम्पन्नः, यथाऽऽसन्नन्यायमाश्रित्याह—'वीसस'त्ति (सू. ३४५) 'धम्मत्थिकाय'त्ति धर्मास्तिकायस्यान्योऽन्यं प्रदेशानां मिथो योऽनादिको विश्रसाबन्धस्स तथा, एवमुत्तरत्रापि, 'देसबंधे'त्ति देशतो—देशापेक्षया बन्धो देशबन्धः, यथा संकलिकाकटिकानां, 'सव्वबंधे'त्ति सर्वतः—सर्वात्मना बन्धः सर्वबन्धो, यथा क्षीरनीरयोः, 'देसबंधे नो सव्वबंधे'त्ति धर्मास्तिकायस्य प्रदेशानां मिथः संस्पर्शेन व्यवस्थितत्वात् देशबन्ध एव, न पुनः सर्वबन्धः, तत्र लोकस्य प्रदेशस्य प्रदेशान्तरैः सर्वथा बन्धे मिथोऽन्तर्भावेनैकप्रदेशत्वमेव स्यात्, नासङ्ख्येयप्रदेशत्वमिति, 'सव्वद्धं'ति सर्वकालं, 'साइयवीससाबंधो'त्ति सादिको यो विश्रसाबन्धः स तथा, 'बंध-णपच्चइए'त्ति बध्यतेऽनेनेति बन्धनम्—विवक्षितस्निग्धतादिको गुणः स चैव प्रत्ययो—हेतुर्यत्र स तथा, एवं 'भाजनप्रत्ययः' भाजनं—आधारः, 'परिणामप्रत्ययश्च' परिणामो—रूपान्तरगमनं 'जण्णं परमाणु'त्ति परमाणुपुद्गलः परमाणुरेव 'वेमायनिद्ध-

याए'त्ति विषमा मात्रा यस्यां सा विमात्रा सा चासौ स्निग्धता चेति विमात्रस्निग्धता तया, एवमन्यदपि पदद्वयं, इदमुक्तं स्यात्– "समनिद्धयाइ बंधो, न होइ समलुक्खयाइवि न होइ। वेमायनिद्धलुक्खत्तणेण बंधो य खंधाणं ॥१॥" अयमर्थः–समगुणस्निग्धस्य समगुणस्निग्धेन परमाणुकादिना बन्धो न स्यात्, एवं समगुणरूक्षस्यापि, यदा पुनर्विषमा–मात्रा तदा बन्धस्स्यात्, विषममात्रानिरूपणार्थमुच्यते–निद्धस्स निद्धेण दुयाहिएण, लुक्खस्स लुक्खेण दुयाहिएण। निद्धस्स लुक्खेण उवेइ बंधो, जहण्णवज्जो विसमो समो व ॥२॥"त्ति, 'असंखेज्ज'त्ति असङ्ख्येयोत्सर्पिण्यवसर्पिणीरूपं, 'जुण्णसुर'त्ति जीर्णसुरायाः स्त्यानभवनलक्षणो बन्धः; जीर्णगुडस्य, जीर्णतन्दुलानां च पिण्डीभवनरूपः॥ प्रयोगबंधः (सू. ३४६) स च जीवप्रदेशानामौदारिकादिपुद्गलानां वा 'अणाइए वा'इत्यादयो द्वितीयवर्जास्त्रयो भङ्गाः, तत्र प्रथमभङ्गोदाहरणमाह–'अणाइए अपज्जव'त्ति अस्य जीवस्यासङ्ख्येयप्रदेशस्याष्टौ ये मध्यप्रदेशास्तेषामनादिरपर्यवसितो बन्धः १, यदा लोकं व्याप्य तिष्ठति जीवः तदाप्यसौ तथैवेति, अन्येषां पुनर्जीवप्रदेशानां विपरिवर्त्तमानत्वात् नास्त्यनादिरपर्यवसितो बन्धः, तत्स्थापना, एतेषामुपरि अन्ये चत्वारः, एवमेतेऽष्टौ, एवं तावत्समुदायेनाष्टानां बन्ध उक्तः, अथ तेष्वेकैकेनात्मप्रदेशेन सह यावतां मिथः संयोगो भवति तद्दर्शनायाह–'तत्थ वि णं'ति तत्रापि– 
तेष्वष्टासु जीवप्रदेशेषु मध्ये त्रयाणां २ एकैकेन सहानादिरपर्यवसितो बन्धः, तथाहि–प्रागुक्तविधिनाऽवस्थितानामष्टानामुपरितनप्रतरस्य यः कश्चिद्विवक्षितस्तस्य द्वौ पार्श्ववर्त्तिनावेकश्चाधोवर्त्तीत्येते त्रयस्सम्बध्यंते, शेषास्त्वेक उपरितनस्त्रयश्चाधस्तना न सम्बध्यन्ते, व्यवहितत्वात्, एवमधस्तनप्रतरापेक्षयाऽपीति चूर्णिकारव्याख्या, 'सेसाणं साइए' शेषाणां मध्यमाष्टाभ्योऽन्येषां सादिर्विपरिवर्त्तमानत्वात्, एतेन सूत्रो प्रथमभङ्गः, अनादिरपर्यवसितस्त्वयं द्वितीयो नेह सम्भवति, अनादिसम्बद्धानामष्टानां जीवप्रदेशानाम-

परिवर्त्तमानत्वेन बन्धस्य सपर्यवसितत्वानुपपत्तेरिति, अथ तृतीयो भङ्गः प्रोच्यते—'तत्थ णं जे से साइए'त्ति सिद्धानां सादिरपर्यवसितो जीवप्रदेशबन्धः, शैलेश्यवस्थायां स्थापितप्रदेशानां सिद्धत्वेऽपि चलनाभावादिति, अथ चतुर्भङ्गीभेदत आह—'आलावणबंधे'त्ति आलाप्यते—आलीनं क्रियते एभिरिति आलापनानि—रज्ज्वादीनि तैस्तृणादिबन्धनमालापनबन्धः,'अल्लियावणबंधे'त्ति अल्लियावणं—द्रव्यस्य द्रव्यान्तरश्लेपादिना आलीनस्य करणं तद्रूपो यो बन्धः स तथा,'सरीरबंधे'त्ति समुद्घाते सति यो विस्तारितसङ्कोचितजीवप्रदेशबन्धविशेषात् तैजसादिवपुःप्रदेशानां बन्धविशेषः सः, शरीरिबन्ध इत्यन्ये, तत्र शरीरिणः समुद्घाते विक्षिप्तजीवप्रदेशानां सङ्कोचने यो बन्धस्स शरीरिबन्ध इति,'सरीरप्पओगबंध'त्ति शरीरस्य—औदारिकादेर्यः प्रयोगेण—वीर्यान्तरायक्षयोपशमजनितव्यापारेण बन्धः—तत्पुद्गलोपादानं शरीररूपस्य वा प्रयोगस्य बन्धस्स शरीरप्रयोगबन्धः, 'वेत्तलय'त्ति वेत्रलता—जलवंशकंबा 'वाग'त्ति वल्का 'वरत्त'त्ति वरत्रा—चर्ममयी रज्जुः शनादिमयी वा वल्ली त्रपुष्यादिका कुशा—निर्मूला दर्भाः दर्भास्तु समूलाः आदिशब्दाच्चीवरादिग्रहः, अथ 'लेसणबंध'त्ति श्लेपणा—श्लेपद्रव्येण द्रव्ययोस्सम्बन्धनं तद्रूपो यो बन्धस्स तथा,'उच्चयबंधे'त्ति ऊर्ध्वं चयनं—राशीकरणं तद्रूपो बन्धः उच्चयबन्धः,'समुच्चय'त्ति सङ्गतः—उच्चयापेक्षया विशिष्टतरः उच्चयस्समुच्चयः स एव बन्धस्समुच्चयबन्धः,'साहणणाबंधे'त्ति संहननं—अवयवानां सङ्घातनं तद्रूपो यो बन्धः, दीर्घत्वादि च प्राकृतत्वात्, कुट्टिमानां—मणिभूमिकानां, 'सिलेस'त्ति श्लेपो—वज्रलेपः,'लक्ख'त्ति लाक्षा, जतुरित्यर्थः,'महुसित्थ'त्ति मधुसिक्थं—मीनं, आदिशब्दाद् गुग्गुलरालाखल्यादिग्रहः,'अवगररासीण'न्ति कचवरराशीनां 'उच्चएणं'ति ऊर्ध्वचयनेन 'अगडतलाये'त्यादि प्रायः प्राग्व्याख्यातमेव,'देससाहणण'त्ति देशेन देशस्य संहननलक्षणो बन्धः—सम्बन्धः, शकटाङ्गादीनामिवेति देशसंहननसम्बन्धः, 'सव्व-

माहणण'त्ति सर्वेण सर्वसंहननलक्षणो बन्धः,क्षीरनीरादीनामिवेति सर्वसंहननबन्धः,'सगड'त्ति गन्त्री 'रह'त्ति स्यन्दनः'जाण'त्ति यानं लघुगन्त्री 'जुग्ग'त्ति युग्यं गोल्लविषयप्रसिद्धं द्विकरप्रमाणवेदिकोपशोभितं जपानं 'गिल्लि'त्ति हस्तिन उपरि मनुष्यं गिलतीव कोल्लररूपा,'थिल्लि'त्ति अड्डपल्लाणं 'सीया' शिविका कूटाकारेणाच्छादितो जंपानविशेषः, 'संदमाणिय'त्ति पुरुषप्रमाणजम्पानविशेषः,'लोहि'त्ति मंडकादिपचनभाजनं लोहरडीति लोके 'लोहकडाह'त्ति प्रतीतं 'कडुच्छुय'त्ति परिवेषणपात्रं, लोके कडछीति, 'भंड'त्ति मृन्मयभाजनं,'मत्त'त्ति अमत्रं-भाजनविशेषस्ताम्रस्येति 'उवगरण'त्ति नानाविधं तदन्योपकरणं 'पुव्वप्पओगपच्चइ-ए'त्ति पूर्वः प्राक्कालासेवितः प्रयोगः-जीवव्यापारो वेदनाकषायादिसमुद्घातरूपः प्रत्ययः-कारणं यत्र शरीरबन्धे स तथा स एव पूर्वप्रयोगप्रत्ययिकः,'पच्चुप्पन्नप्पओग'त्ति प्रत्युत्पन्नं-अप्राप्तपूर्वो,वर्त्तमान इत्यर्थः,प्रयोगः-केवलिसमुद्घातलक्षणव्यापारः प्रत्ययो यत्र स तथा स एव प्रत्युत्पन्नप्रत्ययिकः, 'तत्थ तत्थ'त्ति अनेन समुद्घातकरणक्षेत्राणां बाहुल्यमाह,'तेसु तेसु'त्ति अनेन समुद्घातकारणानां वेदनादीनां बाहुल्यमुक्तं, 'समोहन्नमाणाणं'ति समुद्धन्यमानानां-समुद्घातं शरीराद् बहिर्जीवप्रदेशप्रक्षेपलक्षणं गच्छतां 'जीवप्पदेसाणं'ति इह जीवप्रदेशानामित्युक्तावपि शरीरबन्धाधिकारात् 'तात्स्थ्यात् तद्व्यपदेश'इति न्यायेन जीवप्रदेशाश्रिततैजसकार्मणशरीरप्रदेशानामिति द्रष्टव्यं, शरीरबन्ध इत्यत्र तु पक्षे समुद्घातेन विक्षिप्य सङ्कोचितानामुपसर्जनीकृततैजसादिशरीरप्रदेशानां जीवप्रदेशानामिवेति,'बंधे'त्ति बन्धो-रचनाविशेषः,'जण्णं केवली'ति केवलिसमुद्घाते दण्ड १ कपाट-२ मथिकरणा ३ न्तरपूरण ४ लक्षणेन समुपहतस्य विस्तारितजीवप्रदेशस्य ततः-समुद्घातात् प्रतिनिवर्त्तमानस्य प्रदेशान् संहरतः, समुद्घातप्रतिनिवर्त्तमानत्वं च पञ्चमादिष्वनेकेषु समयेषु स्यादित्यतो विशेषमाह-'अंतरा मंथेवट्टमाणस्स'त्ति निवर्त्तनक्रियाया

अन्तरे–मध्येऽवस्थितस्य, पञ्चमसमय इत्यर्थः, यद्यपि च षष्ठादिसमयेषु तैजसादिवपुस्सङ्घातस्समुत्पद्यते तथाप्यभूतपूर्वतया पञ्चमसमय एवासौ स्यात्, शेषेषु अनुभूतपूर्वतयेतिकृत्वा 'अन्तरा मंथे वट्टमाणस्से'त्युक्तमिति, 'तेयाकम्माणं बंधे'त्ति तैजसकार्म्मणवपुर्बन्धसङ्घातः समुत्पद्यते, 'किं कारणं'ति कुतो हेतोः ?, उच्यते–'ताहे'त्ति तदा समुद्घातनिवृत्तिकाले 'से'त्ति तस्य केवलिनः प्रदेशा–जीवप्रदेशाः, 'एगत्तीगय'त्ति एकत्वं गताः–सङ्घातमापन्नाः स्युः, तदनुवृत्त्या च तैजसादिशरीरप्रदेशानां बन्ध उत्पद्यते, इति प्रकृतं, बन्धपक्षे तु 'तेयाकम्माणं बंधे समुप्पज्जइ'त्ति तैजसकार्मणाश्रयभूतत्वात् तैजसकार्म्मणवपुःप्रदेशास्तेषां बन्धः समुत्पद्यत इति व्याख्येयमिति, 'वीरियसजोगसद्दव्वयाए'त्ति वीर्यं–वीर्यान्तरायक्षयादिकृता शक्तिः योगा–मनःप्रभृतयः सह योगैर्वर्त्तत इति सयोगः सन्ति विद्यमानानि द्रव्याणि–तथाविधपुद्गला यस्य जीवस्यासौ सद्रव्यः, वीर्यप्रधानस्सयोगो वीर्यसयोगः स चासौ द्रव्यं चेति विग्रहस्तद्भावस्तत्ता तया वीर्यसयोगसद्रव्यतया–सद्वीर्यतया सयोगतया सद्रव्यतया च जीवस्य तथा 'पमायपच्चय'त्ति प्रमादप्रत्ययात् प्रमादहेतोः तथा 'कम्मं च'त्ति कर्म–चैकेन्द्रियजात्यादिकमुदयवर्त्ति 'जोगं च'त्ति योगं च काययोगादिकं 'भवं च'त्ति तिर्यग्भवादिकमनुभूयमानं 'आयुयं'' तिर्यगायुष्काद्युदयवर्त्ति 'पडुच्च'त्ति प्रतीत्य–आश्रित्य 'ओरालिय'त्ति औदारिकवपुःप्रयोगसम्पादकं यन्नाम तस्य कर्म्मण उदयेनौदारिकवपुःप्रयोगबन्धः, स्यात् इति शेषः, एतानि वीर्यसयोगसद्रव्यतादीनि पदान्यौदारिकवपुःप्रयोगनामकर्मोदयस्य विशेषणतया व्याख्येयानि, 'एगिंदिये'त्यादि 'एवं चेव'त्यनेनाधिकृतसूत्रस्य पूर्वसूत्रसदृक्त्वाभिधानेऽपि 'ओरालियसरीरप्पओगनामाए' इत्यत्र पदे 'एगिंदियओरालियसरीरप्पओगनामाए' इत्ययं विशेषो दृश्यः, एकेन्द्रियौदारिकवपुःप्रयोगबन्धस्येहाधिकृतत्वात्, एवमुत्तरत्रापि वाच्यमिति, 'देसबंधे सव्वबंधेऽवि'त्ति तत्र यथाऽपूपः–

स्नेहभृततप्ततापिकायां प्रक्षिप्तः प्रथमसमये घृतादि गृह्णात्येव, शेषेषु समयेषु गृह्णाति विसृजति च, एवमयं जीवः प्राक्तनं वपुस्त्यक्त्वा यदाऽन्यद् गृह्णाति तदा प्रथमसमये उत्पत्तिस्थानगतान् वपुर्योग्यपुद्गलान् गृह्णात्येव इत्ययं सर्वबन्धः, ततो द्वितीयादिषु समयेषु तान् गृह्णाति विसृजति च, एष देशबन्धः, तेनौदारिकवपुषो देशबन्धस्सर्वबन्धश्चास्ति, सर्वबन्धे 'एक्कं समयं'ति अपूपदृष्टान्तेनैव तत्सर्वबन्धस्यैकसमयत्वात्, 'देसबंधे'इत्यादि, तत्र यदा वायुर्मनुष्यादिर्वा वैक्रियं कृत्वा त्यक्त्वा च पुनरौदारिकस्य समयमेकं सर्वबन्धं कृत्वा पुनस्तस्य देशबन्धं कुर्वन्नेकसमयानन्तरं म्रियते तदा जघन्यत एकं समयं देशबन्धोऽस्य स्यादिति, 'उक्कोसेणं तिण्णि पलिओवमाइं समऊणाइं'ति, कथं?, यस्मादौदारिकशरीरिणां ३ पल्योपमानि उत्कृष्टा स्थितिः, तेषु च प्रथमसमये सर्वबन्धक इति समयन्यूनानि ३ पल्योपमानि उत्कर्षत औदारिकवपुषां देशबन्धकालः स्यात्, 'एगिंदियओरालिए'त्यादि, देसबन्धे 'जहण्णेणं एक्कं समयं'ति, कथं?, वायुरौदारिकशरीरी वैक्रियं वपुर्गतः, पुनरौदारिकप्रतिपत्तौ सर्वबन्धको भूत्वा देशबन्धकश्चैकं समयं भूत्वा मृत इत्येवमिति, 'उक्कोसेणं बावीसं'मिति, एकेन्द्रियाणामुत्कर्षतो २२ वर्षसहस्राणि स्थितिः, तत्रासौ प्रथमसमये सर्वबन्धकः, शेषकालं देशबन्धकः, एवं समयोनानि २२ वर्षसहस्राण्येकेन्द्रियाणामुत्कर्षतो देशबन्धकाल इति, 'पुढविकाइए'त्यादि, 'देसबंधे जहण्णेणं खुड्डागं भवग्गहं'त्ति, कथं?, औदारिकशरीराणां क्षुल्लकभवग्रहणं जघन्यतो जीवितं, तत्र गाथाभिर्निरूप्यते—"दोण्णि सयाइं नियमा छप्पण्णाइं पमाणओ हुंति। आवलियपमाणेणं खुड्डागभवग्गहणमेयं ॥१॥ पण्णट्ठि सहस्साइं पंचेव सयाइं तह य छत्तीसा। खुड्डागभवग्गहणा हवंति अंतोमुहुत्तेणं ॥२॥ सत्तरस भवग्गहणा खुड्डागा हुंति आणुपाणंमि। तेरस सेव सयाइं पंचाणउयाइं अंसाणं ॥ ३ ॥" इहोक्तलक्षणस्य ६५५३६ मुहूर्त्तगतक्षुल्लकभवग्रहणराशेः सहस्रत्रयसप्तत्रिंशच्छत-

त्रिसप्ततिलक्षणेन ३७७३ मुहूर्त्तगतोच्छ्वासराशिना भागे हृते यल्लब्धं तदेकत्रोच्छ्वासे क्षुल्लकभवग्रहणपरिमाणं स्यात्, अयमभिप्रायो-येषामंशानां त्रिभिस्सहस्रैः सप्तभिश्च त्रिसप्तत्यधिकशतैः क्षुल्लकभवग्रहणं स्यात् तेषामंशानां पञ्चनवत्यधिकानि त्रयोदशशतानि अष्टादशस्यापि क्षुल्लकभवग्रहणस्य तत्र स्युरिति, तत्र यः पृथिवीकायिकस्त्रिसमयेन विग्रहेणागतः स तृतीयसमयेन सर्वबन्धकः, शेषेषु देशबन्धको भूत्वा आक्षुल्लकभवग्रहणं मृतो, मृतस्सन् अविग्रहेणागतो यदा तदा सर्वबन्धकः स्यात्, एवं ये ते विग्रहसमयास्तैरूनं क्षुल्लकमित्युच्यते, 'उक्कोसेणं बावीस'मिति 'देसबंधो जेसिं नत्थि'त्ति अयमर्थः--अप्तेजोवनस्पतिद्वित्रिचतुरिन्द्रियाणां क्षुल्लकभवग्रहणं त्रिसमयोनं जघन्यतो देशबन्धः, यतस्तेषां वैक्रियवपुर्नास्ति, वैक्रियवपुषि हि सति एकसमयो जघन्यतः औदारिकदेशबन्धः प्रागुक्तयुक्त्या स्यादिति, 'उक्कोसेणं जा। जस्से'ति तत्रापां वर्षसप्तसहस्राणि स्थितिरुत्कर्षतः, वह्नेरहोरात्राणि त्रीणि, वनस्पतीनां १० वर्षसहस्राः, द्वीन्द्रियाणां १२ वर्षाणि, त्रीन्द्रियाणां ४९ दिनानि, चतुरिन्द्रियाणां ६ मासाः, तत एषामुत्कृष्टा स्थितिः सर्वबन्धसमयोना स्यादिति, 'जेसिं पुण'त्ति ते च वायवः पञ्चेन्द्रियतिर्यग्नराश्च, एषां जघन्यतो देशबन्ध एकं समयं, भावना प्रागिव, 'उक्कोसेणं'ति वायूनां ३ वर्षसहस्राण्युत्कर्षतः स्थितिः, पञ्चेन्द्रियतिर्यग्नराणां पल्योपमत्रयम्, इयं देशबन्धस्थितिरुत्कर्षतः सर्वबन्धसमयोना स्यादिति। उक्त औदारिकवपुःप्रयोगबन्धकालः, अथ तदन्तरमाह—'ओरालिय'त्ति सर्वबन्धान्तरं जघन्यतः क्षुल्लकभवग्रहणं त्रिसमयोनं, कथं?, त्रिसमयविग्रहेणौदारिकशरीरे आगतः, तत्र द्वौ समयावनाहारकः, तृतीयसमये सर्वबन्धकः, क्षुल्लकभवं च स्थित्वा मृत औदारिकशरीरिष्वेवोत्पन्नस्तत्र प्रथमसमये सर्वबन्धकः, एवं च सर्वबन्धस्य सर्वबन्धस्य चान्तरं क्षुल्लकभवो विग्रहगतसमयत्रयोनः, 'उक्कोसेणं'ति उत्कृष्टतस्त्रयस्त्रिंशत्सागराणि पूर्वकोटिसमयाभ्यधिकानि सर्वबन्धान्तरं स्यात्,

कथं ?, मनुष्यादिष्वविग्रहेणागतः, तत्र प्रथमसमय एव सर्वबन्धको भूत्वा पूर्वकोटिं स्थित्वा ३३ सागरोपमाणि सर्वार्थसिद्धे नरके वा
देवो नारको वा भूत्वा त्रिसमयेन विग्रहेणौदारिकशरीरी जातः, तत्र विग्रहस्य द्वौ समयावनाहारकः, तृतीयसमये सर्वबन्धक औदारि-
कशरीरस्य, एवं यौ तौ द्वावनाहारकसमयौ तयोरेकः पूर्वकोटिसर्वबन्धसमयस्थाने क्षिप्तः, ततः पूर्णा पूर्वकोटी जाता, एकः समयो-
ऽधिकः, एवं सर्वबन्धस्य सर्वबन्धस्य चोत्कृष्टमन्तरं यथोक्तमानं स्यादिति, 'देसबंधंतरं'ति देशबन्धस्यान्तरं जघन्येनैकं समयं,कथं ?,
देशबन्धको मृतः सन् अविग्रहेणोत्पन्नः, तत्र प्रथमसमये सर्वबन्धकः, द्वितीयादिसमयेषु देशबन्धको जातः, तदेवं देशबन्धस्य देश-
बन्धस्य चान्तरं जघन्यत एकसमयः सर्वबन्धसंबन्धी स्यात्, 'उक्कोसेणं'ति उत्कृष्टतः ३३ सागराणि त्रिसमयाधिकानि देशबन्धा-
न्तरं स्यादिति, कथं ?, देशबन्धको मृतः ३३ सागरायुरुत्पन्नस्सर्वार्थसिद्धादौ, ततश्च्युत्वा त्रिसमयेन विग्रहेणौदारिकशरीरी जातः,
तत्र विग्रहसमयद्वयेऽनाहारकः तृतीयसमये सर्वबन्धकः ततो देशबन्धकोऽजनि, एवमुत्कृष्टं देशबन्धस्य देशबन्धस्यान्तरं स्यादिति,
सामान्यत औदारिकबन्धस्यान्तरमुक्तं, पुनर्विशेषतस्तदाह–'एगिंदियओरालियपुच्छ'त्ति एकेन्द्रियस्यौदारिकसर्वबन्धान्तरं जघ-
न्येन क्षुल्लकभवग्रहणं त्रिसमयोनं, कथं ?, त्रिसमयविग्रहेण पृथ्व्यादिष्वागतः, तत्र विग्रहसमयद्वये अनाहारकः तृतीये सर्वबन्धकः,ततः
क्षुल्लकभवग्रहणं त्रिसमयोनं स्थित्वा मृतः यदा अविग्रहेणोत्पद्य सर्वबन्धक एव स्यात् तदा यथोक्तं सर्वबन्धयोरन्तरं स्यात्, 'उक्कोसे-
णं'ति उत्कृष्टतस्सर्वबन्धान्तरं २२ वर्षसहस्राणि समयाधिकानि स्युः, कथं ?, अविग्रहेण पृथिवीकायिकेष्वागतः प्रथमसमये सर्व-
बन्धकः, ततो २२ वर्षसहस्राणि स्थित्वा समयोनानि त्रिसमयया विग्रहगत्या अन्येषु पृथ्व्यादिषूत्पन्नः, तत्र समयद्वयमनाहारको
भूत्वा तृतीयसमये सर्वबन्धको जातः, अनाहारकसमययोरेको २२ वर्षसहस्रेषु समयोनेषु क्षिप्तस्तत्पूरणार्थं, ततो २२ वर्षसहस्रा-

ण्येकसमयाधिकानि एकेन्द्रियाणां सर्वबन्धयोरुत्कृष्टमन्तरं स्यात्, 'देसबंधंतरं'ति तत्रैकेन्द्रियौदारिकदेशबन्धान्तरं जघन्येनैकं समयं, कथं ?, देशबन्धको मृत्वा अविग्रहेण सर्वबन्धको भूत्वा एकस्मिन् समये पुनर्देशबन्धक एव जातः, एवं देशबन्धयोर्जघन्यत एकस्समयोऽन्तरं स्यादिति, 'उ० अंतोमुहुत्तं'ति, कथं ?, वायुरौदारिकवपुषो देशबन्धकः सन् वैक्रियं गतस्तत्रान्तर्मुहूर्त्तं स्थित्वा पुनरौदारिकवपुषस्सर्वबन्धको भूत्वा देशबन्धक एव जातः, एवं देशबन्धयोरुत्कर्षतोऽन्तर्मुहूर्त्तमन्तरं, 'पुढविकाइए'त्ति 'देसबंधंतरं जहण्णेणमेक्कं समयमुक्कोसेणं तिन्नि समय'त्ति कथं ?, पृथिवीकायिको देशबन्धको मृतः सन् अविग्रहगत्या पृथिवीकायिकेष्वेवोत्पन्नः एकसमयं सर्वबन्धको भूत्वा पुनर्देशबन्धको जातः, एवमेकसमयो जघन्येन देशबन्धयोरन्तरं, तथा पृथ्वीकायिको देशबन्धको मृतस्सन् विग्रहगत्या त्रिसमयया तेष्वेवोत्पन्नः, तत्र समयद्वयमनाहारकस्तृतीयसमये सर्वबन्धको भूत्वा पुनर्देशबन्धको जातः, एवं समयत्रिकं देशबन्धयोरंतरमिति, नवरंकथनाद्यच्छब्धमतिदेशतस्सङ्क्षेपतस्तद् दर्श्यते—अप्कायिकानां जघन्येन सर्वबन्धान्तरं क्षुल्लकभवग्रहणं त्रिसमयोनं, उत्कृष्टं तु ७ वर्षसहस्राणि समयाधिकानि, देशबन्धान्तरं तु जघन्यमेकसमयः, उत्कृष्टं तु समयत्रिकं, एवं वायुवर्जानां तेजःप्रभृतीनामपि, नवरं सर्वबन्धान्तरमुत्कृष्टं निजनिजस्थितिसमयाधिका वाच्या, वायुबन्धान्तरं भेदेनाह—'वाउकाइयाणं'ति वायुकायिकानां उत्कर्षेण देशबन्धान्तरमन्तर्मुहूर्त्तं, कथं ?, वायुरौदारिकवपुषो देशबन्धकः सन् वैक्रियमन्तर्मुहूर्त्तं कृत्वा पुनरौदारिकसर्वबन्धसमनन्तरं औदारिकदेशबन्धं यदा कुर्यात् तदा यथोक्तमन्तरं स्यात्, 'पंचिंदिए'त्ति तत्र सर्वबन्धान्तरं जघन्यं भावितमेव, उत्कृष्टं तु भाव्यते—पञ्चेन्द्रियतिर्यग् अविग्रहेणोत्पन्नः, प्रथमसमये सर्वबन्धकः, ततस्समयोनां पूर्वकोटिं जीवित्वा त्रिसमयविग्रहेण तेष्वेवोत्पन्नः, तत्र द्वावनाहारकसमयौ तृतीयसमये सर्वबन्धको जातः, अनाहारकसमययोश्चैकः समयः

समयोनायां पूर्वकोट्यां क्षिप्तस्तत्पूरणार्थं, एकस्त्वधिकः, एवं यथोक्तमन्तरं स्यात्, देशबन्धान्तरं तु यथैकेन्द्रियाणां, तच्चैवम्-जघन्यमेकसमयः, कथं ?, देशबन्धको मृतः सर्वबन्धसमयानन्तरं देशबन्धको जातः, एवमुत्कर्षेणान्तर्मुहूर्त्तं, कथं ?, औदारिकशरीरी देशबन्धकः सन् वैक्रियं गतः, तत्रान्तर्मुहूर्त्तं स्थित्वा औदारिकशरीरी जातः, प्रथमसमये सर्वबन्धको द्वितीयादिषु देशबन्धकः, एवं देशबन्धयोरन्तरमन्तर्मुहूर्त्तं, एवं मनुष्याणां, एतदेवाह-'जहा पंचिंदिये'त्यादि॥ औदारिकबन्धान्तरं भेदान्तरेणाह-'एगिंदियत्ते'ति एकेन्द्रियत्वे 'नोएगिंदिय'त्ति द्वीन्द्रियत्वादौ, पुनरेकेन्द्रियत्वे सति यत्सर्वबन्धान्तरं तज्जघन्येन द्वे क्षुल्लकभवग्रहणे त्रिसमयोने ?, कथं ?, एकेन्द्रियस्त्रिसमयविग्रहेणोत्पन्नः, तत्र समयद्वयमनाहारको भूत्वा तृतीयसमये सर्वबन्धं कृत्वा तदूनं क्षुल्लकभवग्रहणं जीवित्वा मृतः अनेकेन्द्रियेषु क्षुल्लकभवग्रहणमेव जीवित्वा मृतस्सन्नविग्रहेण पुनरेकेन्द्रियेष्वेवोत्पद्य सर्वबन्धको जातः, एवं सर्वबन्धयोरुक्तमन्तरं, 'उक्कोसेणं दो सागरोवमे'त्ति 'संखेज्जवाससमब्भहियाइं'ति, कथं ?, अविग्रहेणैकेन्द्रियस्समुत्पन्नः, प्रथमसमये सर्वबन्धको भूत्वा २२ वर्षसहस्राणि जीवित्वा मृतः त्रसकायिकेषूत्पन्नः, तत्र सङ्ख्यातवर्षाभ्यधिकसागरोपमसहस्रद्वयरूपामुत्कृष्टां त्रसकायिककायस्थितिमतिवाह्य एकेन्द्रियेषूत्पद्य सर्वबन्धको जातः, एवं सर्वबन्धयोर्यथोक्तमन्तरं स्यादिति, सर्वबन्धसमयहीनैकेन्द्रियोत्कृष्टभवस्थितेस्त्रसकायिककायस्थितौ प्रक्षेपणेऽपि सङ्ख्यातस्थानानां सङ्ख्यातभेदत्वेन सङ्ख्यातवर्षाभ्यधिकत्वस्याव्याहतत्वादिति, 'देसबंधंतरं जहण्णेणं खुड्डागं भवग्गहणं समयाहियं'ति, कथं ?, एकेन्द्रियो देशबन्धकस्सन् मृत्वा द्वीन्द्रियादिषु क्षुल्लकभवग्रहणमनुभूयाविग्रहेणागत्य प्रथमसमये सर्वबन्धको भूत्वा द्वितीये देशबन्धकस्स्यात्, एवं देशबन्धान्तरं क्षुल्लकभवः सर्वबन्धसमयातिरिक्तः, 'उक्कोसेणं'ति सर्वबन्धान्तरभावनोक्तप्रकारेण भावनीयमिति। अथ पृथ्वीकायिकबन्धान्तरं चिन्तय-

न्नाह–'जीवस्स'त्ति, 'एवं चेव'त्तिकरणात् 'तिसमऊणाई' इति दृश्यं, 'उक्कोसेणमणंतं कालं'ति इह कालानन्तत्वं वनस्प-
तिकायस्थितिकालापेक्षया, अनन्तकालमित्युक्तं तद्विभजनार्थमाह–'अणंताउ'त्ति अयमभिप्रायः–तस्यानन्तकालस्य समयेपु अव-
सर्पिणीसमयैरपह्रियमाणेपु अनन्ता अवसर्पिण्युत्सर्पिण्यः स्युरिति 'कालओत्ति इदं कालापेक्षया मानं,'खेत्तओ'त्ति क्षेत्रापेक्षया
पुनरिदं–'अणंता लोग'त्ति, अयमर्थः–तस्यानन्तकालस्य समयेपु लोकाकाशप्रदेशैरपह्रियमाणेपु अनन्ता लोकाः स्युः, अथ तत्र
कियन्तः पुद्गलपरावर्त्ताः स्युरत आह–'असंखिज्ज'त्ति, पुद्गलपरावर्त्तलक्षणं सामान्येन पुनरिदं–दशभिः कोटाकोटीभिरवस-
र्पिणी, उत्सर्पिण्यप्येवमेव, ता उत्सर्पिण्यवसर्पिण्योऽनन्ताः पुद्गलपरावर्त्ताः, एतद्विशेपलक्षणमिहैव वक्ष्यतीति, पुद्गलपरावर्त्ता-
नामेवासङ्ख्यातत्वनियमनायाह–'आवलिए'त्ति असङ्ख्यातसमयसमुदाय आवलिकेति,'देसबंधंतरं'ति,कथं ?, पृथ्वीकायिको
देशबन्धकः सन् मृतः, पृथ्वीकायिकेपु क्षुल्लकभवग्रहणं जीवित्वा मृतस्सन् पुनरविग्रहेण पृथ्वीष्वेवोत्पन्नस्तत्र सर्वबन्धसमयानन्तरं
देशबन्धको जातः, एवं सर्वबन्धसमयेनाधिकमेकं क्षुल्लकभवग्रहणं देशबन्धयोरन्तरमिति,'वणस्सइकाइयाणं दुन्नि खुड्डाइं' वनस्प-
तिकायिकानां जघन्यतः सर्वबन्धांतरं द्वे क्षुल्लकभवग्रहणे,'एवं चेव'त्तिकरणात् त्रिसमयोने इति दृश्यं, कथं ?, वनस्पतिकायिकस्त्रि-
समयेन विग्रहेणोत्पन्नः, तत्र विग्रहस्य समयद्वयमनाहारकस्तृतीयसमये सर्वबन्धको भूत्वा क्षुल्लकभवं च जीवित्वा पुनः पृथिव्या-
दिपु क्षुल्लकभवमेव स्थित्वा पुनरविग्रहेण वनस्पतिष्वेवोत्पन्नः, प्रथमसमये सर्वबन्धकोऽसाविति सर्वबन्धयोस्त्रिसमयोने द्वे क्षुल्लकभ-
वग्रहणे अन्तरं भवतः,'उक्कोसेणं'ति अयं पृथिव्यादिपु कायस्थितिकालः,'एवं देसबंधंतरंपि'त्ति यथा पृथ्व्यादीनां देशबन्धा-
न्तरं जघन्यमेवं वनस्पतेरपि, तच्च क्षुल्लकभवग्रहणं समयाधिकं, भावनाऽस्य प्राग्वत्, 'उक्कोसेणं पुढविकालो'त्ति उत्कर्षेण वन-

स्यैतद्देशबन्धान्तरं पृथ्वीकायस्थितिकालोऽसङ्ख्यातावसर्पिण्यादिरूप इति । अथौदारिकदेशबन्धकादीनामल्पत्वादिनिरूपणायाह—'एएसि णं'ति तत्र सर्वस्तोकाः सर्वबन्धकाः, तेषामुत्पत्तिसमय एव भावात्, अबन्धका विशेषाधिकाः, यतो विग्रहगतौ सिद्धत्वादौ च स्युः, ते च सर्वबन्धकापेक्षया विशेषाधिकाः, देशबन्धका असङ्ख्यातगुणाः, देशबन्धकालस्यासङ्ख्यातगुणत्वात्, एतच्चाल्पबहुत्वमग्रे वक्ष्याम इति॥ अथ वैक्रियवपुःप्रयोगबन्धनिरूपणायाह–तत्र 'एगिंदियवेउव्विय'त्ति (सू. ३४७)वायुकायिकापेक्षमुक्तं,'पंचिंदिए'त्ति पञ्चेन्द्रियतिर्यग्मनुष्यदेवनारकापेक्षमुक्तम्, 'वेउव्वियजावबंध'त्ति इह यावत्करणात्, 'पमायपच्चया कम्मं च जोगं च भवं चे'ति दृश्यं,'लद्धिं च'त्ति वैक्रियकरणलब्धिं वा प्रतीत्य, एतच्च वायुपञ्चेन्द्रियतिर्यग्मनुष्यानपेक्ष्योक्तं, तेन वायुकायादिसूत्रेषु लब्धिं वैक्रियवपुर्बन्धस्य प्रत्ययतया वक्ष्यति, नारकादिसूत्रेषु च तां त्यक्त्वा वीर्यसयोगसद्द्रव्यतादीन् प्रत्ययतया वक्ष्यति, सर्वबन्धे 'जहण्णेणं समयं'ति,कथं ?, वैक्रियशरीरिषूत्पद्यमानो लब्धितो वा तत्कुर्वन् समयमेकं सर्वबन्धकः स्यात्, एवमेकं समयं सर्वबन्धकः,'उक्कोसेणं'ति 'दो समय'त्ति, कथं ?,वैक्रियतां प्रतिपद्यमान औदारिकशरीरी सर्वबन्धको भूत्वा मृतः पुनर्नारकत्वं देवत्वं वा यदा प्राप्नोति तदा प्रथमसमये वैक्रियस्य सर्वबन्धकः उत्कृष्टतः समयद्वयमिति, 'देसबंधे जहण्णे'त्ति, कथं ?, औदारिकशरीरी वैक्रियतां प्रतिपद्यमानः प्रथमसमये सर्वबन्धकः स्यात्, द्वितीयसमये देशबन्धको भूत्वा मृतः, एवं देशबन्धो जघन्यतः एकं समयमिति, 'उक्कोसेणं'ति, कथं ?, देवेषु नारकेषु चोत्कृष्टस्थितिषूत्पद्यमानः प्रथमसमये सर्वबन्धको वैक्रियशरीरस्य ततः परं देशबन्धकः तेन सर्वबन्धकसमयेनोनानि ३३ सागराणि उत्कर्षतो देशबन्ध इति।'वाउक्काइए'त्ति,'देसबंधे'त्ति 'जहण्णे'ति एकं समयं, कथं ?,वायुरौदारिकशरीरीभवन् वैक्रियं गतः, ततः प्रथमसमये सर्वबन्धकः, द्वितीयसमये देशबन्धको

भूत्वा मृतः, एवं जघन्येनैको देशबन्धकसमयः, 'उक्को० अंतोमुहुत्तं'त्ति वैक्रियवपुषा स एव यदाऽन्तर्मुहूर्त्तमास्ते तदोत्कर्षतो देशबन्धोऽन्तर्मुहूर्त्तं, लब्धिवैक्रियशरीरिणो जीवतोऽन्तर्मुहूर्त्तात्परतो न वैक्रियशरीरावस्थानमस्ति, पुनरौदारिकवपुषोऽवश्यं प्रतिपत्तेरिति, 'रयणप्पहे'त्ति 'दसवाससहस्साइं तिसमऊणा'इंति, कथं ?, त्रिसमयविग्रहेण रत्नप्रभायां जघन्यस्थितिर्नारक उत्पन्नस्तत्र समयद्वयमनाहारकस्तृतीयसमये सर्वबन्धक इति ततो देशबन्धको वैक्रियस्य, तदेवमाद्यसमयत्रयन्यूनं वर्षसहस्रदशकं जघन्यतो देशबन्धः, 'उक्को० समऊणं'ति कथं ?, अविग्रहेण रत्नप्रभायामुत्कृष्टस्थितिर्नारक उत्पन्नस्तत्र प्रथमसमये सर्वबन्धको वैक्रियस्य वपुषः, परं देशबन्धकः, तेन सर्वबन्धसमयेनोनं सागरोपममुत्कृष्टतो देशबन्धः, एवं सर्वत्र सर्वबन्धः समयं, देशबन्धश्च जघन्यो विग्रहसमयत्रयन्यूनस्वस्वजघन्यस्थितिप्रमाणो वाच्यः, सर्वबन्धसमयन्यूनोत्कृष्टस्थितिप्रमाण उत्कृष्टदेशबन्ध इति, एतदेवाह—'एवं जीवे'त्यादि, पञ्चेन्द्रियतिर्यग्मनुष्याणां वैक्रियसर्वबन्ध एकं समयं, देशबन्धस्तु जघन्यत एकं समयं, उत्कर्षेणान्तर्मुहूर्त्तं, एतदेव स्पष्टयति—'पंचेंदिये'त्यादि, यच्च—"अंतोमुहुत्तं नरएसु, होइ चत्तारि तिरियमणुएसु। देवेसु अद्धमासो, उक्कोसविउव्वणाकालो ॥१॥" इति वचस्सामर्थ्यादन्तर्मुहूर्त्तचतुष्टयं तेषां देशबन्ध इत्युच्यते तन्मतान्तरमवसेयमिति॥ उक्तो वैक्रियवपुःप्रयोगकालः, अथ तस्यैवान्तरं निरूपयन्नाह—'वेउव्विए'त्ति सर्वबन्धको भूत्वा देशबन्धं च कृत्वा मृतः, ततः परमनन्तकालमौदारिकशरीरिषु वनस्पत्यादिषु स्थित्वा वैक्रियशरीरिषूत्पन्नः, तत्र प्रथमसमये सर्वबन्धको जातः, एवं सर्वबन्धयोर्यथोक्तमन्तरं स्यात्, 'एवं देसबंधंतरंपि'त्ति जघन्येनैकसमयं उत्कर्षतोऽनन्तकालमिति, भावना चास्य प्रागुक्तानुसारेण। 'वाउकाइयवेउव्विय'त्ति 'सव्वबंधंतरं जहण्णेणं अंतोमुहुत्तं', कथं ?, वायुरौदारिकशरीरी वैक्रियमाश्रितः, तत्र प्रथमसमये सर्वबन्धको भूत्वा मृतः पुनर्वायुरेव जातः,

तस्यापर्याप्तकस्य वैक्रियशक्तिर्न स्याद् अतोऽन्तर्मुहूर्त्तेनासौ पर्याप्तको भूत्वा वैक्रियं कुर्यात्, तत्र प्रथमसमये सर्वबन्धको जातः, एवं सर्वबन्धान्तरमन्तर्मुहूर्त्तमिति, 'उक्कोसेणं पलिओवमस्स असंखिज्जइभागं'ति, कथं?, वायुरौदारिकशरीरी वैक्रियं गतः, तत्प्रथमसमये च सर्वबन्धकस्ततो देशबन्धको भूत्वा मृतः, ततः परमौदारिकशरीरिषु वायुषु पल्योपमासंख्येयभागमतिवाह्यावश्यं वैक्रियं कुर्यात्, तत्र प्रथमसमये सर्वबन्धकः, एवं सर्वबन्धयोर्यथोक्तमन्तरं स्यात्, 'एवं देसबंधंतरंपि'त्ति अस्य भावना प्रागिवेति, 'तिरिक्खजोणियपंचिंदि'त्ति, कथं?, पञ्चेन्द्रियतिर्यग्योनिको वैक्रियं गतः, तत्र प्रथमसमये सर्वबन्धकः, ततः परं देशबन्धकोऽन्तर्मुहूर्त्तमात्रं, ततः औदारिकस्य सर्वबन्धको भूत्वा समयं देशबन्धको जातः, पुनरपि इयं श्रद्धोत्पन्ना, (ततो) वैक्रियं कुर्वतः प्रथमसमये सर्वबन्धः, एवं सर्वबन्धयोर्यथोक्तमन्तरं स्यात्, 'उक्को० पुव्वकोडिपुहुत्तं'ति, कथं?, पूर्वकोट्यायुः पञ्चेन्द्रियतिर्यक्तयोत्पन्नः, पूर्वजन्मना सह सप्ताष्टौ वा वारान्, ततः सप्तमे न भवे वैक्रियं गतः, तत्र प्रथमसमये सर्वबन्धं कृत्वा देशबन्धं कुर्यात्, एवं सर्वबन्धयोरुत्कृष्टयोर्यथोक्तमन्तरं स्यात्, 'एवं देसबंधंतरंपि'त्ति अस्य भावना सर्वबन्धान्तरोक्तानुसारेण कर्त्तव्येति, वैक्रियशरीरबन्धान्तरमेव प्रकारान्तरेणाह–'जीवस्स णं भंते! रयण'त्ति, 'जह० अंतोमुहुत्तं'. कथं?, वायुर्वैक्रियवपुः श्रितः, तत्र प्रथमसमये सर्वबन्धको भूत्वा मृतः, ततः पृथिवीकायिकेषूत्पन्नः, तत्रापि क्षुल्लकभवमात्रं स्थित्वा पुनर्वायुर्जातः, तत्रापि कतिपयान् क्षुल्लकभवान् स्थित्वा वैक्रियं गतः, तत्र प्रथमसमये सर्वबन्धको जातः, ततो वैक्रियस्य सर्वबन्धयोरन्तरं बहवः क्षुल्लकभवाः, ते च बहवोऽप्यन्तर्मुहूर्त्तं, अन्तर्मुहूर्त्ते बहूनां क्षुल्लकभवानां प्रतिपादितत्वात्, ततस्सर्वबन्धान्तरं यथोक्तं स्यात्, 'उक्को० अणंतकालं वणस्सइकालो'त्ति, कथं?, वायुर्वैक्रियशरीरीभवन् मृतो वनस्पत्यादिष्वनन्तं कालं स्थित्वा वैक्रियवपुश्च यदा लप्स्यते तदा यथोक्त-

मन्तरं भविष्यतीति, 'एवं देसबंधंतरंपि' त्ति अस्य भावना प्रागुक्तानुसारेणेति, रत्नप्रभासूत्रे 'सर्वबंधंतरं' ति एतद् भाव्यते—रत्नप्रभानारको १० वर्षसहस्रस्थितिकः उत्पत्तौ सर्वबन्धकः तत उद्वृत्तस्तु गर्भजपञ्चेन्द्रियेष्वन्तर्मुहूर्त्तं स्थित्वा रत्नप्रभायामुत्पन्नः, पुनः तत्र प्रथमसमये सर्वबन्धक इत्युक्तं जघन्यमन्तरं सर्वबन्धयोरिति, अयं यदापि प्रथमोत्पत्तौ विग्रहेण त्रिसमयेनैवोत्पद्यते तदापि न दशवर्षसहस्राणि त्रिसमयन्यूनानि स्युः, अन्तर्मुहूर्त्तमध्यात् समयत्रयस्य तत्र क्षेपात्, न च तत्प्रक्षेपेऽप्यन्तर्मुहूर्त्तत्वव्याघातः, तस्यानेकभेदत्वादिति, 'उक्को० वणस्सइकालो' त्ति, कथं ?, रत्नप्रभानारक उत्पत्तौ सर्वबन्धकः, तत उद्वृत्तश्चानन्तकालं वनस्पत्यादिषु स्थित्वा पुनस्तत्रैवोत्पद्यमानस्सर्वबन्धक इत्युत्कृष्टमन्तरमिति, 'देसबंधं० जह० अंतोमुहुत्तं' ति, कथं ?, रत्नप्रभानारको देशबन्धकः सन् ततोऽन्तर्मुहूर्त्तायुः पञ्चेन्द्रियतिर्यक्तया उत्पद्य मृत्वा च रत्नप्रभानारकतयोत्पन्नस्तत्र द्वितीयसमये देशबन्धकः, एवं जघन्यं देशबन्धान्तरमिति। 'उक्कोसेणं' ति इत्यादि भावना प्रागुक्तानुसारेणेति। 'एवं जाव' त्ति यावत्करणात् द्वितीयादिपृथिवीषु च जघन्या स्थितिः क्रमेणैकं त्रीणि सप्त दश सप्तदश द्वाविंशति[ः त्रयस्त्रिंशच्च]सागरोपमाणीति, 'जहा वाउकाइयाणं' ति जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतः पुनरनन्तकालमिति। असुरकुमारादयस्तु सहस्रारान्तदेवा उत्पत्तिसमये सर्वबन्धं कृत्वा स्वां जघन्यस्थितिमनुपाल्य पञ्चेन्द्रियतिर्यक्षु जघन्येनान्तर्मुहूर्त्तायुष्कत्वेनोत्पद्य मृत्वा च तेष्वेव सर्वबन्धका जाताः, एवं तेषां वैक्रियस्य जघन्यं सर्वबन्धान्तरं जघन्या तत्स्थितिरन्तर्मुहूर्त्ताधिका वाच्या, उत्कृष्टत्वेऽनन्तं कालं यथा रत्नप्रभानारकाणां, इत्येतदाह—असुरकुमारे' त्यादि, तत्र जघन्या स्थितिरसुरकुमारादीनां व्यन्तराणां च १० वर्षसहस्राणि ज्योतिष्काणां च पल्योपमाष्टभागः, सौधर्मादिषु तु 'पलियं अहियं दो सार साहिया सत्त दस य चोद्दस य' इत्यादि, 'आणयदेवत्ते' त्ति सूत्रे 'सव्वबंधंतरं' ति एतद्भावना—आनतकल्पीयो देव उत्पत्तौ

सर्वबन्धकः, स चाष्टादश सागरोपमाणि तत्र स्थित्वा ततश्च्युतो वर्षपृथक्त्वं मनुष्येषु स्थित्वा पुनस्तत्रैवोत्पन्नः, प्रथमसमये चासौ सर्वबन्धकः इत्येवं सर्वबन्धान्तरं जघन्यमष्टादश सागराणि वर्षपृथक्त्वाधिकानीति, उत्कृष्टं त्वनन्तं कालं, कथं ?, स एव तस्माच्च्युतोऽनन्तं कालं वनस्पत्यादिषु स्थित्वा पुनस्तत्रैवोत्पन्नः प्रथमसमये सर्वबन्धक इत्येवं, 'देसबंधंतरं जह० वासपुहुत्तं'ति, कथं ?, स एव देशबन्धकः सन् च्युतो वर्षपृथक्त्वं मनुष्यत्वमनुभूय पुनस्तत्रैव गतः, तस्य सर्वबन्धानन्तरं देशबन्धः, एवं सूत्रोक्तमन्तरं स्यात्, इह यद्यपि समयाधिकं वर्षपृथक्त्वं स्यात् तथाप्येतस्य वर्षपृथक्त्वादनर्थान्तरत्वविवक्षया न भेदेन गणनमिति, एवं प्राणतारणाच्युतग्रैवेयकसूत्राणि नेयानि, अथ सनत्कुमारादिसहस्रारान्ता देवा जघन्येन नव दिनायुष्केभ्यः आनताद्यच्युतान्ता नवमासायुष्केभ्य उत्पद्यन्ते इति जीवसमासेऽभिधीयते, ततो जघन्यं तत्सर्वबन्धान्तरं तत्तदधिकं तत्तज्जघन्यस्थितिरूपं प्राप्नोति इति, सत्यमेतत्, केवलं मतान्तरमेवेदं । अनुत्तरविमानसूत्रे 'अणुत्तरोववाइयपुच्छा' 'उक्कोसेणं'ति उत्कृष्टं सर्वबन्धान्तरं देशबन्धान्तरं च सङ्ख्यातानि सागराणि, यतो नानन्तकालमनुत्तरविमानच्युतः संसरति, तानि च जीवसमासमतेन द्विसङ्ख्यानीति, अथ वैक्रियवपुर्देशबन्धकादीनामल्पत्वादि आह—'एएसि'न्ति, तत्र सर्वस्तोका वैक्रियसर्वबन्धकाः, तत्कालस्याल्पत्वात्, देशबन्धका असङ्ख्यातगुणाः, तत्कालस्य तदपेक्षयाऽसङ्ख्यातगुणत्वात्, अबन्धका अनन्तगुणाः, सिद्धानां वनस्पत्यादीनां च तदपेक्षया अनंतगुणत्वादिति ॥ अथाहारकशरीरप्रयोगबन्धमाश्रित्याह—'एगागारे'त्ति एकप्रकारो, नौदारिकादिबन्धवदेकेन्द्रियाद्यनेकप्रकार इत्यर्थः, सव्वबंधे एकं समयं, आद्यसमये एव सर्वबन्धभावात्, 'देसबंधं जहण्णेणं अंतोमुहुत्तं उक्को० अंतोमुहुत्तं'ति जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तमात्रमेवाहारकशरीरी स्यात्, परत औदारिकशरीरस्यावश्यं ग्रहणात्, तत्र चान्तर्मुहूर्त्ते आद्य-

समये सर्वबन्धक उत्तरकालं तु देशबन्धक इति । अथाहारकशरीरयोगबन्धान्तरमाह—'सव्वबधंतरं जह० अंतोमुहुत्तं', कथं ?; मनुष्य आहारकशरीरं श्रितः तत्र प्रथमसमये च सर्वबन्धकः, तत्रान्तर्मुहूर्त्तमात्रं स्थित्वा औदारिकशरीरं गतः, तत्राप्यन्तर्मुहूर्त्तं स्थित्वा पुनरपि संशयाद्याहारकशरीरकरणकारणमुत्पन्नं, ततः पुनराहारकं शरीरं गृह्णाति, तत्र प्रथमसमये सर्वबन्धकः, एवं च सर्वबन्धान्तरमन्तर्मुहूर्त्तं, द्वयोरप्यन्तर्मुहूर्त्तयोरेकत्वविवक्षणादिति, 'उक्को० अणंतं कालं'ति, कथं ?, यतोऽनन्तकालादाहारकशरीरं पुनर्लभत इति, कालानन्त्यमेव विशेषेणाह—'अणंताओ ओस० कालओ, खेत्तओ अणंता लोग'त्ति एतद्व्याख्यानं प्राग्वत् । अथ तत्र पुद्गलपरावर्त्तमानं किं स्यादित्याह—'अवड्ढं'ति अपगतमर्द्धं अपार्द्धं, देशोनार्धमात्रमित्यर्थः, पुद्गलपरावर्त्तं प्रागुक्तरूपं अपार्द्धमप्यर्द्धतः पूर्णं स्यादत आह—'देशोन'मिति, 'एवं देसबंधान्तरंपि'त्ति जघन्येनान्तर्मुहूर्त्तमुत्कर्षतोऽपार्द्धं पुद्गलपरावर्त्तं देशोनं, भावना प्रागुक्तानुसारेणेति । अथाहारकदेशबन्धकादीनामल्पबहुत्वमाह—'सव्वत्थोव'त्ति तत्र सर्वस्तोका आहारकस्य सर्वबन्धकाः, तत्सर्वबन्धकालस्याल्पत्वात्, देशबंधकास्सङ्ख्यातगुणाः, तद्देशबन्धकालस्य बहुत्वात्, असङ्ख्यातगुणास्तु ते न स्युः; यतो मनुष्या अपि सङ्ख्याताः, किं पुनराहारकदेशबन्धका ?, अबन्धकास्तेऽनन्तगुणाः, आहारकवपुर्हि मनुष्याणां, तत्रापि संयतानां, तेषामपि केषांचिदेव कर्हिचिदेव कदाचिदेव स्यादिति, शेषकाले ते शेषसत्त्वाश्चाबन्धकाः, ततः सिद्धवनस्पत्यादीनामनन्तगुणत्वादनन्तगुणास्ते इति । अथ तैजसवपुःप्रयोगबन्धमाह—'नो सव्वबंधे'त्ति (सू. ३४८) तैजसशरीरस्यानादित्वान्न सर्वबन्धोऽस्ति, तस्य प्रथमतः पुद्गलोपादानरूपत्वादिति, 'अणाइए अपज्जवसिए'त्ति तत्रायं तैजसवपुर्बन्धोऽनादिरपर्यवसितोऽभव्यानां अनादिसपर्यवसितो भव्यानामिति । तैजसवपुर्बन्धान्तरमाह—'अणाइयस्स'त्ति यतस्संसारस्थो जीवस्तैजसवपुर्बन्धेन द्वयरूपेणापि सदा

अविनिर्मुक्त एव स्यात्, तस्मात् द्वयरूपस्य नास्त्यन्तरमिति। एतदल्पबहुत्वमाह–'सव्वत्थोव'त्ति सर्वस्तोकास्तैजसवपुरबन्धकाः, सिद्धानामेव तदबन्धकत्वात्, देशबन्धका अनन्तगुणाः, तद्देशबन्धकानां सर्वसंसारिणां सिद्धेभ्योऽनन्तगुणत्वादिति। अथ कार्मणवपुःप्रयोगबन्धमाह–'नाणपडिणियाए'त्ति (सू. ३४९) ज्ञानस्य–श्रुतादेस्तदभेदात् ज्ञानवतां वा प्रत्यनीकता तया, 'नाणनिण्हवणयाए'त्ति ज्ञानस्य श्रुतवतां वा या निह्नवता–अपलपनं सा तयेति, 'नाणविसंवायण'त्ति ज्ञानस्य ज्ञानिनां वा विसंवादनयोगो–व्यभिचारदर्शनाय व्यापारो यस्य तेन, एतानि बाह्यकारणानि ज्ञानावरणीयकार्मणवपुर्बन्धे, अथ आन्तरं कारणमाह–'नाणावे'त्यादि, 'दंसणपडिणीययाए'त्ति दर्शनमिह चक्षुर्दर्शनादि, मोहनीयसूत्रे 'तिव्वदंसणमोहणिज्जयाए'त्ति तीव्रमिथ्यात्वतयेति, 'तिव्वचरित्त'त्ति कषायव्यतिरिक्तं नोकषायलक्षणं चारित्रमोहनीयमिह ग्राह्यं, 'तिव्वकोहं'ति तीव्रक्रोधतया कषायचारित्रमोहनीयस्य प्रागुक्तत्वादिति, 'कुणिमाहारेणं' मांसभोजनेन 'माइल्ल'त्ति परवंचनमतितया 'नियडिल्ल'त्ति निकृतिर्वञ्चनार्थं चेष्टा, मायाप्रच्छादनार्थं मायान्तरमित्येके, अत्यादरकरणेन परवञ्चनमित्यन्ये, तद्वत्तयेति, 'पगइ'त्ति स्वभावतः परानुपघातितया 'साणुक्कोस'त्ति सानुकम्पतया 'कायउज्जु'त्ति कायर्जुकतया–परावंचनपरया कायचेष्टया 'भावज्जुय'त्ति भावर्ज्जुकतया–परावञ्चनपरमनःप्रवृत्त्येति, 'भासज्जुय'त्ति भाषर्ज्जुकतया–भाषार्जवेनेति, 'अविसंवायण'त्ति अविसंवादनयोगेन, कायर्जुकतादित्रयं वर्त्तमानकालाश्रयं अविसंवादनयोगस्त्वतीतवर्त्तमानकालद्वयाश्रयः, यो विशेषस्स उच्यते। 'सव्वत्थोवा जीवा आउयस्स कम्मस्स'त्ति (सू. ३५१) सर्वस्तोकत्वमेव आयुर्बन्धाद्धायाः स्तोकत्वात्, अबन्धाद्धायास्तु बहुगुणत्वात्, तदबन्धकास्सङ्ख्यातगुणाः, नन्वसङ्ख्यातगुणास्तदबन्धकाः कस्मान्नोक्ताः?, तदबन्धाद्धाया असङ्ख्यातजीवितानाश्रित्यासङ्ख्यातगुणत्वात्, उच्यते, इदमन-

न्तकायिकानाश्रित्य सूत्रं, तत्रानन्तकायिकाः सङ्ख्यातगुणजीविता एव, ते नायुष्कस्याबन्धकाः, तद्देशबन्धकेभ्यस्सङ्ख्यातगुणा एव ते स्युः, यद्येवं तदबन्धकास्सिद्धादयस्तन्मध्ये क्षिप्यन्ते, तथापि तेभ्यस्सङ्ख्यातगुणा एव ते, सिद्धाद्यबन्धकानामनन्तानामप्यनन्तकायिकायुर्बन्धकापेक्षया अनन्तभागत्वादिति, ननु चेदायुषोऽबन्धकास्संतो बन्धकास्स्युः तदा कथं न तेषां सर्वबन्धसम्भवः?, उच्यते, नद्यायुःप्रकृतिरविद्यमाना सती तैर्निबध्यते औदारिकादिशरीरवदिति न सर्वबन्धसम्भवः ॥ प्रकारान्तरेणौदारिकादि चिन्तयन्नाह— 'नो बंधए'त्ति न ह्येकसमये औदारिकवैक्रिययोर्बन्धो विद्यत इति हेतोर्न बन्धकः, एवमाहारकस्य, तैजसस्य पुनः सदाऽविरहितत्वात् बन्धको देशबन्धेन, सर्वबन्धश्च तस्य नास्त्येव, एवं कार्मणवपुषो वाच्यमिति, एवमौदारिकसर्वबन्धमाश्रित्य शेषाणां बन्धचिन्तनार्थोऽनन्तरं दण्डक उक्तः । अथौदारिकस्यैव देशबन्धमाश्रित्यान्यमाह—'जस्स ण'मित्यादि । अथ वैक्रियस्य सर्वबन्धमाश्रित्य शेषाणां बन्धचिन्तनार्थोऽन्यो दण्डकस्तत्र 'तेयगकम्मगस्स जहेवे'त्यादि, यथौदारिकशरीरसर्वबन्धकस्य तैजसकार्मणयोर्देशबन्धकत्वमुक्तमेवं वैक्रियशरीरसर्वबन्धकस्यापि तयोर्देशबन्धकत्वं वाच्यमिति भावः, वैक्रियदेशबन्धदण्डक आहारकस्य सर्वबन्धदेशबन्धकदण्डकद्वयं चेति त्रयं सुगममेव, तैजसदेशबन्धके तु बन्ध एव अबन्ध एव वा, तैजसदेशबन्धक औदारिकवपुषो बन्धकः स्यादबन्धको वा, तत्र विग्रहे वर्त्तमानः अबन्धकः अविग्रहस्थश्च बन्धकः, स चोत्पत्तिक्षेत्रप्राप्तिप्रथमसमये सर्वबन्धकः द्वितीयादौ तु देशबन्धक इति, एवं कार्मणशरीरदेशबन्धदण्डकेऽपि वाच्यमिति । अथौदारिकादिशरीरदेशबन्धकादीनामल्पबहुत्वमाह—तत्र सर्वे स्तोका आहारकशरीरस्य सर्वबन्धकाः, यस्मात्ते चतुर्दशपूर्वधरास्तथाविधप्रयोजनवन्त एव कुर्वन्ति, सर्वबन्धकालश्च समयमेवेति, तस्यैव देशबन्धकाः सङ्ख्येयगुणाः, देशबन्धकालस्य बहुत्वात्, वैक्रियस्य सर्वबन्धका असङ्ख्येयगुणाः, तेषां तेभ्योऽसङ्ख्यातगुणत्वात्, तस्यैव देशबन्धका

असङ्ख्येयगुणाः, सर्वबन्धाद्धापेक्षया देशबन्धाद्धाया असङ्ख्यातगुणत्वात्, अथवा सर्वबन्धकाः प्रतिपद्यमानकाः देशबन्धकास्तु पूर्वप्रतिपन्नाः, प्रतिपद्यमानकेभ्यश्च पूर्वप्रतिपन्नानां बहुत्वं, वैक्रियसर्वबन्धकेभ्यो देशबन्धकाः असङ्ख्येयगुणाः, तैजसकार्म्मणयोरबन्धका अनन्तगुणाः, यस्मात्ते सिद्धाः, ते च वैक्रियदेशबन्धकेभ्योऽनन्तगुणा एव, वनस्पतिवर्जसर्वजीवेभ्यः सिद्धानामनन्तगुणत्वादिति, औदारिकशरीरस्य सर्वबन्धका अनन्तगुणाः, ते च वनस्पतिप्रभृतीन् प्रतीत्य प्रत्येतव्याः, तस्यैवाबन्धका विशेषाधिकाः, एते हि विग्रहगतिसमापन्नाः समुद्घातगता वा स्युः, तत्र सिद्धादीनामत्यन्ताल्पत्वेनेहाविवक्षा, विग्रहगतिकाश्च वक्ष्यमाणन्यायेन सर्वबन्धकेभ्यो बहुतराः इति तेभ्यस्तदबन्धका विशेषाधिकाः, तस्यैव च औदारिकस्य देशबन्धका असङ्ख्यातगुणाः, विग्रहाद्धापेक्षया देशबन्धाद्धाया असङ्ख्यातगुणत्वात्, तैजसकार्मणयोर्देशबन्धका विशेषाधिकाः, यस्मात्सर्वेऽपि संसारिणस्तैजसकार्म्मणयोर्देशबन्धकाः स्युः, तत्र च ये विग्रहगतिका औदारिकदेशबन्धकवैक्रियादिबन्धकाश्च ते औदारिकदेशबन्धकेभ्योऽतिरिच्यन्त इति ते विशेषाधिकाः, वैक्रियशरीरस्याबन्धका विशेषाधिकाः, यस्माद्वैक्रियबन्धकाः प्रायो देवनारका एव, शेषास्तु तदबन्धकाः सिद्धाश्च, तत्र सिद्धास्तैजसादिदेशबन्धकेभ्योऽतिरिच्यते तेन ते विशेषाधिका उक्ताः, आहारकाबन्धका विशेषाधिकाः, यस्मान्मनुष्याणामेवाहारकशरीरं, वैक्रियं तु तदन्येषामपि, ततो वैक्रियबन्धकेभ्य आहारकबन्धकानां स्तोकत्वेन वैक्रियाबन्धकेभ्य आहारकाबन्धका विशेषाधिका इति, एतत्पूर्वाचार्यकृतगाथालिखनाभावाद् ग्रन्थगौरवभयाच्चैतद्यन्त्रकमप्यत्र न प्रस्तार्यते ॥ अष्टमशते समाप्तो बन्धः । तत्समाप्तौ च सम्पूर्णं नवमोद्देशकविवरणम् ॥

'रायगिहे'त्यादि तत्र 'सीलं सेयं सुयं सेयं' सीलं सेयं'ति ( सू. ३५२ ) श्रुतशीलसंपन्ना नरा विचारयंतीति, 'एवं'ति

एवं–लोकसिद्धन्यायेन खलु–निश्चयेन 'अण्णउत्थिय'त्ति इहान्ययूथिकाः केचित् क्रियामात्रादेवाभीष्टार्थसिद्धिमिच्छन्ति, न च किञ्चिदपि ज्ञानेन प्रयोजनं, निश्चेष्टत्वात्, घटादिकरणप्रवृत्तावाकाशादिपदार्थवत्, उच्यते चैवं–"क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम्। यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥१॥" तथाऽऽवश्यके च 'जहा खरो चंदणभारवाही'त्यादि १। अतस्ते प्ररूपयन्ति–शीलं श्रेयः, प्राणातिपातादिविरमणध्यानाध्ययनादिरूपा क्रियैव शीलं श्लाघ्यं, पुरुषार्थसाधकत्वात्, श्रेयं वा–श्रयणीयं पुरुषेण श्रेयोऽर्थिना, केचिदन्ये ज्ञानादेवेष्टसिद्धिमिच्छन्ति, न क्रियातः, ज्ञानवियुक्तस्य क्रियावतोऽपि फलसिद्ध्यदर्शनात्, यत उच्यते–विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता। मिथ्याज्ञानात् प्रवृत्तस्य, फलासंवाददर्शनात् ॥१॥" तथा दशवैकालिके च–'पढमं नाणं तओ दये'त्यादि, अतस्तेऽप्याहुः–श्रुतं–ज्ञानं श्रेयः–प्रधानं पुरुषार्थसिद्धिहेतुत्वात्, न तु शीलं, अन्ये तु ज्ञानक्रियाभ्यां मिथो निरपेक्षाभ्यां फलमाहुः, ज्ञानं क्रियाशून्यमेव उपसर्जनीभूतक्रियं वा फलदं स्यात्, क्रियाऽपि ज्ञानशून्या उपसर्जनीभूतज्ञाना वा फलदा इति भावः, भणंति च–किञ्चिद्वेदमयं पात्रं, किञ्चित्पात्रं तपोमयम्। आगमिष्यति तत्पात्रं, यत्पात्रं तारयिष्यति ॥१॥ अतस्ते प्रोचुः–श्रुतं शीलं च द्वे अपि सफले, पुरुषस्य सिद्धिहेतुत्वात्, आहुर्जैना एवं 'नाणं पयासग'मित्यादि, २ तपस्संयमौ च शीलमेवेति, तथा 'संजोगसिद्धीइ फलं वयंति'इत्यादि, द्वितीयव्याख्यानपक्षे मिथ्यात्वं, संयोगतः फलसिद्धेर्दृष्टत्वात्, एकैकस्य प्रधानतरविवक्षया अप्यसङ्गतत्वादिति, 'अहं पुण'त्ति अहं पुनर्गोतम! एवमाख्यामि यावत् प्ररूपयामि, श्रुतयुक्तं शीलं श्रेय एवं वाक्यशेषो दृश्यः, अथ कस्मादेवं?, अत्रोच्यते–'एव'मिति, एवं–वक्ष्यमाणन्यायेन 'पुरिस'त्ति पुरुषप्रकारः 'सीलवं असुयवं'ति कोऽर्थः 'उवरए'त्ति उपरतो–निवृत्तः स्वमत्या पापात् 'अविण्णाय'त्ति अविज्ञातधर्मा, भावतोऽनधिगतश्रुतज्ञानो,

बालतपस्वीत्यर्थः, गीतार्थानिश्रिततपश्चरणनिरतोऽगीतार्थ इत्यन्ये, 'देसाराहए'त्ति स्तोकमंशं मोक्षस्याराधयतीत्यर्थः, सम्यग्ज्ञानरहितत्वात् क्रियापरत्वाच्चेति, 'असीलवं सुयवं'ति कोऽर्थः? 'अणुवरए विण्णाय'त्ति पापादनिवृत्तो ज्ञातधर्मा च, अविरतसम्यग्दृष्टिरिति भावः। देसविराहए'त्ति देशं–स्तोकमंशं ज्ञानादित्रयरूपमोक्षस्य तृतीयभागरूपं चारित्रं विराधयतीत्यर्थः, शेषौ द्वौ भेदौ कण्ठ्यौ॥ आराधनामेव भेदत आह–'कइविहा ण'मित्यादि(सू० ३५३)ज्ञानाराधना कालविनयाद्यनतिचारतया, दर्शनं–सम्यक्त्वं तस्याराधना निःशङ्कितत्वादिना, चारित्रं–सामायिकादि तदाराधना निरतिचारता, 'उक्कोसिय'त्ति उत्कृष्टा ज्ञानाराधना ज्ञानकृत्यानुष्ठाने प्रकृष्टप्रयत्नता, 'मज्झिम'त्ति तेष्वेव मध्यमप्रयत्नता 'जहण्ण'त्ति जघन्या तेष्वल्पतमप्रयत्नता, एवं दर्शनाराधना चारित्राराधनापि च,'जस्स णं'ति 'अजहण्णुक्कोसा वं'त्ति अजघन्योत्कर्षा, मध्यमेत्यर्थः, उत्कृष्टज्ञानाराधनावतो द्वे आद्ये दर्शनाराधने भवतः, न पुनस्तृतीया, तथास्वभावत्वात्तस्या इति,'जस्स पुण'त्ति उत्कृष्टदर्शनाराधनावतो हि ज्ञानं प्रति त्रिप्रकारस्यापि प्रयत्नस्य सम्भवोऽस्तीति त्रिप्रकारापि तदाराधना भजनया भवति, उत्कृष्टज्ञानचारित्राराधनासंयोगसूत्रे उत्तरं–'जस्स णं भंते! उक्कोसिया नाणाराहण'त्ति यस्योत्कृष्टा ज्ञानाराधना तस्य चारित्राराधना उत्कृष्टा मध्यमा वा स्यात्, उत्कृष्टज्ञानाराधनावतो हि चारित्रं प्रति नाल्पतमप्रयत्नता स्यात्, तत्स्वभावत्वात्तस्या इति, उत्कृष्टचारित्राराधनावतस्तु ज्ञानं प्रति प्रयत्नत्रयमपि भजनया स्यात् इत्येतदेवाह–'जहा उक्कोसिए'त्यादि, सूत्रे तूत्तरमिदम्–'जस्स उक्को० दंसणाराहण'त्ति यस्योत्कृष्टा–दर्शनाराधना तस्य चारित्राराधना त्रिधापि भजनया स्यात्, उत्कृष्टदर्शनाराधनावतो हि चारित्रं प्रति प्रयत्नस्य त्रिविधस्याप्यविरुद्धत्वात्, उत्कृष्टचारित्राराधना(वत)उत्कृष्टैव दर्शनाराधना, उत्कृष्टचारित्रस्योत्कृष्टदर्शनानुगतत्वादिति। अथाराधनाभेदफलान्याह–'तेणेव

भवग्गहणेण'त्ति उत्कृष्टज्ञानाराधनया तेनैव भवेन सिध्यति, उत्कृष्ट(जघन्य)चारित्राराधनायाः सद्भावे, 'कप्पोवएसु'त्ति कल्पोपगेषु–सौधर्मादिदेवलोकेषु उत्पद्यते मध्यमचारित्राराधनासद्भावे, 'कप्पातीएसु'त्ति कल्पातीतेषु ग्रैवेयकादिषु उत्पद्यते मध्यमोत्कृष्टचारित्राराधनासद्भावे,'उक्को० दंसणाराहण'त्ति इत्यत्र 'एवं चेव'त्तिकरणात् तद्भवसिद्ध्यादि दृश्यं, चारित्राराधनायाः तत्रोत्कृष्टाया मध्यमायाश्चोक्तत्वादिति,'उक्को० चारित्ताराहण'त्ति 'एवं चेव'त्ति करणात् तद्भवसिद्ध्यादि दृश्यं, केवलं तत्र 'अत्थेगइए कप्पोवगेसु वा' इत्यभिहितं तदिह न वाच्यं, उत्कृष्टचारित्राराधनावतः सौधर्मादिकल्पेष्वगमनात्, वाच्यं पुनः 'अत्थेगइए कप्पाईएसु उववज्जइ'त्ति सिद्धिगमनाभावे तस्यानुत्तरसुरेषु गमनादेवेति, मध्यमज्ञानाराधनासूत्रे मध्यमत्वं ज्ञानाराधनाया अधिकृतभव एव, निर्वाणभवे पुनरुत्कृष्टत्वमवश्यंभावि इति ज्ञेयं, निर्वाणान्यथानुपपत्तेः इति, 'दोच्चेणं'ति अधिकृतनरभवापेक्षया द्वितीयेन नरभवेन, 'तच्चं'ति अधिकृतनरभवग्रहणापेक्षया तृतीयं नरभवग्रहणं, एताश्चारित्राराधनायुता ज्ञानाद्याराधना इह विवक्षिताः, कथमन्यथा जघन्यज्ञानाराधनामाश्रित्य वक्ष्यति 'सत्तट्ठ भवग्गहणाइं'ति, यतश्चारित्राराधनाया एवेदं फलमुक्तं, यदाह–"अट्ठ भवा उ चरित्ते"त्याद्यावश्यके, श्रुतसम्यक्त्वदेशविरतिभवास्त्वसङ्ख्येया उक्ताः, तेन चारित्राराधनारहिता ज्ञानदर्शनाराधना असङ्ख्येयभविका अपि स्युरिति, न त्वष्टभविका एवेति ॥ 'वण्णपरिणामे'त्ति (सू. ३५४) यः पुद्गलो वर्णांतरत्यागाद्वर्णान्तरं यात्ययं वर्णपरिणामः, एवमन्यत्रापि,'परिमंडलसंठाणे'त्ति इह परिमण्डलसंस्थानं वलयाकारं यावत्करणात् 'वट्टसंठाणे तंससंठाणे चउरंससंठाणपरिणाम'त्ति दृश्यं ॥ 'एगे भंते ! पुग्गलत्थिकाए'त्ति ( सू. ३५५ ) पुद्गलास्तिकायस्य–एकाणुकादिपुद्गलराशेः प्रदेशो–निरंशोऽंशः पुद्गलास्तिकायप्रदेशः परमाणुः द्रव्यं गुणपर्याययोगि, द्रव्यदेशो चाद्रव्यावयवः, एवमेकत्व-

बहुत्वाभ्यां विकल्पाश्चत्वारः, द्विकसंयोगा अपि चत्वार एव इति प्रश्नः, उत्तरं तु स्यात् द्रव्यं, द्रव्यान्तरासम्बन्धे सति, स्याद् द्रव्यदेशो द्रव्यान्तरसम्बन्धे सति, शेषविकल्पानां तु निषेधः, परमाणोरेकत्वेन बहुत्वस्य द्विकसंयोगस्य चाभावादिति। 'दो भंते'त्ति इहाष्टसु भङ्गेषु मध्ये आद्याः पञ्च स्युः, न शेषाः, तत्र द्वौ प्रदेशौ द्रव्यं कथं?, यदा तौ द्विकप्रदेशिकस्कन्धतया परिणतौ तदा द्रव्यं १, यदा तु द्व्यणुकस्कन्धभावगतावेव तौ द्रव्यान्तरसम्बन्धप्राप्तौ तदा द्रव्यदेशः २, यदा तु द्वावपि तौ भेदेन स्थितौ तदा द्रव्यौ ३, यदा तु तावेव द्व्यणुकस्कन्धतामनापद्य द्रव्यान्तरेण सम्बन्धप्राप्तौ तदा द्रव्यदेशौ ४, यदा तयोरेकः केवलतया स्थितो द्वितीयश्च द्रव्यान्तरेण सम्बद्धस्तदा द्रव्यं च देशश्च ५, शेषभेदानां निषेधोऽसम्भवादिति। 'तिन्नि भंते'त्ति त्रिषु प्रदेशेष्वष्टमभेदवर्जाः सप्त विकल्पाः, तथाहि—यथा त्रयोऽपि त्रिप्रदेशिकस्कन्धतया परिणतास्तदा द्रव्यं १ यदा ते त्रिप्रदेशिकस्कन्धपरिणता एव द्रव्यान्तरसम्बन्धप्राप्तास्तदा द्रव्यदेशः २ यदा ते त्रयोऽपि भेदेन स्थिताः द्वौ वा द्व्यणुकीभूतावेकस्तु केवल एव स्थितस्तदा 'दव्वाइं'ति ३ यदा ते त्रयोऽपि स्कन्धतामागता एव द्वौ वा द्व्यणुकीभूतावेकस्तु केवल एवेत्येवं द्रव्यान्तरेण सम्बद्धास्तदा 'दव्वदेसा य'त्ति ४, यदा तु तेषां द्वौ द्व्यणुकतया परिणतावेकश्च द्रव्यान्तरेण सम्बद्धः, अथवा एकः केवल एव स्थितो द्वौ द्व्यणुकतया परिणम्य द्रव्यान्तरेण सम्बद्धौ तदा दव्वं च दव्वदेसे यत्ति, यदा तेषामेकः केवल एव स्थितो द्वौ च भेदेन द्रव्यान्तरेण सम्बद्धौ तदा 'दव्वं च दव्वदेसा य'त्ति ६, यदा द्वौ भेदेन स्थितौ एकश्च द्रव्यान्तरेण सम्बद्धः तदा 'दव्वाइं दव्वदेसे य'त्ति ७, अष्टमविकल्पो न स्यात्, उभयत्र त्रिषु प्रदेशेषु बहुवचनाभावात्, प्रदेशचतुष्टयादौ तु अष्टमोऽपि सम्भवति, उभयत्र बहुवचनसद्भावादिति॥ 'असंखेज्ज'त्ति (सू. ३५६) यस्मादसङ्ख्येयप्रदेशको लोकस्तस्मात् तत्प्रदेशा असङ्ख्येया एवेति॥ 'एगमेगस्स'त्ति

(सू. ३५७) एकैकस्य जीवस्य' तावन्तः प्रदेशाः यावन्तो लोकाकाशस्य, कथं ?, यस्माज्जीवः केवलिसमुद्घातकाले सर्वं लोकाकाशं व्याप्यावतिष्ठते तस्माल्लोकाशप्रमाणास्ते इति, 'अविभागपलिच्छेद'त्ति परिच्छिद्यन्ते परिच्छेदाः—अंशास्त एव सविभागा अपि स्युः अतः अविभागाश्च पलिच्छेदाश्चते अविभागपलिच्छेदाः, निरंशा अंशा इत्यर्थः, ते च ज्ञानावरणीयकर्म्मणोऽनन्ताः, कथं ?, ज्ञानावरणीयं यावतो ज्ञानस्याविभागभेदानावृणोति तावन्त एव तस्याविभागपलिच्छेदाः, दलिकापेक्षया वा अनन्ततत्परमाणुरूपाः; 'अविभागपलिच्छेदेहिं'ति तत्परमाणुभिः 'आवेढियपरिवेढिय'त्ति आवेष्टितपरिवेष्टितः—अत्यन्तवेष्टितः आवेष्टि(ष्ट्य)परिवेष्टितो वा, 'सिय नो आवेढिय'त्ति केवलिनं प्रतीत्य, तस्य क्षीणज्ञानावरणत्वेन तत्प्रदेशस्य ज्ञानावरणीयाविभागपरिच्छेदैरावेष्टनपरिवेष्टनाभावादिति, 'मणूसस्स जहा जीवस्स'त्ति (सू. ३५८) 'सिय आवेढिय'त्ति वाच्यमित्यर्थः, मनुष्यापेक्षया आवेष्टितपरिवेष्टितत्वस्य तदितरस्य च सम्भवात्, एवं दर्शनावरणीयमोहनीयान्तरायेष्वपि वाच्यं, वेदनीयायुष्कनामगोत्रेषु पुनः जीवपदे इव भजना वाच्या, सिद्धापेक्षया, मनुष्यपदे तु नासौ, तत्र वेदनीयादीनां भावात्, अत आह—'नवरं वेयणिज्जस्से'त्यादि, अथ ज्ञानावरणं शेषैः सह चिन्त्यते—'जस्स ण'मित्यादि, 'जस्स पुण वेयणिज्जं तस्स नाणाव० सिय अत्थि सिय नत्थि'त्ति अकेवलिनं केवलिनं च प्रतीत्य, अकेवलिनो हि वेदनीयं, न ज्ञानावरणमिति, 'जस्स नाणा० तस्स मोहणिज्जं सिय अत्थि सिय नत्थि'त्ति अक्षपकं क्षपकं च प्रतीत्य, अक्षपकस्य हि ज्ञानावरणीयं मोहनीयं चास्ति, क्षपकस्य तु मोहक्षये यावत्केवलं नोत्पद्यते तावत् ज्ञानावरणीयमस्ति, न तु मोहनीयं, एवं यथा ज्ञानावरणीयं वेदनीयेन सहाधीतं तथाऽऽयुर्नामगोत्रत्रयेण सहाध्येयं, उक्तप्रकारभजना सर्वेषु भाव्या, अन्तरायेण समं ज्ञानावरणीयं तथा वाच्यं यथा दर्शनावरणीयं, निर्भजनमित्यर्थः, 'नियमा परूप्परं

भाणियव्वाणी'ति कोऽर्थः,?–'जस्स नाणावर० तस्स नियमा अंतराइयं, जस्संतरा० तस्स नियमा नाणावरणिज्जं ? इत्येवमनयोर्मिथो नियमो वाच्य इति । अथ दर्शनावरणं पड्भिः सह चिन्त्यते–'जस्से'त्यादि, अयं च गमो ज्ञानावरणीयसमपाठः, 'जस्स णं भंते ! वेयणिज्ज'मित्यादिना तु वेदनीयं शेषैः पञ्चभिस्सह चिन्त्यते, तत्र 'जस्स वेयणिज्जं तस्स मोहणिज्जं सिय अत्थि सिय नत्थि'त्ति अक्षीणमोहं क्षीणमोहं च प्रतीत्य, अक्षीणमोहस्य हि वेदनीयमोहनीये स्तः, क्षीणमोहस्य वेदनीयं तु, न मोहनीयं.'परोप्परं नियम'त्ति, कोऽर्थः?–यस्य वेदनीयं तस्य नियमादायुः यस्यायुस्तस्य नियमाद् वेदनीयं इत्येते वाच्ये, एवं नामगोत्राभ्यामपि वाच्यं, अन्तरायेण तु भजना, यतो वेदनीयमन्तरायं चाकेवलिनामस्ति, केवलिनां तु वेदनीयमस्ति, नत्वन्तरायं, अत उक्तं–'जस्स वेयणिज्जं तस्संतरायं सिय अत्थि सिय नत्थि'त्ति अथ मोहनीयमन्यैश्चतुर्भिस्समं चिन्त्यते, तत्र यस्य मोहनीयं तस्यायुर्नियमादकेवलिन इव, यस्य पुनरायुस्तस्य मोहनीयं भजनया, यतोऽक्षीणमोहस्यायुर्मोहनीयं चास्ति, क्षीणमोहस्य त्वायुरेवेति,'एवं नामं गोयं अंतराइयं च भाणियव्वं'ति, अयमर्थः–यस्य मोहनीयं तस्य नाम गोत्रमन्तरायं च नियमादस्ति, यस्य पुनर्नामादित्रयं तस्य मोहनीयं स्यादस्त्यक्षीणमोहस्येव,स्यान्नास्ति क्षीणमोहस्येवेति। अथायुरन्यैस्त्रिभिस्सह चिन्त्यते–'जस्स णं भंते ! आउयं'मित्यादि, 'दोऽवि परुप्परं नियम'त्ति, कोऽर्थः ?–'जस्स आउयं तस्स नियमा नामं जस्स नामं तस्स आउयं'ति इत्यर्थः, एवं गोत्रेणापि 'जस्स आउयं तस्संतराइयं सिय अत्थि सिय नत्थि'त्ति यस्यायुस्तस्यान्तरायः स्यादस्त्यकेवलिवत्, स्यान्नास्ति केवलिवदिति, 'जस्स णं भंते ! नाम' इत्यादिना सामान्येन द्वयेन सह चिन्त्यते, तत्र यस्य नाम तस्य नियमाद् गोत्रं, यस्य गोत्रं तस्य नियमान्नाम, तथा यस्य नाम तस्यान्तरायं स्यादस्त्यकेवलिवत्, स्यान्नास्ति केवलिवदिति, एवं गोत्रान्तराययोरपि भजना भाव-

नीयेति ॥ 'पोग्गली'त्ति (सू० ३५१) पुद्गलाः—श्रोत्रादिरूपा विद्यन्ते यस्यासौ पुद्गली 'पुग्गले व'त्ति पुद्गल इति संज्ञा यस्य तस्य तद्योगात् पुद्गल इति, 'से केण'मित्यादि ॥ दशमोद्देशकविवरणम् ॥ अष्टमं शतं वृत्तितः समाप्तम् ॥

इति श्रीलक्ष्मीसागरसूरिशिष्यशतार्थिश्रीजिनमाणिक्यगणिशिष्यश्रीअनन्त-
हंसगणिशिष्यश्रीदानशेखरगणिसमुद्धृतायां भगवतीलघुवृत्तौ
अष्टमशतविवरणं सम्पूर्णम् ॥

अथ नवमशतं प्रारभ्यते—'जंबुद्दीवे'त्ति उद्देशकगाथामाह (*६०), तत्र जम्बुद्वीपवक्तव्यताख्यः प्रथम उद्देशकः १ 'जोइस'त्ति ज्योतिष्कविषयो द्वितीयः २ 'अंतरदीवे'त्ति अन्तरद्वीपविषया अष्टाविंशतिरुद्देशकाः ३० 'असोच्च'त्ति अश्रुत्वा धर्मं लभेतेत्याद्यर्थप्रतिपादनार्थ एकत्रिंशत्तमः ३१ 'गंगेय'त्ति गाङ्गेयाख्यसाधुवक्तव्यतार्थो द्वात्रिंशत्तमः ३२ 'कुंडग्गामे'त्ति ब्राह्मणकुंडग्रामविषयस्त्रयस्त्रिंशत्तमः ३३ 'पुरिसे'त्ति पुरुषः पुरुषं घ्नन्नित्यादिवक्तव्यतार्थश्चतुस्त्रिंशत्तमः ३४ ॥ इति द्वारगाथार्थः ॥ 'कहिंणं'ति (सू० ३६०) कस्मिन् देशे इत्यर्थः,'एवं जंबुद्दीवपण्णत्ती भाणियव्वा' सा चैवम्—'केमहालए णं भंते! जंबुद्दीवे २ ?, किमागारभावपडायारे णं भंते! जंबुद्दीवे दीवे पण्णत्ते ?' कस्मिन्नाकारभावे प्रत्यवतारो यस्य स तथा, गोयमा! अयण्णं जंबुद्दीवे २ सव्वदीवसमुद्दाणं सव्वब्भंतराए सव्वखुड्डए वट्टे तिल्लापूयसंठाणसंठिए वट्टे पुक्खरकण्णियासंठाण० वट्टे रहचक्कवालसंठाण० वट्टे पडिपुण्णचंदसंठाण० पण्णत्ते, एगं जोयणसयसहस्सं आयामविक्खंभेण'मित्यादि,'एवमेवे'ति एवमुक्तेनैव न्यायेन पूर्वापरसमुद्रगमनादिना 'सपुव्वावरेणं'ति सह पूर्वेण नदीवृन्देन अपरं सपूर्वापरं तेन सपूर्वापरेण,'चोद्दस सलिला सयसहस्सा छप्पन्नं च सहस्सा भवंति'त्ति, कथं ?, इह सलिलाशतसहस्राणि—नदीलक्षाणि, एतत्सङ्ख्या चैवम्—भरतैरावतयोर्गङ्गासिन्धुरक्तारक्तवत्यः प्रत्येकं १४ नदीसहस्रयुक्ताः, तथा हिमवतैरण्यवतयो रोहितारोहितांशासुवर्णकूलारूप्यकूलाः प्रत्येकमष्टाविंशतिसहस्रैर्युक्ताः, तथा हरिवर्षरम्यकवर्षयोर्हरिताहरिकान्तानरकान्तानारीकान्ताः प्रत्येकं षट्पञ्चाशत्सहस्रैर्युक्तास्समुद्रमुपयान्ति, तथा महाविदेहे शीताशीतोदे प्रत्येकं पञ्चभिर्लक्षैर्द्वात्रिंशता सहस्रैर्युक्ते पाथोधिं प्रयात इति, सर्वासां मीलने सूत्रोक्तं प्रमाणं स्यादिति, वाचनान्तरे पुनरिदं दृश्यते—'जहा जंबुद्दीवपण्णत्तीए तहा नेयव्वं, जोइसविहूणं जावखंड'त्ति "खंडा जोयण वासा पव्वय कूडा य तित्थ-

सेढी य । विजया दह सलिलाओ य पिंडए होइ संगहणी ॥१॥" तत्र 'जोइसविहूणं'ति जम्बूद्वीपप्रज्ञप्त्यां ज्योतिष्कवक्तव्यताऽस्ति तद्विहीनं समस्तजम्बूद्वीपप्रज्ञप्तिसूत्रमस्योद्देशकस्य स्वयं ज्ञेयं, किंपर्यवसानं पुनस्तद्?, आह 'जाव खंड'त्ति । तत्र जम्बूद्वीपे भरतक्षेत्रप्रमाणानि खण्डानि कियन्ति स्युरिति, उच्यते—नवत्यधिकं खण्डशतं, 'जोयण'त्ति जम्बूद्वीपे कियद्योजनप्रमाणानि खण्डानि स्युरिति, उच्यन्ते—'सत्तेव य कोडिसया चउया छप्पन्न सयसहस्साइं । चउणउइं च सहस्सा सयं दिवड्ढं च साहीयं ॥१॥' गाउयमेगं पण्णरस धणुसया तह धणूणि पण्णरस । सट्ठीई अंगुलाइं जंबुद्दीवस्स गणियपयं ॥२॥ति," गणितपदमेवंप्रकारस्य गणितस्य संज्ञा, 'वास'त्ति जम्बूद्वीपे भरतहैमवतादीनि सप्त वर्षाणि, 'पव्वय'त्ति जम्बूद्वीपे कियन्तः पर्वताः?, उच्यते, षड् वर्षधरपर्वता हिमवदादयः एको मन्दरः, एकश्चित्रकूटः एको विचित्रकूटः एतौ देवकुरुषु, द्वौ यमकगिरी एतौ च उत्तरकुरुषु, द्वे शते काञ्चनकानां, एते च शीताशीतोदयोः पार्श्वतः, २० वक्षस्काराः, ३४ दीर्घविजयार्द्धपर्यन्ताः, चत्वारो वर्त्तुलविजयार्द्धपर्वताः, एवं २६९ मिताः पर्वता भवन्ति, 'कूड'त्ति कियन्ति पर्वतकूटानि?, उच्यते, ५६ वर्षधरकूटानि ९६ वक्षस्कारकूटानि ३०६ विजयार्द्धकूटशतानि ९ मन्दरकूटानि, एवं सर्वाणि ४६७ कूटानि स्युरिति, 'तित्थ'त्ति जम्बूद्वीपे कियन्ति तीर्थानि?, उच्यते, ३२ विजयभरतैरावतानां ३४ खण्डेषु प्रत्येकं मागधवरदामप्रभासाख्यानि त्रीणि त्रीणि तीर्थानि स्युः, एवं द्व्युत्तरं तीर्थशतं भवति, 'सेढीओ'त्ति विद्याधरश्रेणय आभियोगिकश्रेणयश्च कियत्यः?, उच्यते, अष्टषष्टिः प्रत्येकमासां स्यात्, विजयार्द्धपर्वतेषु प्रत्येकं द्वयोर्द्वयोर्भावाद्, एवं षट्त्रिंशदधिकं श्रेणीशतं स्यात्, 'विजय'त्ति कियन्ति चक्रवर्तिविजेतव्यानि भूखण्डानि?, उच्यते, ते चतुस्त्रिंशद्, एतावन्त एव च राजधान्यादयोऽर्था इति, 'दह'त्ति कियन्तो महाद्रहाः?, उच्यन्ते, पद्मादयः षट् दश च नीलवदादयः देवकुरुउत्तरकुरुम-

ध्यवर्त्तिन इत्येवं १६, 'सलिल'त्ति नद्यः, तत्प्रमाणं च दर्शितमेव, 'पिंडए होइ संगहणि'त्ति उद्देशकार्थानां पिण्डके-मीलके विषयभूते इयं सङ्ग्रहणी गाथा स्यात् ॥ नवमशते प्रथमः ॥

प्रथमे जम्बूद्वीपवक्तव्यतोक्ता, द्वितीयेऽपि जम्बूद्वीपादिषु ज्योतिष्कवक्तव्यतामाह, तस्येदमादिसूत्रम्-'रायगिहे'त्यादि (सू.३६१) 'जहा जीवाभिगमे'त्ति तदेतत्सूत्रम्-केवइया चंदा पभासिंसु वा पभासंति वा पभासिस्संति वा ? केवइया सूरिया तविंसु ३ ? केवइया नक्खत्ता जोयं जोइंसु ३ ? केवइया महागहा चारं चरिंसु ३ ?, केवइया तारागणकोडाकोडीओ सोभं सोभिंसु ३ ?, शोभां कृतवत्य इत्यर्थः, 'गोयमा ! जंबूदीवे दो चंदा पभासिंसु वा ३, दो सूरिया तविंसु ३, छप्पणं नक्खत्ता जोगं जोइंसु वा ३, छावत्तरं गहसयं चारं चरिंसु ३, बहुवचनं छान्दसत्वादिति, एगं च सयसहस्सं तेत्तीसं खलु भवे सहस्साइं' (* ६१) शेषं सूत्रमध्ये लिखितमेवास्ते ॥ लवणे णं भंते'इत्यादौ (सू. २६२) 'एवं जहा जीवाभिगमे'त्ति, तत्रेदमादिसूत्रम्-'केवइया चंदा पभासिंसु ३ केवइया सूरिया तविंसु ३' इत्यादि प्रश्नसूत्रं प्राग्वत्, उत्तरं तु-गोयमा !. लवणे णं समुद्दे चत्तारि चंदा पभासिंसु ३ चत्तारि सूरिया तविंसु वारसोत्तरं नक्खत्तसयं जोगं जोइंसु ३, तिण्णि बावण्णा महग्गहसया चारं चरिंसु, दोण्णि सयसहस्सा सत्तट्ठिं च सहस्सा नव य सया तारागणकोडिकोडीणं सोभं सोभिंसु ३, सूत्रपर्यन्तमाह-'जाव ताराउ'त्ति तारकासूत्रं यावत्, तच्च दर्शितमेव, 'धायइसंडे'इत्यादौ यदुक्तं 'जहा जीवाभिगमे' तच्चेदं सूत्रम्-'धायइसंडे णं भंते ! केवइया चंदा पभासिंसु ३ ? केवइया सूरिया तविंसु ३ ? इति प्राग्वत्, उत्तरं तु-गोयमा ! वारस चंदा पभासिंसु ३, वारस सूरिया तविंसु ३, एवं 'चउवीसं ससिर-

सयाइं । धांयइसंडे दीवे तारागणकोडिकोडीणं ॥२॥' सोभं सोभिंसु ३ । कालोए णं भंते ! समुद्दे केवइया इत्यादि प्रश्नः, उत्तरं तु–गोयमा !–बायालीसं चंदा बायालीसं च सूरिया दित्ता । कालोदहिम्मि एए चरंति सम्बद्धलेसागा ॥१॥ नक्खत्तसहस्समेगं एगं छावत्तरं च सयमण्णं । छच्च सया छण्णउया महागहा तिण्णि य सहस्सा ॥२॥ अट्ठवीसं कालोदहिम्मि बारस य तह सहस्साइं । णव य सया पण्णासा तारागणकोडिकोडीणं ॥३॥ सोभं सोभिंसु ३,' तथा 'पुक्खरवरे णं भंते ! केवइया चंदे'त्यादि प्रश्नः, उत्तरं तु–चोआलं चंदसयं चोयालमेव सूरियाण सयं । पुक्खरवरंमि दीवे भमंति एए पगासंता ॥१॥ इह च यद् भ्रमणमुक्तं न तत्सर्वांश्चन्द्रादित्यानपेक्ष्य, किं तर्हि ?, पुष्करद्वीपाभ्यन्तरार्द्धवर्त्तिनीं द्विसप्ततिमेवेति ।"चत्तारि सहस्साइं बत्तीसं चेव होंति नक्खत्ता । छच्च सया बावत्तर महग्गहा बारस सहस्सा ॥१॥ छण्णउइ सयसहस्सा चोयालीसं भवे सहस्साइं । चत्तारि सया पुक्खरि तारागणकोकीडीणं ॥२॥ सोभं सोभिंसु ॥३॥ तथा 'अब्भितरपुक्खरद्धे णं भंते ! केवइया चंदे'त्यादि प्रश्नः, उत्तरं तु–"बावत्तरिं च चंदा बावत्तरिमेव दिणयरा दित्ता । पुक्खरवरदीवड्ढे चरंति एए पभासेंता ॥१॥ तिण्णि सया छत्तीसा छच्च सहस्सा महग्गहाणं तु । नक्खत्ताणं तु भवे सोलाइं दुवे सहस्साइं ॥२॥ अडयाल सयसहस्सा बावीसं खलु भवे सहस्साइं । दो य सया पुक्खरद्धे तारागणकोडिकोडीणं ॥३॥" तथा 'मणुस्सखेत्ते णं भंते ! केवइया चंदे'त्यादि प्रश्नः, उत्तरन्तु–बत्तीसं चंदसयं बत्तीसं चेव सूरियाण सयं । सयलं मणुस्सलोयं चरंति एए पभासंता ॥१॥ एगारस य सहस्सा छप्पिय सोला महग्गहाणं तु । छच्चसया छन्नउइ नक्खत्ता तिण्णि य सहस्सा ॥२॥ अडसीइं सयसहस्साइं चालीससहस्स मणुयलोगम्मि । सत्त य सया अणूणा तारागण०॥३॥ किमंतमिदं वाच्यमित्याह–'जावे'त्यादि, अस्य सूत्रांशस्य पूर्वांशः, गहअट्ठासी नक्खत्तडवीसं तारकोडिकोडीणं । छासट्ठिसहस्स नवसय पणहत्तरि एगससिसेन्नं

॥१॥" पुक्खरोदे णं भंते ! समुद्दे केवइया चंदेति प्रश्नः, उत्तरमिदं दृश्यम्—'संखेज्जा चंदा पभासिंसु' 'एवं सव्वदीवसमुद्देसु' त्ति प्रागुक्तप्रश्नेन यथासम्भवं सङ्ख्याता असङ्ख्याताश्च चन्द्रादय इत्युत्तरेणेत्यर्थः, द्वीपसमुद्रनामानि चैवम्—पुष्करोदसमुद्रानन्तरो वरुणवरो द्वीपः ततो वरुणोदाब्धिः, एवं क्षीरवरक्षीरोदौ घृतवरघृतोदौ क्षोदवरक्षोदोदौ नन्दीश्वरनन्दीश्वरोदौ अरुणारुणोदौ अरुणवरारुणवरोदौ अरुणवरावभासारुणवरावभासोदौ कुण्डलकुण्डलोदौ कुण्डलवरकुण्डलवरोदौ कुण्डलवरावभासकुण्डलवरावभासोदौ रुचकरुचकोदौ रुचकवररुचकवरोदौ रुचकवरावभासरुचकवरावभासोदौ इत्याद्यसङ्ख्यातानि, यतोऽसङ्ख्याता द्वीपसमुद्रा इति ॥नवमशते द्वितीयः॥

द्वितीये द्वीपवक्तव्योक्ता, तृतीयेऽपि असौ वाच्येति, तत्रेदमादिसूत्रम्—'रायगिहे' इत्यादि (सू० ३६३) 'दाहिणिल्लाणं'ति उत्तरान्तरद्वीपव्यवच्छेदार्थं, 'एवं जहा जीवाभिगमे' सए दस किंचिविसेसूणे परिक्खेवेणं, से णं एगाए पउमवरवेइयाए एगेण वणसंडेण सव्वओ समंता संपरिक्खित्ते' इत्यादि, इह वेदिकावनखंडकल्पवृक्षयुगलनरनारीवर्णकोऽभिधीयते, तथा तत्र मनुष्याश्चतुर्थभक्ताहाराः, ते च पृथ्वीरसपुष्पफलाहाराः, तत्पृथ्वी रसतः खण्डशर्करादितुल्या, ते च मनुजा वृक्षगृहाः, तत्र गृहाद्यभावः, तन्मनुजस्थितिः पल्योपमासङ्ख्येयभागप्रमाणा, षण्मासावशेषायुषश्चैते मिथुनकानि प्रसुवते, ८१ दिनानि ते अपत्यानि पालयन्ति, उच्छ्वसितादिना ते मृत्वा देवेषूत्पद्यंते इत्यादयोऽर्थाश्च वाच्याः, वाचनान्तरे त्वेवं 'जहा जीवाभिगमे उत्तरकुरुवत्तव्वयाए णेयव्वो, णाणत्तं अट्ठधणुसया उस्सेहो, चउसट्ठी पिट्ठकरंडया, अणुसज्जणा नत्थि'त्ति, तत्रायमर्थः—उत्तरकुरुनराणां ३ गव्यूतान्युत्सेधः, इह त्वष्टौ धनुःशतानि, तथा तेषु नराणां २५६ पृष्ठकरण्डकानि इह तु ६४, तथा उत्तराए णं भंते ! कुराए कइविहा मणुस्सा अणुसज्जंति ?, गोयमा ! छव्विहा मणुस्सा अणुसज्जंति, तंजहा—पम्हगंधा मियगंधा अममा तेयली सहा सणिंचरा इत्येवं तत्र मनुष्या-

णागनुपंजना उक्ता, इह तु सा नास्ति, तथाविधनराणां तत्राभावात्, एवं च त्रीणि नानात्वस्थानान्युक्तानि, पुनरन्यान्यपि स्थित्यादीनि, किन्तु तानि सावधानतया वाच्यानि, ९ तृतीयः अयं चैकोरुकद्वीपोद्देशक इत्युक्तः, अथ प्रकृतमुच्यते–किमंतमिदं जीवाभिगमसूत्रमित्याह–'जाव'त्ति यावच्छुद्धदन्तद्वीपः शुद्धदन्ताख्याष्टाविंशतितमान्तरद्वीपवक्तव्यतां यावत्, साऽपि कियद् दूरं वाच्येत्याह–'देवलोगपरिग्गह'त्ति देवलोकः परिग्रहो येषां ते, देवगतिगामिन इत्यर्थः, इह चैकैकस्मिन्नंतरद्वीपे एकैक उद्देशक उक्तः, तत्र चैकोरुकद्वीपोद्देशकानन्तरमाभासिकद्वीपोद्देशकः, तत्र 'कहण्णं भंते! दाहिणिल्लाणं आभासियमणूसाणं आभासिए नामं दीवे पण्णत्ते?, गोयमा! जंबुद्दीवे चुल्लहिमवंतवासहरपव्वयस्स दाहिणपुरच्छिमिल्लाओ चरमंताओ लवणसमुद्दं तिण्णि जोयणसयाइं ओगाहित्ता, एत्थ णं दाहिणिल्लाणं आभासियनामं दीवे' शेषमेकोरुकद्वीपवदिति, नवमे ४॥ एवं वैषाणिकद्वीपोद्देशकोऽपि, नवरं दक्षिणापराजरमान्तादिति, नवमे ५॥ एवं लाङ्गुलिकद्वीपोद्देशकोऽपि, नवरं उत्तरापराजरमान्तादिति नवमे ६॥ एवं हयकर्णद्वीपोद्देशकोऽपि नवरमेकोरुकस्योत्तरपौरस्त्याच्चरमान्ताल्लवणं चत्वारि योजनशतान्यवगाह्य चतुर्योजनशतायामविष्कम्भो हयकर्णद्वीपः स्यादिति नवमे ७॥ एवं गजकर्णद्वीपोद्देशकोऽपि, नवरमसौ वैषाणिकद्वीपस्य दक्षिणापराच्चरमान्ताल्लवणमवगाह्य ४ योजनशतानि हयकर्णद्वीपोपमः स्यादिति नवमे ८॥ एवं गोकर्णद्वीपोद्देशकोऽपि, नवरमसौ वैषाणिकद्वीपस्य दक्षिणापराच्चरमान्तादिति नवमे ९॥ एवं शष्कुलीकर्णद्वीपोद्देशकोऽपि, नवरमसौ लाङ्गुलिकद्वीपस्योत्तरापराच्चरमान्तादिति नवमे १०॥ एवमादर्शमुखद्वीपमेण्ढमुखद्वीपोऽयोमुखद्वीपगोमुखद्वीपाः हयकर्णादिद्वीपचतुष्कक्रमेण पूर्वोत्तरपूर्वदक्षिणदक्षिणापरअपरोत्तरेभ्यश्चरमान्तेभ्यः पञ्च योजनशतानि लवणमवगाह्य पञ्चयोजनशतायामविष्कम्भाः स्युः तत्प्रतिपादकाः ४ उद्देशकाः स्युः १४। एतेषामेवादर्शमुखादीनां पूर्वोत्तरादिभ्यश्चरमा–

न्तेभ्यः षड् योजनशतानि लवणमवगाह्य षड्योजनशतायामविष्कम्भाः क्रमेणाश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखनामानो द्वीपाः स्युः, तत्प्रतिपादकाश्चान्ये ४ उद्देशकाः स्युः १८ ॥ एतेषामेवाश्वमुखादीनां तथैव सप्त योजनशतानि लवणमवगाह्य सप्तयोजनशतायामविष्कम्भाः अश्वकर्णहस्तिकर्णअकर्णकर्णप्रावरणद्वीपाः स्युः, तत्प्रतिपादकाश्चापरे चत्वार उद्देशकाः स्युरिति २२ ॥ एतेषामेवाश्वकर्णादीनां तथैवाष्ट योजनशतानि लवणमवगाह्याष्टयोजनशतायामविष्कम्भा उल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्तनामानो द्वीपाः, तत्प्रतिपादकाश्चान्ये ४ उद्देशकाः स्युरिति २६ ॥ एतेषामेवोल्कामुखद्वीपादीनां तथैव ९ योजनशतानि लवणमवगाह्य ९ योजनशतायामविष्कम्भाः घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानो द्वीपाश्चत्वार उद्देशकाः स्युरिति ३० ॥ इत्येवमादितोऽत्र त्रिंशत्तमः शुद्धदन्तोद्देशक इति ॥ **नवमशतके त्रिंशत्तम उद्देशकः ९–३०** ॥

उक्तरूपाश्चार्थाः केवलिधर्म्मात् ज्ञायन्ते, तं चाश्रुत्वापि कोऽपि लभत इत्याद्यर्थवाचकमेकत्रिंशत्तममुद्देशकमाह, तस्येदमादिसूत्रं 'रायगिहे'त्ति (सू. ३६४) तत्र 'असोच'त्ति अश्रुत्वा–धर्म्मफलवाचकं वचनमनाकर्ण्य, प्राक्कृतधर्मानुरागादेवेत्यर्थः, 'केवलिस्स व'त्ति केवलिनो–जिनस्य 'केवलिसावग'त्ति येन केवली स्वयं पृष्टः श्रुतं च येन तद्वचनमसौ केवलिश्रावकस्तस्य, 'उवासगस्स'त्ति केवल्युपासनां विदधानेन केवलिनाऽन्यस्य कथ्यमानं श्रुतं येनासौ केवल्युपासकस्तस्य, 'तप्पक्खियस्स'त्ति केवलिपाक्षिकस्य स्वयंबुद्धस्य धर्म–श्रुतचारित्ररूपं 'लभेज्ज'त्ति प्राप्नुयात् 'सवणयाए'त्ति श्रवणतया, श्रोतुमित्यर्थः, 'नाणावरणिज्जाणं'ति ज्ञानावरणीयस्य मतिज्ञानावरणादिभेदेन अवग्रहमत्यावरणादिभेदेन च बहुत्वात् इह च क्षयोपशमग्रहणात् मत्यावरणाद्येव तद् ग्राह्यं, न तु केवलावरणं, तत्र क्षयस्यैव भावात्, ज्ञानावरणीयक्षयोपशमश्च गिरिसरिदुपलघोलनान्यायेनापि कस्यचित्

स्यात् तत्सद्भावे चाश्रुत्वाऽपि धर्मं लभेत श्रोतुं, क्षयोपशमस्यैव तल्लाभे अन्तरङ्गकारणत्वादिति, 'केवलं बोहिं'ति शुद्धं सम्यग्दर्शनं 'बुज्झेज्ज'त्ति बुध्येत, अनुभवेदित्यर्थः, यथा प्रत्येकबुद्धादिः, एवमग्रेऽपि वाच्यं, 'दरिसणावरणिज्जाणं'ति इह दर्शनावरणीयं दर्शनमोहनीयमभिगृह्यते, बोधेः सम्यग्दर्शनपर्यायत्वात्, तल्लाभस्य च तत्क्षयोपशमजन्यत्वादिति, 'केवलं'ति केवलां--शुद्धां सम्पूर्णां वा अनगारतामिति, 'धम्मंतराइयाणं'ति धर्मान्तरायिकाणां, वीर्यान्तरायचारित्रमोहनीयभेदानामित्यर्थः, 'चारित्तावरणिज्ज'त्ति इह वेदलक्षणानि चारित्रावरणीयानि विशेषतो ग्राह्याणि, मैथुनविरतिलक्षणस्य ब्रह्मचर्यस्य वा विशेषतस्तेषामेवावारकत्वात्, 'जयणावरणिज्जाणं'ति यतनावरणीयानि चारित्रविशेषविषयवीर्यान्तरायलक्षणानि मन्तव्यानि, 'अज्झवसाणावरणिज्जाणं'ति संवरशब्देन शुभाध्यवसायवृत्तेर्विवक्षितत्वात् तस्याश्च भावचारित्ररूपत्वेन तदावरणक्षयोपशमलभ्यत्वाद् अध्यवसानावरणीयशब्देनेह भावचारित्रावरणीयान्युक्तानि इति, पूर्वोक्तानेवार्थान् पुनः समुदायेनाह—'असोच्चा णं भंते' इत्यादि, अथाश्रुत्वैव केवल्यादिवचनो यथा कश्चित् केवलज्ञानमुत्पादयेत् तथा दर्शयितुमाह—'तस्स'त्ति (सू. ३६५) योऽश्रुत्वैव केवलज्ञानमुत्पादयेत् तस्य कस्यापि 'छट्ठंछट्ठेण'मित्यादि च यदुक्तं तत्प्रायः षष्ठतपश्चरणवतो बालतपस्विनो विभङ्गज्ञानविशेष उत्पद्यते इति ज्ञापनार्थमिति, 'पगिज्झिय'त्ति प्रगृह्य, धृत्वेत्यर्थः, 'तयावरणिज्जाणं'ति विभङ्गज्ञानावरणीयानां 'ईहापोहमग्गणगवेसणं'ति इहेहा—सदर्थालोचनचेष्टा अपोहस्तद्विपक्षनिरासः मार्गणं—अन्वयधर्मालोचनं गवेषणं—व्यतिरेकधर्मालोचनमिति, 'से णं'ति स बालतपस्वी 'जीवे वि जाणइ'त्ति कथञ्चिदेव, न तु साक्षात्, मूर्त्तगोचरत्वात् तस्य, 'पासंडत्थे'त्ति व्रतस्थान् 'सारंभसपरिग्गहे'त्ति सारम्भसपरिग्रहान्, किंविधान् जानातीत्याह—'संकिलिस्स'त्ति महासंक्लेशतया संक्लिश्यमानानपि जानाति, 'विसुज्झ'त्ति अल्पीयसापि विशुद्ध्या विशुध्य-

मानानपि जानाति, आरम्भादिमतामेवंस्वरूपत्वात्, 'से णं'ति स विभङ्गज्ञानी जीवाजीवस्वरूपपाखण्डस्थसंक्लिश्यमानतादिज्ञाता 'पुव्वामेव'त्ति चारित्रप्रतिपत्तेः पूर्वमेव 'सम्मत्त'त्ति सम्यग्भावं 'रोएइ'त्ति श्रद्धत्ते 'ओही परावत्तइ' अवधिर्भवतीत्यर्थः, इह यद्यपि चारित्रप्रतिपत्तिमादावुक्त्वा परिगृहीतं विभङ्गज्ञानमवधिः स्यादिति पश्चादुक्तं तथापि चारित्रप्रतिपत्तेः पूर्वं, सम्यक्त्वप्रतिपत्ति-काल एव विभङ्गाभावादिति। अथैनमेव लेश्यादिभिर्निरूपयन्नाह–'से णं'ति (सू. ३६६) स यो विभङ्गज्ञानी भूत्वा अवधिज्ञानं चारित्रं वा श्रितः, 'तिसु सुद्ध'त्ति यतो भावलेश्यासु प्रशस्तास्वेव सम्यक्त्वादि प्रतिपद्यते, नाविशुद्धास्विति, 'तिसु आभिनि-बोहि'त्ति सम्यक्त्वमतिश्रुतावधिज्ञानानां विभङ्गच्यवनकाले तस्य युगपद्भावाद् आद्ये ज्ञानत्रय एवासौ तदा वर्त्तत इति, 'नो अजो-गि'त्ति अवधिज्ञानकाले अयोगित्वस्याभावात्, 'मणजोगि'त्ति एकतरयोगप्राधान्यादवगन्तव्यं, 'सागारोवउत्ते वे'ति तस्य हि विभङ्गज्ञानान्निवर्त्तमानस्योपयोगद्वयेऽपि वर्त्तमानस्य सम्यक्त्वावधिज्ञानप्रतिपत्तिरस्ति, ननु 'सव्वाओ लद्धीओ सागारोवओगोवउ-त्तस्स भवंती' त्यागमादनाकारोपयोगे सम्यक्त्वावधिलब्धिविरोधः, नैवं, प्रवर्द्धमानपरिणामजीवविषयत्वात् तस्यागमस्य, अवस्थित-परिणामापेक्षया चानाकारोपयोगेऽपि लब्धिलाभस्य सम्भवादिति, 'वइरोसह'त्ति प्राप्तव्यकेवलज्ञानत्वात् तस्य, केवलप्राप्तिश्च प्रथ-मसंहनन एव स्यादिति, 'सवेयए'त्ति विभङ्गस्यावधिभावकाले न वेदक्षयोऽस्ति इत्यसौ सवेद एव, 'नो इत्थिवेय'त्ति स्त्रिया एवंविधव्यतिकरस्य स्वभावत एवाभावात्, 'पुरिसनपुंसग'त्ति कृत्रिमनपुंसकः–पुरुषनपुंसकः 'सकसाइ'त्ति विभङ्गावधिकाले कषायक्षयस्याभावात्, 'चउसु संजलण'त्ति स ह्यवधिज्ञानतापरिणतविभङ्गज्ञानश्चरणप्रतिपन्न उक्तः, तस्य च तत्काले चरणयुक्त-त्वात् सञ्ज्वलना एव क्रोधादयः स्युरिति, 'पसत्थ'त्ति विभङ्गस्यावधिभावो हि नाप्रशस्ताध्यवसायस्य स्याद्, अत उक्तं–प्रशस्ताध्य-

वसायस्थानानि, 'अणंतेहिं'ति अनन्तैरनन्तानागतकालभाविभिः ''विसंजोयइ'त्ति तत्प्राप्तियोग्यतापनोदादिति, 'जाओऽवि-य'त्ति या अपि च चतुर्गतिनाश्याः 'उत्तरपयडीओ'त्ति नामकर्ममूलप्रकृतेरुत्तरभेदभूताः 'तासिं'ति तासां चतुर्गत्याद्युत्तरप्रकृतीनां चशब्दादन्यासां च 'उवग्गहिए'त्ति औपग्रहिकान्-उपष्टम्भप्रयोजनान् अनन्तानुबन्धिक्रोधादीन् चतुरः क्षपयेत्, तथा अप्रत्याख्यानादींश्च क्षपयतीति, 'पंचविहं'ति मतिज्ञानावरणादिभेदात् 'नवविहं'तिं नवविधं दर्शनावरणीयं चक्षुर्दर्शनाद्यावरण-चतुष्कस्य निद्रापञ्चकमीलनात् नवविधत्वमस्य, 'तालमत्थाकडं'ति मस्तकं-मस्तकशूचि कृत्तं-छिन्नं यस्यासौ मस्तककृत्तः तालश्चासौ मस्तककृत्तश्च तालमस्तककृत्तः, छान्दसत्वादेवं निर्देशः, अयमर्थः-छिन्नमस्कतालकल्पं मोहनीयं कृत्वा, यथा हि छिन्नमस्तकस्तालः क्षीणः स्यात् एवं मोहनीयं च कृत्वा, क्षीणं कृत्वेति भावः, आह च-''मस्तकशूचिविनाशे तालस्य यथा ध्रुवो भवति नाशः। तद्वत्कर्म्मविनाशो मोहनीयक्षये नित्यं ॥१॥'' ततश्च 'कम्मरय'त्ति कर्मरजोविकरणकरं-तद्विनाशकरं अपूर्वकरणं असदृशाध्यवसायविशेषमाश्रितस्य, अनन्तं विषयानन्त्यात्, अनुत्तरं सर्वोत्कृष्टत्वात्, निर्व्याघातं कुड्याद्यप्रतिहतत्वात्, निरावरणं सावरणक्षयात्, कृत्स्नं सकलार्थग्राहकत्वात्, प्रतिपूर्णं सर्वस्वांशयुक्तत्वात्॥ 'आघवेज्ज'त्ति (सू. ३६७) आग्राहयेच्छिष्यान् 'पण्णवेज्ज'त्ति प्रज्ञापयेत् भेदकथनात् 'परूवेज्ज'त्ति युक्तिकथनतः 'नण्णत्थ एगनाए'न्ति न निषेधार्थः, सोऽन्यत्र एकज्ञातात्, एकोदाहरणं वर्जयित्वेत्यर्थः,'एगवागरणेण व'त्ति एकव्याकरणाद्, एकोत्तरादित्यर्थः,'पव्वावेज्ज'त्ति प्रव्राजयेद्रजोहरणादिदानतः 'मुंडावेज्ज'त्ति मुंडयेच्छिरोलुञ्चनतः 'उवएसं पुण'त्ति अस्य पार्श्वे प्रव्रजेत्यादिकमुपदेशं कुर्यात् ॥ 'सद्दावाई'त्यादि (सू. ३६८) शब्दापातिप्रभृतिवृत्तवैताढ्यगिरयो यथाक्रमं जम्बूद्वीपप्रज्ञप्त्यभिप्रायेण हैमवतहरिवर्षरम्यकैरण्यवतेषु क्षेत्रसमासाभिप्रायेण च हैमव-

नैरण्यवन्तहरिवर्षरम्यकेषु भवन्ति, तेषु च तस्य भावः आकाशगतिलब्धिसम्पन्नस्य तत्र गतस्य केवलोत्पत्तिसद्भावे सति, 'साहरणं'ति देवेन नयनं प्रतीत्य 'सोमणसवणे'त्ति सौमनसवनं मेरौ तृतीयं, पाण्डुगवनं चतुर्थं, 'गड्डाए'त्ति गर्त्ते निम्नभूभागे अधोलोकग्रामादौ 'दरिए'त्ति दर्यां, 'पायाले'त्ति पातालकलशे 'भवण'त्ति भवनपतिषु, 'पण्णरस'त्ति १५ कर्मभूमिषु, कर्माणि—कृषिवाणिज्यादीनि तद्भूमयः कर्मभूमयस्तासु ॥'तस्स'त्ति (सू.३६९) यः श्रुत्वा केवलमुत्पादयेत् तस्य प्रतिपन्नसम्यग्दर्शनचारित्रस्य 'अट्ठमंअट्ठमेणं'ति इति यदुक्तं तत् प्रायो विकृष्टतपश्चरणवतस्साधोरवधिज्ञानमुत्पद्यत इति ज्ञापनार्थमिदं, 'छसु लेसासु'त्ति यद्यपि भावलेश्यासु प्रशस्तास्वेव तिसृष्ववधिज्ञानं लभते तथापि द्रव्यलेश्याः प्रतीत्य षट्स्वपि लेश्यासु लभते, सम्यक्त्वश्रुतवत्, यदुक्तं—"सम्मत्त सुयं सव्वासु लहइ"त्ति,तल्लाभे चासौ षट्स्वपि स्यादिति, 'तिसु व'त्ति अवधेराद्यज्ञानद्वयाविनाभूतत्वादधिकृतावधिज्ञानी त्रिषु ज्ञानेषु स्यादिति, 'चउसु'त्ति मतिश्रुतमनःपर्यायज्ञानिनोऽवधिज्ञानोत्पत्तौ ज्ञानचतुष्कभावाच्चतुर्ज्ञानेषु अधिकृतावधिज्ञानी स्यादिति, अक्षीणवेदस्यावधिज्ञानोत्पत्तौ सवेदकः, क्षीणवेदस्यावधिज्ञानोत्पत्तौ ज्ञानचतुष्कभावाच्चतुर्ज्ञानेषु अधिकृतावधिज्ञानी स्यात्, प्राप्तव्यकेवलज्ञानस्यास्य विवक्षितत्वात्, 'चउसु'त्ति यद्यक्षीणकषायोऽवधिज्ञानी तदाऽयं चारित्रयुक्तत्वाच्चतुस्सञ्ज्वलनकषायेषु स्यात्, यदा क्षपकश्रेणिवर्त्तित्वेन सञ्ज्वलनक्रोधे क्षीणेऽवधिं लभते तदा त्रिषु सञ्ज्वलनमानादिषु, यदा तु सञ्ज्वलनक्रोधमानयोः क्षीणयोस्तदा द्वयोः, एवमेकत्रेति ॥ नवमशते एकत्रिंशत्तमः ॥

'पवेसणए'त्ति (सू. ३७०) गत्यन्तरादुद्वृत्तस्य जीवस्यान्यगतौ जीवप्रवेशनमुत्पादः, 'एगे भंते नेरइए' (सू. ३७१) इत्यादौ ७ विकल्पाः, 'दो भंते' इत्यत्र २२८ विकल्पाः, तत्र रत्नप्रभाद्यास्सप्तापि पृथिवीः क्रमात् पट्टादौ संस्थाप्याक्षसञ्चारणया पृथ्वीना-

मेकद्विकसंयोगाभ्यां तेऽवसेयाः, तत्रैकैकपृथ्व्यां नारकद्वयोत्पत्तिलक्षणैकत्वे सप्त विकल्पाः, पृथ्वीद्वये नारकद्वयोत्पत्तिलक्षणाद्विकयोगे त्वेकविंशतिः, एवं सर्वे २८। 'तिण्णि भंते'त्ति इत्यादौ ८४ भेदाः, तथाहि—पृथ्वीनामेकत्वे ७ विकल्पाः, द्विकसंयोगे तु तासामेको द्वावित्यनेन नारकोत्पादविकल्पेन रत्नप्रभया सह शेषाभिः क्रमेण चारिताभिर्लब्धाः षट्, द्वावेक इत्यनेनापि नारकोत्पादविकल्पेन षडेव, तदेते १२, एवं शर्कराप्रभया पञ्च पञ्चेति १०, एवं वालुकायामष्टौ ८, पङ्कप्रभायां ६, धूमप्रभायां ४, तमःप्रभायां २, द्विकयोगे ४२ त्रिकयोगे ३५ एवं सर्वे ८४। 'चत्तारि भंते'त्ति इत्यादौ २१० भेदाः, तथाहि—पृथ्वीनामेकत्वे ७ विकल्पाः, द्विकयोगे तु तासामेकस्त्रय इत्यनेन नारकोत्पादविकल्पेन रत्नप्रभया सह शेषाभिः क्रमेण चारिताभिर्लब्धाः षट्, द्वौ द्वावित्यनेनापि षट्, त्रय एक इत्यनेनापि षडेव, तदेवमेते अष्टादश, शर्कराप्रभया तु तथैव त्रिषु प्रागुक्तनारकोत्पादविकल्पेषु पञ्चदश, एवं वालुकाप्रभायाश्चत्वार इति १२, पङ्कप्रभायास्त्रयस्त्रय इति ९ धूमप्रभया द्वौ द्वाविति ६ तमःप्रभयैकैक इति ३, तदेवमेते द्विकसंयोगे ६३, तथा पृथ्वीनां त्रिकयोगे एकः एको द्वावेवं नारकोत्पादभेदेन रत्नप्रभाशर्कराप्रभाभ्यां सहान्याभिः क्रमेण चारिताभिर्लब्धाः पञ्च, एको द्वावेकश्चैवं नारकोत्पादभेदान्तरेऽपि पञ्च द्वावेक एकश्चैवमपि पञ्चैवेति पञ्चदश, एवं रत्नप्रभावालुकाप्रभाभ्यां सहोत्तराभिः क्रमेण चारिताभिर्लब्धाः १२, एवं रत्नप्रभाधूमप्रभाभ्यां रत्नप्रभाधूमप्रभाभ्यां ६ रत्नप्रभातमःप्रभाभ्यां ३, शर्कराप्रभावालुकाप्रभाभ्यां १२ शर्कराप्रभापङ्कप्रभाभ्यां ९ शर्कराप्रभाधूमप्रभाभ्यां ६ शर्कराप्रभातमःप्रभाभ्यां ३, वालुकाप्रभापङ्कप्रभाभ्यां ९ वालुकाप्रभाधूमप्रभाभ्यां ६ पङ्कप्रभातमःप्रभाभ्यां ३ पङ्कप्रभाधूमप्रभाभ्यां ६ पङ्कप्रभातमःप्रभाभ्यां ३ धूमप्रभादित्तिसु १, तदेवं त्रिकयोगे पञ्चोत्तरं शतं, चतुष्कसंयोगे तु ३५, एवं सप्तानां त्रिषष्टेः पञ्चोत्तरशतस्य पञ्चत्रिंशतः मीलने द्वे शते दशोत्तरे भवतः। 'पंच भंते'त्ति इत्यादि पूर्ववद् भाव-

नीयं, नवरं सङ्क्षेपेण भेदसङ्ख्या दर्श्यते—एकत्वे सप्त विकल्पाः, द्विकयोगाः ८४ भेदाः, कथं ?, द्विकसंयोगे सप्तानामेकविंशति-भङ्गाः, पञ्चानां नारकाणां द्विधाकरणे अक्षसञ्चारणावगम्याश्चत्वारो भेदाः स्युस्तद्यथा—एकश्चत्वारश्च द्वौ त्रयश्च त्रयो द्वौ च चत्वार एकश्चेति, तदेवमेकविंशतिश्चतुर्भिर्गुणिताश्चतुरशीतिः, त्रिकयोगे तु सप्तानां ३५ भेदाः स्युः, पञ्चानां च त्रित्वेन स्थापने ६ भेदास्तद्यथा—एक एकस्त्रयश्च १ एको द्वौ द्वौ च २ द्वावेको द्वौ च ३ एकस्त्रय एकश्च ४ द्वौ द्वावेकश्च ५ द्वौ त्रय एकश्च ६, तदेवं पञ्चत्रिंशत् षड्भिर्गुणने २१० भेदास्स्युः, चतुष्कसंयोगे तु सप्तानां ३५ भेदाः स्युः, पञ्चानां चतूराशितया स्थापने ४ भेदाः, तद्यथा-१११२। ११२१। १२११। २१११। तदेवं ३५ चतुर्भिर्गुणने १४० भेदाः, पञ्चकयोगे त्वेकविंशतिः, सर्वाग्रं ४६२ भेदाः स्युः। 'छ भंते ! नेरइया' इहैकत्वे सप्त द्विकसंयोगे तु षण्णां द्वित्वे ५ भेदास्तद्यथा—१५। २४। ३३। ४२। ५१। तैश्च सप्तपद-द्विकसंयोगैकविंशतेः १०५ भेदास्स्युः, त्रिकसंयोगे तु षण्णां त्रित्वे १० भेदाः, तद्यथा—११४। १२३। २१३। १३२। २२२। ३१२। १४१। २३१। ३२१। ४११। एतैश्च पञ्चत्रिंशतः सप्तपदत्रिकसंयोगानां गुणनेन ३५० भेदाः, चतुष्कसंयोगे तु षण्णां चतूराशितया स्थापने १० भेदास्तद्यथा—१११३। ११२२। १२१२। २११२। ११३१। १२२१। १३११। २१२१। २२११। ३१११। पञ्चत्रिंशतश्च सप्तपदचतुष्कसंयोगानां दशभिर्गुणने ३५० भेदाः, पञ्चकयोगानां दशभिर्गुणने तु षण्णां पञ्चधाकरणे ५ भेदाः, तद्यथा—११११२। १११२१। ११२११। १२१११। २११११। सप्तानां पदानां पञ्चकयोगे २१ भेदाः, तेषां पञ्चभिर्गुणने पञ्चोत्तरशतमिति, षड्योगे तु सप्तैव, एते सर्वाग्रं ९०० भेदाश्चतुर्विंशत्यधिकाः। 'सत्त भंते' इत्यादि, इहैकत्वे सप्त, द्विकयोगे सप्तानां द्वित्वे ६ भेदाः, तद्यथा—१६। २५। ३४। ४३। ५२। ६१। षड्भिश्च सप्तपदद्विकसंयोगैकविंशतिगुणने

१२६ भेदाः, त्रिकयोगे तु सप्तानां त्रित्वे १५ भेदाः, तद्यथा—११५ । १२४ । २१४ । १३३ । २२३ । १४२ । २३२ । ३२२ । ४१२ । १५१ । २४१ । ३३१ । ३१३ । ४२१ । ५११ । एतैश्च पञ्चत्रिंशतः सप्तपदत्रिकयोगानां गुणनात् ५२५ भेदाः, चतुष्कसंयोगे सप्तानां चतूराशिस्थापने ११.१४ एवं २० भेदाः ते चाक्षसञ्चारणादक्षेण स्वयं ज्ञेयाः, विंशत्या च पञ्चत्रिंशतः सप्तपदचतुष्कसंयोगानां गुणनात् ७०० भेदाः, पञ्चकसंयोगे सप्तानां पञ्चतया स्थापने ११११३ एवं १५ भेदाः, एतैश्च सप्तपदपञ्चकसंयोगैकविंशतेर्गुणनात् ३१५ भेदाः, षट्संयोगे सप्तानां षोढाकरणे १११११२ एवं ६ भेदाः, सप्तानां षट्संयोगे ७ भेदाः, तेषां षड्भिर्गुणने ४२ भेदाः, सप्तकसंयोगे त्वेक एव, एवं सर्वे १७१६ भेदाः । 'अट्ठ भंते' इत्यादि, इहैकत्वे ७ भेदाः, द्विकयोगे त्वष्टानां द्वित्वे १७७१ एवं सप्त भेदाः, एतैश्च सप्तपदद्विकयोगैकविंशतेर्गुणने १४७ भेदाः, त्रिकयोगेऽष्टानां त्रित्वे ११६, एवं २१ भेदाः, तैश्च सप्तपदत्रिकयोगे पञ्चत्रिंशतो गुणने ७३५ भेदाः, चतुष्कयोगेऽष्टानां चतुर्द्धात्वे ११.१५ एवं ३५ भेदाः, तैश्च सप्तपदचतुष्कसंयोगानां ३५ गुणने १२२५ भेदाः, पञ्चकसंयोगेऽष्टानां पञ्चत्वे ११११४ एवं ३५ भेदाः, तैश्च सप्तपदपञ्चकसंयोगैकविंशतेर्गुणने ७३५ भेदाः, षट्संयोगेऽष्टानां षोढात्वे ११११.१३ एवं २१ भेदाः, तैश्च सप्तपदषट्संयोगानां सप्तकगुणने १४७ भेदाः, अष्टानां सप्तसंयोगे सप्तधात्वे ७ भेदाः, तैश्चैकैकस्य सप्तकसंयोगस्य गुणने ७ भेदाः, सर्वेषां मीलने ३००३ भेदा भवन्ति । 'नव भंते !' इहैकत्वे ७ भेदाः, द्विकयोगे नवानां द्वित्वे ८ भेदाः, तैश्चैकविंशतेः सप्तपदद्विकसंयोगगुणने १६८ भेदाः, त्रिकयोगे नवानां ११७ एवं २८ भेदाः, तैश्च सप्तपदत्रिकयोगे पञ्चत्रिंशतो गुणने ९८० भेदाः, चतुष्कसंयोगे नवानां चतुर्द्धात्वे १११६ एवं ५६ भेदाः, तैश्च सप्तपदचतुष्कसंयोगपञ्चत्रिंशता गुणने १९६० भेदाः, पञ्चकयोगे नवानां पञ्चत्वे ११११५ एवं ७० भेदाः, तैश्च सप्तपद-

त्र्यकसंयोगैकविंशतिगुणने १४८८ भेदाः, षट्संयोगे नवानां षोढात्वे १११११४ एवं ५६ भेदाः, तैश्च सप्तपदषट्संयोगसप्तकस्य गुणने ३९२ भेदाः, सप्तसंयोगे नवानां सप्तत्वे १११११२३ एवं २८ भेदाः, तैरेकस्य सप्तकसंयोगस्य गुणने २८ भेदाः, एषां सर्वेषां मीलने ५००५ भेदाः स्युः, 'दस भंते !' इहैकत्वे सप्तैव, द्विकसंयोगे दशानां द्विधात्वे १९ एवं ९ भेदाः, तैरेकविंशतेः सप्तपदद्विकसंयोगानां गुणने १८९ भेदाः, त्रिकयोगे दशानां त्रिधात्वे ११८ एवं ३६ भेदाः, तैः सप्तपदत्रिकयोगपञ्चत्रिंशतो गुणने १२६० भेदाः, चतुष्कसंयोगे दशानां चतुर्द्धात्वे ११११७ इत्यादयो ८४ भेदाः, तैः सप्तपदचतुष्कसंयोगपञ्चत्रिंशतो गुणने २९४० भेदाः, पञ्चकसंयोगे दशानां पञ्चधात्वे ११११६ एवं १२६ भेदाः, तैस्सप्तपदपञ्चकसंयोगैकविंशतेर्गुणने २६४६ भेदाः, षट्संयोगे दशानां षोढात्वे १११११५ एवं १२६ भेदाः, तैस्सप्तपदषट्संयोगसप्तगुणने ८८२ भेदाः, सप्तकसंयोगे दशानां सप्तधा ११११११५ एवं ८४ भेदाः, तैरेकस्य सप्तकसंयोगस्य गुणनेऽपि ८४ भेदाः, सर्वमीलने ८००८ भेदाः, 'संखेज्जा भंते !' तत्र सङ्ख्याता एकादशादयः शीर्षप्रहेलिकान्ताः, इहैकत्वे सप्तैव, द्विकयोगे तु सङ्ख्यातानां द्विधात्वे एकः सङ्ख्याताश्चेत्यादयो दश सङ्ख्याताश्च सङ्ख्याताः सङ्ख्याताश्चेत्यन्ता ११ भेदाः, सप्तकयोगे ६७ भेदाः, सर्वाग्रं ३३३७ भेदाः स्युः। 'असंखेज्जा भंते !' सङ्ख्यातप्रवेशनवदेवैतदसङ्ख्यातप्रवेशनकं वाच्यं, नवरमत्रासङ्ख्यातपदं द्वादशमभिधीयते, तत्रैकत्वे सप्तैव, द्विकयोगे २५२ त्रिकयोगे ८०५ चतुष्कयोगे ९४० षड्योगे ३१२ सप्तकसंयोगे ६७ सर्वाग्रं ३६५८। 'उक्कोसा णं भंते !' उत्कर्षा—उत्कर्षपदिनो ये उत्कर्षेण उत्पद्यन्ते 'ते सव्वेवि'त्ति ये उत्कर्षपदिनस्ते सर्वेऽपि रत्नप्रभायां स्युः, तद्गामिनां तत्स्थानानां च बहुत्वात्, इह च प्रक्रमे द्विकयोगे ६ त्रिकयोगे १५ चतुष्कयोगे २० पञ्चकयोगे १५ षड्योगे ६ सप्तकयोगे त्वेक इति। अथ नारकप्रवेशनाल्प-

बहुत्वमाह—'एयस्स णं'ति तत्र सर्वस्तोकं सप्तमपृथ्वीनारकप्रवेशनकं, तद्गामिनां शेषापेक्षया स्तोकत्वात्, ततः षष्ठ्यामसङ्ख्यातगुणाः, तद्गामिनामसङ्ख्यातगुणत्वात्, एवमुत्तरत्रापि। अथ तिर्यक्प्रवेशनकमाह—'तिरिक्ख'त्ति (सू. ३७३) इहैकस्तिर्यग्योनिकं एकेन्द्रियेषु स्यादित्युक्तं, तत्र यद्यप्येकेन्द्रियेष्वेकः कदाचिदप्युत्पद्यमानो न लभ्यते, अनन्तानामेव तत्रानुसमयमुत्पत्तेः, यतः—'अणुसमयमसंखिज्जा एगिंदिय हुंति य चवंति' इति वचनात् तथापि देवादिभ्य उद्धृत्य यस्तत्रोत्पद्यते तदपेक्षयैकोऽपि लभ्यते, एतदेव प्रवेशनकमुच्यते यद्विजातीयेभ्य आगत्य विजातीयेषु प्रविशति, सजातीयेषु सजातीयः प्रविष्ट एव इति किं तत्र प्रवेशनकं उच्यते, तत्रैकस्य क्रमेणैकेन्द्रियादिपञ्चसु पदेषु उत्पादे ५ भेदाः, द्वयोरप्येकैकस्मिन्नुत्पादे पञ्चैव, द्विकयोगे १० भेदाः, एतेनैव सूचयता 'अहवा एगिंदिएसु' इत्याद्युक्तं, अथ सङ्क्षेपार्थं त्र्यादीनामसङ्ख्यातपर्यन्तानां तिर्यग्योनिकानां प्रवेशनकं दर्शयन्नाह—'एवं जह'त्ति नारकप्रवेशनकसममिदं सर्वं, परं तत्र सप्तपृथ्वीष्वेकादयो नारका उत्पादिताः तिर्यञ्चश्च तथैव पञ्चस्थानेषूत्पादनीयाः, ततो विकल्पनानात्वं स्यात्, तच्च प्रागुक्तन्यायेन स्वयमभ्येयमिति। इह चानन्तानामेकेन्द्रियाणामुत्पादेऽपि अनन्तपदं नास्ति, प्रवेशनकस्योक्तलक्षणस्यासङ्ख्यातानामेव भावादिति, 'सव्वेऽवि ताव एगिंदिएसु होज्ज'त्ति एकेन्द्रियाणामतिबहूनां प्रतिसमयमुत्पादात्, 'दुयासंजोगो'त्ति इह प्रक्रमे द्विकसंयोगश्चतुर्द्धा, त्रिकसंयोगः षोढा, चतुष्कयोगश्चतुर्द्धा, पञ्चकयोगस्त्वेक एव। 'सव्वत्थोवे पंचिंदिय'त्ति पञ्चेन्द्रियजन्तूनां स्तोकत्वात्, ततश्चतुरिन्द्रियादिप्रवेशनकानि परस्परेण विशेषाधिकानि (सू. ३७४) मनुष्यदेवप्रवेशनके सुगमे तथापि किञ्चिदुच्यते—सम्मूर्च्छिमगर्भजलक्षणस्थानद्वयमाश्रित्यैकादिसङ्ख्यातान्तेषु प्राग्वद् भेदाः कार्याः, तत्र चातिदेशानामन्त्यं सङ्ख्यातपदमिति तद्भेदानाह—'संखेज्जाइं'ति इह द्विकयोगे प्राग्वदेकादश भेदाः, असङ्ख्यातपदे पूर्वं १२

भेदा उक्ताः इह पुनरेकादशैव, यतः सम्मूर्च्छिमेषु गर्भजेषु च यद्यसङ्ख्यातं तदा द्वादशोऽपि भेदस्स्यात्, न चैवमत्र, गर्भजनराणां स्वरूपतोऽप्यसङ्ख्यातत्वाभावात् तत्प्रवेशनकेऽसङ्ख्यातासम्भवाद्, असङ्ख्यातपदैकादशभेददर्शनायाह—'असंखेज्जा' इत्यादि, 'सव्वेवि ताव संमुच्छिमि'त्ति सम्मूर्च्छिमानामसङ्ख्यातत्वात् प्रविशतामप्यसङ्ख्यातानां सम्भवः, ततश्च मनुष्यप्रवेशनकं प्रत्युत्कृष्टपदिनस्ते सर्वे स्युः, अत एव सम्मूर्च्छिममनुष्यप्रवेशनकमितरापेक्षया असङ्ख्यातगुणं ज्ञेयं, देवप्रवेशने 'सव्वेऽवि ताव जोइसिएसु होज्ज'त्ति ज्योतिष्कगामिनो बहव इति तेषूत्कृष्टपदिनो देवप्रवेशनकवन्तः 'सव्वथोवे वेमाणिए देवप्पवेसणए'त्ति तद्गामिनां तत्स्थानां चाल्पत्वादिति। अथ नारकादिप्रवेशनकाल्पबहुत्वमाह-(सू.३८६) तत्र सर्वस्तोकं मनुष्यप्रवेशनकं, मनुष्यक्षेत्र एव (भावात्) तस्य च स्तोकत्वात्, नैरयिकप्रवेशनकं त्वसङ्ख्यातगुणं, तद्गामिनामसङ्ख्यातगुणत्वात्, एवमुत्तरत्रापि। अथ नारकाणामुत्पादोद्वर्त्तने सान्तरनिरन्तरतामाह-'संतरं भंते'इत्यादि (सू.३७८)॥अथ प्रकारान्तरेण नारकादीनामुत्पादोद्वर्त्तने निरूपयन्नाह-'सओ नेरइया उववज्जं'ति सन्तो-विद्यमाना द्रव्यार्थतया, नहि सर्वथैवासत्किञ्चिदुत्पद्यते, असच्चासदेव खरविषाणवत्, सत्त्वं च तेषां जीवद्रव्यापेक्षया द्रव्यतो नारकास्सन्त उत्पद्यन्ते नारकायुष्कोदयाद्वा, भावनारका एव नारकत्वेनोत्पद्यन्ते, अथवा 'सओ'त्ति विभक्तिपरिणामात् सत्सु प्रागुत्पन्नेष्वन्ये उत्पद्यन्ते नोऽसत्सु, लोकस्य शाश्वतत्वेन नारकादीनां सदा सद्भावात्, 'से नूणं भो गंगेया' अनेन च तत्सिद्धांतेनैव स्वमतं पोषितं, यतः पार्श्वेनार्हता शाश्वतो लोक उक्तः अत एव लोकस्य शाश्वतत्वात् सन्त एव सत्स्वेव वा नारकादय उत्पद्यन्ते च्यवन्ते चेति साध्वेतदिति। अथ गाङ्गेयो भगवदतिशायितां ज्ञानसम्पदं विकल्पयन्नाह-'सयं भंते'त्ति स्वयं-आत्मना, लिङ्गानपेक्षमित्यर्थः, 'भंते'त्ति भगवन्! 'एवं जाणह'त्ति वक्ष्यमाणप्रकारं

वस्तु यूयं जानीत,'असयं'ति अस्वयं-परतो, लिङ्गत इत्यर्थः, तथा 'असोच'त्ति अश्रुत्वा आगमानपेक्षं 'सोच'त्ति श्रुत्वा पुरुपान्तरवचनं, आगमत इत्यर्थः,'सयं एयं'ति स्वयमेव नारका उत्पद्यन्ते, नास्वयं,'कम्मोदएणं' कर्म्मोदयमात्रेण नरकेषूत्पद्यन्ते, केवलिनामपि तस्य भावाद्, अत आह-'कम्मगुरुसंभारियत्ताए'त्ति कर्मगुरुसम्भारिकतया, अतिप्रकर्षावस्थयेत्यर्थः,' विवागेणं'ति विपाको यथावद्धरसानुभूतिः, 'फलविवागेणं'ति फलस्येवालाबुकादेर्विपाको-विपच्यमानता रसप्रकर्षावस्था फलविपाकस्तेन 'कम्मंवियईए'त्ति कर्म्मणां अशुभानां विगत्या-विगमेन स्थितिमाश्रित्य 'कम्मविसोहीए'त्ति रसमाश्रित्य 'विसुद्धिए'त्ति प्रदेशापेक्षया, एकार्थाश्चैते शब्दाः, 'सुभासुभाणं'ति शुभानां-शुभवर्णगन्धादीनामशुभानां-तेपामेव एकेन्द्रियजात्यादीनां वा 'तप्पभिइं'ति यस्मिन् समये अनन्तरोक्तं भगवता वस्तु प्रतिपादितं स एव समयः प्रभृतिः-आदिर्यस्य प्रत्यभिज्ञानस्य तत्तथा, 'से'त्ति स गाङ्गेयः। नवमशते ३२ उद्देशः॥

'हियाए' हिताय 'सुहाए' (सू. ३७९) सुखाय, 'खमाए' क्षमत्वाय, सङ्गतत्वाय इत्यर्थः,'आणुगामियत्ताए'त्ति आनुगामिकत्वाय, शुभानुबन्धायेत्यर्थः, 'लहुकरणजुत्त'त्ति लघुकरणं-गतिवेगदक्षत्वं तेन युक्तौ-यौगिकौ प्रशस्तरूपत्वात् यौ तौ तथा, समाः खुराः 'वालहाण'त्ति वालधाने-पुच्छौ ययोः 'समलिहिय'त्ति समानि लिखितानि-उल्लिखितानि शृङ्गाणि ययोस्तौ ताभ्यां, 'जंबूणय'त्ति जाम्बूनदमयौ-स्वर्णकृतौ यौ कलापौ-कण्ठाभरणविशेषौ ताभ्यां युक्तौ प्रतिविशिष्टकौ शुभौ जवादिभिर्यौ ताभ्यां, 'रययामय'त्ति रूप्यघण्टे ययोस्तौ सूत्रदवरकमय्यौ वरकांचने सुवर्णजटिते ये नस्ते-नासिकारज्जू तयोः प्रग्रहेण-रश्मिना अवगृहीतकौ-बद्धौ ताभ्यां नीलोत्पलकृतापीडाभ्यां 'पवरगोण'त्ति प्रवरगोयुवभ्यां, 'सुजाय'त्ति सुजातं दारुमयं यत् युगं-यूपं

नन् युजानयुगं 'जुत्तरज्जुय'त्ति योक्त्ररज्जुकयुगं तेन सुनिर्मितं 'जुत्तामेव'त्ति युक्तमेव यानप्रवरमुपस्थापयतेति, 'खुज्जेहिं' कुब्जिकाभिः, 'चिलाइयाहिं' चिलातदेशोत्पन्नाभिः, 'नानादेसि'त्ति नानादेशीभ्यः, 'विदेसि'त्ति तद्देशापेक्षया देशान्तरे परिपिण्डिता यास्ताभिः, 'इंगिय'त्ति नयनादिचेष्टा चिन्तितं–परेण प्रार्थितं च विजानन्ति यास्ताभिर्युक्त इति गम्यते, 'चेडियाचक्कवाल'त्ति चेटीचक्रवालेन वर्षधराणां–कृत्रिमनपुंसकानां अन्तःपुरमहल्लकानां 'कंचुइज्ज'त्ति स्थविरकंचुकिकानां–अन्तःपुरकार्यकारिप्रतीहाराणां महत्तरकानां–अन्तःपुरकार्यचिन्तकानां वृन्देन परिक्षिप्ता या सा तथा ॥ 'आगयपण्हया' (सू. ३८०) आगतप्रस्रवा, पुत्रस्नेहादागतस्तनमुखस्तन्येत्यर्थः, 'पप्फुयलोयण'त्ति प्रप्लुतलोचना, पुत्रदर्शनानन्दजलेनेति गम्यते, 'संवरिय'त्ति संवृतौ हर्षात् स्थूरीभवन्तौ वलयैः कटकैर्बाहू–भुजौ यस्याः सा, कंचुकपरिक्षिप्ता–रोमाञ्चव्याप्ता, 'देहेमाणी'ति प्रेक्षमाणा ॥ 'गोयमाइ'त्ति (सू. ३८१) गौतम इति नामोच्चारणं 'अयी'त्ति आमन्त्रणार्थो निपातः, 'अत्तए'त्ति आत्मजः–पुत्रः, 'महइ'त्ति महती नामावतिमहती नेति महातिमहती तस्यां, प्राकृतत्वादालप्रत्ययः, 'अज्जचंदणा अज्ज'त्ति इह देवानन्दायाः भगवता प्रव्राजनकरणे यदार्यचन्दनया पुनस्तत्करणं तत्तत्रैवानवगतावगमकरणादिना विशेषाभिधानमित्यवगन्तव्यमिति, 'तमाणाए'त्ति तदाज्ञया–आर्यचन्दनाज्ञया ॥ 'फुट्टमाणेहिं'ति (सू. ३८२) अतिरभसास्फालनात् स्फुटद्भिरिव 'मुइंगमत्थएहिं'ति मृदङ्गानां मस्तकानि–उपरिभागाः पुटानि मृदङ्गमस्तकानि, 'उवनच्चिज्जमाणे'त्ति उपनृत्यमानस्तमाश्रित्य नर्त्तनात् 'उवगिज्ज'त्ति तद्गुणगानात् 'उवलालि'त्ति ईप्सितार्थदानादुपलाल्यमानः 'पाउस'त्ति प्रावृट् श्रावणादिः वर्षारात्रोऽश्वयुजादिः शरन्मार्गशीर्षादिः हेमन्तो माघादिः वसन्तश्चैत्रादिः ग्रीष्मो ज्येष्ठादिः, 'छप्पि'त्ति षड् ऋतून् 'माणे'त्ति मानयन् 'गाले'त्ति कालं गमयन्, गालयन्नित्यर्थः;

'खंदमहे'त्ति स्कन्दमहः–कार्त्तिकेयोत्सवः,'मल्लईलेच्छई' राजविशेषाः,'परिसा वण्णउ'त्ति यथा कौणिकस्यौपपातिके परिवारवर्णक उक्तः तथाऽस्यापीत्यर्थः, 'चंदणुक्खित्तगाय'त्ति चन्दनेनोपलिप्ताङ्गदेह इत्यर्थः, 'महया भड'त्ति महता–बृहता प्रकारेणेति गम्यते, प्राकृतत्वान्महाभटानां वा ये 'चडगर'त्ति चटकवन्तो–विस्तरवन्तः 'पहकर'त्ति समूहास्तेषां यद्वृन्दं तेन परिक्षिप्तो यस्स तथा, 'आयंते'त्ति शौचार्थं कृतजलस्पर्शः 'चोक्खे'त्ति आचमनादपनीताशुचिद्रव्यः, 'सद्दहामि'त्ति श्रद्दधे सामान्यतः 'पत्तियामि'त्ति युक्तिभिः प्रत्येमि 'रोएमि'त्ति चिकीर्षामि,'अब्भुट्ठेमि'त्ति अनुतिष्ठामि,'कयलक्खणे'त्ति कृतानि–सार्थकानि लक्षणानि–देहचिह्नानि येन स तथा,'सेयागय'त्ति स्वेदेनागतेन रोमकूपेभ्यः प्रगलंति–क्षरन्ति विलीनानि–क्लिन्नानि गात्राणि यस्याः सा,'तक्खणओलग्ग'त्ति तत्क्षणमेव प्रव्रजामीतिवचःश्रवणक्षण एव अवरुग्णं–ग्लानं वपुर्यस्याः सा, 'पसिढिल'त्ति प्रशिथिलानि भूषणानि कृशत्वात् यस्यास्सा, 'पडंत'त्ति पतन्ति कृशबाहुत्वात्,'खुन्निय'त्ति भूमिपतनान्नमितानि संचूर्णितानि भग्नानि च वलयानि यस्यास्सा, प्रभ्रष्टमुत्तरीयं यस्याः सा, 'मुच्छावस'त्ति मूर्च्छावशान्नष्टचेतसि गुर्व्वी–अलघुवपुषी या सा 'परसु'त्ति परशुच्छिन्नेव 'निवत्त'त्ति निवृत्तोत्सवेन्द्रयष्टिः 'ससंभमोयत्तियाए'त्ति ससम्भ्रमं व्याकुलतया अपवर्त्तयति–क्षिपति या सा तया ससम्भ्रमापवर्त्तिकया, दास्येति गम्यते, 'निव्वविं'त्ति निर्वापिता,'उक्खेव'त्ति उत्क्षेपको–वंशपत्रमयो तालवृन्तं–तालवृक्षपत्रमयं वीजनकं–वंशादिमयं तज्जनितवातेन 'सफुसि'त्ति सोदकबिन्दुना 'थिज्जे'त्ति स्थैर्यगुणात् स्थैर्यः विश्वासस्थानं 'अणुमए'त्ति कार्यव्याघातकरणानन्तरमपि मतोऽनुमतः, 'भंड'त्ति भाण्डं–आभरणकरण्डकस्तत्स्थानं–तत्समः, आदेयत्वात्, 'रयणे'त्ति रत्नं नरोत्कृष्टत्वात्, रत्नभूताः–चिन्तामणिसमः,'जीविउ'त्ति जीवितमुत्सृते–नसूत इति जीवितोत्सवः,'णंदि-

जणए'त्ति मनस्समृद्धिकारकः,'उंबर'त्ति उदुम्बरपुष्पवद्दुर्लभः 'सवणयाए' श्रवणतायै, श्रोतुमित्यर्थः,'किमंग'त्ति किं पुनः?, अङ्गेत्यामन्त्रणे, 'अच्छाहि' आस्व 'वड्डिय'त्ति पुत्रपौत्रादिवृद्धिमुपनीतः कुलवंशः-सन्तानः स एव तन्तुः दीर्घत्वसाधर्म्यात् कुलवंशतंतुस्स एव कार्यं-कृत्यं कुलवंशतन्तुकार्यं 'निरवयक्खे' निरपेक्षः, 'तहावि णं तं'ति तथैव तत्रान्यथा 'सारीर'त्ति शारीराणि मानसिकानि प्रकामदुःखानि तद्वेदनं व्यसनानि-द्यूतादीनि तच्छतानि उपद्रवा राजादिकृताः अध्रुवो-न ध्रुवः सूर्योदयकालवत्, 'अणिइए' इतिशब्दो नियतार्थोपदर्शकः, न विद्यते इति यत्रासावनितिः, न नियतस्वरूप इत्यर्थः, ईश्वरादेरपि दारिद्र्यभावात्, 'सडण'त्ति शटनं कुष्ठादिनाऽङ्गुल्यादेः पतनं खड्गादिना अङ्गच्छेदनं विध्वंसनं क्षयः, एत एव धर्मा यस्य स तथा, 'अवस्सविप्पजहि'त्ति अवश्यविप्रहातव्यः-त्याज्यः,'से णं'ति अथ कोऽसौ जानाति,'के पुव्विं'ति कः प्राक् पितृपुत्रयोरन्योऽन्यतो गमनायोत्सहते 'पच्छा' कः पश्चादुगमनाय तत्रैवोत्सहते, कः पूर्वं कः पश्चान्म्रियते इत्यर्थः,'वंजण'त्ति व्यंजनं-मषीतिलकादि बलं-शारीरः प्राणः वीर्यं-मानसोऽवष्टम्भः सत्त्वं—चित्तविशेषः तैर्युक्तं 'समूसियं' समुच्छ्रितं 'अभिजाय'त्ति अभिजातं कुलीनं, महती क्षमा यत्र तत्तथा, 'निरुवहय'त्ति निरुपहतानि वातादिप्रकोपेन 'उदत्त'त्ति उदात्तानि वर्णगुणैः लष्टानि-रम्याणि पञ्चेन्द्रियाणि यत्र तत्तथा 'संनिकेय'ति सन्निकेतं-स्थानं 'अट्ठिय'त्ति अस्थिकरूपकाष्ठानि तेभ्य उत्थितं, 'सिर'त्ति शिरोनाड्यः 'ण्हारु'त्ति स्नायवस्तासां जालं-वृन्दं तेन पिनद्धं सम्पिनद्धं-अत्यर्थं वेष्टितं यत्तत्तथा, 'अणिट्ठविय'त्ति अनिष्ठापिता-असमापिता सर्वकालं-सदा संस्थाप्यता-तत्कृत्यकरणं यस्य तत्तथा, 'जराकुणिम'त्ति जराकुणपश्च-जीर्णशवो जर्जरगृहं च-जीर्णगेहं समाहारद्वन्द्वाज्जराकुणपजर्जरगृहं तदिव, किमित्याह-'सडणे'त्यादि, कलाकुशलाः सर्वकलालालिताः सुखोचिताः 'विणओवयार'त्ति

विनयोपचारास्तत्र पण्डिता--विचक्षणा अतिविशारदा मञ्जुलं-मृदु मितं-परिमितं मधुरभणितं विहसितं विप्रेक्षितं गतिविलासः 'विट्ठिय'त्ति विशिष्टा स्थितिरेतेषु विशारदाः, 'पगब्भवय'त्ति प्रगल्भं-समर्थं वयो-यौवनं तस्य भावः सत्ता विद्यते यासां ताः, पाठान्तरे तु-'पगब्भुब्भवप्पभाविणीओ'त्ति प्रगर्भाः-प्रशस्तगर्भास्तेषां य उद्भवः-उत्पत्तिस्तत्र यः प्रभावः-सामर्थ्यं स यासामस्ति ताः, 'मणाणु'त्ति मनोऽनुकूलाश्च हृदयेनेष्टाश्चैवंविधा अष्टौ तव गुणैर्वल्लभाः कन्याः 'विगय'त्ति विगतं--व्यवच्छिन्नमतिक्षीणं कुतूहलं यस्य सः 'असमणुण्ण'त्ति अमनोज्ञदूरूपपूतिकपुरीषेण पूर्णाः 'मयगंधु'त्ति मृतस्य गन्धो यस्य स मृतगन्धिः स चासावुच्छ्वासोऽशुभनिःश्वासश्च ताभ्यामुद्वेजनकराः, उद्वेगकारिण इत्यर्थः, 'लहुस'त्ति लघुकाः-लघुस्वभावाः 'कलमलाहिवास'त्ति कलमलस्य-वपुरशुभद्रव्यस्याधिवासेन-अवस्थानेन दुःखा-दुःखरूपाः, 'परिकिलेस'त्ति परिक्लेशेन-मानसायासेन कृच्छ्रेण--वपुरायासेन 'सज्झा' साध्याः, 'चुडलिव्व'त्ति प्रदीप्तपूलिकेव 'अमुच्च'त्ति अमुच्यमानाः, प्राकृतत्वादत्र प्रथमाबहुवचनलोपो द्रष्टव्यः, 'इमे य ते जाया ! अज्जय'त्ति इदं च तव पुत्र ! आर्यकः--पितामहः प्रार्यकः--पितृपितामहः पितृप्रार्यकः--पितुः प्रपितामहः तेभ्यः सकाशादागतं, अथवा आर्यकप्रार्यकपितॄणां यः पर्ययः--क्रमस्तेनागतं, 'संतसार'त्ति सत्--विद्यमानं सारं--प्रधानं स्वापतेयं--द्रव्यं 'अलाहि' अलं--पर्याप्तं स्यात् 'आसत्तमाओ कुलवंसाउ'त्ति आसप्तमात् कुलवंशात्--कुललक्षणो वंशो भवः कुलवंस्य-स्तस्मात्, सप्तमं पुरुषं यावदित्यर्थः, 'दाइय'त्ति दायादाः पुत्रादयः, एतद् द्रव्यपारवश्यप्रतिपादनार्थं पर्यायान्तरेणाह--'अग्गिसामण्णे'त्यादि, 'आघवे'त्ति आख्यापनाभिः सामान्यवचोभिः 'पण्णवण'त्ति प्रज्ञापनाभिर्विशेषवचोभिः 'सण्णवण'त्ति संज्ञापनाभिस्सम्बोधनाभिः, 'विण्णवण'त्ति विज्ञप्तिकाभिः, 'आघवित्तए'त्ति आख्यातुं, एवमन्यान्यपि वाक्यानि पदानि, 'सव्वे'त्ति

गन्तृत्वो हितत्वात् अनुत्तरं-प्रधानं केवलं-अपूर्वं 'जहाऽऽवस्सए'त्ति यथाऽऽवश्यके साधुप्रतिक्रमणसूत्रे 'पडिपुण्णं नेयाउयं संसुद्धं सल्लगत्तणं'ति शल्यकर्त्तनमित्यादि, 'पडिसोय'त्ति प्रतिश्रोतोगमनतया 'गुरुयं लंबेयव्वं' गुरुकं शिलादिकं लम्बयितव्यं—अवलम्बनीयं, रज्ज्वादिना धारणीयं, तद्वन् प्रवचनं गुरुकलम्बनवद् दुष्करं, असिधारकं व्रतं चरितव्यं,'भुत्तए' भोक्तुं 'पायए'पातुं 'नालं'ति न समर्थः शीताद्यधिसोढुं, क्वचित्प्राकृतत्वात् द्वितीयार्थे प्रथमाऽपि स्यात्, 'वाल'त्ति व्यालान्-श्वापदसर्पलक्षणांन् रोगाः-कुष्ठादयः आतङ्काः-शूलादयः,'कीवाणं'ति मन्दोद्यमानां कातराणां-चित्तावष्टम्भरहितानां कापुरुषाणां-वपुस्संयममन्दानां धीरस्य-साहसिकस्य निश्चितस्य-कर्त्तव्यमेवेदमितिकृतनिश्चयस्य व्यवसितस्य-उद्यमिनः 'एत्थं'ति अत्र व्रते करणतया-संयमानुष्ठानकरणेन ॥ 'आसियं' (सू. ३८४) आसिक्तं नीरेण सम्मार्जितं प्रमार्जिनकया उपलिप्तं गोमयादिना, 'कुत्तियावणाओ'त्ति देवाधिष्ठितत्वेन स्वर्गमर्त्यपातालवस्तुरूपं कुत्रिकं-विश्वत्रिकं तत्सम्भवि वस्त्वपि कुत्रिकं तस्यापणात्, हंसलक्षणेन-हंसचिह्नेन, सिन्दुवारो-वृक्षविशेषः, निर्गुण्डी इत्यन्ये, 'तिहीसु'त्ति मदनत्रयोदश्यादितिथिषु पर्वणीषु-कार्त्तिक्यादिषु 'जण्णेसु' नागपूजादिषु 'छणेसु' इन्द्रोत्सवादिषु 'उत्तरावक्कमणं'ति उत्तरस्यां दिश्यपक्रमणं-अवतरणं यस्मात् तदुत्तरापक्रमणं, उत्तराभिमुखमासीदिति 'सेयापीयएहिं' रूप्यमयैः सुवर्णमयैश्च,'पम्हल'त्ति पक्ष्मवत्या सुकुमालया वा 'गंधकासाईए' गन्धवत्या कषायरक्तया शाटिकयेत्यर्थः. 'नास'त्ति नासानिःश्वासवातवाह्यं चक्षुर्हरं नेत्रानन्दकारित्वात्, हयलालायाः सकाशात् पेलवं-मृदु अतिरेकेण-आधिक्येन यत्तत् 'कणग'त्ति कनकखचितमन्तयोः-अञ्चलयोः कर्म वानलक्षणं यस्य तत्तथा हारं अष्टादशसरिकं 'पिणद्धं'ति पिनह्यतः, पितराविति, 'रयणसंकड'त्ति रत्नसङ्कटं च तत् उत्कटं-उत्कृष्टं च रत्नसङ्कटोत्कटं 'गंठिम'त्ति ग्रथितं मालादि वेष्टिमं वेष्टननि-

ष्पन्नं लम्बूसकादि पूरिमं पुष्पगृहादि सङ्घातिमं तु मिथोनालसङ्घातनेन सङ्घात्य अलङ्कृतो वस्त्रादिना अत एव विभूषितः–शोभितः 'केसालंकारेण'ति चतुरङ्गुलावशेषकेशसद्भावात् केशालङ्कारः अथवा केशानामलङ्कारः पुष्पादि 'संगय'त्ति सङ्गतेषु हसितादिषु कुशला सुन्दरस्तना 'सकोरिंट'त्ति कोरण्टकपुष्पयुक्तानि माल्यदामानि–पुष्पमाला यत्र तत्तथा, 'तवणिज्जुज्जल'त्ति तपनीयस्य उज्ज्वलौ दण्डौ ययोस्ते तथा, अत्र कनकतपनीययोः को विशेषः ?, उच्यते, कनकं पीतं तपनीयं रक्तमिति, 'चिल्लियाओ'त्ति दीप्यमाने अङ्को–रत्नविशेषः 'अमयमहिय'त्ति अमृतस्य मथितस्य सतो यः फेनपुञ्जस्तत्सदृशे, 'मत्तगय'त्ति गजमहामुखाकृतिसमानं, 'एगाभरणवसण'त्ति एकः–एकसदृश आभरणवस्त्रलक्षणो गृहीतो निर्योगः–परिकरो यैस्ते, 'अट्ठट्ठ'त्ति अष्टावष्टाविति वीप्सायां द्वित्वं, अन्ये त्वाहुः–अष्टसङ्ख्यानि अष्टमङ्गलसंज्ञानि, 'आलोयं' प्रकाशं दृष्टिगोचरं वा, उग्रा आदिदेवेनारक्षिकत्वे नियुक्ताः तद्वंश्याश्च, भोगास्तेनैव गुरुत्वेनैव व्यवहृताः, 'महापुरिस'त्ति वागुरा–मृगबन्धनवागुरेव वागुरा सर्वतः परिवृतत्वात्, महापुरुषवागुरापरिक्षिप्ता ये ते, नागा–हस्तिनः, 'रहसंगेल्लि'त्ति रथसमुदायः, 'अब्भुग्गय'त्ति अभ्युद्गतः—सम्मुखमुत्पाटितो भृङ्गारो यस्य स तथा, 'पवीइय'त्ति प्रवाजिता श्वेतचमरवालानां व्यञ्जनिका यं प्रति, 'कामेहिं जाए'त्ति कामेषु—शब्दादिषु जातः, 'भोगेहिं'ति भोगा–गन्धरसस्पर्शास्तैस्संवृद्धो–वृद्धिप्राप्तः, 'काम'त्ति कामरतेन कामरजसा वा 'नाइ'त्ति ज्ञातीया निजका मातुलादयः स्वजनाः–पितृव्यादयः सम्बन्धिनः–श्वशुरादयः परिजनो–दासादिः नो आद्रियते–तत्रार्थे नादरवान् ॥ (सू. ३८४) अरसैः हिंग्वादिभिरसंस्कृतैः विरसैः-विगतरसैः पुराणत्वात् अन्तैः-सर्वधान्यान्तवर्त्तिभिः प्रान्तैः–भुक्तावशेषैः कालातिक्रान्तैः–बुभुक्षाकालाप्राप्तैः प्रमाणातिक्रान्तैः–बुभुक्षापिपासामात्रानुचितैः रोगो–व्याधिः आतङ्कः–कृच्छ्रजीवितव्यकारी उज्ज्वलोऽतिगाढत्वात्

विपुलो वपुर्व्यापकत्वात् प्रगाढः–प्रकर्षवृत्तिः, चण्डो–रौद्रः 'दुक्खे'त्ति दुःखहेतुः दुर्गो–विषमः 'दुरहियासे' दुरधिसह्यः दाहो व्युत्क्रान्तः–उत्पन्नो यस्य स दाहव्युत्क्रान्तः 'सिज्जासंथारं'ति शय्यायै–शयनाय संस्तारकः 'कडे ? किज्जइ'त्ति कृतो वा ? क्रियते ? । 'छउमत्थावक्कमणेणं'ति (सू. ३८६) छद्मस्थानां सतामपक्रमणं–गुरुकुलान्निर्गमनं छद्मस्थापक्रमणं तेन, 'आवरिज्जइ'त्ति ईषद् व्रियते 'निवारिज्जइ'त्ति नितरां वार्यते, प्रतिहन्यत इत्यर्थः,'ण कया'त्ति न कदाचिन्नासीदनादित्वात्, न कदाचिद् न भवति, सदैव भावात्, न कदाचिन्न भविष्यति, अपर्यवसितत्वात्, किं तर्हि ?,'भुविं'त्ति ततश्चायं त्रिकालभावित्वेन ध्रुवो मेर्वादिवत्, अशाश्वतो लोकः प्रदेशापेक्षयाऽनित्यः, अवस्थितो द्रव्यापेक्षया, नि(त्यानि)त्यः तदुभयापेक्षया, एकार्था वैते शब्दाः ॥'आयाए'त्ति (सू० ३८७) आत्मना 'असब्भावु'त्ति असद्भावानां–वितथार्थानां उद्भावना असद्भावोद्भावनास्ताभिः 'भिच्छत्ताभिनिवे'त्ति मिथ्यात्वाद् योऽभिनिवेशा–आग्रहास्ते तथा तैः 'वुग्गाहे'त्ति व्युद्ग्राहयन्, विरुद्धग्रहवन्तं कुर्वन्नित्यर्थः। 'केसु कम्मादाणे'त्ति (सू. ३८८) केषु कर्मसु सत्सु 'अजस'त्ति सर्वदिग्गामि यशस्तद्विपक्षमयशः, अवर्णः–अप्रसिद्धिमात्रं अकित्ती–एकदिगामिनी कीर्त्तिस्तद्विपक्षा अकीर्त्तिः 'उवसंतजीवि'त्ति उपशान्तोऽन्तर्वृत्त्या जीवती त्येवंशील उपशान्तजीवी, एवं प्रशान्तजीवी, नवरं प्रशान्तो बहिर्वृत्त्या, 'विवित्तजीवि'त्ति विविक्तः स्त्र्यादिसंसक्तवसत्यादिवर्जनतः। अथ श्रीवीरेण सर्वज्ञत्वादमुं तद्व्यतिकरं जानतापि किमित्यसौ प्रव्राजितः ?, उच्यते, अवश्यंभाविभावानां महानुभावैरपि प्रायो लङ्घयितुमशक्यत्वाद् इत्थमेव वा गुणविशेषदर्शनात्, भगवतोऽर्हन्तो न निष्प्रयोजनं क्रियासु प्रवर्त्तन्त इति ॥ नवमशते ३३ उद्देशः ॥

'नो पुरिसं'ति (सू. ३९०) पुरुषव्यतिरिक्तं जीवांतरं हंति 'हणमाणे'त्ति घ्नन् 'अणेग'त्ति अनेकान् यूकामत्कुणकृम्यादीन्

'इसिं' ऋषिं 'अणंता जीवा हणइ'त्ति ऋषिं घ्नन्ननन्तान् जीवान् हन्ति, यतस्तद्घाते अनन्तानां घातः स्यात्, मृतस्य तस्य अनार्योत्पन्नस्य ऋपेर्विरतेरभावेनानंतजीवघातकत्वभावात्, अथवा ऋषिर्जीवन् बहून् प्राणिनः प्रतिबोधयति, ते च प्रतिबुद्धाः क्रमान्मोक्षमासादयन्ति, मुक्ताश्चानन्तानामघातकास्स्यु, तद्वधे चैतत्सर्वं न स्यात्, अतस्तद्वन्धेऽनन्तजीववधः स्यात्, 'निक्खेवओ'त्ति निगमनं, 'नियमं'ति नियमात् पुरुषवैरेण स्पृष्टः, पुरुषस्य हतत्वात् पुरुषवधेनेति एको भङ्गः, तत्र यदि प्राण्यन्तरमपि हतं तदा पुरुषवैरेण नोपुरुषवैरेणेति द्वितीयः, यदि तु बहवः प्राणिनो हतास्तत्र तदा पुरुषवैरेण नोपुरुषवैरैश्चेति तृतीयः इति सर्वत्र त्रयं, ऋषिपक्षे तु ऋषिवैरेण नोऋषिवैरैश्चेत्येवमेक एव, ननु यो मृतो मोक्षं यास्यति, अविरतो न भविष्यति, तस्य ऋषेर्वधे ऋषिवैरमेव स्यात्, अतः प्रथम[समय]विकल्पसम्भवः, अथ चरमशरीरस्य निरुपक्रमायुष्कत्वान्न हननसम्भवः ततोऽचरमशरीरापेक्षया यथोक्तभङ्गसम्भवो, नैवं, यद्यपि चरमशरीरो निरुपक्रमायुष्कस्तथापि तद्वधाय प्रवृत्तस्य यमुनराजस्येव वैरमस्त्येवेति प्रथमभङ्गसम्भव इति, सत्यं, किन्तु यस्य ऋषेः सोपक्रमायुष्कत्वात् पुरुषकृतो वधः स्यात् तमाश्रित्येदं सूत्रं, तस्यैव हननस्य मुख्यवृत्त्या पुरुषकृतत्वात् ॥ अथ हननं उच्छ्वासादिवियोगोऽत उच्छ्वासादिवक्तव्यतामाह—'पुढविकाइया णं भंते'त्ति (सू. ३९१) इह पूज्यव्याख्या यथा—वनस्पतिरन्यस्योपर्यन्यः स्थितस्तत्तेजोग्रहणं कुर्यात्, एवं पृथ्वीकायिकादयोऽप्यन्योऽन्यसम्बद्धत्वात् तद्रूपं प्राणातिपातादिकं कुर्युः, तत्रैकः पृथ्वीकायिकोऽन्यं स्वसम्बद्धपृथ्वीकायिकं आनिति-तद्रूपमुच्छ्वासं कुर्यात्, यथोदरस्थितकर्पूरः पुरुषः कर्पूररूपमुच्छ्वासं कुर्याद्, एवमप्कायिकादिकानित्येवं पृथ्वीकायिकसूत्राणि पञ्च, एवमप्कायादयः प्रत्येकं पञ्च २ सूत्राणि लभन्त इति पञ्चविंशतिः सूत्राणि स्युरिति, क्रियासूत्राण्यपि पञ्चविंशतिः, तत्र 'सिय तिकिरि'त्ति यदा पृथिवीकायिकादिः पृथ्वीकायिकादिरूपमुच्छ्वासं

कुर्वन्नपि न तस्य पीडामुत्पादयति, स्वभावत्वात् तदाऽसौ कायिक्यादिः त्रिक्रियः स्यात्, यदा तस्य पीडामुत्पादयति तदा पारितापनिकाक्रियाभावाच्चतुष्क्रियः, प्राणातिपातसद्भावे तु पञ्चक्रियः, 'वाउकाइएणं'ति (सू. ३९२) इह वायुना वृक्षमूलस्य प्रचलनं प्रपतनं वा तदा सम्भवति यदा नदीभित्त्यादिषु पृथ्व्या अनावृतं तत्स्यादिति। अथ कथं प्रपतने त्रिक्रियत्वं?, परितापादेरसम्भवात्, उच्यते-अचेतनमूलापेक्षयेति ॥ नवमशते ३४ उद्देशः ॥ इति नवमशतकविवरणं सम्पूर्णम् ॥

अथ दशमशतमारभ्यते-"दिस १ संवुडमणगारे २ आइड्ढी ३ सामहत्थि ४ देवि ५ सभा ६। उत्तरअंतरदीवा दसमंमि सयम्मि चोत्तीसा ॥१॥ (*६२) व्याख्या-दिशमाश्रित्य १ उद्देशकः, 'संवुड'त्ति संवृतसाधुविषयोद्देशकः २, 'आइड्ढि'त्ति आत्मद्धर्या देवो देवावासान्तराणि व्यतिक्रामेदिति वाच्यः ३, 'सामहत्थि'त्ति श्यामहस्त्याख्यश्रीवीरशिष्यप्रश्नवाच्यः ४, 'देवि'त्ति चमराद्यग्रमहिषीवाच्यः ५, 'सभ'त्ति सुधर्मसभावाच्यः ६, 'उत्तर'त्ति उत्तरस्यां दिशि येऽन्तरद्वीपास्तदर्थवाच्या २८ उद्देशाः, एवमादितो दशमशते ३४ उद्देशकाः स्युरिति। 'किमियं'ति (सू. ३९३) किमेतद्वस्तु भगवन्! 'पाईण'त्ति यत्प्राचीना प्राची पूर्वेत्युच्यते, उत्तरं तु जीवाश्चाजीवाश्च, जीवाजीवरूपा प्राची, तत्र जीवा एकेन्द्रियादयः अजीवा धर्मास्तिकायादयः, एतदुक्तं स्यात्-प्राच्यां जीवा अजीवाश्च सन्ति, 'इंदग्गीइ'त्ति इन्द्रो देवता अस्याः सा ऐन्द्री, अग्निर्देवता यस्याः सा आग्नेयी, एवं यमदेवता याम्या, निर्ऋतिदेवता नैर्ऋती, वरुणदेवता वारुणी, वायुदेवता वायव्या, सोमदेवता सौम्या, ईशानदेवता ऐशानी, विमलतया विमला-ऊर्ध्वदिग्, तमा-रात्रिस्तदाकारत्वात् तमा, अन्धकारेत्यर्थः, अत्र ऐन्द्री पूर्वा, शेषाः क्रमात्, तमा पुनरधोदिगिति, इह च दिशः शकटोर्द्धिसंस्थिताः, विदिशस्तु मुक्तावल्याकाराः, ऊर्ध्वाधोदिशौ च रुचकाकारे, आह च-'सगडुद्धिसंठियाओ महादिसाओ

हवंति चत्तारि। मुत्तावली य चउरो दो चेव हवंति रुयगनिभा ॥१॥" 'जीवाधि'त्ति ऐन्द्री दिक् जीवाः, तस्यां जीवानामस्तित्वात्, एवं जीवदेशा जीवप्रदेशाश्चेति, तथा अजीवानां पुद्गलानामस्तित्वात् 'अजीवा'इति, धर्मास्तिकायादिदेशानां पुनरस्तित्वादजीवदेशाः, एवमजीवप्रदेशा अपीति, तत्र ये जीवास्ते एकेन्द्रियादयोऽनिन्द्रियास्सिद्धाश्च, ये तु जीवदेशास्ते एकेन्द्रियादीनां षण्णां, एवं जीवप्रदेशा अपि,'जे अरूविअजीवा ते सत्तविह'त्ति, कथं ?, नो धम्मत्थिकाए, अयमर्थो—धर्मास्तिकायः समस्त एवोच्यते, स च प्राची दिग् न स्यात्, तदेकदेशभूतत्वात् तस्याः, किन्तु धर्मास्तिकायस्य देशः, सा तदेकदेशभागरूपेति, तस्यैव प्रदेशाः सा स्यात्, असङ्ख्येयप्रदेशात्मकत्वात् तस्याः, एवमधर्मास्तिकायस्य देशः प्रदेशाश्च, एवमाकाशास्तिकायस्यापि देशः प्रदेशाश्च 'अद्धासमयश्चे'ति एवं सप्तप्रकारारूप्यजीवरूपा ऐंद्री दिगिति, 'अग्गेई णं'ति प्रश्नः, उत्तरे तु जीवा निषेध्याः, विदिशामेकप्रदेशिकत्वाद् एकप्रदेशे च जीवानामवगाहाभावात्, असङ्ख्यातप्रदेशावगाहित्वात् तेषां, तत्र ये जीवदेशास्ते 'नियमा एगिंदियदेस'त्ति एकेन्द्रियाणां सर्वलोकव्याप्तत्वात् आग्नेय्यां नियमादेकेन्द्रियदेशास्सन्तीति, 'अहव'त्ति एकेन्द्रियाणां सर्वलोकव्याप्तत्वादेव द्वीन्द्रियाणां चाल्पत्वेन क्वचिदेकस्यापि तस्य सम्भवादुच्यते एकेन्द्रियाणां देशा द्वीन्द्रियस्य च देशश्चेति द्विकयोगे प्रथमः, अथ चैकेन्द्रियपदं तथैव द्वीन्द्रियपदेऽप्येकवचनं देशपदे बहुवचनमिति द्वितीयः, अयं च यदा द्वीन्द्रियो द्व्यादिप्रदेशैस्तां स्पृशति तदा स्यादिति, अथवा एकेन्द्रियपदं तथैव द्वीन्द्रियादिपदं देशपदं च बहुवचनान्तमिति तृतीयः, स्थापना, एगिंदि दे ३ बे० १ दे० १ एगिंदिदेश ३ बे० १ दे ३ एगिंदि दे० ३ बे० ३ दे ३, एवं त्रिचतुष्पञ्चेन्द्रियानिन्द्रियैस्सह प्रत्येकं भङ्गत्रयं दृश्यं, एवं प्रदेशपक्षोऽपि वाच्यः, नवरमिह द्वीन्द्रियादिषु प्रदेशपदं बहुवचनान्तमेव, यतो लोकव्यापकावस्थानिन्द्रियवर्जजीवानां यत्रैकः प्रदे-

ग्रस्तत्रासङ्ख्यातास्ते स्युः, लोकव्यापकावस्थानिन्द्रियस्य पुनर्यद्यप्येकत्र क्षेत्रप्रदेशे एक एव प्रदेशस्तथापि तत्प्रदेशपदे बहुवचनान्तमेव, आग्नेय्यां तत्प्रदेशानामसङ्ख्यातानामवगाढत्वात्, अतः सर्वेषु द्विकसंयोगेष्वाद्यरहितं भङ्गद्वयमेव, एतदेवाह–'आइल्लविरहिओ'त्ति द्विकभङ्ग इति, 'विमलाए जहा जीवा अग्गेईए'त्ति विमलायामपि जीवानामनवगाहात्, 'अजीवा जहा इंदाए' सद्व्यक्तव्यत्वात्, 'एवं तमावि'त्ति विमलावत्तमा वाच्येत्यर्थः, विमलायामपि अनिन्द्रियसद्भावात् तद्देशादयो युक्ताः तमायां तु तस्यासम्भवात् कथं ते इति ?, उच्यते, दण्डाद्यवस्थं तमाश्रित्य तस्य देशो देशाश्च विवक्षया तत्रापि युक्ता एव, अथ तमायां विशेषमाह–'नवरं'ति 'अद्धासमओ'त्ति समयव्यवहारो हि सञ्चरिष्णुसूर्यादिप्रकाशकृतः, स च तमायां नास्तीति तत्राद्धासमयो न भण्यते, अथ विमलायामपि नास्त्यसाविति कथं तत्र समयव्यवहार इति, उच्यते, मंदरावयवभूतस्फटिककाण्डसूर्यादिप्रभासङ्क्रान्तिद्वारेण तत्र सञ्चरिष्णुसूर्यादिप्रकाशभावादिति, 'ओगाहणसंठाणं'ति (सू. ३९४) प्रज्ञापनायामेकविंशतितमं पदं, तच्चेदम्–'पंचविहे पण्णत्ते, तंजहा–एगिंदियओरालियसरीरे जाव पंचेंदियओरा० सरीरे, वाचनान्तरे त्वस्य सङ्ग्रहगाथामाह–"कइ संठाणपमाणं पोग्गलचयणं सरीरसंजोगो। दव्वपएसप्पबहुं सरीरओगाहणाए य ॥१॥" 'कइ'त्ति कति वपूंषि ?, औदारिकादीनि ५ 'संठाण'त्ति वपुषां संस्थानं वाच्यं, यथा नानासंस्थानमौदारिकं, 'पमाणं'ति एषामेव प्रमाणं वाच्यं, यथा औदारिकं जघन्यतोऽङ्गुलासङ्ख्येयभागमात्रं, उत्कृष्टतस्तु सातिरेकयोजनसहस्रमानं, एषामेव पुद्गलचयापचयौ वाच्यौ, यथौदारिकस्य निर्व्याघातेन ६ दिक्षु, व्याघातं प्रतीत्य स्यात् त्रिदिशीति, एषां संयोगो वाच्यो, यथा यस्यौदारिकं शरीरं तस्य वैक्रियं स्यादस्तीति, एषामेव द्रव्यार्थतया प्रदेशार्थतया चाल्पबहुत्वं वाच्यं यथा 'थोवा आहारगसरीरा दव्वट्ठयाए' एषामेवावगाहनाया अल्पबहुत्वं वाच्यं,

यथा 'सव्वत्थोवा ओरालियसरीरस्स जहण्णिया ओगाहणा' इत्यादि, ॥ दशमशते प्रथमः ॥

'संवुडस्स' (सू. ३९५) संवृतस्य सामान्येन प्राणातिपातादिविरतियुक्तस्य 'वीइ'त्ति वीचिशब्दः सम्प्रयोगे, स च सम्प्रयोगो द्वयोः स्यात्, ततश्चेह कषायाणां जीवस्य च सम्बन्धो वीचिशब्दवाच्यः, ततश्च वीचिमतः—कषायवतो, मतुप्प्रत्ययस्य प्राकृतत्वेन षष्ठीलोपदर्शनात् अथवा विरूपा कृतिः—क्रिया सरागत्वात् यस्मिन्नवस्थाने तद्विकृतिर्यथा स्यादेवं 'ठिच्च' स्थित्वा, 'पंथे'त्ति मार्गे 'मग्ग'त्ति मार्गतः—पृष्ठतः 'अवयक्खमाणस्स'त्ति अवकांक्षतो अपेक्षमाणस्य वा 'नो इरियावहिय'त्ति न केवलयोगप्रत्यया कर्म्मबन्धक्रिया स्यात्, सकषायत्वात् तस्येति, 'जस्स णं कोहमाण'त्ति एवं जहेत्यतिदेशादिदं सूत्रम्—'वोच्छिण्णा भवंति तस्स णं इरियावहिया किरिया कज्जति, जस्स णं कोहमाणमायालोभा अवोच्छिण्णा भवंति तस्स णं संपराइया किरिया कज्जइ, अहासुत्तं रियं रियमाणस्स इरियावहिया किरिया कज्जइ, उस्सुत्तं रियं रियमाणस्स संपराइया किरि०' अस्य व्याख्या प्राग्वत् ॥ 'से णं उस्सुत्तमेव'त्ति स पुनरुत्सूत्रमेव—आगमातिक्रमणत एव रीयइ—गच्छति 'अवीइ'त्ति अवीचिमतः—अकषायवतः अथवा अविकृति वा यथा स्यात्। तथा 'सीओसिण'त्ति (सू. ३९६) द्विस्वभावा, एवं योनिपदं निरवशेषं प्रज्ञापनानवमपदे ज्ञेयं। 'वेयणापयं भाणियव्वं'ति (सू. ३९७) वेदनापदं च प्रज्ञापनापञ्चत्रिंशत्तमं ज्ञेयं ॥ 'मासियं'त्ति (सू. ३९८) मासः परिमाणं यस्यास्सा मासिकी तां भिक्षुप्रतिज्ञाविशेषं 'जहा दसाहिं'ति यथा दशाश्रुतस्कन्धे भिक्षुप्रतिमा उक्ता तथाऽत्र वाच्याः, 'वोसिट्ठि'त्ति व्युत्सृष्टः स्नानादिवर्जनात् कायो येन स तथा तस्य, 'चियत्तदेहे'त्ति त्यक्तो—वधबन्धाद्यावरणात्, अथवा प्रीतिविषयो, धर्मसाधनेषु प्रधानत्वाद्देहस्येति, ॥ 'अकिच्चठाणं'ति (सू. ३९९) अकृत्यस्थानं प्रतिषेविता स्यादिति गम्यं, 'से णं'ति स भिक्षुः 'तस्स

ठाणस्स'त्ति तत्स्थानं 'अणपण्णियदेवत्तणं'ति अणपन्निका–व्यन्तरनिकायास्तत्सम्बन्धि देवत्वमणपन्निकत्वं तदपि नो लप्स्ये इति ॥ दशमशते द्वितीयः ॥

'आइड्ढिए णं'ति (सू. ४००) आत्मर्द्धा–स्वकीयशक्त्या अथवा आत्मन एव ऋद्धिर्यस्यासावात्मर्द्धिकः, 'देवावासंतरा' इति देवावासविशेषान् 'वीइवइ'त्ति व्यतिव्रजत इति 'तेण परं'ति ततः परं 'परिड्ढिए'त्ति परर्द्ध्या परर्द्धिको वा, 'पमत्तं'ति प्रमादिनं 'विमोहित्ता पभु'त्ति विमोह्य, महिकाद्यन्धकारकरणेन मोहमुत्पाद्य अपश्यन्तमेव व्यतिक्रामेदिति भावः, एवमसुरकुमारेणापि 'तिण्णि आलावग'त्ति अल्पर्द्धिकमहर्द्धिकयोरेकः समर्द्धिकयोरन्यः महर्द्धिकाल्पर्द्धिकयोरपर इति त्रयः २, 'ओहिए णं'ति सामान्यदेवेन एवमालापकत्रयोपेतो देवदेवीदण्डको वैमानिकान्त एवापरः ३ एवं देव्योर्दण्डकोऽन्यः ४ इति ४ दण्डकाः स्युः, ॥ 'हियगस्स जगयस्स य'त्ति (सू. ४०१) हृदयस्य च यकृतश्च–दक्षिणकुक्षिगतोदरावयवस्य अन्तराले ॥ 'अह भंते'त्ति (सू. ४०२) अथेति प्रश्नान्तरार्थः, भदंत इत्यामन्त्रणे गौतमः पृच्छेत् 'आसइस्सामो' आश्रयिष्यामो वयं आश्रयणीयं वस्तु 'सइ'त्ति शयिष्यामहे 'चिट्ठिस्सामो' ऊर्ध्वं स्थास्यामः, 'निसियइ'त्ति निषीत्स्यामः, उपवेक्ष्याम इत्यर्थः, 'तुयट्टि'त्ति संस्तारके भविष्याम इत्यादि भाषा किं प्रज्ञापनीति योगः, 'आमंतणि'त्ति आमन्त्रणी हे भदन्तेत्यादिका, 'आणवणि'त्ति आज्ञापनी–कार्ये परस्य प्रवर्त्तनी, यथा घटं कुरु 'जायणी'त्ति याचनी वस्तुविशेषस्य देहीत्येवं मार्गणरूपा 'पुच्छणी य'त्ति प्रच्छनी–अज्ञातस्य सन्दिग्धस्य चार्थस्य ज्ञापनार्थं प्रेरणरूपा, 'पण्णवणि'त्ति प्रज्ञापनी विनेयस्योपदेशदानरूपा "पाणिवहाउ नियत्ता हवंति दीहाउया अरोगा य। एमाई पण्णत्ता पन्नत्ता वीयरागेहिं ॥१॥" 'पच्चक्खाणी'ति याचमानस्य अदित्सा मेऽतो मां मा याचस्वेति प्रत्याख्यानरूपा, 'इच्छा-

णुलोम'त्ति यत्कुर्या इच्छा तदनुलोमा—तदनुकूला इच्छानुलोमा, यथा कार्ये प्रेरितस्य वक्तुस्तु यथेदं रुचितमेतन्नः, "अणभिग्गहिया' भासा, अनभिगृहीता—अर्थानभिग्रहेण योच्यते डित्थादिवत्, 'भासा य अभिग्गहंमि'त्ति भाषा चाभिग्रहे बोद्धव्या, अर्थमभिगृह्य योच्यते घटादिवत्, 'संसय'त्ति या अनेकार्थप्रतिपत्तिकरी सा संशयकारिणी, यथा सैन्धवशब्दः पुरुषलवणवाजिषु वर्तमानः, 'वोयड'त्ति व्याकृता लोकभाषार्थरूपा 'अव्वोयडा य'त्ति अव्याकृता अव्याख्याता वा गम्भीराक्षरा वा अविभावितार्था वा, 'पण्णवणी णं'ति प्रज्ञाप्यतेऽर्थोऽनयेति प्रज्ञापनी, अर्थकथनीत्यर्थः, 'न एसा मोस'त्ति नैषा मृषा, पृच्छतोऽयमभिप्रायः—आश्रयिष्याम इत्यादि भाषा भविष्यत्कालविषया, सा चान्तरायसम्भवेन व्यभिचारिण्यपि स्यात्, तथा एकार्थविषयापि बहुवचनान्ततयोक्तेत्येवमयथार्था, तथा आमन्त्रणीप्रभृतिका विधिप्रतिषेधाभ्यां न सत्यभाषावद् वस्तुनि नियतेत्यर्थः, किमियं वक्तव्या स्यादिति ?, उत्तरं तु 'हंते'त्यादि, इदमत्र हृदयं—आश्रयिष्याम इत्याद्यनवधारणत्वाद्वर्त्तमानयोगेनेत्येतद्विकल्पगर्भत्वात् तथाऽऽत्मनि गुरौ चैकार्थत्वेऽपि बहुवचनस्यानुमतत्वात् प्रज्ञापन्येव, तथाऽऽमन्त्रण्यादिकाऽपि वस्तुनो विधिप्रतिषेधाविधायकत्वेऽपि याऽनवद्यपुरुषार्थसाधका सा प्रज्ञापन्येवेति ॥ दशमशते तृतीयः ॥

'तायत्तीसग'त्ति (सू. ४०३) त्रयस्त्रिंशत्प्रमाणाः सहायाः अन्योऽन्यं साहाय्यकारिणो गृहपतयः—कुटुम्बनायकाः 'उग्ग'त्ति उग्रा उदात्ता भावतः 'उग्गविहारि'त्ति उदात्ताचाराः, सदनुष्ठानत्वात्, 'संविग्ग'त्ति संविग्ना—मोक्षं प्रति चलिताः भवभीरवो वा 'संविग्गविहारि'त्ति संविग्नविहाराः, संविग्नानुष्ठानमस्ति येषां ते तथा, 'पासत्थ'त्ति ज्ञानादिबहिर्वर्तिनः 'पासत्थविहारि'त्ति आकालं पार्श्वस्थसमाचाराः 'ओसण्ण'त्ति अवसन्नाः प्रमादादनुष्ठानासम्यक्करणात् 'ओसण्णविहारि'त्ति आजन्म शिथि-

लानारा इत्यर्थः 'कुसील'त्ति ज्ञानाद्याचारविराधनात् 'कुसीलविहारि'त्ति आजन्म ज्ञानातिचारविराधनात् 'अहाछंद'त्ति यथा कथंचित्, नागमपरतन्त्रतया, छन्दः-अभिप्रायो बोधः प्रवचनार्थेषु येषां ते यथाछन्दाः 'अहाछंदविहारि'त्ति आजन्मापि यथाछन्दा एव, 'तप्पभिइं'ति यत्प्रभृति त्रयस्त्रिंशत्सङ्ख्योपेताः ते श्राद्धाः तत्रोत्पन्नाः तत्प्रभृति, न पूर्वमिति ॥ दशमशते चतुर्थः॥

'से तं तुडिए'त्ति (सू. ४०५) तुटिकं नाम वर्गः, वज्रमयेषु 'गोलवट्ट'त्ति गोलाकारवृत्तसमुद्गकेषु 'जिणसकहाउ'त्ति जिनसक्थीनि-जिनास्थीनि अर्चनीयाश्चन्दनादिना वन्दनीयाः स्तुतिभिः 'नमंसणि'त्ति प्रणामतः पूजनीयाः पुष्पैः सत्कारणीया वस्त्रादिभिः सन्माननीयाः प्रतिपत्तिविशेषैः कल्याणमित्यादिबुद्ध्या पर्युपासनीयाः 'केवलं परियारिड्ढि'त्ति परिचारः परिचारणा स नेह स्त्रीशब्दश्रवणरूपदर्शनादिः स एव ऋद्धिः-सम्पत् परिचारर्द्धिस्तया परिवारद्धर्या वा 'नो चेवणं मेहुण'त्ति नैव मैथुनप्रत्ययं यथा स्यादेवं भोगान् भुञ्जानो विहर्तुं प्रभुरिति प्रकृतमिति। 'परियारो'त्ति परिवारो यथा 'मोउद्देसए'त्ति तृतीयशतप्रथमोद्देशके 'सओ परियारो'त्ति चरणस्य सकः परिवारो वाच्यः, 'णवरं विमाणाइं अट्ठासीइएवि महागहाणं भाणियव्वं जाव जहा तइयसए' यथा तृतीयशते तत्र सोमस्योक्तमेवं यमवरुणवैश्रमणानां तु क्रमात् 'वरसिट्ठे सयंजले वग्गु'त्ति विमाणा, 'जहा चउत्थसए'त्ति क्रमात्तानीशानलोकपालानामिमानि 'सुमिणे सव्वओभद्दे वग्गु सुवग्गु' ॥ दशमशते पञ्चमः ॥

'रयणप्पभाए रायप्पसेणइज्जे'त्ति (सू. ४०६) 'जाव'त्ति यावत्करणादिदं दृश्यम्-'पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ उड्ढं चंदिमसूरियगहगणनक्खत्ततारारूवाणं बहूइं जोयणाइं बहूइं जोयणसयाइं एवं सहस्साइं सयसहस्साइं बहूओ जोयणकोडाकोडीओ उड्ढं दूरं वइत्ता एत्थ णं सोहम्मे नामं कप्पे पण्णत्ते' इत्यादि,'असोगवडिंसए सत्तिवण्णवडिंसए चंपगवडिंसए चूय-

वडिंसए' अथ विवक्षितार्थसूचिकां गाथामह—'एवं जहं सूरियाभे तहेव माणं तहेव उववाओ। सक्कस्स य अभिसेओ तहेव जहं सूरियाभस्स ॥१॥'त्ति एवं यथा सूरियाभे विमाने राजप्रश्नीयग्रन्थोक्ते प्रमाणमुक्तं तथैवास्मिन् वाच्यं शक्रस्येति 'जाव आयरक्खे'त्ति अर्चनिकायाः परो ग्रन्थस्तावद्वाच्यः यावदात्मरक्षाः ॥ दशमशते षष्ठः ॥

'उत्तरिल्लाणं'तिं (सू. ४०७) मेरोरुत्तरदिग्वर्त्तिशिखरिपर्वतदंष्ट्रागतान् लवणसमुद्रान्तर्वर्त्तिनोऽष्टाविंशतिमुद्देशकानाह—'जहा जीवाभिगमे' इत्ययमतिदेशः प्रागुक्तदाक्षिणात्यान्तरद्वीपवक्तव्यतानुसारेणावगन्तव्यः ॥ दशमशते चतुस्त्रिंशत्तमः ॥ सम्पूर्णं दशमशतविवरणम् ॥

अथैकादशं शतमारभ्यते, एतदुद्देशकगाथामाह—'उप्पल'त्ति (*६५) उत्पलार्थः प्रथम उद्देशकः, सालूकं—उत्पलस्तदर्थो द्वितीयः, 'पलासे'त्ति पलासः—किंशुकस्तदर्थस्तृतीयः, 'कुंभी'त्ति वनस्पतिविशेषस्तदर्थश्चतुर्थः, 'नाली'त्ति नाडीवत् यस्य फलानि स नाडीको वनस्पतिविशेषस्तदर्थः पञ्चमः, 'पउम'त्ति पद्मार्थः षष्ठः, 'कन्निय'त्ति कर्णिकार्थः सप्तमः, 'नलिण'त्ति नलिनार्थोऽष्टमः, यद्यपि चोत्पलपद्मनलिनानां नामकोशे नामैक्यं तथापि विशेषो रूढेरवसेयः, 'सिव'त्ति शिवराजर्षिवक्तव्यतार्थो नवमः, 'लोग'त्ति लोकार्थो दशमः, 'कालालभिय'त्ति कालार्थ एकादशः आलभिकायां नगर्यां यत्प्ररूपितं तद्वाच्य उद्देशकोऽप्यालभिका इत्युच्यते इत्ययं द्वादशः 'दस दो य'त्ति द्वादशोद्देशका एकादशशते स्युरिति ॥ तत्र प्रथमोद्देशकद्वारसङ्ग्रहगाथा वाचनान्तरे दृष्टाः, ताश्चेमाः "उववाओ १ परिमाणं २ अवहारु ३ चत्त ४ बंध ५ वेदे य ६। उदए ७ उदीरणाए ८ लेसा ९ दिट्ठी य १० नाणे य ११ ॥१॥ जोगु १२ वओगे १३ वण्णरसमाई १४ ऊसासगे य १५ आहारे १६। विरई १७ किरिया

१८ चंधे १९ मन्नि २० कसाइ २१ त्थि २२ बंधे य २३ ॥२॥ सन्नि २४ दिय २५ अणुबंधे २६ संवेहा २७ हार २८ ठिई २९ समुग्घाए ३० । चयणं ३१ मूलाईसु य उववाओ सव्वजीवाणं ३२॥३॥ (*६६–६७–६८) एतासामर्थ उद्देशकार्थाधिगमगम्य इति । 'उप्पले णं भंते !'त्ति (सू० ४०८) एकं पत्रं यत्र तदेकपत्रं, किसलयावस्थायां द्रष्टव्यम्, 'एगजीवे'त्ति यदा चैकपत्रावस्थं तदेकजीवं तत्, यदा तु द्वितीयादि पत्रं तेन संश्रितं स्यात् तदाऽनेकपत्रावस्था तस्येति, बहवो जीवास्तत्रोत्पद्यन्ते, 'तेण परं'ति ततः प्रथमपत्रात् परतः 'जे अन्ने जीवा उववज्जंति'त्ति येऽन्ये प्रथमपत्रव्यतिरिक्ता जीवा जीवाश्रयत्वात् पत्रादयोऽथवा उत्पद्यन्ते ते नैकजीवाः–न एकजीवाश्रयाः, किन्त्वनेकजीवा इति, अथवा ततः–एकपत्रात् परतः शेषपत्रादिविलयार्थः येऽन्ये जीवा उत्पद्यन्ते ते नैकजीवाः–नैककाः किन्त्वनेकजीवाः, अनेके इत्यर्थः, 'वक्कंतीए'त्ति प्रज्ञापनाषष्ठपदे, स चैवमुपपातः 'जइ तिरिक्खजोणिएहिंतो उववज्जंति किं एगिंदिजाव पंचिंदियतिरिक्खजोणिएहिंतो उववज्जंति ?, गोयमा ! एगिंदियतिरिक्खजोणिएहिंतोऽवि उववज्जंति इत्यादि, एवमनुष्यभेदा वाच्याः, 'जइ देवेहिंतो किं भवणवासी'त्यादि प्रश्नः, उत्तरं तु ईशानान्तदेवेभ्य उत्पद्यन्ते इत्युपयुज्य वाच्यमित्येतेनोपपात उक्तः, 'जहन्नेणं एक्को वे'त्यादिना तु परिमाणं, 'ते णं संखेज्जा समए समए'त्ति इत्यपहार उक्तः, एवं द्वारयोजना कार्या, उच्चत्वद्वारे–'साइरेगं जोयणसहस्सं'ति तथाविधसमुद्रगोतीर्थकादाविदमुच्चत्वमुत्पलस्यावसेयं, बन्धद्वारे 'बंधए वा बंधया वा' एकपत्रावस्थायां बन्धकः एकत्वात्, द्व्यादिपत्रावस्थायां च बन्धकाः बहुत्वादिति, एवं सर्वकर्मसु, आयुष्के तु तदबन्धावस्थाऽपि स्यात् तदपेक्षया अबन्धकोऽपि अबन्धकाश्च स्युरित्येतदाह–'नवरं'ति इह बन्धकाबन्धकपदयोरेकत्वयोगे एकवचनेन द्वौ विकल्पौ, बहुवचनेन द्वौ, द्विकयोगे तु यथायोगमेकत्वबहुत्वाभ्यां चत्वार इत्यष्टौ

विकल्पाः, स्थापना च 'अ १ वं १ अ ३ वं ३ एवमेकयोगाः ४, एवं द्विकयोगाः ४ अवं १ वं १, अवं ३ वं १, अ १ वं ३, अ ३ वं ३। वेदनीये सातासाताभ्यां पूर्ववदष्टौ भङ्गाः, इह च सर्वत्र प्रथमपत्रापेक्षया एकवचनान्तता, ततः परं तु बहुवचनान्तता, वेदना चानुक्रमोदितस्य उदीरणोदीरितस्य वा कर्म्मणोऽनुभवः, उदयस्त्वनुक्रमोदितस्यैवेति वेदकत्वप्ररूपणेऽपि भेदेनोदयित्वप्ररूपणमिति, उदीरणाद्वारे 'नो अणुदीरग'त्ति तस्यामवस्थायां तेपामनुदीरकत्वस्यासम्भवात्, 'वेयणिज्जाउएसु अट्ठभंग'त्ति वेदनीये सातसातापेक्षया आयुषि पुनरुदीरकत्वानुदीरकत्वापेक्षयाऽष्टौ भङ्गाः, अनुदीरकत्वं च आयुष उदीरणायाः कादाचित्कत्वादिति, लेश्याद्वारे अशीतिर्भङ्गाः, कथं एककयोगे एकवचनेन चत्वारो, बहुवचनेन ४, द्विकयोगे एकत्वबहुत्वाभ्यां चतुर्भङ्गी, चतुर्णां च पदानां षट् द्विकयोगाः ते च चतुर्गुणिताः २४, त्रिकयोगे तु त्रयाणां पदानामष्टौ भङ्गाः, चतुर्णां पदानां चत्वारस्त्रिकसंयोगास्ते चाष्टाभिर्गुणिताः ३२, चतुष्कसंयोगे तु षोडश भङ्गाः, सर्वमीलने अशीतिरिति, अत एवोक्तं 'गोयमा! कण्हलेसे वे'त्यादि, वर्णादिद्वारे 'ते पुण अप्पणा अवन्न'त्ति शरीराण्येव तेषां पञ्च वर्णानि, ते पुनरुत्पन्नजीवाः 'अप्पण'त्ति स्वरूपेण अवर्णाः—वर्णादिवर्जिताः, अमूर्त्तत्वात्तेपामिति। उच्छ्वासद्वारे 'नो उस्सासनिस्सासा ये'त्यादि, अपर्याप्त्यवस्थायां, इह च २६ भङ्गाः, कथं?, एकयोगे एकवचनान्तास्त्रयः बहुवचनान्ता अपि त्रयः, द्विकयोगे एकत्वबहुत्वाभ्यां तिस्रश्चतुर्भङ्गीकाः इति द्वादश, त्रिकयोगे त्वष्टाविति, एवं सर्वे २६ भङ्गाः। आहारकद्वारे 'आहारए वा अणाहारए वा' विग्रहगतावनाहारकः, अन्यथा आहारकः, तत्राष्टौ भङ्गाः प्राग्वत्, संज्ञाद्वारे कषायद्वारे चाशीतिर्भङ्गाः लेश्याद्वारवद् व्याख्येयाः, 'से णं भंते! उप्पलजीवे पुढविजीवे'त्यादिना अनुसंवेधस्थितिरुक्ता, तत्र 'भवादेसेणं'ति भवप्रकारेण, भवमाश्रित्येत्यर्थः, 'जहण्णे णं दो भवग्गहणाइं'ति एकं पृथ्वीका-

त्पलत्वे द्वितीयमुत्पलत्वे ततः परं मनुष्यादिभवं गच्छेदिति, 'कालादेसेणं जहण्णेणं दो अंतोमुहुत्त'त्ति पृथ्वीत्वेनान्तर्मुहूर्त्तं पुनरुत्पलत्वेनान्तर्मुहूर्त्तमिति कालादेशेन जघन्यतो द्वे अन्तर्मुहूर्त्ते, एवं द्वीन्द्रियादिषु ज्ञेयं, 'उक्कोसेणं अट्ठभव'त्ति चत्वारि पञ्चेन्द्रियतिरश्चः चत्वारि चोत्पलस्येत्यष्टौ भवग्रहणान्युत्कर्षत इति, 'उक्कोसेणं पुव्वकोडीपुहुत्तं'त्ति चतुर्षु पञ्चेन्द्रियतिर्यग्भवग्रहणेषु चतस्रः पूर्वकोट्यः उत्कृष्टकालस्य विवक्षितत्वेन, उत्पलकायोद्वृत्तजीवयोग्योत्कृष्टपञ्चेन्द्रियतिर्यक्स्थितेर्ग्रहणात्, उत्पलजीवितं त्वेतास्वधिकमित्युत्कृष्टतः पूर्वकोटीपृथक्त्वं स्यादिति, 'एवं जहा आहारुद्देसए' 'वणस्सइकाइयाण'मित्यादि, अनेन च यदतिदिष्टं तदिदं—'खेत्तओ असंखेज्जपदेसोगाढाइं कालओ अण्णतरकालट्ठिइयाइं भावओ वण्णमंताइं' इत्यादि, 'सव्वप्पणयाइए'त्ति नवरं 'नियमा छद्दिसिं'त्ति पृथ्वीकायिकादयः सूक्ष्मतया निष्कुटगतत्वेन स्यात्तिसृषु स्याच्चतसृषु दिक्षु इत्यादिना प्रकारेणाहारमाहारयन्ति, उत्पलजीवास्तु बादरत्वेन तथाविधनिष्कुटेष्वभावात् षट्सु दिक्षु आहारयन्तीति। 'चयंतीए'त्ति प्रज्ञापनाषष्ठपदं 'उव्वट्टणा' उद्वर्त्तनाधिकारे, तत्रेदमेवं सूत्रं—'णो णेरइएसु उववज्जंति, मणुएसु उव०, नो देवेसु उव०,'उप्पलकेसरत्ताए'त्ति इह केसराणि—कर्णिकापरितोऽवयवाः, 'उप्पलकण्णियत्ताए'त्ति कर्णिका—बीजकोशः, 'उप्पलथिभगत्ताए'त्ति विभागावयवतः पत्राणि प्रभवन्ति ॥ एकादशशते प्रथमः ॥

शालूकोद्देशकादयस्त्वष्टोद्देशकाः प्राय उत्पलोद्देशकसमाः, विशेषः पुनर्यो यत्र स तत्र सूत्रसिद्ध एव, नवरं पलाशोद्देशके यदुक्तं 'देवेसु न उववज्जंति' (सू. ४१०) तस्यायमर्थः—उत्पलोद्देशके हि देवेभ्य उद्वृत्ता उत्पद्यन्ते इत्युक्तमिह तु ते पलाशे नोत्पद्यन्ते इति वाच्यं, अप्रशस्तत्वात्, यतस्ते प्रशस्तेष्वेव उत्पलादिवनस्पत्यादिषूत्पद्यन्ते। तथा 'लेसासु'त्ति लेश्याद्वारे इदं वाच्यं, यदा

किल तेजोलेश्यावान् देवो देवत्वाच्च्युत्वा वनस्पतिपूत्पद्यते तदा तेजोलेश्या तेषु लभ्यते, न च पलासे देवत्वोद्वृत्त उत्पद्यते पूर्वोक्तयुक्तेः, एवं तेषु तेजोलेश्या न सम्भवति, तदभावादाद्यास्तिस्रो लेश्यास्स्युः, एतासु २६ भङ्गाः, त्रयाणामेव पदानां भावादिति, एतेषूद्देशकेषु नानात्वसङ्ग्रहगाथास्तिस्रः यथा—"सालुंमि धणुपुहुत्तं होइ पलासे य गाउयपुहुत्तं। जोयणसहस्समहियं अवसेसाणं तु छण्हंपि ॥१॥ कुंभीएँ नालियाए वासपुहुत्तं ठिई उ बोद्धव्वा। दसवाससहस्साइं अवसेसाणं तु छण्हंपि ॥२॥ कुंभीएँ नालियाए होंति पलासे य तिन्नि लेसाओ। चत्तारि य लेसाओ अवसेसाणं तु पंचण्हं ॥३॥"ति, ॥ एकादशशते द्वितीयादयोऽष्टमान्ताः ॥

अथ शिवराजर्षिसंविधानकं नवमोद्देशके प्राह—'महया हिमवंत वण्णओ'त्ति (सू. ४१६) अनेन 'महयाहिमवन्तमहन्तमलयमन्दरमहिंदसारे' इत्यादि राजवर्णनं वाच्यं, तत्र महाहिमवानिव महान् शेषनृपापेक्षया, तथा मलयः पर्वतः मन्दरो—मेरुः महेन्द्रः—शक्रादिर्देवराजस्तद्वत्सारः—प्रधानो यस्स तथा, जहा सूरियकंते यथा राजप्रश्नीये सूर्यकान्तो राजकुमारः 'पच्चुवेक्खमाणे विहरइत्ति इति वर्णकेन वर्णितः तथाऽयं वर्णयितव्यः, 'सुबहुं लोही लोहकडाहकडुच्छुजाव'त्ति (लोही) मंडकादिपचनिका 'लोहकडाह'त्ति लोहकटाहं वह्यादि अन्नादिपरिवेषणभाजनं लोकेऽपि कडुच्छु कडछीत्यर्थः, 'वाणपत्थि'त्ति वने भवा वानी, प्रस्थानं प्रस्था—अवस्थितिः वानी प्रस्था येषां ते वानप्रस्थाः, अथवा—ब्रह्मचारी १ गृही २ वानप्रस्थो ३ भिक्षुर्यतिः ४ क्रमात्। एते चत्वारो लोकप्रतीताः आश्रमाः एतेषां तृतीयाश्रमवर्त्तिनो वानप्रस्थाः, 'होत्तिय'त्ति अग्निहोत्रिकाः 'सोत्तिय'त्ति पाठान्तरे 'पोत्तिय'त्ति वस्त्रधारिणः 'जहा उववाइए जाव इंगालसोल्लियं'ति अङ्गारैरिव पक्वं 'कंदुसोल्लियं'ति कन्दुः—कटाहिका तत्र सोल्लियं—पक्वमिवेति 'दिसापोक्खिय'त्ति उदकेन दिशः प्रोक्ष्य ये फलपुष्पादि गृह्णन्ति ते दिक्प्रोक्षकाः तत्तापसत्वेन 'दिसाचक्कवालएणं'ति

एकत्र पारणके प्राचीदिक्फलान्याहृत्य भुङ्क्ते, द्वितीये तु दक्षिणस्यामिति दिक्चक्रवालेन यत्र तपसि पारणककरणं तद्दिक्चक्रवालतपःकर्म्म उच्यते तेन तपःकर्मणेति, 'वक्कलवत्थ'त्ति वल्कलं वस्त्रं निवसितं येन स वल्कलवस्त्रनिवसितः, 'किढिणसंकाइय'त्ति 'किढिण'त्ति वंशमयतापसभाजनविशेषः तस्य सांकायिकं—भारोद्वहनयन्त्रं,'पोक्खेति' उदकेन प्रोक्षति—सिञ्चति 'पत्थाणे'त्ति प्रस्थाने—परलोकसाधनमार्गे फलाद्याहरणार्थं गमने वा प्रतिस्थितं—प्रवृत्तं,'दब्भे य'त्ति समूलान् 'कुसे'त्ति निर्मूलान् 'समिहाओ'त्ति समिधः—काष्ठिकाः 'पत्तामोडं'ति तरुशाखामोटितपत्राणि 'वेदिं वड्ढेइ'त्ति वेदिकां—देवार्चनस्थानं वर्द्धयति, प्रमार्जयतीत्यर्थः, 'उवलेवण'त्ति उपलेपनं गोमयादिना संमज्जनं जलेन सम्मार्जनं शोधनं वा,'दब्भ'त्ति दर्भकलशो हस्तगतो यस्य स तथा, जलमज्जनं देहशुद्धिमात्रं, जलक्रीडां जलाभिषेकं जलक्षरणं 'आयंते'त्ति जलस्पर्शात् 'चोक्खे'त्ति अशुचिमलापगमात् 'देवयपितिकयकज्ज'त्ति देवतानां पितॄणां च कृतं कार्यं जलाञ्जलिदानादिकं येन स तथा, 'सरएणं'ति शरकेन—निर्मन्थकाष्ठेन अरणिनामानं काष्ठं 'महेइ'त्ति मथ्नाति—घर्षयति ॥ 'अग्गिस्स दाहिणपासे'त्यादि (*६९॥) प्राकृतः सार्द्धश्लोकः सूत्रपाठसिद्धोऽस्ति, तत्र 'सत्तंगाइं'ति सप्ताङ्गानि समादधाति—सन्निधापयति 'तं'ति कथने तद्यथाशब्दो गृह्यते,'सकहं'ति सकथां तत्समयप्रसिद्धोपकरणविशेषः १ वल्कलं २ स्थानं—अग्निपात्रं ३ शय्याभाण्डं—शय्योपकरणं ४ कमण्डलु ५ दण्डदारु—दण्डकः ६ तथाऽऽत्मानः ७ 'अग्गेनाइं'ति अशनानि मधु, 'चरुं साहेइ'त्ति चरुः—पात्रविशेषः, तत्र पच्यमानद्रव्यमपि चरुरेव तं चरुं, बलिमित्यर्थः, साधयति रन्धयतीत्यर्थः,'बलिवइस्सदेवं'ति बलिना वैश्वदेवं—वैश्वानरं पूजयतीत्यर्थः ॥ 'एगविहिविहाण'त्ति (सू० ४१७) एकेन विधिना—प्रकारेण विधानं—व्यवस्थानं येषां ते तथा, सर्वेषां वृत्तत्वात् , 'वित्थारओऽणेग'त्ति द्विगुणविस्तारत्वात् तेषामिति ॥ 'सवन्नाइं'ति

पुद्गलद्रव्याणि 'अवगाढाइं'ति धर्मास्तिकायादीनि 'अन्नमन्नबद्धाइं'ति मिथोगाढाश्लेषाणि ५, पुट्ठाइं मिथो आगाढाश्लेषाणि, 'घडत्ताए' अन्योऽन्यघटतया–सम्बद्धतया तिष्ठन्ति, 'तावसावसहे'त्ति तापसावसथः–तापसमठः ॥ यथौपपातिके (सू. ४१८) सिद्ध्यादिस्वरूपमुक्तं तथाऽत्रापि वाच्यं, सङ्ग्रहगाथामाह– 'संघयणं संठाणं उच्चत्तं आउयं च परिवसणं'न्ति, तत्र संहननमुक्तमेव, संस्थानानां षण्णामन्यतरस्मिन् सिध्यन्ति, उच्चत्वे जघन्यतस्सप्तरत्निमिते, सप्तहस्तप्रमाणे इत्यर्थः, उत्कृष्टतः पञ्चधनुःशतिके, आयुषि जघन्यतस्साधिकाष्टवर्षे उत्कृष्टतः पूर्वकोटीमाने, परिवसना पुनरेवं–रत्नप्रभादिपृथ्वीनां सौधर्मादिस्वर्गाणां ईषत्प्राग्भारान्तानां क्षेत्राणामधो न परिवसन्ति सिद्धाः, किन्तु सर्वार्थसिद्धविमानोपरितनभागादूर्ध्वं योजनानि १२ व्यतिक्रम्येषत्प्राग्भारा नाम पृथ्वी ४५ लक्षयोजनमाना आयामविष्कम्भाभ्यां श्वेताऽस्ति तदुपरि योजने लोकान्तस्स्यात्, तद्योजनस्योपरितनगव्यूतोपरिषड्भागे सिद्धास्तिष्ठन्ति, एवं सिद्धिगण्डिका–सिद्धस्वरूपवाच्यपद्धतिरौपपातिकप्रसिद्धाऽध्येया ॥ एकादशशते नवमः ॥

'दव्वलोए'त्ति ( सू. ४२० ) द्रव्यलोक आगमतो नोआगमतश्च द्विधा, तत्रागमतो लोकशब्दार्थज्ञस्तत्रानुपयुक्तः, 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्तु ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात् त्रिधा, तत्र लोकशब्दार्थज्ञस्य शरीरं मृतावस्थं ज्ञानापेक्षया भूतलोकपर्यायत्वेन घृतकुम्भवत् लोकः, स च ज्ञशरीररूपो द्रव्यतो लोको ज्ञशरीरद्रव्यलोकः, नोशब्दश्च सर्वनिषेधे, तथा लोकशब्दार्थं ज्ञास्यति यस्य शरीरं सचेतनं भाविलोकभावत्वेन मधुघटवत् स भव्यशरीरद्रव्यलोकः, इहापि नोशब्दो निषेधार्थः, ज्ञशरीरभव्यशरीरव्यतिरिक्तश्च द्रव्यलोकः द्रव्याण्येव धर्मास्तिकायादीनि, यदुक्तं–'जीवमजीवे रूवमरूवि'त्ति गाहा (आव०) १ ॥१७१॥
'खेत्तलोए'त्ति क्षेत्ररूपो लोकः क्षेत्रलोकः, आह च–'आगासस्स पएसा उड्ढं'ति गाहा २ । 'काललोए' समयादिकालरूपो लोकः

कालश्लोकः, आह च—'समयावली मुहुत्ता०' ३। 'भावलोए'त्ति भावलोको द्विधा—आगमतो नोआगमतश्च, तत्र आगमतो लोकशब्दार्थज्ञस्तत्रोपयुक्तो, भावरूपो लोको भावलोकः, आह च—'उदइय उवसमिए०'त्ति गाहा ४। इह नोशब्दः सर्वनिषेधे मिश्रवचने वा, आगमस्य ज्ञानत्वात् क्षायिकक्षायोपशमिकज्ञानरूपभावमिश्रत्वात् औदयिकादिभावलोकस्येति, 'अहेलोए'त्ति अधोलोकरूपः क्षेत्रलोकः, इहाष्टप्रदेशो रुचकः तस्याधस्तनप्रतराधो नवयोजनशतानि यावत्तिर्यग्लोकः ततोऽधःस्थितत्वादधोलोकः स रत्नप्रभादिकः सप्तरज्जुप्रमाणः, 'तिरियलोय'त्ति रुचकापेक्षयाऽध उपरि च नव नव योजनशतमानस्तिर्यग्रूपत्वात्तिर्यग्लोकः तद्रूपः क्षेत्रलोकः, 'उड्ढलोय'त्ति तिर्यग्लोकस्योपरि देशोनसप्तरज्जुमित ऊर्ध्वलोकः क्षेत्रोर्ध्वलोकः 'तप्पागार'त्ति तप्र—उडुपकः 'उड्ढमुइंगाकार'त्ति ऊर्ध्वमृदङ्गाकारसंस्थितः, शरावसम्पुट इत्यर्थः, 'सुपइट्ठगसंठिय'त्ति सुप्रतिष्ठकं—स्थापनकं तच्चेहारोपितवारकादि गृह्यते; तत्संस्थानसंस्थितः, तस्मिन् लोके केवली 'जीवे अजीवे विजाणइ तओ पच्छा सिज्झइ जाव अंतं करेइ'त्ति 'झुसिरगोलसंठिए'त्ति अन्तःशुषिरगोलकाकारः अलोकः, स्थापना चेयम्(७)'नवरं अरूवी'त्ति अधस्तिर्यग्लोकयो रूपिणस्सप्तविधाः प्राग् उक्ताः धर्माधर्माकाशास्तिकायानां देशाः ३ प्रदेशाश्च ३ काल इत्येवं, ऊर्ध्वलोके तु रविप्रकाशाभिव्यङ्ग्यः कालो नास्ति, अधस्तिर्यग्लोकयोस्तु रविप्रकाशभावात् अतः षडेव ते इति, 'जहा बीयसए'त्ति यथा द्वितीये शते अत्थीतिनाम्नि दशमोद्देशके इत्यर्थः, 'लोगागासे'त्ति लोकाकाशे विषयभूते जीवादय उक्ता एवमत्रापीत्यर्थः, नवरमिति केवलमयं विशेषः, तत्रारूपिणः पञ्चविधा उक्ताः इह तु सप्तविधा वाच्याः, तत्र हि लोकाकाशमाधारतया विवक्षितं अत्र तु न अत आकाशभेदा अप्याधेयास्स्युरिति सप्त, ते चैवम्—धर्मास्तिकायदेशस्तु न स्यात्, धर्मास्तिकायस्यैव तत्र भावात्, धर्म्मास्तिकायप्रदेशाश्च सन्ति, तद्रूपत्वाद्धर्म्मास्तिकायस्येति द्वयं २, एवमध-

र्मास्तिकायेऽपि द्वयं ४, तथा नोआकाशास्तिकायो, लोकस्य तद्देशत्वात्, आकाशदेशस्तु न स्यात्, तदंशत्वाल्लोकस्य, तत्प्रदेशाश्च सन्ति ६, कालश्चेति सप्त। 'अलोए णं भंते'त्ति 'एवं जहे'त्याद्यतिदेशादेवं दृश्यम्—अलोए णं भंते! किं जीवा जीवदेसा जीवपदेसा अजीवा अजीवदेसा अजीवदव्वपदेसा?, अगुरुयलहुए अणंतेहिं अगुरुयलहुयगुणेहिं संजुत्ते सव्वागासे अणंतगूणे'त्ति तत्र सर्वाकाशमनन्तभागोनमित्यस्यायमर्थः—लोकलक्षणेन सर्वाकाशस्यानन्तभागेन न्यूनं सर्वाकाशमलोक इति। 'अहे लोगखित्तलोगस्स णं भंते! एगम्मि आगासपएसे'त्ति नो जीवा एकप्रदेशे तेषामनवगाहनात्, बहूनां पुनर्जीवानां देशस्य प्रदेशस्य चावगाहनात् उच्यते—'जीवदेसावि जीवपदेसावि', यद्यपि धर्म्मास्तिकायाद्यजीवद्रव्यं नैकत्राकाशप्रदेशेऽवगाहते तथापि परमाणुद्व्यणुकादिद्रव्याणां कालद्रव्यस्य चावगाहनादुच्यते—'अजीवावि'त्ति, द्व्यणुकादिस्कन्धदेशानां त्ववगाहनादुक्तं—'अजीवदेसावि'त्ति, धर्म्माधर्म्मास्तिकायप्रदेशयोः पुद्गलद्रव्यप्रदेशानां चावगाहनादुच्यते—'अजीवपदेसावि', 'एवं मज्झिल्लविरहिओ'त्ति दशमशतप्रदर्शितत्रिकभङ्गे 'अहवा एगिंदियदेसा य बेइंदियस्स य देसा'इत्येवंरूपो यो मध्यभङ्गस्तत्र प्रदर्शितस्तेन रहितः भङ्गद्वयरूपोऽध्येतव्यः, मध्यमभङ्गकस्येहासम्भवात्, तथाहि—द्वीन्द्रियस्यैकत्राकाशप्रदेशे बहवो देशा न सन्ति, देशस्यैव भावात्, 'एवं आइल्लविरहिओ'त्ति, अहवा एगिंदियपएसा बेंदियस्स पदेसे इत्येवंरूप आद्यभङ्गकस्येहासम्भवात्, तथाह्—नास्त्येवैकत्राकाशप्रदेशे केवलिसमुद्घातं विनैकस्य जीवस्यैकप्रदेशसम्भवोऽसङ्ख्यातानामेव भावादिति, 'अणिंदिएसु तियभंगो'त्ति अनिन्द्रियेषु सिद्धेषूक्तभङ्गत्रयमपि सम्भवतीतिकृत्वा तेषु तद्वाच्यमिति, 'रूवी तहेव'त्ति स्कन्धा देशाः प्रदेशा अणवश्चेत्यर्थः, 'णो धम्मत्थिकाए'त्ति नो धर्म्मास्तिकाय एकत्राकाशप्रदेशे सम्भवति, असङ्ख्यातप्रदेशावगाहित्वात् तस्येति, 'धम्मत्थिकायस्स देसे'त्ति यद्यपि

धर्म्मास्तिकायस्यैकत्राकाशप्रदेशे प्रदेश एवास्ति, तथापि देशः अवयव इत्यनर्थान्तरत्वेनावयवमात्रस्यैव विवक्षितत्वान्निरंशतायाश्च तत्र गत्वा अविवक्षितत्वाद्धर्म्मास्तिकायदेश इत्युक्तं । प्रदेशस्तु निरुपचरित एवास्तीत्यत उच्यते—'धम्मत्थिकायस्स पदेसे'त्ति, 'एवमहम्मत्थिकायस्सवि'त्ति नो अहम्मत्थिकाए अहम्मत्थिकायस्स पदेसेइत्येवमधर्मास्तिकायसूत्रं वाच्यमित्यर्थः, 'अद्धासमओ नत्थि, अरूवी चउव्विहा'त्ति ऊर्ध्वलोके अद्धासमयो नास्तीति अरूपिणश्चतुर्द्धा धर्म्मास्तिकायदेशादय ऊर्ध्वलोकस्यैकत्राकाशप्रदेशे स्युरिति, 'लोगस्स जहा अहेलोगस्स'त्ति अधःक्षेत्रलोकस्य एकत्राकाशप्रदेशे यद्वक्तव्यमुक्तं तल्लोकस्याप्येकत्राकाशप्रदेशे वाच्यमित्यर्थः, तचेदम्—'लोगस्स णं भंते ! एगम्मि आगासपदेसे किं जीवा पुच्छा ?, गोयमा ! नो जीवे'त्यादि प्राग्वत्, 'अहोलोगखित्तलोए अणंता वण्णपज्जव'त्ति अधःक्षेत्रलोके अनन्ता वर्णपर्यवाः, एकगुणकालादीनामनन्तगुणकालकाद्यवसानानां पुद्गलानां तत्र भावात्, अलोकसूत्रे 'नेवत्थि गुरुलहुपज्जव'त्ति गुरुलघुपर्यवोपेतद्रव्याणां पुद्गलादीनां तत्राभावात् । 'पुरत्थाभिमुहे'त्ति (सू. ४२०) मदपेक्षया 'आसत्तमकुलवंसे'त्ति कुलरूपो वंशः प्रहीणः स्यात्, आसप्तमादपि वंशात्, सप्तमं वंशं यावदित्यर्थः 'गयाओ से अगए असंखेज्जइभागे'त्ति ननु पूर्वादिषु दिक्षु प्रत्येकमर्द्धरज्जुप्रमाणत्वाल्लोकस्योर्ध्वाधश्च किञ्चिन्न्यूनाधिकसप्तरज्जुत्वात् तुल्यया गत्या गच्छतां देवानां कथं षट्सु दिक्षु गतं क्षेत्रं असङ्ख्यातभागमात्रं अगतात्तु गतमसङ्ख्यातगुणमिति, क्षेत्रवैषम्यादिति भावः, अत्रोच्यते—घनचतुरस्रीकृतलोकस्यैव कल्पितत्वान्न दोषः, ननु यथोक्तस्वरूपयाऽपि गत्या गच्छन्तो देवा लोकान्तं बहुनाऽपि कालेन न लभन्ते तदा कथमच्युतात् जिनजन्मादिषु द्रागवतरन्ति, बहुत्वात् क्षेत्रस्य, अल्पत्वादवतरणकालस्येति, सत्यम्, किन्तु मन्देयं गतिः जिनजन्माद्यवतरणगतिश्च शीघ्रतमेति 'असब्भावपट्ठवणाए'त्ति असद्भूतार्थकल्पन-

येत्यर्थः, 'जाव कलिय' त्ति यावत्करणादिदं दृश्यम्, 'संगयगयहसियभणियचिट्ठियविलाससललियसंलावनिउणजुत्तोवयारकलिय' त्ति, 'बत्तीसइविहस्स नट्टस्स' त्ति द्वात्रिंशद् विधा–भेदा यस्य नाट्यस्य, तत्र ईहामृगऋषभतुरगनरमगरविहगवालगकिन्नरादिभक्तिचित्रो नामैको नाट्यविधिः, एवमन्येऽप्येकत्रिंशद्विधयो राजप्रश्नकृतानुसारतो वाच्याः। 'लोगस्स णं भंते! एगंमि' त्ति (सू. ४२१) अस्य व्याख्या–यथा किल एतेषु त्रयोदशप्रदेशकानि दिग्दशकस्पर्शीनि त्रयोदश द्रव्याणि स्थितानि, तेषां च प्रत्याकाशप्रदेशं त्रयोदश २ प्रदेशाः स्युः, एवं लोकाकाशदेशे अनन्तजीवावगाहेनैकैकस्मिन्नाकाशप्रदेशे अनन्ता जीवप्रदेशाः स्युः। (सू. ४२२) लोके च सूक्ष्मा अनन्तजीवात्मका निगोदाः पृथ्व्यादिसर्वजीवासङ्ख्येयकतुल्याः सन्ति, तेषां चैकैकस्मिन्नाकाशप्रदेशे जीवप्रदेशा अनन्ताः स्युः तेषां च जघन्यपदे एकत्राकाशप्रदेशे सर्वस्तोका जीवप्रदेशाः, तेभ्यश्च सर्वजीवा असङ्ख्येयगुणाः, उत्कृष्टपदे पुनस्तेभ्यो विशेषाधिका जीवप्रदेशा इति, अयं च सूत्रार्थोऽमूभिर्वृद्धोक्तगाथाभिर्भावनीयः–'लोगस्सेगपएसे, जहण्णयपयम्मि जियपएसाणं। उक्कोसपदे



य तहा सव्वजियाणं च के बहुया? ॥१॥" इति प्रश्नः, उत्तरं पुनरत्र–'थोवा जहण्णपदे जिवप्पदेसा जिया असंखगुणा। उक्कोसपयपदेसा ततो विसेसाहिया भणिया ॥२॥" अथ जघन्यपदमुत्कृष्टपदं चोच्यते–तत्थ जहण्णपयं पुण लोयंते जत्थ फासणा तिदिसिं। छद्दिसिमुक्कोसपयं समत्तगोलम्मि नन्नत्थ ॥३॥ तत्र–तयोर्जघन्येतरपदयोर्जघन्यपदं लोकान्ते स्यात् 'जत्थ' त्ति यत्र गोलके स्पर्शनां निगोददेशैस्तिसृष्वेव दिक्षु स्यात्, शेषदिशामलोकेनावृतत्वात्, सा च खंडगोल एव स्यादिति भावः, 'छद्दिसिं' ति यत्र पुन-

गोलके पट्स्वपि दिक्षु निगोददेशैः स्पर्शना स्यात् तत्रोत्कृष्टपदं स्यात्, तच्च समस्तगोले-अखण्डगोलके स्यात् 'नन्नत्थ'त्ति नान्यत्र, खण्डगोलके न स्यादित्यर्थः, सम्पूर्णगोलकश्च लोकमध्य एव स्यादिति। ॥ एकादशशते दशमः ॥

'पमाणकाले'त्ति (सू. ४२३) प्रमीयते-परिच्छिद्यते येन वर्षशतादि तत्प्रमाणं स चासौ कालः प्रमाणकालस्तस्य विशेषो दिवसादिलक्षणः, आह च-दुविहो पमाणकालो दिवसपमाणं च होइ राई य। चउपोरिसिओ दिवसो राई चउपोरिसी चेव ॥१॥ 'अहाउनिव्वत्तिकाले'त्ति यथा-येन प्रकारेणायुषो निर्वृत्तिः-बन्धनं तथा यः कालः-अवस्थितिरसौ यथायुर्निर्वृत्तिकालः, नारकाद्यायुष्कलक्षणः, अयं चाद्धाकाल एवायुःकर्मानुभवविशिष्टस्सर्वेषामेव संसारिजीवानां स्यात्, आह च-"नेरइयदेवमणुया तिरिक्खजोणीण होइ जं जेण। निव्वत्तियमन्नभवे पालंति अहाउकालो सो ॥१॥" मरणकालो-मरणावसरः, 'अद्धाकालो'त्ति अद्धा-समयादयो विशेषास्तद्रूपः कालः अद्धाकालः, चन्द्ररविप्रमुखक्रियाप्रधानोऽर्द्धतृतीयद्वीपसमुद्रवर्त्ती समयादिः, आह च—"समयावली मुहुत्ता दिवस अहोरत्त पक्ख मासं वा। संवच्छर जुग पलिया सागर उस्सप्पि परियट्टा ॥१॥" 'अद्धपंचममुहुत्त'त्ति (सू. ४२४) अष्टादशमुहूर्त्तस्य दिवसस्य रात्रेर्वा चत्वारो मुहूर्त्ताः पञ्चममुहूर्त्तस्यार्द्धं च अर्धपञ्चममुहूर्त्ताः, नवघटिका इत्यर्थः, ततः अर्द्धपञ्चमा मुहूर्त्ता यस्याः सा तथेति, 'तिमुहुत्त'त्ति त्रयो मुहूर्त्ता यस्यां सा त्रिमुहूर्त्ता, षड्घटिका इत्यर्थः, 'कइभागमुहुत्तभागेणं'ति कतिभागमुहूर्त्तभागेन, कतिथेन मुहूर्त्तांशेनेत्यर्थः, 'बावीससयमुहुत्तभागेणं'ति इह अर्द्धपञ्चमानां-सार्द्धचतुर्मुहूर्त्तानां त्रयाणां च मुहूर्त्तानां विशेषः सार्द्धो मुहूर्त्तः, स च त्र्यशीत्यधिकदिवसशतेन वर्द्धते हीयते च, कथं?, उच्यते, स च सार्द्धो मुहूर्त्तो घटीत्रयप्रमाणो जैनटिप्पनके षण्मासस्तत्क्त्र्यशीत्यधिकशतदिनरूपभागतया स्थाप्यते, तत्र मुहूर्त्ते घटीद्वयमिते द्वाविंशत्यधिकं भाग-

शतं स्यादित्यतोऽभिधीयते 'बावीसे'त्यादि, द्वाविंशत्यधिकशततमभागरूपेण मुहूर्त्तभागेनेत्यर्थः, अथ घटिकां २ प्रति कियन्तो भागाः स्युरिति, उच्यते, द्वाविंशत्यधिकभागशतमर्द्धीक्रियते, तदर्द्धीकरणे लब्धा एकस्यां घट्यामेकषष्टिः, द्विगुणीकरणे जातं घटिकाद्वयमिति मुहूर्त्ते द्वाविंशत्यधिकभागशतं, इत्थं तृतीयघट्यामप्येतावन्तः स्युस्तैनैकषष्टिस्त्रिगुणीकरणे सार्द्धो मुहूर्त्तो घटिकात्रयमितत्र्यशीत्यधिकदिनरूपभागशतेन षण्मासे २ वर्द्धते हीयते च, 'आसाढपुण्णिमाए'त्ति इहाषाढपूर्णिमास्यामिति यदुक्तं तत्पञ्चसांवत्सरिकयुगस्यान्तिमवर्षापेक्षयाऽवसेयं, यतस्तत्रैवाषाढपूर्णिमास्यां अष्टादशमुहूर्त्तो दिवसः स्यात्, अर्द्धपञ्चमुहूर्त्ता च तस्मात्पौरुषी स्यात्, वर्षान्तरे तु यत्र दिवसे कर्कसङ्क्रान्तिः स्यात् तत्रैवासौ भवतीति ज्ञेयं, एवं पौषपूर्णिमास्यामप्यौचित्येन वाच्यमिति ॥ अनन्तरं रात्रिदिवसयोर्वैषम्यमभिहितमथ तयोरेव समतां दर्शयति–'चित्तासोयपुण्णिमासु णं'ति इत्यादि यदुच्यते तद्व्यवहारनयापेक्षं, निश्चयतस्तु कर्कमकरसङ्क्रान्तिदिनादारभ्य यत् द्विनवतितममहोरात्रं तस्यार्द्धे समदिनरात्रिप्रमाणतेति, तत्र च पञ्चदशमुहूर्त्ते दिने रात्रौ वा चतस्रः पौरुष्यः स्युः, चत्वारः प्रहरा इत्यर्थः, तत्र पौरुष्यां २ त्रयो मुहूर्त्ताः, एवं चतस्रः पौरुष्यस्त्रिभिर्मुहूर्त्तैर्गुणिता जाता द्वादश मुहूर्त्ताः, अवशिष्टास्त्रयो मुहूर्त्ताश्च पौरुष्यश्चतस्रः, तेन कियन्तो भागास्समायान्ति इति ?, उच्यते, मुहूर्त्तस्य घटीद्वयमानत्वात् मुहूर्त्तत्रिके द्विगुणिते षट् घटिकाः, तत्र पौरुषीं प्रत्येका घटी, एवं चतसृषु पौरुषीषु घटीचतुष्कं, अथ घटीद्वयमवशिष्यते, तत्र घट्याः षष्टिपलमानत्वात् घटीयुग्मे १२० पलानि स्युः, तत्र पौरुषीं २ प्रति त्रिंशति पलानि, एवं चतसृषु, त्रिंशतश्चतुर्गुणने १२० पलानि जातानि। 'चउभागमुहुत्त'त्ति एकं मुहूर्त्तं १२० पलरूपं तस्य मुहूर्त्तस्य चत्वारो भागाः क्रियन्ते, एवंविधं चतुर्भागमुहूर्त्तं तत्रैकस्मिन् २ भागे ३० पलानि एवं मुहूर्त्तभागत्रये नवतिपलानि, तानि च चतसृषु पौरुषीषु स्थाप्यंते, ततः

शेषत्रिंशत्पलरूपो मुहूर्त्तचतुर्थभागः, तेन चतुर्थभागेनोनाश्चतुर्भागमुहूर्त्तचतुर्थभागोनाश्चत्वारो मुहूर्त्ता यस्यां पौरुष्यां सा तथेति। 'से किं तं अहाउनिव्वत्तिकाले'त्ति (सू. ४२७) इह च 'जेणं'ति येन केनचिन्नारकाद्यन्यतमेन 'अहाउयं' यत्प्रकारमायुष्कं-जीवितमन्तर्मुहूर्त्तादि यथाऽऽयुष्कं निर्वर्त्तितं-निबद्धं, 'जीवो वा सरीराओ'त्ति जीवो वा शरीरात् शरीरं जीवाद्वा वियुज्यते। 'अद्धाकाले'त्ति अद्धाकालोऽनेकविधः प्रज्ञप्तः, तद्यथा-'समयट्ठयाए' समयरूपोऽर्थः समयार्थस्तद्भावस्तत्ता तया, समयभावेनेत्यर्थः, एवमन्यत्रापि, यावत्करणात् 'मुहुत्तट्ठयाए' इत्यादि दृश्यं, 'एस णं' एषः-अनन्तरोक्तोत्सर्प्पिण्यादिकः अद्धाः 'दोहारच्छेएणं'ति द्वौ भारौ-भागौ यत्र छेदेन द्विधा वा कारः करणं यत्तत् द्विधाभारं द्विधाकारं वा तेन 'जाहे'त्ति यदा तदा समयः, 'समुदायसमिइ'त्ति समुदाया-वृन्दानि तेषां याः समितयो-मीलनानि तासां यः समागमः-संयोगः तेन, यत् कालमानं स्यादिति गम्यते, सैकावलिका उच्यते, 'सालिउद्देसए'त्ति षष्ठशतसप्तमोद्देशके इत्यर्थः, 'मविज्जंति' मीयन्ते 'ठिइपयं'ति प्रज्ञापनापदं चतुर्थं। 'खए'त्ति क्षयः सर्वविनाशः, 'अवचए'त्ति अपचयो-देशतोऽपगमः 'दूमिय'त्ति दूमितं-धवलितं घृष्टं कोमलपाषाणादिना अत एव मृष्टं-मसृणं यत्तत्तथा 'उल्लोयचिल्लिय'त्ति विचित्रः-चित्रसहित उल्लोकः-उपरिभागो यत्र, चिल्लियं-दीप्यमानं तलं-अधोभागो यत्र तत्तथा, 'कुंदुरुक्कतुरुक्क'त्ति कुंदुरुकं-चीडा तुरुकं-सिल्हकं कालागुरुप्रभृतीनां धूपानां यो मघमघायमानो गन्ध उद्धतः-उद्भूतस्तेनाभिरामं-रम्यं, 'सुगंधवरि'त्ति सुगन्धयः-सद्गन्धाः वरगन्धाः-पटवासा यत्र 'गंधवट्टि'त्ति गन्धद्रव्यगुटिकाकल्पे 'सालिंगण'त्ति सहालिङ्गनवर्त्त्या-वपुःप्रमाणोपधानेन युक्ता तत्र, 'उभओ'त्ति उभयतः-शिरोऽन्तपादान्तावाश्रित्य उपधानके यत्र, 'उभउन्नए'त्ति उभयत उन्नते 'मज्झेणय'त्ति मध्ये नतं-च निम्नं गम्भीरं च महत्त्वाद् यत्तत्तथा, अथवा मध्येन

गम्भीरे 'गङ्गापुलिण'त्ति गङ्गापुलिनवालुकाया यो अवदालः—अवदलनं, पादादिन्यासे अधोगमनमित्यर्थः, तेन सदृशमतिनम्रत्वात् यत्तत्तथा, तत्र दृश्यते हंसतूल्यादीनामयं न्याय इति, 'ओयविय'त्ति परिकर्म्मितं यत् क्षौमिकं—दुकूलं कार्पासिकमतसीमयं वा वस्त्रं तस्य युग्मापेक्षया यः पट्टशाटकः स प्रतिच्छादनं—आच्छादनं यस्य तत्तथा, 'सुविरइय'त्ति सुष्ठु विरचितं रजस्त्राणं—आच्छादनविशेषोऽपरिभोगावस्थायां यत्र तत्तथा 'रत्तंसुयसंवुए'त्ति रक्तांशुकसंवृते—मशकगृहाभिधानविशेषवस्त्रावृते, 'आईणगरूयबूरणवणीयतूल'त्ति आजिनकं—चर्ममयं वस्त्रं रुतं च—कार्पासपक्ष्म बूरं च—वनस्पतिविशेषः नवनीतं—म्रक्षणं तूलं—अर्कतूलं एषामिव तुल्यः स्पर्शो यस्य तत्तथा,'सुगंध'त्ति सुगन्धानि वरकुसुमानि चूर्णाश्च ये शयनोपचारास्तैः कलितं,'अद्धरत्त'त्ति अर्द्धरात्ररूपकालसमये 'रययमहासेल'त्ति रजतमहाशैलो वैताढ्यस्तद्वत्पाण्डुरतरः—शुक्लः उरु विस्तीर्णो रमणीयः प्रेक्षणीयो दर्शनीयश्च,'थिरलट्ठ'त्ति स्थिरौ लष्टौ—मनोज्ञौ प्रकोष्ठौ—कूर्पराग्रेतनभागौ यस्य स तं, वृत्ता—वर्तुलाः पीवराः—स्थूलाः सुश्लिष्टाः—सुसम्बद्धाः, विशिष्टास्तीक्ष्णा दंष्ट्रास्ताभिर्विडम्बितं मुखं यस्य स तं, 'परिकम्मिय'त्ति परिकर्म्मितं—कृतपरिकर्म्म यज्जात्यकमलं तद्वत्कोमलौ, मात्रिकौ—प्रमाणोपपन्नौ शोभायन्तौ लष्टौ ओष्ठौ यस्य स तं,'रत्तुप्पल'त्ति रक्तोत्पलपत्रमृदुनी मध्ये सुकुमाले तालुजिह्वे यस्य स तं, वाचनान्तरे तु निर्लालिताग्रा च जिह्वा यस्य स तं, 'भिसंत'त्ति दीप्यमाने अक्षिणी यस्य स तं 'मूसागय'त्ति मूषा—स्वर्णादितापनभाजनं तद्गतं यत् प्रवरकनकं तापितं—कृताभितापं 'आवत्तायंत'त्ति आवर्त्तं कुर्वाणं तद्वद् यो वर्णतः वृत्ते च तडिदिव विमले सदृशे लोचने यस्य स तं,'विसालपीवर'त्ति विशाले—विस्तीर्णे पीवरे—पुष्टे ऊरू—जङ्घे यस्य स तं 'मिउविसय'त्ति मृदुविशदाः स्पष्टाः सूक्ष्माः 'लक्खणपसत्थ'त्ति प्रशस्तलक्षणाः विकीर्णा याः केसरसटाः स्कन्धकेशच्छटास्ताभिरुपशोभितस्तं, 'ऊसिय'त्ति उच्छ्रितं—ऊर्ध्वीकृतं

गुनिर्मितं-मुष्टु अधोमुखीकृतं सुजातं–शोभनतया जातं आस्फोटितं–भूमावास्फालितं लाङ्गूलं येन स तं, 'अतुरिय'त्ति अत्वरितं अचपलं–देहमनश्चापल्यरहितं यथा स्यादेवं, 'असंभंताए'त्ति अनुत्सुकतया 'आसत्थ'त्ति आश्वस्ता गतिश्रमाभावात्, विश्वस्ता संक्षोभाभावात् अनुत्सुका या 'मइपुव्वेणं'ति आभिनिबोधिकप्रभवेन 'बुद्धिविन्नाणेणं'ति औत्पत्तिक्यादि ४ बुद्धिविज्ञानेन 'अत्थोग्गहणं'ति अर्थनिश्चयं 'कुलकि'त्ति कीर्त्तिरेकदिग्गामिनी 'कुलनंदि'त्ति तत्समृद्धिकर्तृत्वात् 'कुलजस'त्ति यशस्सर्वदिग्गामिनी प्रसिद्धिः. 'लक्खण'त्ति लक्षणानि–स्वस्तिकादीनि व्यञ्जनानि–मषीतिलकादीनि तेषां यो गुणः–प्रशस्तता तेनोपपेतो युक्तो यो यः स तं,'विन्नाय'त्ति विज्ञ एव विज्ञकः स चासौ परिणतमात्रश्च कलादिष्विति गम्यते, शूरो दानगुणतः वीरो युद्धतः विक्रान्तः परमण्डलाक्रमणात् 'मा मे'त्ति मा निषेधे ममासौ स्वमः उत्तमः स्वरूपतः प्रधानः अर्थप्राप्तिरूपफलतः 'पडिजागरमाणी'ति प्रतिजाग्रती, कुर्वतीत्यर्थः,'सुइय'त्ति गन्धोदकेन सिक्ता शुचिका–पवित्रा सम्मार्जिता कचवरापनयनात् उपलिप्ता छगणादिना 'अट्टणसाला' व्यायामशाला, ईहामृगा–वृकाः 'अंछावेइ'त्ति आकर्षयति,'अत्थरय'त्ति आस्तरकेण प्रतीतेन मृदुमसूरकेण च अथवा अम्बरवस्त्रं–निर्मलेन मृदुमसूरकेणावस्तृतं–आच्छादितं अङ्गसुखस्पर्शकं 'अट्ठंगनिमित्त'ति 'दिव्वु १ प्पायं २ तलिक्ख ३ भोमं च ४ अंगसर ५ ६ लक्खण ७ वंजणं च ८, तिविहं पुण एक्किक्कं', 'सिद्धत्थग'त्ति सिद्धार्थकाः–सर्षपा हरितालिका–दूर्वा नक्षणानि कृतानि मङ्गलानि मूर्ध्नि यैस्ते तथा 'संचालिंति'त्ति संचारयंति 'गहियट्ठ'त्ति परस्माद् गृहीतार्थाः 'पुच्छियट्ठ'त्ति संशये सति स्थिराः 'बावत्तरि'त्ति त्रिंशतो द्विचत्वारिंशतश्च मीलनादिति, 'वक्कममाणंसि'त्ति गर्भे व्युत्क्रामति, प्रविशति गर्भमित्यर्थः,'विमाण भवण'त्ति देवलोकतो योऽवतरति तन्माता विमानं यस्तु नरकात् तन्माता भवनं पश्यति,'जीवियारिह'त्ति

जीविकोचितं, 'उउभयमाण'त्ति ऋतौ २ भज्यमानसुखैः 'विवित्तमउएहिं'ति विविक्तैः—दोषमुक्तैः मृदुकैः—कोमलैः 'पइरिक्कसुहाए'त्ति प्रतिरिक्तत्वेन—अन्यजनापेक्षया विजनत्वेन सुखा शुभा वा या सा तया, 'संपुन्न'त्ति अभिलपितार्थपूरणात् 'सम्माणिय'त्ति प्राप्तार्थस्य भोगात् 'अविमाणिय'त्ति क्षणमपि लेशेन नापूर्णमनोरथा, 'वुच्छिन्न'त्ति त्रुटितवाञ्छेत्यर्थः, 'मोहभय'त्ति मोहो—मूढता भयं—भीतिमात्रम्, परित्रासः—अकस्माद्भयं, 'आसयइ'त्ति आश्रयत्याश्रयणीयं वस्तु 'सयइ'त्ति शेते 'चिट्ठइ'त्ति ऊर्ध्वस्थानेन तिष्ठति, निषीदति—उपविशति 'तुयट्टइ'त्ति शय्यायां वर्त्तत इति, 'पियट्ठयाए'त्ति प्रियार्थतायै, प्रीत्यर्थमित्यर्थः, 'पियं'ति प्रियमिष्टवस्तुपुत्रजन्मलक्षणं निवेदयामः, 'पियं भे भवउ'त्ति एतच्च प्रियनिवेदनं प्रियं भे—भवतां भवतु, 'जहामालियं'ति यथामालितं—यथाधारितं यथापरिहितं इत्यर्थः, 'ओमोयं'ति अवमुच्यते—परिधीयते यः सः अवमोकः—आभरणं तं दत्ते 'मत्थए धोवए'त्ति अङ्गप्रतिचारिकाणां मस्तकानि क्षालयन्ति, दासत्वापनयनार्थं, स्वामिना धौतमस्तकस्य हि दासत्वमपगच्छतीति लोकव्यवहारः, । (सू० ४२८) 'माणु'त्ति मानं—रसधान्यविशेषः, उन्मानं—तुलारूपम्, 'उस्सुक्कं' उच्छुल्कां—मुक्तशुल्कां स्थितिपरिपतितां कारयतीति सम्बन्धः, शुल्कं तु विक्रेयभाण्डं प्रति राजदेयं द्रव्यं, 'उक्करं'ति उन्मुक्तकरं, करस्तु गवादीन् प्रति वर्षं प्रति राजदेयं द्रव्यं, 'अदेज्जं'ति विक्रयप्रतिषेधादेवाविद्यमानमातव्यं 'अभडप्पवेसं'ति अविद्यमानो भटानां—राजाज्ञाकारिणां प्रवेशः कुटुम्बिगृहेषु यस्यां सा तां 'अदण्डकुदण्डिमं'ति दण्डलभ्यं द्रव्यं दण्ड एव, कुदण्डेन जातं द्रव्यं कुदण्डिमं, तन्नास्ति यस्यां तां, तत्र दण्डोऽपराधानुसारेण राजग्राह्यं द्रव्यं, कुदण्डस्तु कारणिकानां प्रज्ञापनात् महत्यपराधिनोऽपराधे अल्पं राजग्राह्यं द्रव्यं, 'अधरिमं'ति अविद्यमानधारणीयं द्रव्यं ऋणमोचनात्, 'गणियावर'त्ति गणिकावरैः—वेश्याप्रधानैर्नाटिकीयैः—लास्य-

सम्बन्धिपात्रैः कलिता या सा तां, 'अणेग'त्ति नानाविधप्रेक्षाकारिसेवितामिरिति, 'अणुद्धुय'त्ति अनुद्धुता-वादनार्थं वादकैरत्यक्ता मृदङ्गा यस्यां सा तां 'अमिलाय'त्ति सुपुत्रजन्मतः अम्लानपुष्पमाला तां 'पमुइय'त्ति प्रमुदितजनयोगात् प्रमुदितां प्रक्रीडितजनयोगात् प्रक्रीडितां, 'सपुरजण'त्ति सह पुरजनेन जानपदेन-जनपदसत्कजनेन या वर्त्तते सा तां। 'ठिइवडियं'ति स्थितौ कुलस्य वा मर्यादायां गता या पुत्रजन्ममहप्रक्रिया सा स्थितिपतिता, 'दसाहियाए'त्ति १० दिनप्रमाणायां दशाहिकायां 'सइए'त्ति शतपरिमाणान् 'साहस्सिए'त्ति सहस्रान् शतसहस्रान् लक्षानित्यर्थः, 'जाए'त्ति यागान्-पूजाविशेषान् 'दाए'त्ति दायान् पर्वदिने दानादीनि 'भाए'त्ति भागान्-लब्धद्रव्यविभागान् 'दल'त्ति ददत्-दापयन् 'बारसाहे दिवसे'त्ति सम्प्राप्ते द्वादशाख्यदिवसे 'कुलाणुरूवं'ति कुलोचितं-कुलसदृशं, तत्कुलस्य बलवत्पुरुषकुलत्वान्महाबल इति नाम कृतं, 'पंचधाइ'त्ति ताश्चेमाः-खीरधाईए मंडणधाईए मज्जणधाईए कीलावणधाईए अंकधाईए' इति पंचधात्रीभिः परिगृहीतः, एवं यथा दृढप्रतिज्ञ औपपातिकेऽधीतः तथाऽयं वाच्यः, 'पयगामणं'ति भूमौ सर्पणं चंक्रामणं-पद्भ्यां संचारणं 'जेमावणं'ति भोजनकारणं 'पिंडवद्धणं'ति केवलं स्नानाभ्यङ्गादिना वपुर्वृद्धिकरणं 'पजंपावणं'ति प्रजल्पनकारणं शिक्षणं 'संवच्छरपडिलेहणं'ति वर्षग्रन्थिकरणं 'चोलोवणगं'ति चूडाधरणं 'उवणयणं'ति कलाग्राहणं 'गब्भाहाणं'ति गर्भाधानादीनि तानि गर्भाधानादीन्येवोच्यन्ते, 'पेच्छाघरमंडवंसि'त्ति प्रेक्षागृहमण्डपयोर्विशेषवर्णको यथा राजप्रश्नकृते उक्तस्तथा स वाच्य इति। 'पमक्खणगण्हाण'त्ति(सू. ४२९)प्रम्रक्षणकं-अभ्यञ्जनं स्नानगीतवादित्राणि प्रसाधनं-मण्डनं अष्टस्वङ्गेषु तिलकाः कङ्कणं रक्तदवरकमयं एतानि अविधत्रवधूभिः-जीवद्भर्तृनारीभिरुपनीतानि यस्य स तं, 'मंगलसुजंपिएहिं'ति मङ्गलानि-दधिदूर्वादीनि गानविशेषाश्च जल्पितानि-आशीर्वचांसि तैः 'कयकोउ-

य'त्ति कौतुकानि–भूतिरक्षादीनि मङ्गलानि–सिद्धार्थकादीनि तद्रूप उपचारः–पूजा तेन कृतं शान्तिकर्म यस्य 'सरित्तयाणं'ति सदृक्त्वचां–सदृशच्छवीनां 'सरिव्वयाणं'ति सदृग्वयसां, 'लायण्ण'त्ति लावण्यं–मनोज्ञता गुणाः–प्रियभाषित्वादयः, 'कडगजोए'त्ति कलाचिकाभरणयुगं 'तुडिय'त्ति बाह्वाभरणं 'खोम'त्ति कार्पासिकं वस्त्रं 'कडग'त्ति उसीरमयं वस्त्रं 'पट्ट'त्ति पट्टसूत्रमयं, 'दुगुल्ल'त्ति दुकूलाख्यतरुत्वग्निष्पन्नं, श्रीप्रभृतयः षड् देवताप्रतिमाः, नन्दादीनि मङ्गलवस्तूनि, अन्ये तु नन्दं वृत्तलोहासनं भद्रं शरासनं मूढकं इति यत् प्रसिद्धं, 'ताल'त्ति तालवृक्षान् 'वय'त्ति व्रजान् गोकुलानि 'सिरिघर'त्ति भाण्डागारतुल्यानि रत्नमयत्वात् 'जाणाइं'ति शकटादीनि 'जुग्गाइं'ति गोल्लदेशप्रसिद्धानि जंपानानि 'सिवियाओ'त्ति शिबिकाः कूटाकाराच्छादितजम्पानरूपाः 'संदमाणियाओ'त्ति स्यन्दमानिकाः–पुरुषप्रमाणाः जम्पानविशेषास्तानेव 'गिल्लीउ'त्ति हस्तिन उपरि कोल्लराकाराः 'थिल्लीओ'त्ति लाटानां यानि अड्डपल्यानानि तान्यन्यदेशेषु थिल्लीओ उच्यन्ते अतस्ताः, 'वियडजाणाइं'ति विवृतयानानि–तल्लटकवर्जितशकटानि 'पारिजाणिए'त्ति परियानप्रयोजनाः पारियानिकास्तान् 'संगामिए'त्ति सङ्ग्रामप्रयोजनाः साङ्ग्रामिकाः तान्, तेषां च कटीप्रमाणा फलकवेदिका स्यात्, 'कंचुइज्जे'त्ति प्रतीहारान् 'वरसधर'त्ति वर्षधरान्–वर्द्धितमहल्लकान् कृत्रिमक्लीवान् 'महत्तरए'त्ति महत्तरकान् अन्तःपुरचिन्तकान् 'ओलंबणदीवे'त्ति शृङ्खलाबद्धदीपान् 'उक्कंबण'त्ति उत्कम्बलदीपान् ऊर्ध्वदण्डतः 'तिण्णि व'त्ति सुवर्णरूप्यमिश्रभेदात् 'पञ्जरदीवे'त्ति अभ्रपटलबद्धदीपान् 'थासगाइं'ति आदर्शकाकारान् 'तलियाओ'त्ति पात्रीविशेषान् 'कवियाओ'त्ति कलावकाः 'अवएड'त्ति तापिकाहस्तान् 'अवयवक्काओ'त्ति अवपाक्यः तापिकाः सम्भाव्यन्ते 'भिसियाओ'त्ति आसनविशेषान् 'पडिसिज्जाओ'त्ति उत्तरशय्याः 'करोडियाओ'त्ति स्थगिकाः 'उन्नयासणाइं'ति उन्नताद्याकारोपलक्षितानि

'अट्ठ करोडियाधारीओ'त्ति स्थगिकाधारिणीः, 'उम्मद्दियाओ'त्ति इहामर्दिकानामुन्मर्दिकानां चाल्पबहुमर्दनकृतो विशेषः, 'पसाधियाओ'त्ति मण्डनकारिणी 'वण्णगपेसण'त्ति चन्दनहरितालादिपेपणकारिका:, 'चुण्णगपेसण'त्ति ताम्बूलचूर्णगन्धद्रव्यचूर्णादिकारिणी 'दवकारीओ'त्ति हास्यकारिकाः 'उवत्थाणियाओ'त्ति या आस्थानगतानां पार्श्वे वर्त्तन्ते, 'नाडइज्जाओ'त्ति नाट्यकारिकाः 'कुडुंविणीओ'त्ति पदातिरूपाः 'महाणसिणीओ'त्ति रसवतीकारिकाः, शेषपदानि रूढिगम्यानि, 'विमलस्स'त्ति (सू० ४३०) अस्यामवसर्पिण्यां त्रयोदशजिनस्य 'पपोत्तए' प्रपौत्रकः–प्रशिष्यः, 'जहा केसि'त्ति, कला इत्यनेन च सूचितं 'कलाकुसलसव्वकालसुहोइयाउ'त्ति 'सिवभद्दस्स'त्ति एकादशशतनवमोद्देशाभिहितशिवराजर्षिपुत्रस्य 'जहा अंमडो'त्ति यथौपपातिके अम्मडोऽधीतस्तथाऽयमपि वाच्यः, 'बंभलोए'त्ति इह चतुर्दशपूर्वधरस्य जघन्यतोऽपि लान्तके उपपात इष्यते 'जावंति लंतगाओ चोद्दसपुव्वी जहण्ण उववाओ'त्ति इति वचनाद्, एतस्य तु चतुर्दशपूर्वधरस्यापि यद् ब्रह्मलोक उपपात उक्तस्तत्केनापि मनाग्विस्मरणादिना प्रकारेण चतुर्दशपूर्वाणामपरिपूर्णत्वादिति संभावयंति। 'इदाणिवि करेसि'त्ति (सू.४३१) हे सुदर्शन! त्वं इदानीमपि करोपि, 'सण्णी पुव्वजाईसरणे'त्ति संज्ञिरूपा या पूर्वजातिस्तस्याः स्मरणं यत्तत्तथा, 'अहिसमेइ'त्ति अधिगच्छति, 'दुगुणाणियसद्धासंवेग'त्ति द्विगुणौ पूर्वकालापेक्षया आनीतौ श्रद्धासंवेगौ यस्य स तथा, तत्र श्रद्धा तत्त्वश्रद्धा संवेगो यस्य स तथा तं, सदनुष्ठानचिकीर्षा वा संवेगो भवभयं मोक्षाभिलाषो वा, 'उसभदत्तस्स'त्ति नवमशतत्रयस्त्रिंशत्तमोद्देशकाभिहितस्येति ॥ एकादशशते एकादशः ॥

'एगओ'त्ति (सू. ४३२) एकत्र 'समुवागयाणं' समुपागतानां 'सहियाणं'ति मिलितानां 'समुविट्ठाणं'ति आसनग्रहणेन

'सन्निसन्नाणं'ति सन्निपण्णानां समीपतया 'मिहो'त्ति मिथः 'देवट्ठितिगहियट्ठ'त्ति देवस्थितिविपये गृहीतार्थो-गृहीतपरमार्थो यस्स तदा 'तुंगिउद्देसए'त्ति(सू. ४३३)द्वितीयशतपञ्चमोद्देशके ॥ एकादशशते द्वादशः॥ इति श्री एकादशं शतं समाप्तं ॥

अथ द्वादशशतमारभ्यते, तदुद्देशकगाथेयं-"संखे १ जयंति २ पुढवी ३ पोग्गल ४ अतिवाय ५ राहु ६ लोगे य ७। नागे य ८ देव ९ आया १० बारसमसए दसुद्देसा ॥ १ ॥" (*७१) 'संखे'त्ति शङ्खश्रमणोपासकविपयः १ 'जयन्ति'त्ति जयन्त्याख्यश्राद्धीविपयः २ 'पुढवि'त्ति रत्नप्रभादिपृथ्वीरूपः ३ 'पुग्गलि'त्ति पुद्गलविपयः ४ 'अइवात'त्ति प्राणातिपातादिविपयः ५ 'राहु'त्ति राहुवक्तव्यतार्थः ६, 'लोगे य'त्ति लोकविपयः ७ 'नागे य'त्ति सर्पविपयः ८ 'देव'त्ति देवभेदविपयः 'आय'त्ति आत्मभेदनिरूपणार्थः १०। तत्र प्रथमे 'अस्साएमाण'त्ति (सू. ४३७) ईपत् स्वादयन्तो बहु च त्यज्यन्तः इक्षुखण्डादेरिव 'विस्साएमाण'त्ति विशेपेण स्वादयन्तोऽल्पमेव त्यज्यन्तः खर्जूरादेरिव 'परिभाएमाण'त्ति ददतः 'परिभुंजेमाण'त्ति सर्वमुपभुञ्जानाः, एपां पदानां वार्त्तमानिकप्रत्ययान्तत्वेऽतीतप्रत्ययान्तता द्रष्टव्या, ततश्च विपुलमशनाद्यास्वादितवन्तस्संतः, 'पक्खियं पोसहं'ति पक्षे भवं पाक्षिकं पौपधं अव्यापारपौपधं 'पडिजागरमाणा' प्रतिजाग्रतोऽप्यनुपालयन्तो विहरिष्यामः-स्थास्यामः, यच्चेहातीतकालीनप्रत्ययान्तत्वेऽपि वार्त्तमानिकप्रत्ययोपादानं तद्भोजनानन्तरमेवाक्षेपेण पौपधाभ्युपगमप्रदर्शनार्थमेवेत्येके, अन्ये तु व्याचक्षते-इह किल पौपधं पर्वदिनानुष्ठानं, तच्च द्विधा-इष्टजनभोजनप्रदानादिरूपं १ आहारादिपौपधरूपं २ च, तत्र शङ्ख इष्टजनभोजनादिरूपं पौपधं कर्त्तुकामस्सन् यदुक्तवान् तद्दर्शयन्नेवमुक्तं-'तए णं अम्हे तं विउलं असणं ४ साइमं अस्साएमाणा' इत्यादि, पुनश्च शङ्ख

एव संवेगवशादाद्यपौषधविनिवृत्तिमना द्वितीयं पौषधं चिकीर्षुर्यच्चिन्तितवांस्तद्दर्शयतैवमुक्तम्—'नो खलु मे सयं त'मित्यादि, 'एगस्स'त्ति एकस्य अद्वितीयस्येति भणनात् एकाकिन एव पौषधशालायां पौषधं कर्तुं कल्पते इति न चिन्त्यं, एतस्य चरितानुवादरूपत्वात् तथा ग्रन्थान्तरे बहूनां श्राद्धानां मिलनश्रवणाद्दोषाभावात्परस्परप्रेरणादिविशिष्टगुणसम्भवाच्चेति, 'गमणागमणाए पडिक्कमइ'त्ति ईर्यापथिकीं प्रतिक्रामतीत्यर्थः, 'छंदेणं'ति स्वाभिप्रायेण, न तु मदाज्ञयेति, 'पारित्तएत्तिकट्टु एवं संपेहेइ'त्ति पारयितुं-पारं नेतुं एवं सम्प्रेक्षते-इत्यालोचयति, किमित्याह-इति कर्तुं-एतस्यैवार्थस्य करणायेति, 'अहिगमो नत्थि' पञ्चप्रकारः प्रागुक्तोऽभिगमो नास्त्यस्य, सचित्तादिद्रव्याणां विमोचनीयानामभावादिति, 'जहा पढमं'ति यथा तेषामेव प्रथमनिर्गमः तथा द्वितीयनिर्गमोऽपि वाच्य इत्यर्थः, 'हिज्जो'त्ति ह्यस्तनदिने 'सुदक्खुजागरियं'ति (सू. ४३८) सुट्ठु दरिसणं जस्स सो सुदक्खु तस्स जागरिया प्रमादनिद्रात्यागेन सुदक्खुजागरिया तां जागरितः, कृतवानित्यर्थः, 'बुद्धा बुद्धजागरियं'ति बुद्धाः-केवलिनः ते च बुद्धानां-क्षिप्ताज्ञाननिद्राणां जागरिका-प्रबोधो बुद्धजागरिका तां जाग्रति-कुर्वन्ति, 'अबुद्धा अबुद्धजागरियं'ति अबुद्धाः-केवलज्ञानाभावेन ज्ञानसद्भावाच्च बुद्धसदृशाः, ते च अबुद्धानां छद्मज्ञानवतां या जागरिका तां जाग्रति। अथ भगवंतं शङ्खश्राद्धः अन्येषामुपशमनाय क्रोधादिविपाकं पृच्छन्नाह-'कोहवसट्टे णं'मित्यादि (सू. ४३९) 'इसिभद्दपुत्तस्स' अनन्तरशतोक्तस्येति ॥ द्वादशशते प्रथमः ॥

'पोत्ते'त्ति (सू. ४४०) पौत्रः-पुत्रस्यापत्यं 'नत्तुए'त्ति नप्ता दौहित्रः 'भाउज्ज'त्ति भ्रातृजाया 'वेसालीसावगाणं'ति वैशालिको-महावीरस्तस्य श्रावकाः तेषां आर्हतानां-अर्हद्देवतानां साधूनामिति गम्यं, पूर्वशय्यातरी-प्रथमस्थानदात्री, साधवो ह्यपूर्वे

समागतास्तद्गृह एव प्रथमं वसतिं यान्ति, तस्याः स्थानदात्रीत्वेन प्रसिद्धत्वादिति सा पूर्वशय्यातरा। 'सभावओ'त्ति (सू. ४४२) स्वभावतः पुद्गलानां मूर्त्तत्ववत्, परिणामेनाभूतस्य भवनेन पुरुषस्य तारुण्यवत्, 'सव्वेऽवि णं भंते! भवसिद्धिया जीवा' भवा–भाविनी सिद्धिर्येषां ते भवसिद्धिकाः, ते सर्वेऽपि भदन्त! जीवाः सेत्स्यन्तीति प्रश्नः, 'हंते'त्यादि उत्तरं, अयं चास्यार्थः,– सर्वे भवसिद्धिका जीवाः सेत्स्यन्ति, अन्यथा भवसिद्धिकत्वमेव न स्यादिति, अथ सर्वभवसिद्धिकानां सेत्स्यमानताऽभ्युपगमे भवसिद्धिकशून्यता लोकस्य स्यात्, नैवं, समयज्ञातात्, तथाहि–सर्व एवानागतकालसमया वर्त्तमानतां लप्स्यन्ते 'भवति स नामातीतः प्राप्तो यो नाम वर्त्तमानत्वम्। एष्यंश्च नाम स भवति यः प्राप्स्यति वर्त्तमानत्व ॥१॥" मित्यभ्युपगमात्, न चानागतकालसमयविरहितो लोको भविष्यतीति, अथैतामेवाशङ्कां जयन्तीप्रश्नद्वारेणास्मदुक्तसमयदृष्टान्तापेक्षया दृष्टान्तान्तरेणापि परिहर्त्तुमाह–'जइ णं'ति इत्येके व्याचक्षते, अन्ये तु व्याख्यान्ति–सर्वेऽपि भदन्त! भवसिद्धिका जीवाः सेत्स्यन्ति ?, ये केचन सेत्स्यन्ति ते सर्वेऽपि भवसिद्धिका एव, नाभवसिद्धिक एकोऽपि, अन्यथाऽभवसिद्धिकत्वमेव न स्यादित्यभिप्रायः, हन्तेत्याद्युत्तरं, अथ यदि ये केचन सेत्स्यन्ति सर्वेऽपि भवसिद्धिका एव नाभवसिद्धिक एकोऽपि इत्यभ्युपगम्यते तदा कालेन सर्वभवसिद्धिकानां सिद्धिगमनात् भव्यशून्यता जगतः स्यादिति जयन्त्याशङ्कां परिहर्त्तुमाह–'सव्वागाससेढि'त्ति सर्वाकाशस्य बुद्ध्या चतुरस्रप्रतरीकृतस्य श्रेणिः–प्रदेशपङ्क्तिः सर्वाकाशश्रेणिः 'परित्त'त्ति एकप्रदेशकत्वेन विष्कम्भाभावेन च परिमिता 'परिवुड'त्ति श्रेण्यन्तरैः परिवृता, स्वरूपमेतत्तस्याः। 'सुत्तत्तं साहु'त्ति 'जागरियत्तं' जागरिकत्वम्, 'अहम्मि'त्ति अधर्म्मेण–श्रुतचारित्राभावलक्षणेन चरन्तीत्यधार्मिकाः, ॥१७९॥ 'अहम्माणु'त्ति अधर्म्मानुगाः, अधर्म्ममनुगच्छन्तीत्यर्थः, 'अहम्मि'त्ति अधर्मिष्ठाः 'अहम्मि'त्ति अधर्म्ममाख्यान्तीत्येवंशीला

अधर्माख्यायिनः, अथवा न धर्मान् ख्यातिर्येषां ते अधर्मख्यातयः, 'अहम्मपलोइ'त्ति न धर्म्मं प्रलोकयन्तीति अधर्मप्रलोकिनः, 'अहम्मपलज्जण'त्ति न धर्म्मं प्ररज्यन्ते-आरज्जंति ये ते अधर्म्मप्ररजनाः, अधर्म्मे सक्ता इत्यर्थः, 'अहम्मसमुदायार'त्ति अधर्म्मे समुद् सप्रमादो याऽऽचारो येषां ते तथा, अधर्म्मं वा समुदाचारः-समाचारो येषां ते अधर्म्मसमुदाचाराः 'अहम्मेणं चेव वित्तिं'न्ति अधर्म्मेण-श्रुतचारित्राभावरूपेण वृत्तिं-आजीविकां कल्पयन्तः, कुर्वाणा इत्यर्थः, 'एवं बलियत्तं, एवं दुब्बलियत्तंपि' बलिकत्वं दुर्बलिकत्वं च विभाज्यते ॥ दक्षत्वं च तेषां साधु ये न इन्द्रियवशास्स्युरिति इन्द्रियवशानां यत् स्यात्तदाह-'सोइंदियवसट्टे'त्ति श्रोत्रेन्द्रियवशेन ऋतः-पीडितः श्रोत्रेन्द्रियवशं वा ऋतो-गतः श्रोत्रेन्द्रियवशार्त्तः ॥ द्वादशशते द्वितीयः ॥

'किंनामा किंगोय'त्ति (सू. ४४२) तत्र नाम याद‍ृच्छिकमभिधानं गोत्रं चान्वर्थिकमिति, यथा 'जीवाभिगमे'त्ति तत्रेदम्-दोच्चा णं भंते ! पुढवी किंनामा किंगोया पन्नत्ता ?, गोयमा ! वंसानामेणं सक्करप्पभा गोत्तेणमित्यर्थः॥ द्वादशशते तृतीयः॥

'एगओ'त्ति (सू. ४४४) एकत्वतः, एकतयेत्यर्थः, 'साहण्णंति' संहन्यन्ते, संहतौ स्यातामित्यर्थः, द्विप्रदेशिकस्कन्धस्य भेदे एको विकल्पः, त्रिप्रदेशिकस्य द्वौ, चतुष्कप्रदेशिकस्य चत्वारः, पञ्चप्रदेशिकस्य षट्, षट्प्रदेशिकस्य दश, सप्तप्रदेशिकस्य चतुर्दश, अष्टप्रदेशिकस्य २१ नवप्रदेशिकस्य २८ दशप्रदेशिकस्य ४० सङ्ख्यातप्रदेशिकविकल्पा द्विधाभेदे ११ त्रिधाभेदे २१ चतुर्धाभेदे ३१ पंचधाभेदे ४१ षोढात्वे ५१ सप्तधात्वे ६१ अष्टधात्वे ७१ नवधात्वे ८१ दशधात्वे ९१ सङ्ख्यातभेदे त्वेक एव विकल्पः, तमेवाह-'संखेज्जहा कज्जमाणे संखेज्जा परमाणुपोग्गला भवंति'त्ति, असङ्ख्यातप्रदेशिकस्य तु द्विधाभावे १२ त्रिधात्वे २३ चतुर्धात्वे ३४ पंचधात्वे ४५ षोढात्वे ५६ सप्तधात्वे ६७ अष्टधात्वे ७८ नवधात्वे ८९ दशभेदत्वे १०० सङ्ख्या-

तभेदत्वे १२ असङ्ख्यातभेदकरणे त्वेक एव विकल्पः, 'असंखेज्जा परमाणुपोग्गला भवंति'त्ति अनन्तप्रदेशिकस्य तु द्विधात्वे
१३ त्रिधात्वे २५ चतुर्द्धात्वे ३७ पंचधात्वे ४९ षड्विधात्वे ६१ सप्तधात्वे ७३ अष्टधात्वे ८५ नवधात्वे ९७ दशधात्वे १०९
सङ्ख्यातत्वे १३ असंख्यातत्वे १२ अनन्तभेदकरणे त्वेक एव, तमेवाह—'अणंतहा कज्जमाणे'त्यादि 'दो भंते ! परमाणुपोग्गला
साहण्णंती'त्यादिना पुद्गलानां प्राक्संहननमुक्तं 'से भिज्जमाणे दुहा कज्जई'त्यादिना च तेषां भेद उक्तः, अथ तावेवाश्रित्याह—
'एएसि ण'मित्यादि (सू. ४४८) एतेषां—अनन्तरोक्तस्वरूपाणां परमाणुपुद्गलानां, परमाणूनामित्यर्थः, 'साहणणाभेदाणुवा
एणं'ति 'साहणण'त्ति प्राकृतत्वात् सङ्घातो भेदश्च—वियोजनं तयोरनुपातो—योगः संहननभेदानुपातस्तेन, सर्वपुद्गलद्रव्यैस्सह पर-
माणूनां संयोगेन वियोगेन चेत्यर्थः, 'अणंताणंत'त्ति अनन्तेन गुणिता अनन्ताः अनन्तानन्ताः, एकोऽपि हि परमाणुर्द्व्यणुका-
दिभिरनन्ताणुकान्तैर्द्रव्यैस्सह संयुज्यमानः अनन्तान् परिवर्त्तान् लभते, प्रतिद्रव्यं परिवर्त्तभावात् अनन्तत्वाच्च परमाणूनां प्रतिप-
रमाणु च अनन्तत्वात् परिवर्त्तानां परमाणुपुद्गलपरिवर्तानामनन्तानन्तत्वं द्रष्टव्यमिति । 'पुग्गलपरियट्ट'त्ति पुद्गलैः—पुद्गल-
द्रव्यैस्सह परिवर्त्ताः—परमाणूनां मीलनानि पुद्गलपरिवर्त्ताः समनुगन्तव्याः—ज्ञेयाः स्युरितिहेतोराख्याता भगवद्भिरिति गम्यते,
मकारश्च प्राकृतत्वात् अलाक्षणिकः । अथ पुद्गलपरावर्त्तभेदानाह—'ओरालिय'त्ति औदारिकवपुषि वर्त्तमानेन जीवेन यदौदारि-
कवपुर्योग्यद्रव्याणामौदारिकशरीरतया सामस्त्येन ग्रहणमसावौदारिकपुद्गलपरावर्त्तः, एवमन्येऽपि, 'नेरइयाणं'ति नारकजीवा-
नामनादिसंसारे संसरतां सप्तविधः पुद्गलपरावर्त्तः प्रज्ञप्तः, 'एगमेगस्स'त्ति अतीता अनन्ताः अनादित्वादतीतकालस्य जीवस्या-
नादित्वाच्च अपरापरपुद्गलग्रहणस्वरूपत्वादिति, 'पुरेक्खड'त्ति पुरस्कृता—भविष्यन्तः 'कस्सइ अत्थि कस्सइ नत्थि'त्ति कस्यापि

जीवस्य दूरभव्यस्याभव्य वा ते स्युः, कस्यापि न सन्ति उद्धृत्य यो मानुषत्वमाप्य सिद्धिं यास्यति, सङ्ख्येयैर्वा भवैर्यास्यति यः सिद्धिं तस्यापि परिवर्त्तो नास्त्यनन्तकालपूर्यमाणत्वात् तस्येति, 'एगचिय'त्ति एकचितिकाः—एकनारकाद्याश्रिताः 'सत्त'त्ति औदारिकादिसप्तविधपुद्गलविषयत्वात् सप्त दण्डकाः चतुर्विंशतिदण्डकाश्च स्युः, एकत्वपृथक्त्वदण्डकानां चायं विशेषः—एकत्वदण्डकेषु पुरस्कृतपुद्गलपरावर्त्ताः कस्यापि न सन्त्यपि, बहुत्वदण्डकेषु तु ते सन्ति, जीवसामान्याश्रयणादिति, 'एगमेगस्से'त्यादि, 'नत्थि एक्कोऽवि'त्ति नारकत्वे वर्त्तमानस्यौदारिकपुद्गलग्रहणाभावादिति, 'एगमेगस्स णं नेरइयस्स असुरकुमारत्ते'इत्यादि, इह च नैरयिकस्य वर्त्तमानकालीनस्य असुरकुमारत्वे अतीतानागतकालसम्बन्धिनि 'एगुत्तरिया जाव अनंता वे'त्यनेनेदं सूचितं—'कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि तस्स जहण्णेणं एक्को दो वा तिण्णि वा, उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, 'एवं जत्थ वेउव्वियसरीरं तत्थ एगुत्तरियाउ'त्ति यत्र वायुकाये मनुष्ये पञ्चेन्द्रियतिर्यक्षु व्यन्तरादिषु च वैक्रियशरीरं तत्रैको वेत्यादि वाच्यमित्यर्थः, 'जत्थ नत्थी'त्यादि यत्राप्यप्कायादौ नास्ति वैक्रियं तत्र यथा पृथ्वीकायिकत्वे तथा वाच्यं, न सन्ति वैक्रियपुद्गलपरावर्त्ता इति वाच्यमित्यर्थः, 'तेयापोग्गले'त्यादि, तैजसकार्मणपुद्गलपरावर्त्ता भविष्यति एकादयः सर्वेषु नारकादिषु जीवपदेषु पूर्ववद्वाच्याः, तैजसकार्मणयोस्सर्वेषु भावादिति, 'मणपोग्गल'त्ति मनःपुद्गलपरावर्त्ताः पञ्चेन्द्रियेष्वेव सन्ति, भविष्यन्तश्च ते एकोत्तरिकाः प्राग्वद्वाच्याः, 'विगलिंदिएसु नत्थि'त्ति विकलेन्द्रियग्रहणेन चैकेन्द्रिया अपि ग्राह्याः, तेषामपीन्द्रियाणामसम्पूर्णत्वान्मनोवृत्तेरभावाद्, अतस्तेष्वपि मनःपुद्गलपरावर्त्ता न सन्ति, 'वयपुग्गल'त्ति 'एवं चेव'त्ति तैजसादिपरिवर्त्तवत् सर्वनारकादिजीवपदेषु वाच्याः, नवरमेकेन्द्रियेषु वचनाभावान्न सन्ति ते इति वाच्याः। 'नेरइयाण'मित्यादिना पृथक्त्वदण्डकानाह—

'जाव वेमाणियाण'मित्यादि पर्यन्तिमदण्डको दर्शितः। अथौदारिकादिपुद्गलपरावर्त्तानां स्वरूपमाह–'से केण'मित्यादि (सू. ४४६) 'गहियाइं'ति स्वीकृतानि 'बद्धाइं'ति जीवप्रदेशैरात्मीकरणात्, कुत इत्याह–'पुट्ठाइं'ति यतः प्राक्स्पृष्टानि, तनौ रेणुवत्, अथवा पुष्टानि–पोषितानि अपरापरग्रहणतः 'कडाइं'ति पूर्वपरिणाममन्तरेण कृतानि 'पट्ठवियाइं'ति प्रस्थापितानि–स्थिरीकृतानि जीवेन 'निविट्ठाइं'ति यतः स्थापितानि ततो निविष्टानि जीवे स्वयं 'अभिनिविट्ठाइं'ति अभिविधिना निविष्टानि, सर्वाण्यपि जीवे लग्नानीत्यर्थः, 'अभिसमण्णागयाइं'ति अभिविधिना सर्वाणीत्यर्थः समन्वागतानि–सम्प्राप्तानि जीवेन रसानुभूतिमाश्रित्य 'परियाइयाइं'ति पर्याप्तानि जीवेन सर्वावयवैराप्तानि तद्रसादानद्वारेण 'परिणामियाइं'ति रसानुभूतित एव परिणामान्तरमापादितानि 'निज्जिण्णाइं'ति निर्जीर्णानि क्षीणरसीकृतानि 'निसिरियाइं'ति जीवप्रदेशेभ्यो निःसृतानि, कथं?, 'निसिट्ठाइं'ति जीवेन निसृष्टानि स्वप्रदेशात् त्याजितानि, इहाद्यानि चत्वारि पदानि औदारिकपुद्गलग्रहणविषयाणि तदुत्तराणि च पंच स्थितिविषयाणि तदुत्तराणि चत्वारि विगमविषयाणि। अथ पुद्गलपरावर्त्तानां निर्वर्त्तने कालं तदल्पबहुत्वं चाह–'ओरालिय'इत्यादि. 'केवइकालस्स'त्ति कियता कालेन निर्वर्त्यते?, 'अणंताहिं उस्सप्पिणीहिं'ति एकस्य जीवस्य ग्राहकत्वात् पुद्गलानां चानन्तानन्तत्वात् पूर्वगृहीतानां च ग्रहणस्यागण्यमानत्वादनन्ता अवसर्पिण्य इत्यादि सुष्ठूक्तमिति, 'सव्वत्थोवे कम्मणपोग्गले'त्यादि सर्वस्तोकः कार्मणपुद्गलपरावर्त्तननिर्वर्त्तनकालः, ते हि सूक्ष्मा बहुतमपरमाणुनिष्पन्नाश्च स्युः ततस्ते सकृदपि बहवो गृह्यन्ते, सर्वेषु नारकादिपदेषु च वर्त्तमानजीवस्य ते अनुसमयं ग्रहणमायान्ति इति स्वल्पकालेनापि तत्सकलपुद्गलग्रहणं स्यादिति, ततस्तैजसपुद्गलपरावर्त्तनकालोऽनन्तगुणो, यतः स्थूलत्वेन तैजसपुद्गलानामल्पानामेकदा ग्रहणं, एकग्रहणे चाल्पप्रदेशनिष्पन्नत्वेन . तेषामल्पा-

नामेव तदणूनां ग्रहणं स्यादतोऽभिधीयते–अनन्तगुणोऽसाविति, ततः औदारिकपुद्गलपरिवर्त्तननिर्वर्त्तनाकालोऽनन्तगुणः, यत औदारिकपुद्गला अतिस्थूराः, स्थूराणां चाल्पानामेवैकदा ग्रहणं स्यात्, अल्पतरप्रदेशाश्चैते, ततस्तद्ग्रहणेऽप्येकदा अल्प एवाणवो गृह्यन्ते, न च कार्मणतैजसपुद्गलवत्तेषां सर्वपदेषु ग्रहणमस्त्यौदारिकशरीरिणामेव तद्ग्रहणादतो बृहतैव कालेन तेषां ग्रहणमिति, तत आनप्राणपुद्गलपरावर्त्तनाकालोऽनन्तगुणः, यद्यपि हि औदारिकपुद्गलेभ्य आनप्राणपुद्गलास्सूक्ष्मा बहुप्रदेशिकाश्चेति तेषामल्पकालेन ग्रहणं सम्भवति तथाप्यपर्याप्तकावस्थायां तेषामग्रहणात् पर्याप्तकावस्थायामप्यौदारिकशरीरपुद्गलापेक्षया तेषामल्पीयसामेव ग्रहणात् न शीघ्रं तद्ग्रहणमित्यौदारिकपुद्गलपरावर्त्तनिर्वर्त्तनाकालादनन्तगुणता आनप्राणपुद्गलपरावर्त्तनिर्वर्त्तनाकालस्येति, ततो मनःपुद्गलपरावर्त्तनिर्वर्त्तनाकालोऽनन्तगुणः, कथं ?, यद्यप्यानप्राणपुद्गलेभ्यो मनपुद्गलाः सूक्ष्मा बहुप्रदेशाश्चेत्यल्पकालेन तेषां ग्रहणं स्यात् तथाप्येकेन्द्रियादिकायस्थितिवशात् मनसश्चिरेण लाभात् मानसपुद्गलपरिवर्त्तो बहुकालसाध्य इत्यनन्तगुणः, ततोऽपि वाक्पुद्गलपरावर्त्तनिर्वर्त्तनाकालोऽनन्तगुणः, कथं ?, यद्यपि मनसः सकाशात् भाषा शीघ्रतरं लभ्यते, द्वीन्द्रियावस्थायां च स्यात्, तथापि मनोद्रव्येभ्योऽपि भाषाद्रव्याणामतिस्थूलतया स्तोकानामेवैकदा ग्रहणात् ततोऽनन्तगुणो वाक्पुद्गलपरावर्त्तनिर्वर्त्तनाकाल इति, ततोऽपि वैक्रियपुद्गलपरावर्त्तनिर्वर्त्तनाकालोऽनन्तगुणो, वैक्रियशरीरस्यातिबहुकाललभ्यत्वादिति । पुद्गलपरावर्त्तानामेवाल्पबहुत्वमाह–'एएसि णं'मित्यादि (सू. ४४७) सर्वस्तोका वैक्रियपुद्गलपरावर्त्ता बहुतमकालनिर्वर्त्तनीयत्वात् तेषां, ततोऽनन्तगुणा वाग्विषयाः, अल्पतरकालनिर्वर्त्त्यत्वाद्, एवं पूर्वोक्तयुक्त्या बहुतराः क्रमेणान्येऽपि वाच्या इति ॥

द्वादशशते चतुर्थः ॥

'पाणाइवाए'त्ति (सू. ४४८) प्राणातिपातजनितं चारित्रमोहनीयकर्म्मोपचारात् प्राणातिपात एव, एवमुत्तरत्रापि, तस्य च पुद्गलत्वोपचारात् प्राणातिपात एव, एवमुत्तरत्रापि, तस्य च पुद्गलरूपत्वात् वर्णादयः स्युरत उक्तम् 'पंचवण्णे'त्ति, आह च— "पंच रस पंचवण्णेहिं, परिणयं दुविहगंधचउफासं। दवियमणंतपदेसं सिद्धेहिं अणंतगुणहीणं ॥१॥"ति 'चउफास'त्ति स्निग्ध १ रूक्ष २ शीत ३ उष्णाख्याः ४ स्पर्शाः सूक्ष्मपरिणामपरिणतपुद्गलानां स्युः, सूक्ष्मपरिणामं च कर्मेति, 'कोहे'त्ति क्रोध इति सामान्यनाम, कोपादयश्च तद्विशेषाः, तत्र कोपः—क्रोधोदयात् स्वभावाचलनमात्रम्, रोषः—क्रोधस्यैवानुबन्धो दोषः—आत्मनः परस्य वा दूषणमेतच्च क्रोधकार्यं द्वेषो वा—अप्रीतिमात्रं, अक्षमा—परकृताऽपराधस्य असहनं सञ्ज्वलनो—मुहुः २ क्रोधाग्निना ज्वलनं, कलहो—मिथोऽसमञ्जसभाषणं चाण्डिक्यं—रौद्राकारकरणं, भण्डनं—दण्डादिभिर्युद्धं विवादो—विरुद्धवचनानि १०, एतानि क्रोधकार्याण्येवं, क्रोधैकार्था वा एते शब्दाः। मान इति सामान्यनाम, मदादयस्तु तद्विशेषाः, तत्र मदो—हर्षमात्रं दर्पो—दृप्तता, स्तम्भो—अनम्रता गर्वः—शौण्डीर्यं 'अत्तुक्कोसे'त्ति आत्मनः परेभ्यः सकाशात् गुणेन उत्कर्षणं—उत्कृष्टताभिधानं, परपरिवादः—परेषामप्यवर्णवदनं, परपरिपातो वा गुणेभ्यः परिपातनमिति, 'उक्कोसे'त्ति उत्कर्षणं—उत्कृष्टताकरणं आत्मनः परस्य वा क्रियया उत्क्रोशनं वा—प्रकाशनमभिमानात् स्वसमृद्ध्यादेर्वा 'अवक्कोसे'त्ति अपकर्षणमवकर्षणं वा अभिमानादात्मनः परस्य वा क्रियारम्भात् कुतोऽपि व्यावर्त्तनमिति, अप्रकाशो वाऽभिमानादेवेति, 'उण्णए'त्ति उन्निन्नं नतं—पूर्वप्रवृत्तं नमनमभिमानादुन्नतं उन्निन्नो वा नयो—नीतिरभिमानादेवोन्नयो, नयाभाव इत्यर्थः, प्रणतस्य मदानुप्रवेशादुन्नमनमुन्नामः, 'दुन्नामे'त्ति महदुष्टं नमनं दुर्नाम इति १२, स्तम्भादीनि मानकार्याणीति मानवाचका एते एकार्थाः। 'माय'त्ति सामान्यं नाम, उपध्यादयस्तद्भेदाः, तत्र 'उवहि'त्ति उपधीयते येना-

सावुपधिः, वञ्चनीयसमीपगमनहेतुर्भावः, 'नियडि'त्ति नितरां करणं निकृतिः—आदरकरणेन परवञ्चनं पूर्वकृतमायाप्रच्छादनार्थं वा मायान्तरकरणं 'वलये'त्ति येन भावेन वलयमिव वक्रं वचनं चेष्टा वा प्रवर्त्तते स भावो वलयं 'गहणे'त्ति परवञ्चनार्थं यद्वचनजालं तद् गहनमिव गहनं 'णूमे'त्ति परवञ्चनाय यन्निम्नताया आश्रयणं तन्नूमं 'कक्के'त्ति कल्कं—हिंसादिरूपं पापं तन्निमित्तो यो वचनाभिप्रायः स कल्कमुच्यते 'कुरूवे'त्ति कुत्सितं यथा स्यादेवं रूप्यति—विमोहयति यत् तत् कुरूपं—भाण्डादिकर्म मायाविशेष एव 'पलिउंचण'न्ति प्रतिकुञ्चनं सरलतया प्रच्छन्नस्य वचनस्याऽखञ्चनं, 'झिट्ठ'त्ति परवञ्चनाभिप्रायेण येन जैह्मयं—क्रियासु मान्द्यमातनुते स भावो जैह्मयमेव 'किब्बिसे'त्ति यतो मायाकर्म्मणः परत्रेह च भवे किल्बिषिकः स्यात् स किल्बिष एव 'आयरण'त्ति यतो मायाविशेषादादरणं—अभ्युपगमं कस्यापि वस्तुनः कुर्याद् असावादरणं, ताप्रत्ययस्य स्वार्थिकत्वात्, आचरणता वा परप्रतारणाय विविधक्रियाकरणं आचरणं 'गूहणया' गूहनं—गोपायनं स्वरूपस्य, 'वञ्चणया' वञ्चनं परप्रत्यवतारणं, 'साइजोगे'त्ति अविश्रम्भसम्बन्धः, सातिशयेन द्रव्येण निरतिशयस्य योगस्तत्प्रतिरूपकरणमित्यर्थः १५, मायैकार्थाः शब्दाः। 'लोभे'त्ति सामान्यं, इच्छादयस्तु तद्विशेषाः, तत्रेच्छा—अभिलाषमात्रं मूर्च्छा—संरक्षणानुबन्धः, काङ्क्षा—अप्राप्तार्थाशंसा 'गेहि'त्ति गृद्धिः—प्राप्तार्थेष्वासक्तिः 'तण्ह'त्ति तृष्णा—प्राप्तार्थानामव्ययेच्छा 'भिज्झि'त्ति भिध्या—अभिव्याप्त्या विषयचिन्तनं, तदेकाग्रत्वमभिध्या पिधानादिवदकारलोपात् भिध्या 'अभिज्झि'त्ति न भिध्या अभिध्या—भिध्यासदृशं भावान्तरं दृढाभिनिवेशः, अभिध्यानलक्षणत्वात् तस्याः, अदृढाभिनिवेशस्तु अभिध्या, चित्तलक्षणत्वात्, तस्याः, ध्यानचित्तयोस्त्वयं विशेषः—'जं थिरमज्झवसाणं तं झाणं जं चलं तयं चित्तं'ति, 'आसासणय'त्ति आशंसनं—मम पुत्रस्य शिष्यस्य वेदमिदं च भूयादितिरूपा आशीः, 'पत्थण'न्ति, प्रार्थनं—परं प्रति इष्टार्थयाञ्चा

'लालप्पणय'त्ति प्रार्थनमेव भृशं लपनतः 'कामास'त्ति शब्दरूपविषया 'भोगास'त्ति गन्धरसस्पर्शविषया, 'जीवियास'त्ति जीवितव्यवाञ्छा, 'नंदिरागे'त्ति समृद्धौ सत्यां रागो-हर्षो नन्दिरागः १६, 'पेज्जे'त्ति पुत्रादिस्नेहः 'दोसे'त्ति द्वेषः-कलहो हास्यादिभवं युद्धं, यावत्करणात् 'अब्भक्खाणपेसुण्णअरइरइपरपरिवायमायामोसि'त्ति दृश्यं ॥ 'अवण्णे'त्ति (सू. ४४९) वधादिविरमणानि जीवोपयोगस्वरूपाणि, जीवोपयोगश्चामूर्त्तत्वं तस्माचावर्णादित्वमिति, 'उप्पत्तिय'त्ति उत्पत्तिरेव प्रयोजनं यस्यास्सा औत्पत्तिकी, नतु क्षयोपशमः प्रयोजनमस्याः, सत्यं, स खलु अन्तरङ्गत्वात् सर्वबुद्धिसाधारण इति न विवक्ष्यते, न चान्यच्छास्त्रकर्माभ्यासादिकमपेक्षत इति, 'वेणइय'त्ति गुर्वादिविनयभवा वैनयिकी 'कम्मय'त्ति अनाचार्यकं कर्म्म साचार्यकं शिल्पं, कादाचित्कं वा कर्म्म शिल्पं नित्यव्यापारः, तेन कर्म्मणो भवा कर्म्मजा, 'पारिणामिय'त्ति परि-समन्तात् नमनं परिणामः-सुदीर्घकालपूर्वापरावलोकनादिजन्य आत्मधर्मस्तज्जाता पारिणामिकी बुद्धिरिति, एता अपि वर्णादिरहिता जीवधर्म्मत्वेनामूर्त्तत्वात् जीवधर्माधिकारादवग्रहादिसूत्रं कर्म्मादिसूत्रं च ॥ अमूर्त्ताधिकारादवकाशान्तरसूत्रं अमूर्त्तत्वविपर्ययात् तनुवातादिसूत्राणि चाह-तत्र 'सत्तमे णं भंते ! उवासंतरे'त्ति प्रथमद्वितीयपृथिव्योर्यदन्तराले आकाशखण्डं तत्प्रथमं, तदपेक्षया सप्तमं सप्तम्या अधस्तात्, तस्योपरि सप्तमस्तनुवातः तस्योपरि सप्तमो घनवातः तस्याप्युपरि सप्तमो घनोदधिः, तस्योपरि सप्तमी पृथ्वी, तनुवातादीनां पञ्चवर्णत्वादि पौद्गलिकत्वेन मूर्त्तत्वात्, अष्टस्पर्शत्वं च बादरपरिणामत्वाद् अष्टौ स्पर्शाः शीतोष्णस्निग्धरूक्षमृदुकठिनलघुगुरुभेदादिति, 'जंबुद्दीवे' इत्यत्र यावत्करणाल्लवणसमुद्रादीनि पदानि वाच्यानि 'जाव वेमाणियावासा' इह यावत्करणादसुरकुमारावासादिपरिग्रहः, ते च भवनानि नगराणि विमानानि तिर्यग्लोके तन्नगर्यश्चेति, 'वेउव्वियतेआइं पडुच्च'त्ति वैक्रियतैजसवपुषी बादरत्वात्तयोर्नां-

रकाणामष्टस्पर्शत्वं, 'कम्मगं पडुच्च'त्ति कार्मणं हि सूक्ष्मपरिणामपुद्गलरूपमतश्चतुःस्पर्शं, ते च शीतोष्णस्निग्धरूक्षाः, 'धम्मत्थिकाए' इह यावत्करणादेवं दृश्यं-'अधम्मत्थिकाए आगासत्थिकाए पुग्गलत्थिकाए अद्धासमए आवलियामुहु' इत्यादि, 'दव्वलेसं पडुच्च'त्ति इह द्रव्यलेश्या सवर्णा, 'भावलेसं'ति भावलेश्या आन्तरः परिणामः, इह च कृष्णलेश्यादीनि परिग्रहसंज्ञावसानानि अवर्णादीनि जीवपरिणामत्वात्, औदारिकादिचतुर्वपूंषि च वर्णादिविशेषणानि अष्टस्पर्शाणि च, बादरपरिणामपुद्गलरूपत्वात्, सर्वत्र चतुःस्पर्शत्वे सूक्ष्मपरिणामः कारणं, अष्टस्पर्शत्वे बादरपरिणामः कारणं वाच्यमिति, 'सव्वदव्व'त्ति सर्वद्रव्याणि-धर्मास्तिकायादीनि 'अत्थेगइया सव्वदव्वा पंचवण्णा' इत्यादि बादरपुद्गलद्रव्याणि प्रतीत्योक्तं, सर्वद्रव्यमध्ये कानिचित् पञ्चवर्णादीनीति भावार्थः, 'चउफासा' इत्येतच्च पुद्गलद्रव्याण्येव सूक्ष्माणि प्रतीत्योक्तं, 'एगगंधे'त्यादि च परमाण्वादि द्रव्याण्याश्रित्योक्तं, यदाह परमाणुद्रव्यमाश्रित्य-"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः। एकरसवर्णगन्धो द्विस्पर्शः कार्यलिङ्गश्च ॥१॥"ति, स्पर्शद्वयं च सूक्ष्मसम्बन्धिनां चतुर्णां स्पर्शानामन्यतरदविरुद्धं स्यात्, तथाहि-स्निग्धोष्णलक्षणं वा स्निग्धशीतलक्षणं वा रुक्षोष्णलक्षणं रूक्षशीतलक्षणं चेति, 'अवर्णे'त्यादि च धर्मास्तिकायादिद्रव्याण्याश्रित्योक्तं ॥ द्रव्याश्रितत्वात् प्रदेशपर्यवाणां द्रव्यसूत्रानन्तरं तत्सूत्रं, तत्र प्रदेशा-द्रव्यस्य निर्विभागा अंशाः, पर्यायास्तु धर्माः, ते चैवंकरणादेवं वाच्याः-'सव्वपएसा णं भंते ! कइवण्णा पुच्छा ?, गोयमा ! अत्थेगइया सव्वपदेसा पंचवण्णा जाव अट्ठफासा'इत्यादि, एवं पर्यवसूत्रमपि, इह च मूर्त्तद्रव्याणां प्रदेशाः पर्यवाश्च मूर्त्तद्रव्यवत् पञ्चवर्णादयः अमूर्त्तद्रव्याणां वा अमूर्त्तद्रव्यवदवर्णादय इति, अतीताद्धादित्रयं वा मूर्तत्वादवर्णादिकं ॥ 'परिणामं परिणमइ'त्ति (सू. ४५०) स्वरूपं गच्छति, कतिवर्णादिना रूपेण परिणमतीत्यर्थः, 'पंचवण्णं'ति

गर्भव्युत्क्रमणकाले जीवशरीरस्य पञ्चवर्णादित्वात् गर्भव्युत्क्रमकाले जीवपरिणामस्य पञ्चवर्णादित्वं ज्ञेयमिति ॥ गर्भजजीववर्णादिविचित्रपरिणाम उक्तः, अथ जीवस्यैव चित्रपरिणामत्वं यत् स्यात्तदाह—'कम्मओ णं'ति (सू. ४५१) कर्म्मणः सकाशात्, नो अकर्म्मतः—न कर्म्माणि विना, जीवो विभक्तिभावं—विभागरूपं भावं नारकतिर्यङ्मनुष्यामरभवेषु नानारूपं परिणाममित्यर्थः परिणमति—गच्छति, तथा 'कम्मओ णं जए'त्ति गच्छति तांस्तान्नारकामरादिभावानिति जगत्—जीवसमूहः, जीवद्रव्यस्य वा विशेषो जङ्गमाभिधानः 'जगन्ति जङ्गमान्याहु'रिति वचनात् ॥ द्वादशशते पञ्चमः ॥

'मिच्छं ते एवमाहंसु'त्ति (सू. ४५२) इह तद्वचनाप्रमाणकत्वात् मिथ्यात्वं मिथ्यादृष्टिप्रवचनसंस्कारोपनीतत्वाच्च, ग्रहणं हि राहुचन्द्रयोर्विमानापेक्षं, न च विमानयोर्ग्रासकग्रसनीयभावसम्भवोऽस्ति, आश्रयमात्रत्वात् नरभवनानामिव, अथेदं गृहमनेन ग्रस्तमिति दृष्टस्तद्व्यवहारः, सत्यं, स खल्वाच्छाद्याच्छादकभावे सति, नान्यथा, आच्छाद्याच्छादनभावे च ग्रासविवक्षायामिहापि न विरोधः, अथ यदत्र सम्यक् तद्दर्शनायाह—'अहं पुण'त्ति खंजनं—दीपमल्लिकामलः तद्वर्णाभं, 'लाउयं'ति तुम्बकं, तच्चेहापक्वावस्थं ग्राह्यमिति 'भासरासि'त्ति भस्मराशिसमं, 'आगच्छमाणे व'त्ति गत्वा प्रतिचारेण ततः प्रतिनिवर्त्तमानः, कृष्णवर्णादिना विमानेनेति शेषः, 'गच्छमाणे व'त्ति स्वभावचारेण चरन्, एतेन पदद्वयेन स्वाभाविकी गतिरुक्ता, 'विउव्वमाणे'त्ति विकुर्वणां कुर्वन् 'परियारे'त्ति परिचारयन्—कामक्रीडां कुर्वन्, एतेन पदद्वयेन अतित्वरया वर्त्तमानो विसंस्थुलचेष्टया स्वविमानमसमञ्जसं चालयति, एतच्च द्वयमस्वाभाविकविमानगतिग्रहणायोक्तमिति, 'चंदलेसं पुरच्छिमेणं'ति स्वविमानेन चन्द्रविमानावरणे चन्द्रदीप्तेरावृतत्वाच्चन्द्रलेश्यां पुरस्तादावृत्य 'पच्चच्छिमेणं वीईवयति'त्ति चन्द्रापेक्षया अपरेण यातीत्यर्थः, 'पुरच्छिमेणं चंदे उवदंसेइ'त्ति 'पच्चत्थिमेणं

राहु'न्ति राहुपेक्षया पूर्वस्यां दिशि चन्द्र आत्मानमुपदर्शयति, चन्द्रापेक्षया च पश्चिमदिशि राहुरात्मानमुपदर्शयतीत्यर्थः, एवंविधस्वभावतायां च राहोश्चन्द्रस्य यत् स्यात्तदाह–'जया ण'मित्यादि, 'आवरेमाणे'इत्यत्र द्विर्वचनम्, 'चिट्ठइ'त्ति तिष्ठति, 'चंदेणं राहुस्स कुच्छी भिण्ण'त्ति राहोरंशस्य मध्येन चन्द्रो गत इति कथने चन्द्रेण राहोः कुक्षिभिन्न इति व्यपदिशतीति, 'पच्चोसक्कइ'त्ति प्रत्यवसर्पति–व्यावर्त्तते, 'वंते'त्ति वान्तः–परित्यक्तः, 'सपक्खिं सपडिदिसिं'ति सपक्षं–समानं दिक् यथा स्यात् सप्रतिदिक्–समानविदिक् च यथा स्यादेवं चन्द्रलेश्यामावृत्यावष्टभ्य तिष्ठतीत्येवं योगः, अत आवरणमात्रमेवेदं वैश्रसिकं चन्द्रस्य राहुणा ग्रसनं, न तु कार्मणमिति। अथ राहोर्भेदमाह–'कइविहे ण'मित्यादि, यश्चन्द्रस्य सदैव सन्निहितः सञ्चरति स ध्रुवराहुः, आह च–"किण्हं राहुविमाणं निच्चं चंदेण होइ अविरहियं। चउरंगुलमप्पत्तं हिट्ठा चंदस्स तं चरइ॥१॥"त्ति, यस्तु पर्वणि-पौर्णमास्यमावास्ययोश्चन्द्रादित्ययोरुपरागं कुर्यात् स पर्वराहुरिति, 'पाडिवए'त्ति प्रतिपद आरभ्येति शेषः, पञ्चदशभागेन स्वकीयेन पञ्चदशभागं 'चंदस्स लेस्सं'ति विभक्तिव्यत्ययाच्चन्द्रस्य लेश्यायाः, चन्द्रबिम्बसम्बन्धिनमित्यर्थः, आवृण्वन् २ प्रत्यहं तिष्ठति, 'पढमाए'त्ति प्रथमतिथौ 'पण्णरसेसु'त्ति पञ्चदशसु दिनेषु, अमावास्यायामित्यर्थः, 'पण्णरसभागं आवरित्ताणं चिट्ठइ' इति वाक्यशेषः, एवं यत् स्यात्तदाह–'चरिमे'त्यादि, चरमसमये पञ्चदशभागोपेतस्य कृष्णपक्षस्यान्तिमे काले कालविशेषे वा चन्द्रो रक्तः स्यात्, सर्वथाऽऽच्छादित इत्यर्थः, 'अवसेसे'त्ति अवशेषे समये–प्रतिपदादिकाले चन्द्रो रक्तो वा विरक्तो वा स्यात्, अंशेन राहुणोपरक्तः अंशान्तरेणानुपरक्तः, आच्छादितानाच्छादित इत्यर्थः, तमेव चन्द्रलेश्यापञ्चदशभागं शुक्लपक्षस्य प्रतिपदादिष्विति गम्यते उपदर्शयन् २ पञ्चदशभागेन स्वयमपसरणतः प्रकटयन् २ तिष्ठति, 'चरिमस्स य'त्ति पौर्णमास्यां चन्द्रो विरक्तः स्यात्, सर्वथैव शुक्लीस्यादि-

त्वर्थः, सर्वथाऽनाच्छादितत्वादिति, इह चायं भावार्थः—षोडशभागीकृतस्य चन्द्रस्य षोडशो भागोऽवस्थित एवास्ते, ये चान्ये भागास्तान् राहुः प्रतितिथ्येकैकं भागं कृष्णपक्षे आवृणोति, शुक्ले तु विमुञ्चतीति, उक्तं च ज्योतिष्करण्डके—"सोलसभागे काऊण उडुवई हायएत्थ पण्णरस । तत्तियमित्ते भागे पुणोऽवि परिवड्ढई जोण्हं ॥१॥" ति, इह तु षोड(पंचद)शभागकल्पना कृता, व्यवहारिणां षोडशभागस्यावस्थितस्यानुपलक्षणादिति सम्भावयाम इति । ननु चन्द्रविमानस्य षट्पञ्चाशदेकषष्टिभागन्यूनयोजनप्रमाणत्वात् राहुविमानस्य ग्रहत्वेनार्द्धयोजनप्रमाणत्वात् कथं पञ्चदशे दिने चन्द्रविमानस्य महत्त्वेनेतरस्य च लघुत्वेन सर्वावरणं स्यादिति, अत्रोच्यते, यदिदं ग्रहविमानानामर्द्धयोजनमिति प्रमाणं तत्प्रायिकं, ततश्च राहोर्ग्रहस्योक्ताधिकप्रमाणमपि विमानं संभाव्यते, अन्ये पुनराहुः—लघीयसोऽपि राहुविमानस्य महता तमिस्रजालेन तदाव्रियत इति । ननु कतिपयान् दिनान् यावत् ध्रुवराहुविमानं वृत्तमुपलभ्यते ग्रहण इव, कतिपयांश्च न तथेति किमत्र कारणं ?, अत्रोच्यते, येषु दिवसेषु अत्यर्थं न तमसाऽभिभूयतेऽसौ विशुद्ध्यमानत्वात् तेषु न वृत्तमाभाति, तथा चोक्तम्—"वट्टच्छेओ कइवय दिवसे धुवराहुणो विमाणस्स । दीसइ परं न दीसइ जह गहणे पव्वराहुस्स ॥१॥" आचार्य आह—अच्चत्थं न हि तमसाऽभिभूयते जं ससी विसुज्झंतो । तेण न वट्टच्छेओ गहणे उ तमो तमोबहुलो ॥२॥" 'बायालीसाए मासाणं'ति सार्द्धस्य वर्षत्रयस्योपरि चन्द्रलेश्यामावृत्य तिष्ठतीति गम्यं, नवरं उत्कृष्टतया अष्टचत्वारिंशतो संवत्सराणामिति । अथ चन्द्रस्यैव 'ससि'त्ति यदभिधानं तदन्वर्थाभिधानायाह—'ससी'ति (सू. ४५३) सह श्रिया वर्तत इति सश्रीः, 'मियंके'त्ति विमाने मृगाङ्कचिह्नत्वात् मृगाङ्कः, 'सोमे'त्ति सौम्या नीरोगा वा 'कंते'त्ति कान्तियोगात् 'सुभए'त्ति सुभगः, सौभाग्ययुक्तत्वात्, 'पियदंसण'त्ति प्रेमकृद्दर्शनः । अथादित्यशब्दस्यान्वर्थाभिधानायाह—'सूराइय'त्ति (सू. ४५४) सूर आदिः—प्रथमो येषां ते सूरा-

दिकाः, क इत्याह—समयः, तथाहि—सूर्योदयमवधिकृत्य अहोरात्रारम्भकस्समयो गण्यते आवलिका मुहूर्त्तादयश्चेति, 'आदिच्चे'ति आदौ अहोरात्रादीनां भव आदित्यः, त्यश्चेहार्षत्वादिति ॥ 'पढमजोव्वणुट्ठाण'त्ति (सू. ४५५) प्रथमयौवनोत्थाने-प्रथमयौवनोत्पत्तौ यद्बलं तत्तिष्ठतीति स तथा 'अचिर'त्ति अचिरवृत्तविवाहकार्यः, 'वण्णओ महब्बल'त्ति महाबलोद्देशके वासवर्णको दृश्यः, 'अविरत्ताए'त्ति विप्रियकरणेऽप्यविरक्तया 'विउसमणकालसमयंसि' व्यवशमनं—पुंवेदविकारोपशमस्तस्य कालसमयस्तत्र स तथा तत्र, रतावसाने इत्यर्थः, 'एत्तो'त्ति इतः प्रागुक्तस्वरूपेभ्यः ॥ द्वादशशते षष्ठः ॥

'अयासयस्स'त्ति (सू. ४५६) षष्ठ्याश्चतुर्थत्वात् अजाशतायाः 'वाडगत्ताए'ति अजावाटकमित्यर्थः, 'नरगत्ताए'त्ति नरकावासपृथ्वीकायिकतयेत्यर्थः, असकृद्—अनेकशः 'अदुव'त्ति अथवा 'अणंतखुत्तो'त्ति अनन्तकृत्वः—अनन्तवारान् ॥ 'असंखिज्जेसु पुढविकाइ'त्ति (सू. ४५७) इह असङ्ख्यातेषु पृथ्वीकायिकावासेष्वेतावतैव सिद्धे यच्छतसहस्रग्रहणं तत्तेषामतिबहुत्वख्यापनार्थं, 'नो चेव णं देवित्ताए'त्ति ईशानान्तेष्वेव देवस्थानेषु देव्य उत्पद्यन्ते, सनत्कुमारादिषु पुनर्नेतिकृत्वा 'नो चेव णं देवित्ताए' इत्युक्तं, 'नो चेव णं देवत्ताए वे'ति अनुत्तरविमानेषु अनन्तकृत्वो देवा नोत्पद्यन्ते, देव्यश्च सर्वथैव नेति, 'अरित्ताए'त्ति सामान्यतः शत्रुभावेन 'वेरियत्ताए'त्ति विशेषाच्छत्रुतया 'घायगत्ताए'त्ति मारकतया 'वहगत्ताए'त्ति वधकतया, ताडकतयेत्यर्थः, 'पच्चामित्तत्ताए'त्ति अमित्रसहायकतया 'दासत्ताए'त्ति गृहदासीपुत्रतया 'पेसत्ताए'त्ति प्रेष्यतया—आदेश्यतया 'भयगत्ताए'त्ति भृतकतया—दुष्कालादौ पोषिततया 'भाइल्लगत्ताए'त्ति कृष्यादिलाभस्य भागग्राहकत्वेन 'भोगपुरिसत्ताए'त्ति भोगकारिनरतया अन्योपार्जितार्थैः, 'सीस'त्ति शिक्षणीयतया 'वेसत्ताए'त्ति द्वेष्यतया ॥ द्वादशशते सप्तमः ॥

'बिसरीरेसु'त्ति (सू. ४५८) द्वे शरीरे येषां ते द्विशरीराः तेषु, ये हि नागवपुस्त्यक्त्वा मनुष्यशरीरमवाप्य सेत्स्यन्ति ते द्विशरीरा इति, 'नागेसु'त्ति सर्पेषु हस्तिषु वा 'तत्थ'त्ति यत्र क्षेत्रे जातः, 'अच्चिय'त्ति चन्दनादिना वन्दितः स्तुत्या पूजितः पुष्पादिना सत्कारितो वस्त्रादिना सन्मानितो भोजनप्रतिपत्तिभिः, 'दिव्वे'त्ति दिव्यः-प्रधानः 'सच्चे'त्ति सत्यः, स्वप्नादिप्रकारेण तदुपदिष्टस्यावितथत्वात्, 'सच्चोवाए'त्ति सत्यावपातः, सफलसेव इत्यर्थः, 'सन्निहिय'त्ति सन्निहितं-आसन्नवर्त्ति प्रातिहार्यं-पूर्वसङ्गतिकादिदेवताकृतं प्रतिहारकर्म्म यस्य स तथा, 'लाउल्लोइयमहिए'त्ति लाइयंति-छगणादिना भूम्याः संमृष्टीकरणं, 'उल्लोइयं'ति खटिकादिना धवलनं भित्तीनां, एतद्द्वयराहितो यस्स तथा ॥ 'गोलाङ्गूलवसहे'त्ति (सू. ४५९) गोलाङ्गूलानां-वरसतराणां मध्ये महान् स एव विदग्धो, विदग्धपर्यायत्वाद्वृषभशब्दस्य, एवं कुर्कुटवृषभोऽपि, एवं मण्डूकवृषभोऽपीति, 'निस्सील'त्ति समाधानरहिताः, 'निव्वय'त्ति अणुव्रतरहिताः, 'निग्गुण'त्ति निर्गुणाः क्षमादिभिर्वा रहिताः 'नेरइयत्ताए उववज्जेज्जा' इति प्रश्नः, इह न 'उववज्जेज्जा' इत्येतदुत्तरं, तस्य चासम्भवमाशङ्कमानस्तत्परिहारमाह-'समणे'त्यादि, असम्भवश्चैवं-यत्र समये गोलाङ्गूलादयो न तत्र समये नारकास्ते अतः कथं नारकतयोत्पद्यन्ते इति वक्तव्यं स्यात्?, अत्रोच्यते-श्रमणो भगवान् वीरो, न तु जमाल्यादिः, एवं वक्ति, यदुत-उत्पद्यमानमुत्पन्नमिति वक्तव्यं स्यात्, क्रियाकालनिष्ठाकालयोरभेदात्, अतस्ते गोलाङ्गूलप्रभृतयो नारकतयोत्पत्तुकामा नारका एवेतिकृत्वा सुष्ठूच्यते 'नेरइयत्ताए उववज्जेज्ज'त्ति, 'उस्सप्पिणि उद्देसए'त्ति सप्तमशतस्य षष्ठ इति ॥ द्वादशशतेऽष्टमः ॥

(सू. ४६०) दीव्यन्ति-क्रीडां कुर्वन्ति दीव्यन्ते-स्तूयन्ते वा आराध्यतयेति देवाः, 'भवियदव्वदेव'त्ति द्रव्यभूता देवा द्रव्यदेवाः भूतभावत्वाद्भाविभावत्वाद्वाऽप्राधान्याद्देवगुणशून्यत्वात् द्रव्यदेवाः, यथा साध्वाभासा द्रव्यसाधवः, भूतभावपक्षे तु भूतस्य देवत्व-

देवानां जघन्यं 'अंतोमुहुत्तं'ति योऽन्तर्मुहूर्त्तावशेषायुश्चारित्रं प्रतिपद्यते तदपेक्षमिदमिति, 'देसूणा पुव्वकोडि'त्ति यो देशोन-
पूर्वकोट्यायुश्चारित्रं प्रतिपद्यते तदपेक्षमिदमिति, ऊनता च पूर्वकोट्या अष्टाभिर्वर्षैः, अष्टवर्षस्य प्रव्रज्यार्हत्वात्, यच्च षड्वर्षस्त्रिवर्षो
वा प्रव्रजितः अतिमुक्तको वज्रस्वामी वा तत्कादाचित्कमिति न सूत्रावतारीति, 'बावत्तरिं'त्ति श्रीवीरस्य 'चउरासी'ति श्रीऋष-
भस्य। भावदेवानां 'दस वाससहस्साइं'ति यथा व्यन्तराणां, 'तेत्तीसं'ति सर्वार्थसिद्धदेवानां ॥ अथ तेषामेव विकुर्वणामाह—
'भवियदव्वदेवे णं'ति(सू. ४६४)भव्यद्रव्यदेवो मनुष्यः पञ्चेन्द्रियतिर्यग्वा लब्धिसम्पन्नः एकत्वं—एकं रूपं प्रभुः—समर्थो विकुर्व-
यितुं 'पुहुत्तं'ति नानारूपाणि, देवाधिदेवास्तु सर्वथौत्सुक्यवर्जितत्वान्न विकुर्वते शक्तिसद्भावेऽपीति, अत उच्यते—'नो चेव णं
संपत्तीए'त्ति वैक्रियरूपसम्पादनेन न विकुर्वणशक्तिरस्ति, तल्लब्धिमात्रस्य विद्यमानत्वात् ॥ अथ तेषामेवोद्वर्त्तनामाह—'भविय-
दव्वे'त्यादि (सू. ४६४) भविकद्रव्यदेवानां भाविदेवत्वात् नारकादिभवत्रयनिषेधः, नरदेवसूत्रे तु 'नेरइएसु'त्ति अत्यक्तकाम-
भोगा नरदेवा नरकेषूत्पद्यन्ते, शेषत्रये तु तन्निषेधः, तत्र च यद्यपि केचिच्चक्रवर्त्तिनो देवेषूत्पद्यन्ते तथापि ते नरदेवत्वत्यागेन
धर्मदेवत्वप्राप्ताविति न दोषः, 'जहा वक्कंतीए असुरकुमाराणं'ति असुरकुमारा बहुषु जीवस्थानेषु गच्छन्ति इतिकृत्वा तैरति-
देशः कृतः, असुरादयो ह्यीशानान्ताः पृथ्व्यादिष्वपि गच्छन्ति, अथ तेषामेवानुबन्धमाह—'भवियदव्व'त्ति भव्यद्रव्यदेव इत्ययं
पर्यायमत्यजन्नित्यर्थः 'जवेव'त्ति एवमनेन न्यायेन यैव स्थितिर्भवस्थितिः प्राग्वर्णिता सैवैषां संस्थितिरपि, तत्पर्यायानुबन्धोऽपीत्यर्थः,
'नवर'मिति धर्मदेवस्य जघन्येनैकं समयं स्थितिः, अशुभभावं गत्वा ततो निवृत्तस्य शुभभावप्रतिपत्तिसमयानन्तरमेव मरणादिति ॥
अथैषामेवान्तरमाह—'भविअदव्वदेवस्स णं'ति भव्यद्रव्यदेवस्यान्तरं जघन्येन दशवर्षसहस्राण्यन्तर्मुहूर्त्ताधिकानि, कथं ?, भव्य-

देवो भूत्वा १० वर्षसहस्रस्थितिषु व्यन्तरादिषूत्पद्य च्युत्वा शुभपृथ्व्यादौ गत्वाऽन्तर्मुहूर्त्तं स्थित्वा द्रव्यदेव एव जायते, एतच्च टीकाव्याख्यानम्, इह कश्चिदाह—ननु देवत्वाच्च्युतस्यानन्तरमेव भव्यद्रव्यदेवतयोत्पत्तिसम्भवाद् दशवर्षसहस्राण्येव जघन्यतस्तस्यान्तरं स्यादतः कथमन्तर्मुहूर्त्ताभ्यधिकानि तान्युक्तानीति ?, अत्रोच्यते, सर्वजघन्यायुर्देवश्च्युतस्सन् शुभपृथ्व्यादिषूत्पद्यते इति टीकाकारमतं ज्ञेयं, अन्ये पुनराहुः—इह बद्धायुरेव भव्यदेवोऽभिप्रेतः तेन जघन्यस्थितिकादेवत्वाच्च्युत्वाऽन्तर्मुहूर्त्तस्थितिकभव्यद्रव्यदेवत्वेनोत्पन्नस्यान्तर्मुहूर्त्तस्योपरि देवायुषो बन्धनाद्यथोक्तमन्तरं स्यादिति, अथवा भव्यदेवस्य जन्मनोर्मरणयोर्वा अन्तरस्य ग्रहणाद् यथोक्तमन्तरमिति, 'साइरेगं सागरोवमं'ति, कथं ?, अपरित्यक्तसङ्गाश्चक्रवर्त्तिनो नरकेषूत्पद्यन्ते, तासु च यथास्वमुत्कृष्टस्थितयस्स्युः, ततश्च नरदेवो मृतः प्रथमपृथ्व्यामुत्पन्नस्तत्रोत्कृष्टस्थितिं सागरोपमप्रमाणामनुभूय नरदेवः पुनर्जात इत्येवं सागरोपमं,सातिरेकत्वं च नरदेवभवे चक्ररत्नोत्पत्तेरर्वाचीनकालेन द्रष्टव्यं, उत्कृष्टतस्तु देशोनं पुद्गलपरावर्त्तार्द्धं, कथं ?, चक्रवर्त्तित्वं हि सम्यग्दृष्टय एव कुर्वन्ति, तेषां च देशोनापार्द्धपुद्गलपरावर्त्त एव संसारः स्यात्, तदन्त्यभवे च कश्चिन्नरदेवत्वं लभत इत्येवमिति । 'धम्मदेवस्स'त्ति, 'जहण्णेणं पलिओवमपुहुत्तं'ति, कथं ?, चारित्रवान् कश्चित् सौधर्म्मे पल्योपमपृथक्त्वायुष्केषूत्पद्यते ततश्च्युतो धर्म्मदेवत्वं लभते इत्येवमिति, यच्च मनुजत्वे उत्पन्नश्चारित्रं विनाऽऽस्ते तदधिकमपि सत् पल्योपमपृथक्त्वेऽन्तर्भावितमिति, 'भावदेवस्स'त्ति, 'जहण्णेणं'ति, कथं ?, भावदेवश्च्युतः अन्तर्मुहूर्त्तमन्यत्र स्थित्वा पुनर्भावदेवो जात इत्येवं जघन्येनान्तर्मुहूर्त्तं अन्तरमिति । अथैषामल्पबहुत्वमाह—'सव्वत्थोवा नरदेव'त्ति भरतैरवतेषु द्वादशानामेव तेषामुत्पत्तिः, विजयेषु वासुदेवसम्भवात् सर्वेष्वेकदाऽनुत्पत्तेरिति, 'देवाधिदेवा संखिज्ज'त्ति भरतादिषु प्रत्येकं तेषां चक्रवर्त्तिभ्यो द्विगुणतयोत्पत्तेः विजयेषु च वासुदेवो-

पेतेष्वप्युत्पत्तेरिति, 'धम्मदेवा संखिज्ज'त्ति साधूनामेकदाऽपि कोटीसहस्रपृथक्त्वसद्भावादिति, 'भवियदव्वदेवा असंखिज्ज'त्ति देशविरतादीनां देवगतिगामिनामसङ्ख्यातत्वात्, 'भावदेवा असंखिज्ज'त्ति स्वरूपेणैव तेषामतिबहुत्वादिति। अथ भावदेवविशेषाणां भवनपत्यादीनामल्पबहुत्वमाह–'जहा जीवाभिगमे तिविहे'त्ति त्रिविधजीवाधिकार इत्यर्थः, तत्र देवपुरुषाणामल्पबहुत्वमुक्तं तथेहापि वाच्यं, तच्चैवम्–'सहस्सारे कप्पे देवा असंखिज्जगुणा महासुक्के असं० लंतए असं० बंभलोए असं० माहिंदे असं० सणंकुमारे असं० ईसाणे असं० सोहम्मे असं०, भवणवासिदेवा असं० वाणमंतरा असंखिज्जगुण'त्ति ॥ द्वादशशते नवमः ॥

'आय'त्ति (सू. ४६६) अतति–सततं गच्छति अपरापरान् स्वरूपपर्यायानित्यात्मा, अथवा अत धातोर्गमनार्थत्वेन ज्ञानार्थत्वादतति–सततमवगच्छति, उपयोगलक्षणत्वात्, सामान्येनैकविधत्वेऽपि उपाधिभेदादष्टविधत्वं, तत्र 'दवियाय'त्ति द्रव्यं–त्रिकालानुगामि उपसर्जनीकृतकषायादिपर्यायरूपं तद्रूप आत्मा द्रव्यात्मा, सर्वेषां जीवानां, 'कसायाय'त्ति क्रोधादिविशिष्ट आत्मा कषायात्मा, अक्षीणानुपशान्तकषायाणां, 'जोगाय'त्ति योगा–मनःप्रभृतिव्यापारास्तत्प्रधान आत्मा योगात्मा, योगवतामेव, सिद्धसंसारिस्वरूपसर्वजीवानां, अथवा विवक्षितवस्तूपयोगापेक्षयोपयोगात्मा, 'नाणाय'त्ति ज्ञानविशेषित उपसर्जनीकृतदर्शनादिरात्मा ज्ञानात्मा, सम्यग्दृष्टेः, एवं दर्शनात्मादयोऽपि, नवरं दर्शनात्मा सर्वजीवानां, चारित्रात्मा विरतानां, वीर्यं उत्थानादि तदात्मा, सर्वसंसारिणामिति, उक्तं च–जीवानां द्रव्यात्मा ज्ञेयः सकषायिणां कषायात्मा। योगः सयोगिनां पुनरुपयोगः सर्वजीवानाम् ॥१॥ ज्ञानं सम्यग्दृष्टेर्दर्शनमथ स्यात् सर्वजीवानाम्। चारित्रं विरतानां सर्वसंसारिणां वीर्यं ॥२॥" मिति, इत्यष्टधाऽऽत्मानं प्ररूप्याथ यस्यात्मभेदस्य यदन्यदात्मभेदान्तरं युज्यते तस्य तद्दर्शयितुमाह, इहाष्टौ पदानि स्थाप्यन्ते, तत्र प्रथमपदं शेषैस्सप्तभिस्सह

चिन्त्यते, तत्र यस्य जीवस्य द्रव्यात्मा-द्रव्यात्मत्वं, जीवत्वमित्यर्थः, तस्य कषायात्मा स्यादस्ति-कदाचिदस्ति, सकषायावस्थायां, स्यान्नास्ति-कदाचिन्नास्ति, क्षीणोपशान्तकषायावस्थायां, यस्य पुनः कषायात्मा अस्ति तस्य द्रव्यात्मा-द्रव्यात्मत्वं-जीवत्वं नियमादस्ति, जीवत्वं विना कषायाणामभावात्, तथा यस्य द्रव्यात्मा तस्य योगात्माऽस्ति, योगवतामिव, नास्ति चायोगिसिद्धानामिव, तथा यस्य योगात्मा तस्य द्रव्यात्मा नियमादस्ति, प्राग्वत्, 'एवं जहा दवियाय'त्ति तथा यस्य जीवस्य द्रव्यात्मा तस्य उपयोगात्मा नियमादस्ति, यस्योपयोगात्मा तस्य नियमात् द्रव्यात्मा, एतयोर्मिथोऽविनाभूतत्वाद्, यथा सिद्धस्य तदन्यस्य च द्रव्यात्मा अस्ति उपयोगात्मा चोपयोगलक्षणत्वात् जीवानां, एतदेवाह-'जस्स दवियाया तस्स नाणाया भयणाए'त्ति यस्य द्रव्यात्मा तस्य ज्ञानात्मा स्यादस्ति, यथा सम्यग्दर्शनिनां, स्यान्नास्ति यथा मिथ्यादृष्टीनां, इत्येवं भजना, यस्य ज्ञानात्मा तस्य द्रव्यात्मा नियमादस्ति, यथा सिद्धस्येति, तथा 'जस्स दवियाया तस्स दंसणाया णियमा अत्थि'त्ति यथा सिद्धस्य केवलदर्शनं, 'जस्सवि दंसणाया तस्स दवियाया णियमं अत्थि'त्ति यथा चक्षुर्दर्शनादिदर्शनवतां जीवत्वमिति, 'जस्स दवियाया तस्स चरित्ताया भयणाए'त्ति, यतस्सिद्धस्याविरतस्य वा द्रव्यात्मत्वे सत्यपि चारित्रात्मा नास्ति विरतानां चास्ति इति भजनया, 'जस्स पुण चरित्ताया तस्स दवियाया णियमं अत्थि'त्ति, चारित्रिणां जीवत्वाव्यभिचारत्वात्, 'एवं वीरियायाएवि समं'ति यथा द्रव्यात्मनश्चारित्रात्मना सह भजनोक्ता नियमश्च एवं वीर्यात्मनापि सहेति, तथाहि-यस्य द्रव्यात्मा तस्य वीर्यात्मा नास्ति, यथा सकरणवीर्यापेक्षया सिद्धस्य, तदन्यस्य त्वस्तीति भजना, वीर्यात्मनस्तु द्रव्यात्माऽस्त्येव यथा संसारिणामिति। अथ कषायात्मना सहान्यानि षट् पदानि चिन्त्यन्ते-'जस्स ण'मित्यादि, यस्य कषायात्मा तस्य योगात्माऽस्त्येव, न हि सकषायो-

ऽयोगी स्यात्, यस्य योगात्मा तस्य कषायात्मा स्याद्वा न वा, सयोगानां सकषायाणामकषायाणां च भावादिति, 'एवं उवओगायाएऽवी'ति अयमर्थः—यस्य कषायात्मा तस्योपयोगात्माऽवश्यं स्यात्, उपयोगरहितस्य कषायाणामभावात्, यस्य पुनरुपयोगात्मा तस्य कषायात्मा भजनया, उपयोगात्मतायां सत्यामपि सकषायाणामेव कषायात्मा स्यात् निष्कषायाणां तु नासाविति भजनया, तथा 'कसायाया नाणाया य परोप्परं'ति, अयमर्थः—कथं ?, यस्य कषायात्मा तस्य ज्ञानात्मा स्यादस्ति स्यान्नास्ति, यतः कषायिणः सम्यग्दृष्टेर्ज्ञानात्माऽस्ति मिथ्यादृष्टेरसौ नास्तीति भजना, तथा यस्य ज्ञानात्माऽस्ति तस्य कषायात्मा स्यादस्ति, ज्ञानिनां कषायभावात् तदभावान्नेति भजना, 'जहा कसायाया उवओगाया य तहा कसाया दंसणाया य'त्ति अतिदेशः, तस्माच्चेदं लब्धं—'जस्स कसायाया तस्स दंसणाया णियमं अत्थि'त्ति, दर्शनरहितस्य घटादेः कषायात्मनोऽभावात् 'जस्स पुण दंसणाया तस्स कसाया सिय अत्थि सिय नत्थि'त्ति, दर्शनवतां कषायसद्भावात् तदभावान्नेति, दृष्टान्तार्थस्तु प्राग्वत्, 'कसायाया चरित्ताया य दोऽवि परोप्परं'ति भजना चैवम्—यस्य कषायात्मा तस्य चारित्रात्मा स्यादस्ति, कथं ?, कषायिणां चारित्रसद्भावात् प्रमत्तयतीनामिव, तदभावान्नेति असंयतानामिव, तथा यस्य चारित्रात्मा तस्य कषायात्मा स्यान्नास्ति, कथं ?, सामायिकादिचारित्रवतां कषायभावात्, यथाख्यातचारित्रिणां तदभावादिति, 'जहा कसायाया जोगाया य तहा कसायाया वीरियाया य भाणियव्वाओ'त्ति दृष्टान्तः प्राग्वत्, दार्ष्टान्तिकस्त्वेवम्—यस्य कषायात्मा तस्य वीर्यात्मा नियमादस्ति, न हि कषायवान् वीर्यविकलोऽस्ति, यस्य कषायात्मा तस्य वीर्यात्मा भजनया, यतो वीर्यवान् सकषायोऽपि स्यात्, यथाऽसंयतः, अकषायोऽपि यथा केवलीति ।अथ योगात्मा अग्रेतनपदपञ्चकेन सह चिन्त्यः, 'एवं जहा कसायायाए वत्तव्वया भणिया जहा जोगायाएवि

उवरिमाहिं समं भाणियव्व'त्ति, सा चैवम्—यस्य योगात्मा तस्योपयोगात्मा नियमात्, यथा सयोगानां, यस्य पुनरुपयोगात्मा तस्य योगात्मा स्यादस्ति यथा सयोगानां, स्यान्नास्ति यथा अयोगिनां सिद्धानां वेति १, तथा यस्य योगात्मा तस्य ज्ञानात्मा स्यादस्ति सम्यग्दृष्टीनामिव, स्यान्नास्ति मिथ्यादृष्टीनामिव, यस्य ज्ञानात्मा तस्यापि योगात्मा स्यादस्ति, योगिनामिव, स्यान्नास्त्ययोगिनामिवेति २, तथा यस्य योगात्मा तस्य दर्शनात्माऽस्त्येव, योगिनामिव, यस्य च दर्शनात्मा तस्य योगात्मा स्यादस्ति योगिनामिव, स्यान्नास्त्ययोगिनामिव ३, तथा यस्य योगात्मा तस्य चारित्रात्मा स्यादस्ति, विरतानामिव, स्यान्नास्ति अविरतानामिव, यस्यापि चारित्रात्मा तस्य योगात्मा स्यादस्ति सयोगचारित्रवतामिव, स्यान्नास्त्ययोगिनामिवेति, वाचनान्तरे पुनरिदं दृश्यते—'जस्स चरित्ताया तस्स जोगाया नियमं'ति तत्र चारित्रस्य प्रत्युपेक्षणादिव्यापाररूपस्य विवक्षितत्वात् तस्य च योगाविनाभावित्वाद्यस्य चारित्रात्मा तस्य योगात्मा नियमादित्युच्यते ४, तथा यस्य योगात्मा तस्य वीर्यात्माऽस्त्येव, योगसद्भावे वीर्यस्यावश्यंभावात्, यस्य तु वीर्यात्मा तस्य योगात्मा भजनया, यतो वीर्यविशेषवान् सयोग्यपि स्याद्यथा सयोग्यपि केवल्यादिः, अयोग्यपि स्याद्यथा अयोगिकेवलीति। अथोपयोगात्मना सहान्यानि चत्वारि चिन्त्यंते, यथा यस्योपयोगात्मा तस्य ज्ञानात्मा स्यादस्ति, यथा सम्यग्दृशां, स्यान्नास्ति यथा मिथ्यादृशां, यस्य च ज्ञानात्मा तस्यावश्यमुपयोगात्मा, सिद्धानामिव १, तथा यस्योपयोगात्मा तस्य दर्शनात्माऽस्त्येव, यस्यापि दर्शनात्मा तस्योपयोगात्माऽस्त्येव, यथा सिद्धादीनामिव २, तथा यस्योपयोगात्मा तस्य चारित्रात्मा स्यादस्ति स्यान्नास्ति, यथा संयतानामसंयतानां च, यस्य तु चारित्रात्मा तस्योपयोगात्माऽस्त्येव, यथा संयतानां ३ तथा यस्योपयोगात्मा तस्य वीर्यात्मा स्यादस्ति संसारिणामिव, स्यान्नास्ति सिद्धानामिव, यस्य पुनर्वीर्यात्मा तस्यो-

पयोगात्माऽस्त्येव, यथा संसारिणामिव ४। अथ ज्ञानात्मना सहान्यानि त्रीणि चिन्त्यन्ते, तत्र यस्य ज्ञानात्मा तस्य दर्शनात्माऽस्त्येव
सम्यग्दृशामिव, यस्य दर्शनात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृशां, स्यान्नास्ति यथा मिथ्यादृशां, अत एवोक्तं—'भय-
णाए'त्ति, तथा 'जस्स नाणाया तस्स चरित्ताया सिय अत्थि', संयतानामिव 'सिय णत्थि'त्ति असंयतानामिव, 'जस्स पुण
चरित्ताया तस्स नाणाया नियमं अत्थि' ज्ञानं विना चारित्रस्याभावात्, तथा 'नाणाये'त्यादि, अस्यार्थो—यस्य ज्ञानात्मा
तस्य वीर्यात्मा स्यादस्ति, केवल्यादीनामिव, स्यान्नास्ति सिद्धानामिव, यस्यापि वीर्यात्मा तस्य ज्ञानात्मा स्यादस्ति सम्यग्दृष्टेरिव,
स्यान्नास्ति मिथ्यादृश इव ३। अथ दर्शनात्मना सह द्वे चिन्त्येते, भावना चात्र यस्य दर्शनात्मा तस्य चारित्रात्माऽस्ति संयता-
नामिव, स्यान्नास्त्यसंयतानामिव, यस्य चारित्रात्मा तस्य दर्शनात्माऽस्त्येव, साधूनामिव, यस्य दर्शनात्मा तस्य वीर्यात्मा स्या-
दस्ति संसारिणामिव, स्यान्नास्ति सिद्धानामिव, यस्य वीर्यात्मा तस्य दर्शनात्माऽस्त्येव, संसारिणामिव २। अथान्तिमपदयोर्या-
जना—यस्य चारित्रात्मा तस्य वीर्यात्माऽस्त्येव, वीर्यं विना चारित्रस्याभावात्, यस्य वीर्यात्मा तस्य चारित्रात्मा स्यादस्ति, साधू-
नामिव, स्यान्नास्ति असंयतानामिव। अथैषामेवात्मनामल्पबहुत्वमाह, तत्र 'सव्वत्थोवा चरित्ताय'त्ति चारित्रिणां संख्यातत्वात्
'नाणायाउ'त्ति सिद्धादीनां सम्यग्दृशां चारित्रिभ्योऽनन्तगुणत्वात्, 'कसायाउ'त्ति सिद्धेभ्यः कषायोदयवतामनन्तगुणत्वात्,
'जोगायाउ'त्ति अपगतकषायोदयैर्योगवद्भिरधिकाः, 'वीरियाउ'त्ति अयोगिभिरधिका इत्यर्थः, अयोगिनां सवीर्यत्वात्, 'उव-
ओगदवियदंसणायाओ तिण्णिवि'त्ति परस्परापेक्षया तुल्याः, सर्वेषां सामान्यजीवरूपत्वात्, वीर्यात्मभ्यः सकाशादुपयोगद्रव्य-
दर्शनात्मानो विशेषाधिकाः, यतो वीर्यात्मानः सिद्धाश्च मीलिता उपयोगाद्यात्मानः स्युः, ते च वीर्यात्मभ्यः सिद्धराशिना अधि-

कास्स्युः, अत्र गाथा—"कोडिंसहस्सपुहुत्तं जईण तो थोवियाउ चरणाया। नाणाया णंतगुणा पडुच्च सिद्धे य सिद्धाओ ॥१॥ होंति कसायायाओ णंतगुणा जेण ते सरागाणं। जोगाया भणियाओ अजोगिवज्जाण तो अहिया ॥२॥ जं सेलेसिगयाणं लद्धी विरियं तओ समधियाओ। उवओगदवियदंसण सव्वजियाणं तओ अहिया ॥३॥" अथात्मनः स्वरूपमाह—'आया भंते'त्ति (सू. ४६७) आत्मा ज्ञानं, योऽयमात्माऽसौ ज्ञानं न तयोर्भेदः, अथात्मनोऽन्यत् ज्ञानं इति प्रश्नः, उत्तरं तु आत्मा स्यात् ज्ञानं, सम्यक्त्वे सति तस्य मतिज्ञानादिस्वभावत्वात्, तस्य स्यादज्ञानं मिथ्यात्वे सति तस्य मत्यज्ञानादिस्वरूपत्वात्, ज्ञानं पुनर्नियमादात्मा आत्मधर्म्मत्वात् ज्ञानस्य, न च सर्वथा धर्मो धर्म्मिणो भिद्यते, सर्वथा भेदे हि विप्रकृष्टगुणिनो गुणमात्रोपलब्धौ प्रतिनियतगुणिविषय एव संशयो न स्यात्, तदन्येभ्योऽपि तस्य भेदाविशेषाद्, दृश्यते च यदा कश्चिद् दूरतः किमपि शुक्लं पश्यति तदा किमियं पताका किमियं बलाकेत्येवं प्रतिनियतगुणिविषयोऽसौ, नापि धर्म्मिणो धर्म्मः सर्वथैवाभिन्नः, सर्वथैवाभेदे हि संशयानुत्पत्तिरेव, गुणग्रहणत एव गुणिनोऽपि गृहीतत्वाद्, अतः कथञ्चिदभेदपक्षमाश्रित्य ज्ञानं पुनर्नियमादात्मेत्युच्यते, इह चात्मा ज्ञानं व्यभिचरति, ज्ञानं त्वात्मानं न व्यभिचरति, खदिरवनस्पतिवदिति सूत्रार्थः। अमुमेवार्थं दण्डके निरूपयन्नाह—'आये'त्यादि, नारकाणामात्मा—आत्मस्वरूपं ज्ञानं उतान्यन्नारकाणां ज्ञानं?, तेभ्यो व्यतिरिक्तमित्यर्थः, इति प्रश्नः, उत्तरं तु आत्मा नारकाणां स्यात् ज्ञानं, सम्यग्दर्शनभावात्, स्यादज्ञानं मिथ्यादृग्भावात्, ज्ञानं पुनः 'से'त्ति तन्नारकसम्बन्धि आत्मा, न तद्व्यतिरिक्त इत्यर्थः, 'आया भंते! पुढवि'त्ति आत्मा—आत्मस्वरूपमज्ञानं उतान्यत्र तेषां, उत्तरं तु—आत्मा तेषामज्ञानरूपः, नान्यत् तेभ्य इति भावार्थः। दर्शनसूत्राण्यप्येवं—नवरं सम्यग्दृष्टिमिथ्यादृष्ट्योर्दर्शनस्याविशिष्टत्वात् आत्मा दर्शनं दर्शनमप्यात्मैवेति वाच्यं, यत्र हि धर्म्मविपर्ययो नास्ति तत्र नियम

एवोपनीयते, न व्यभिचारो, यथेह दर्शने, यत्र तु विपर्ययोऽस्ति तत्र व्यभिचारो नियमश्च, यथा ज्ञाने, आत्मा ज्ञानरूपोऽज्ञानरूपश्चेति व्यभिचारः, ज्ञानं त्वात्मैवेति नियमः ॥ आत्माधिकाराद्रत्नप्रभादिभावेन आत्मत्वादि चिन्तयन्नाह—'आया भंते'त्ति (सू. ४६८)अतति—गच्छति तांस्तान् पर्यायानित्यात्मा, ततश्चात्मा—सद्रूपा रत्नप्रभापृथ्वी 'अन्न'त्ति अनात्मा, असद्रूपेत्यर्थः, 'सिया आया सिय नो आय'त्ति स्यात्सती स्यादसती 'सिय अवत्तव्व'त्ति आत्मत्वेनानात्मत्वेन च व्यपदेष्टुमशक्यं वस्त्विति भावः, कथमवक्तव्यमित्याह—आत्मेति नोआत्मेति च वक्तुमशक्यमित्यर्थः,'अप्पणो आइट्ठे'ति आत्मनः—स्वस्य रत्नप्रभाया एव वर्णादिपर्यायैरादिष्टे—आदेशे सति, तैर्व्यपदिष्टा सतीत्यर्थः, आत्मा, स्यात् स्वपर्यायापेक्षया सतीत्यर्थः,'परस्स आइट्ठे नोआय'त्ति परस्य—शर्करादिपृथ्व्याख्यस्य पर्यायैरादिष्टे—आदेशे सति, तैर्व्यपदिष्टा सतीत्यर्थः, नोआत्मा—अनात्मा स्यात्, पररूपापेक्षया असतीत्यर्थः, 'तदुभयस्स आइट्ठे'त्ति तयोः—स्वपरयोरुभयं तदुभयं तस्य पर्यायैरादिष्टे—आदेशे सति, तदुभयपर्यायैर्व्यपदिष्टेत्यर्थः, अवक्तव्यं—अवाच्यं वस्तु स्यात्, तथाहि—न ह्यसौ आत्मेति वक्तुं शक्या, परपर्यायापेक्षया अनात्मत्वात् तस्याः, नाप्यनात्मेति वक्तुं शक्या, स्वपर्यायापेक्षया तस्या आत्मत्वादिति, अवक्तव्यत्वं च आत्मानात्मशब्दापेक्षयैव, न तु सर्वथा, अवक्तव्यशब्देनैव तस्या उच्यमानत्वात्, अनभिलाप्यभावानामपि भावपदार्थवस्तुप्रभृतिशब्दैरनभिलाप्यशब्देनाभिलाप्यत्वादिति, एवं परमाणुसूत्रमपि। द्विप्रदेशिकसूत्रे षड् भङ्गाः, तत्राद्यास्त्रयः सम्पूर्णस्कन्धापेक्षाः प्रागुक्ता एव, तदन्ये तु त्रयो देशापेक्षाः, तत्र गोयमेत्यत आरभ्य व्याख्यायते—'अप्पणो'त्ति तस्य पर्यायैः 'आदिट्ठे'त्ति आदेशे सति, आदिष्ट इत्यर्थः, द्विप्रदेशिकस्कन्धः, आत्मा स्यात् १ एवं परस्य पर्यायैरादिष्टेऽनात्मा २ तदुभयस्य द्विप्रदेशिकस्कन्धः तदन्यस्कन्धलक्षणस्य पर्यायैरादिष्टोऽसाववक्तव्यं वस्तु स्यात्, कथं?, ॥१९१॥

आत्मेति चानात्मेति च ३, तथा द्विप्रदेशत्वात् तस्य देश एक आदिष्टः, सद्भावप्रधानास्सत्तागताः पर्यवा यस्मिन् स सद्भावपर्यवः, द्वितीयस्तु देश आदिष्टः असद्भावपर्यायैः, परपर्यायैरित्यर्थः, परपर्यवाश्च तदीयद्वितीयदेशसम्बन्धिनो वस्त्वन्तरसम्बन्धिनो वा, ततश्चासौ द्विप्रदेशिकस्कन्धः क्रमेणात्मा वा नो आत्मा वा ४ तस्य च देश आदिष्टस्सद्भावपर्यवः देशश्चोभयपर्यवः ततोऽसावात्मा चावक्तव्यं चेति ५, तथा तस्यैव आदिष्टोऽसद्भावपर्यवः देशस्तूभयपर्यवस्ततोऽसौ नोआत्मा अवक्तव्यं स्यादिति ६, सप्तमः पुनः- आत्मा च नोआत्मा चावक्तव्यं चेति रूपो न स्यात् द्विप्रदेशिके, द्व्यंशत्वादस्य, त्रिप्रदेशिकादौ तु स्यादिति सप्तभङ्गी, त्रिप्रदेशिक- स्कन्धे त्रयोदश भङ्गाः, तत्र प्रागुक्तेषु सप्तस्वाद्याः सकलादेशास्त्रयस्तथैव, तदन्येषु त्रिषु त्रयस्त्रयः एकवचनबहुवचनभेदात्, सप्त- मस्त्वेकविध एव, स्थापना चेयम् ॥ यच्चेह प्रदेशद्वयेऽप्येकवचनं क्वचित् तत्तस्य प्रदेशद्वयस्यैकप्रदेशावगाढत्वादिहेतुना एकत्वविवक्ष- णात्, भेदविवक्षायां च बहुवचनमिति, चतुष्प्रदेशिकोऽप्येवम्, नवरं एकोनविंशतिर्भङ्गाः, तत्र त्रयस्सकलादेशाः तथैव, शेषेषु चतुर्षु प्रत्येकं चत्वारो विकल्पाः, ते चैवं चतुर्थादिषु त्रिषु वाच्याः, चतु- ष्प्रदेशिकस्कन्धे तत्रैव द्विकयोगः, स्थापना चैवम् ॥ अथ सप्तमे त्वेवं त्रिकयोगस्थापना, अथ पञ्चप्रदेशिके त्वेवं द्वाविंशतिः, तत्राद्यास्त्रयः सकलाः, तदुत्तरेषु च त्रिषु प्रत्येकं चत्वारो विकल्पास्तथैव १२, सप्तमे तु सप्त, तत्र त्रिकयोगे किलाष्टौ भङ्गाः स्युः, तेषु च सप्तैवेह ग्राह्याः, तत्स्थापना यथा, अष्टमस्तु एकस्तेषु न पतत्यसम्भ-

| आ. | नो. | अव. |
|---|---|---|
| १ | १ | १ |
| एककयोग ३ | | |

| आ. | नो. | आ. | अव. | नो. | अव. | आ.नो.अव. |
|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | त्रिकयोग १ |
| १ | २ | १ | २ | १ | २ | |
| २ | १ | २ | १ | २ | १ | |
| द्विकयोग त्रिक १ | | २ द्विकयोग त्रिकयोग | | ३ द्विकयोग त्रिक | | |

| | |
|---|---|
| १ | १ |
| १ | २ |
| २ | १ |
| २ | २ |

वाद्, इदमेवाह—'तिगसंयोगे'इत्यादि, अष्टमस्तु न पतति स पुनरयं २२२। षट्प्रदेशिकस्कन्धे त्रयोविंशतिरिति, अथैषामेव योगानां व्यक्तिर्विशेषतो मुग्धबोधाय विव्रियते यथा—अथ परमाणुसूत्रे द्विप्रदे० त्रिप्रदेशिकस्कन्धे एकद्विकत्रिकयोगाश्चिन्त्यन्ते यथा 'सिय आया'इत्यादि, 'अवत्तव्वं'ति अवक्तव्यस्वरूपं सूत्रलिखितमेवास्ति, तत्कथं ? 'सिय आया नो आया' स्वरूपपररूपतदुभयत्वेनात्मा नो आत्माऽवक्तव्यमुच्यते, एवमेकत्वबहुत्वाभ्यामग्रेऽपि सूत्रपाठसिद्धमेवावक्तव्यपदं ज्ञेयं, अथ एककयोगाः—आत्मा १ नोआत्मा १ अवक्तव्यं १, जाता एककयोगास्त्रयः 'सिय आया णोआया य'इत्यादि, अथ द्विकयोगाः—आत्मा नोआत्मा १ आत्मा नोआत्मानः २ आत्मानः नो आत्मा ३ आत्मा अवक्तव्यं ४ आत्मा अवक्तव्यानि ५ आत्मानः अवक्तव्यं ६ नोआत्मा अवक्तव्यं ७ नोआत्मा अवक्तव्यानि ८ नोआत्मानः अवक्तव्यं ९ जाता द्विकयोगा ९ एकत्वबहुत्वाभ्यां, अथ आत्मा नोआत्मा अवक्तव्यमिति त्रिकयोगस्त्वेक एव. एवं सर्वे जातास्त्रयोदश।

| | | |
|---|---|---|
| १ | १ | १ |
| १ | १ | २ |
| १ | २ | १ |
| १ | २ | २ |
| २ | १ | १ |
| २ | १ | २ |
| २ | २ | १ |

अथ चतुष्प्रदेशिकस्कन्धेऽप्येककयोगास्त्रयः, यथा आत्मा १ नोआत्मा २ अवक्तव्यं ३, अथ द्विकयोगाः 'सिय आया णो आया' इत्यादि ४, यथा आत्मा नोआत्मा १ आत्मा नोआत्मानः २ आत्मानो नोआत्मा ३ आत्मानो नोआत्मानः 'सिय आया य अवत्तव्वं'इत्यादि ४, यथा आत्मा अवक्तव्यं १ आत्मा अवक्तव्यानि २ आत्मानो अवक्तव्यं ३ आत्मानो अवक्तव्यानि ४ 'सिय णो आया य अवत्तव्वं'इत्यादि ४, यथा नोआत्मा अवक्तव्यं १ नोआत्मा अवक्तव्यानि २ नोआत्मानः अवक्तव्यं ३ नोआत्मानः अवक्तव्यानि ४, एवं जाता द्विकयोगा द्वादश, अथ त्रिकयोगाः 'सिय आया य णो आया य अवत्तव्वं आयाइ य णो आयाइय'इत्यादि ४, यथा आत्मा नोआत्मा अवक्तव्यं १ आत्मा नोआत्मा अव्यक्तव्यानि २ आत्मा नोआत्मानः अव-

क्तव्यं ३ आत्मा नोआत्मानो अवक्तव्यानि ४, एवमेकत्वबहुत्वाभ्यां सर्वे जाताः १९। अथ पञ्चप्रदेशिकस्कन्धे एकद्विकयोगाश्चिन्त्यन्ते, यथा सिय आया सिय णोआया सिय अवत्तव्वं आयाइ य णोआयाइ य' इत्यादि, आत्मा १ नोआत्मा १ अवक्तव्यं १, जाता एककयोगास्त्रयः, अथ द्विकयोगाः प्राग्वद् द्वादश ज्ञेयाः, अथ त्रिकयोगाः सप्त, यथा–आत्मा नोआत्मा अवक्तव्यं १ आत्मा नोआत्मा अवक्तव्यानि २ आत्मा नोआत्मानः अवक्तव्यं ३ आत्मा नोआत्मानः अवक्तव्यानि ४ आत्मानः नोआत्मा अवक्तव्यं ५ आत्मानः नोआत्मा अवक्तव्यानि ६ आत्मानः नोआत्मानः अवक्तव्यं ७ एवं सर्वे जाताः २२, षट्प्रदेशिके एककयोगाः प्रागुक्ताः, द्विकयोगाः प्रागुक्ता १२, त्रिकयोगाः प्रागुक्तास्सप्त, अष्टमश्चायं–आत्मानः नोआत्मानः अवक्तव्यानि ८, एवं सर्वेऽष्टमक्षेपे जातास्त्रयोविंशतिभेदाः॥ द्वादशशते दशम उद्देशकः

इतिश्रीलक्ष्मीसागरसूरिशिष्यश्रीसुमतिसाधुसूरिशिष्यश्रीहेमविमलसूरिविजयराज्ये श्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तहंसगणिशिष्यपं० दानशेखरगणिसमुद्धृतायां भगवतीलघुवृत्तौ द्वादशशतविवरणं सम्पूर्णम्॥

अथ त्रयोदशं शतमारभ्यते, यथा "पुढवी १ देवा २ ऽणंतर ३, पुढवी ४ आहारमेव ५ उववाओ ६। भासा ७ कम्म ८ ऽणगारे, केयाघडिया ९ समुग्घाए १०॥१॥" (* ७२) 'पुढवी'त्ति नरकपृथ्वीवाच्यः प्रथमः, 'देव'त्ति देवप्ररूपणार्थो द्वितीयः 'अणंतर'त्ति अनन्तराहारका नारका इत्याद्यर्थवाच्यस्तृतीयः 'पुढवि'त्ति पृथ्वीगतविचारार्थश्चतुर्थः, नारकाद्याहारवाच्यः पञ्चमः 'उववाए'त्ति नरकाद्युपपातार्थः षष्ठः 'भास'त्ति भाषार्थः सप्तमः, 'कम्म'त्ति कर्म्मप्रकृतिवाच्यः अष्टमः, 'अणगारे केया-

घडियाए'त्ति अनगारो—भावितात्मा लब्धिसामर्थ्यात् 'केयाघडिए'त्ति रज्जुबद्धघटिकाहस्तः सन् नभसि गच्छति इत्याद्यर्थवाच्यो नवमः, 'समुग्घाए'त्ति समुद्घातवाच्यो दशमः ॥ 'केवइया काउलेसा उववज्जंति'त्ति (सू. ४६९) रत्नप्रभापृथ्व्यां कापोतलेश्या एवोत्पद्यन्ते, न कृष्णलेश्यादय इति कापोतलेश्यानेवाश्रित्य प्रश्नः कृतः, 'केवइया कण्हपक्खिया'त्ति इत्यादि, एषां च लक्षणमिदम्—जेसिमवड्ढो पोग्गलपरियट्टो सेसओ य संसारो। ते सुक्कपक्खिया खलु इयरे पुण कण्हपक्खीया॥ १॥" इति, 'चक्खुदंसणी न उववज्जंति'त्ति इन्द्रियत्यागेन तत्रोत्पत्तेरिति, तर्हि अचक्षुर्दर्शनिनः कथमुत्पद्यन्ते ?, उच्यते, इन्द्रियानाश्रितस्य सामान्योपयोगमात्रस्याचक्षुर्दर्शनशब्दाभिधेयस्योत्पादसमयेऽपि भावादचक्षुर्दर्शनिन उत्पद्यन्त इत्युच्यत इति, 'इत्थिवेयगे'त्यादि, स्त्रीपुरुषवेदा नोत्पद्यन्ते, भवप्रत्ययान्नपुंसकवेदत्वात्तेषां, 'सोइंदिओवउत्ते'इत्यादि, श्रोत्राद्युपयुक्ता नोत्पद्यन्ते, इन्द्रियाणां तदानीमभावात्, 'नोइंदिओवउत्ता उववज्जंति'त्ति नोइन्द्रियं—मनः, तत्र च यद्यपि मनःपर्याप्त्यभावे द्रव्यमनो नास्ति तथापि भावमनसश्चैतन्यरूपस्य तदा भावात् तेनोपयुक्तानामुत्पत्तेः नोइन्द्रियोपयोगयुक्ता उत्पद्यन्ते इत्युच्यते, 'मणजोगि'त्ति मनोयोगिनो वाग्योगिनश्च नोत्पद्यन्ते, उत्पत्तिसमयेऽपर्याप्तत्वेन मनोवाचोरभावादिति, 'कायजोगी उववज्जंति'त्ति सर्वसंसारिणां कार्मणयोगस्य सदा सद्भावादिति॥ अथ रत्नप्रभानारकाणामेवोद्वर्त्तनामभिधातुमाह—'असण्णी न उव्वट्टंति'त्ति उद्वर्त्तना हि परभवप्रथमसमये स्यात्, न च नारकोऽसंज्ञिषूत्पद्यते, ततस्तेऽसंज्ञिनस्सन्तो नोद्वर्त्तन्त इत्युच्यते, 'एवं विभंगनाणी न उव्वट्टंति' इत्यपि भावनीयं, यतो विभङ्गज्ञानिनो नारकाः पतितविभङ्गज्ञानिनस्सन्तश्च्यवन्त इत्युच्यत इति, शेषाणि तु पदानि उत्पादवद् व्याख्येयानि, उक्तं च चूर्ण्याम्—'असण्णिणो य विभंगिणो य उव्वट्टणाए वज्जेज्जा। दोसुवि य चक्खुदंसी मणवय तह इंदियाइं च ॥१॥'त्ति।

अनन्तरं रत्नप्रभानारकाणामुत्पादोद्वर्त्तनयोः परिमाणमुक्तं, अथ तेषामेव सत्तायां तदाह—'केवइया अणंतरोववण्णग'त्ति कियन्तः प्रथमसमयोत्पन्ना इत्यर्थः, 'परंपरोववण्णग'त्ति उत्पत्तिसमयापेक्षया द्व्यादिसमयेषु वर्त्तमानाः, 'अणंतरावगाढ'त्ति विवक्षितक्षेत्रे प्रथमसमयावगाढाः, 'परंपरोवगाढ'त्ति विवक्षितक्षेत्रे द्वितीयादिः समयोऽवगाहे येषां ते परम्परावगाढाः, 'चरम'त्ति चरमो नारकभवेषु स एव भवो येषां ते चरमाः, नारकभवस्य वा चरमसमये वर्त्तमानाः, अचरमास्त्वन्ये, 'असण्णी सिय अत्थि णत्थि'त्ति असंज्ञिभ्य उद्धृत्य ये नारकत्वेनोत्पन्नास्ते अपर्याप्तकावस्थायामसंज्ञिनः भूतभावत्वात्, ते चाल्पा इतिकृत्वा 'सिय अत्थी'त्याद्युक्तं, मानमायालोभकषायोपयुक्तानां नोइन्द्रियोपयुक्तानां अनन्तरोपपन्नानां अनन्तरावगाढानां अनन्तराहारकाणां अनन्तरपर्याप्तकानां च कादाचित्कत्वात् 'सिय अत्थी'त्यादि वाच्यं, शेषाणां च बहुत्वात् सङ्ख्याता इति वाच्यं, अनन्तरं सङ्ख्यातविस्तृतनारकावासनारकवक्तव्यतोक्ता, अथ तद्विपर्ययमाह—'तिण्णि समय'त्ति उववज्जंति उव्वट्टंति पण्णत्तिशब्देनेह सत्ता गृह्यते, एवं एते त्रयो गमाः, ओहिनाणी ओहिदंसणी संखेज्जा उव्वट्टावेयव्वत्ति, कथं ?, ते हि तीर्थंकरादय एव स्युरिति ते स्तोकाः, स्तोकत्वाच्च सङ्ख्याता एव, नवरं असण्णी तिसुवि गमएसु न भण्णइत्ति, कस्मात् ?, उच्यते, असंज्ञिनः प्रथमायामेवोत्पद्यन्ते, 'असण्णी खलु पढमं'ति वचनात्, 'णाणत्तं लेसासु, लेसाओ जहा पढमसए'त्ति इहाद्यपृथ्वीद्वयापेक्षया तृतीयादिपृथ्वीषु नानात्वं लेश्यासु स्यात्, ताश्च यथा प्रथमशते तथाऽध्येयाः, तत्र गाथेयम्—"काऊय दोसु तइया मीसिया नीलिया चउत्थीए। पंचमियाए मीसा किण्हा तत्तो परमकिण्हा ॥१॥" 'नवरं ओहिदंसणी ओहिनाणी न उव्वट्टंति'त्ति, कस्मात् ?, उच्यते, अवधिदर्शनिनः पङ्कप्रभादिच्युताः नारकास्तीर्थंकरत्वेन नोत्पद्यन्त इत्यर्थः, 'जाव अपइट्ठाणे'त्ति यावत्करणात् काले १ महाकाले २ रोरुए ३ माह-

रोरुए ४ इति दृश्यं, इह च मध्यम एव सङ्ख्येयविस्तृत इति, नवरं 'तिसु नाणेसु न उववज्जंति'त्ति, 'न उव्वट्टंति'त्ति सम्यक्त्वभ्रष्टानामेव तत्रोत्पादात्, तत उद्वर्त्तना च, आद्याज्ञानत्रिके न उत्पद्यन्ते नापि चोद्वर्त्तन्त इति, 'पण्णत्ती तेसु तहेव अत्थि'त्ति एतेषु पञ्चसु नरकावासेसु कियन्त आभिबोधिकज्ञानिनः श्रुत० अवधिज्ञानिनश्च प्रज्ञप्ता इति, तृतीयगमे तथैव प्रथमादिपृथ्वीष्विव सन्ति, तत्रोत्पन्नानां सम्यग्दर्शनलाभे मत्यादिज्ञानत्रयभावादिति ॥ 'नो सम्मामिच्छदिट्ठी नेरइया उववज्जंति'त्ति (सू. ४७०) 'न सम्ममीसो कुणइ कालं'ति वचनात् इति मिश्रदृष्टयो न म्रियन्ते, नापि तद्भवप्रत्ययं तेषामवधिज्ञानं येन मिश्रदृष्टयस्सन्तस्ते उत्पद्येरन् 'सम्ममिच्छदिट्ठीणेरइएहिं अविरहिया विरहिया व'त्ति कादाचित्कत्वेन तेषां विरहसम्भवादिति ॥ 'लेसट्ठाणेसु'त्ति (सू. ४७१) लेश्याभेदेषु 'संकिलिस्समाणेसु'त्ति अविशुद्धिं गच्छत्सु 'कण्हलेसं परिणमइ'त्ति कृष्णलेश्यां याति, 'संकिलिस्समाणेसु व'त्ति, 'विसुज्झमाणेसु व'त्ति प्रशस्तलेश्यास्थानेषु अविशुद्धिं गच्छत्सु अप्रशस्तलेश्यास्थानेषु विशुद्धिं गच्छत्सु, नीललेश्यां परिणमतीति भावः ॥ त्रयोदशशते प्रथमः ॥

अथ द्वितीये देवा उच्यन्ते—'संखिज्जवित्थडावि'त्ति (सू. ४७२) गाथा—"जंबुद्दीवसमा खलु भवणा जे हुंति सव्वखुड्डागा। संखेज्जवित्थडा मज्झिमा उ सेसा असंखेज्ज ॥१॥"त्ति, 'दोहिं वेदेहिं'ति, द्वयोरपि स्त्रीवेदपुंवेदरूपयोरुत्पद्यन्ते, तयोरेव तेषु भावात्, 'असण्णी उवट्टंति' असुरादीशानान्तदेवानां असंज्ञिष्वपि पृथिव्यादिषूत्पादात् 'ओहिनाणी ओहिदंसणी न उव्वट्टंति' असुराद्युद्धृतानां तीर्थंकरादित्वालाभात्, तीर्थंकरादीनामेवावधिमतामुद्वृत्तेः, 'पण्णत्तएसु तहेव'त्ति प्रज्ञप्तेषु प्रज्ञप्तपदोपलक्षितगमाधीतेषु असुरकुमारादिषु तथैव यथा प्रथमोद्देशके, 'कोहकसाई'त्यादि, क्रोधमानमायाकषायोदयवन्तो देवेषु कादाचित्का

अत उक्तं 'सिय अत्थी'त्यादि, लोभकषायोदयवन्तस्तु सार्वदिकाः, अत उक्तं—'संखेज्ज'त्ति, 'तिसुवि गमेसु चत्तारि लेस्साओ'त्ति 'उववज्जंति उव्वट्टंति पण्णत्ते'त्येवंलक्षणेषु त्रिष्वपि गमेषु चतस्रो लेश्याः—तेजोलेश्यान्ता उक्ताः, 'भवण वण पढमचउलेस'त्ति वचनात् एता ह्यसुरादीनां स्युरिति। 'जत्थ जत्तिया भवण'त्ति यत्र निकाये यावन्ति भवनलक्षाणि तत्र तावन्ति ज्ञेयानि, तद्यथा—चउसट्ठी असुराणं नागकुमाराण होइ चुलसीई। बावत्तरि कणगाणं वाउकुमाराण छन्नउई ॥१॥ दीवदिसाउदहीणं विज्जुकुमारिंदथणियमग्गीणं। जुयलाणं पत्तेयं बावत्तरिमो सयसहस्स ॥२॥"त्ति। व्यन्तरसूत्रे 'संखेज्जवित्थडे'ति, गाथा यथा—जंबुदीवसमा खलु उक्कोसेणं हवंति ते नगरा। खुड्डा खित्तसमा खलु विदेहसमगा उ मज्झिमगा ॥१॥"त्ति, ज्योतिष्कसूत्रे सङ्ख्याविस्तृता विमानावासाः 'एगसट्ठिभागं काऊण जोयण'मित्यादिना ग्रन्थेन प्रमातव्याः, नवरं एका तेजोलेश्या 'जोइसकप्पदुगे तेऊ'त्ति वचनात् उववज्जंतेसु पण्णत्तेसुत्ति, 'असण्णी नत्थि'त्ति व्यन्तरेष्वसंज्ञिन उत्पद्यन्ते इत्युक्तं, इह तु तन्निषेधः, प्रज्ञप्तेष्वपि तन्निषेधः, तत्रोत्पादाभावादिति, सौधर्मसूत्रे 'ओहिनाणी'त्यादि, ततश्च्युता यतस्तीर्थकरादयः स्युरित्येते अवधिज्ञानादयः च्यावयितव्याः, 'संखेज्जा चयंति'त्ति सङ्ख्यातानामेव तीर्थकरादित्वेनोत्पादिति, 'गम'त्ति उत्पादादय एत एव त्रयः सङ्ख्यातविस्तृतान् असङ्ख्यातविस्तृतांश्चाश्रित्य षड् गमाः, 'नवरं'ति स्त्रियः सनत्कुमारादिषु नोत्पद्यन्ते, न च सन्ति, तदुद्वृत्तौ तु स्युः, 'असण्णी तिसुवि'त्ति सनत्कुमारादिदेवानां संज्ञिभ्य एवोत्पादेन च्युतानां च संज्ञिष्वेव गमनेन गमत्रयेऽप्यसंज्ञित्वस्याभावादिति, 'एवं जाव सहस्सारो'त्ति सहस्रारान्ते तिरश्चामुत्पादेनासङ्ख्यातानां त्रिष्वपि गमेषु भावादिति, 'णाणत्तं वेमाणेसु लेसासु'त्ति नानात्वं विमानेषु 'बत्तीसट्ठावीसे'त्यादिगाथोक्तं ज्ञेयं, लेश्यासु पुनरिदम्—'तेऊ १ तेऊ २ तह तेउपम्ह ३ पम्हा य ४ पम्ह-

सुक्का य ५। सुक्का य ६ परमसुक्का सुक्काइविमाणवासीणं ७॥१॥"त्ति, इह च सर्वेष्वपि शुक्रादिदेवलोकेषु परमशुक्लेति। आन-
तादिसूत्रे 'संखेज्जवित्थडेसु'त्ति उत्पादेऽवस्थाने च्यवने च संख्यातविस्तृतत्वाद्विमानानां सङ्ख्याता एव स्युरिति भावः,
असङ्ख्यातविस्तृतेषु पुनरुत्पादच्यवनयोः सङ्ख्याता एव, यतो गर्भजमनुष्येभ्य एव आनतादिषूत्पद्यन्ते ततस्ते च सङ्ख्याता
एव, तथा आनतादिभ्यश्च्युता गर्भजमनुष्येष्वेवोत्पद्यन्ते अतस्समयेन सङ्ख्यातानामेवोत्पादच्यवनयोस्सम्भवः, अवस्थितिस्त्वस-
ङ्ख्यातानामपि स्याद्, असङ्ख्यातजीवितत्वेनैकदैव जीवितकालेऽसङ्ख्यातानामुत्पादादिति पण्णत्तेसु असंखेज्जा इति भण्यते,
नवरं 'नोइंदिओवउत्ते'त्यादि, प्रज्ञापकप्रश्ने असङ्ख्येया वाच्याः, नवरं नोइन्द्रियोपयुक्तादिपञ्चसु पदेषु सङ्ख्याता एव, शेषा-
मुत्पादावसर एव भावात्, उत्पत्तिः सङ्ख्यातानामेवेति दर्शितं प्राक्, 'पंच अणुत्तरोववाइय'त्ति तत्र मध्यमः सङ्ख्यातवि-
स्तृतः, योजनलक्षमानत्वात्, नवरं 'कण्हपक्खिए'त्यादि, इह सम्यग्दृष्टीनामेवोत्पादात् कृष्णपाक्षिकादिपदत्रयेऽपि निषेधः,
'अचरमावि खोडिज्जंति' येषां चरमोऽनुत्तरदेवभवः स एव ते चरमाः, तदितरे त्वचरमाः, ते च निषेध्याः, यतश्चरमा एव
मध्यमे विमाने उत्पद्यन्त इति, 'असंखिज्जवित्थडेसु'त्ति इहैत इति कृष्णपाक्षिकादयः, नवरं 'अचरमा अत्थि'त्ति यतो बाह्य-
विमानेषु पुनरुत्पद्यन्ते 'तिण्णि आलावग'त्ति सम्यग्दृष्टिमिथ्यादृष्टिमिश्रदृष्टिविषया इति, णवरं 'तिसु आलावगेसु'त्ति उपपत्तौ
च्यवने पण्णत्तालावए य मिथ्यादृष्टिः सम्यग्मिथ्यादृष्टिश्च न वाच्यः, अनुत्तरसुरेषु तस्यासम्भवादिति ॥ त्रयोदशशते द्वितीयः ॥
'अणंतराहार'त्ति (सू. ४७२) उत्पत्तिक्षेत्रप्राप्तिसमय एवाहारयन्तीत्यर्थः, 'निव्वत्तणय य'त्ति ततः शरीरनिर्वृत्तिः, 'एवं
परियारणे'त्यादि, परिचारणापदं प्रज्ञापनाचतुस्त्रिंशत्तमपदं, तत्रैवं-तओ परियाइयणया तओ परिणामणया तओ परियारणया

तओ पच्छा विउव्वणया ?, हंता गोयमा !'इत्यादि, 'परियाइयण'त्ति ततः पर्यापानं, अङ्गप्रत्यङ्गैः समन्तादापानमित्यर्थः, 'परिणामणय'त्ति आपीतस्य-उपात्तस्य परिणतिरिन्द्रियादिभागेन, 'परियारण'त्ति ततः शब्दादिविषयोपभोग इत्यर्थः, 'विउव्वणय'त्ति ततो विक्रिया नानारूपा इत्यर्थः ॥ त्रयोदशशते तृतीयः ॥

इह द्वारगाथे यथा—"नेरइय१ फास २ पणिही ३ निरयंते चेव ४ लोयमज्झंमि '५। दिसिविदिसाण य पवहा ६ पवत्तणं नत्थि काएहिं ७ ॥१॥ अत्थी पएसफुसणा ८ ओगाहणया य जीवमोगाढा ९ अत्थिपएस १० निसीयण ११ बहुस्समे १२ लोगसंठाणे १३ ॥२॥"त्ति, अनयोरर्थ उद्देशकाधिगमावगम्य एवेति, 'महंततराए चेव'त्ति(सू.४७४)आयामतः 'विच्छिण्ण'त्ति विष्कम्भतः 'महोवास'त्ति अवकाशो—बहूनां विवक्षितद्रव्याणां अवस्थानयोग्यं क्षेत्रं, महानवकाशं येषु ते, अतिशयेन महावकाशा महावकाशतराः, ते जनव्याप्ताः स्युरित्यत उच्यते—'महापइरिक्कतराए'त्ति महत् प्रतिरिक्तं—विजनमतिशयेन येषु ते तथा 'णो तहा महप्पवेसण'त्ति नो—नैव तथा—तेन प्रकारेण यथा षष्ठपृथिवीनारका अतिशयेन महत् प्रवेशनं—गत्यन्तरान्नरकगतौ जीवानां पुनः प्रवेशो येषु ते तथा, षष्ठपृथिव्यपेक्षया असङ्ख्यगुणहीनत्वात् तन्नारकाणामिति, नोशब्द उत्तरपदद्वयेऽपि सम्बन्धनीयः, यत एव नो महाप्रवेशनतरा अत एव 'आइण्णतराए चेव'त्ति नात्यन्तमाकीर्णाः, व्याप्ता नारकैरित्यर्थः, 'आउलतराए'त्ति ये नारकलोकास्तेषां अतिशयेन(न)आकुलतराः, किमुक्तं स्यात् ?—'अणोमाणतराए'त्ति अतिशयेनासंकीर्णा इत्यर्थः, वाचनान्तरे तु 'अणोयणतराए चेव'त्ति अनोदनतरा बहुजनाभावादतिशयेन मिथोनोदेन रहिता इत्यर्थः, 'महाकम्म०' आयुष्कवेदनीयादिकर्म्मणां महत्त्वात् 'महाकिरिय'त्ति कायिक्यादिक्रियाणां महत्त्वात् तत्काले कायमहत्त्वात् पूर्वकाले च महारम्भादित्त्वात् 'महासव'त्ति महाश्रवतराः

'महावेयणत्ति महाकर्म्मत्वात् 'नो तहे'त्यादिना निषेधः, विधिप्रतिषेधयोर्वाक्यप्रवृत्तेर्नोशब्दप्रवृत्तिः पदचतुष्टये, 'अप्पकिरिय'त्ति अवध्यादिकर्द्धेरल्पत्वात् 'अप्पज्जुइ'त्ति दीप्तेरभावात्, एतद्व्यतिरेकेणोच्यते 'नो तहा महिड्ढिय'त्ति नोशब्दः पदद्वये सम्बन्धनीयः। स्पर्शद्वारे 'जाव वणस्सइफासंति (सू. ४७५) यावत्करणात् तेजोवायुस्पर्शसूत्रे सूचिते, तत्र कश्चिदाह—ननु सप्तस्वपि पृथ्वीषु तेजस्कायिकवर्जपृथ्वीकायिकादिस्पर्शो नारकाणां युक्तः, तेषां तासु विद्यमानत्वात्, बादरतेजसां तु समयक्षेत्र एव सद्भावात् सूक्ष्मतेजसां तु तत्र सद्भावेऽपि स्पर्शनेन्द्रियाविषयत्वात् इति, अत्रोच्यते, इह तेजस्कायिकस्येवपरमाधार्मिककृतवह्निसदृशवस्तुस्पर्शस्तेजःकायिकस्पर्श इति व्याख्येयं, न तु साक्षात्तेजस्कायिकस्यैव, अथवा प्राग्भवान्तरानुभूततैजसस्कायिकपर्यायपृथ्वीकायिकादिजीवस्पर्शापेक्षया इदं व्याख्येयमिति। प्रणिधिद्वारे 'पणिहाए'त्ति (सू. ४७६) प्रणिधाय—प्रतीत्य 'सव्वमहंतिय'त्ति सर्वथा महती, अशीतियोजनसहस्राधिकलक्षप्रमाणत्वात् रत्नप्रभाया बाहल्यस्य, शर्कराप्रभाबाहल्यस्य च द्वात्रिंशत्सहस्राधिकयोजनलक्षमानत्वात्, 'सव्वखुड्डिया सव्वंतेसु'त्ति सर्वथा लघ्वी सर्वान्तेषु—पूर्वादिचतुर्दिक्षु, आयामविष्कम्भाभ्यां रज्जुप्रमाणत्वाद्रत्नप्रभायास्ततो महत्त्वात् शर्कराप्रभायाः; 'एवं जहा जीवाभिगमे', तच्चेदम्—'हंता गोयमा! दोच्चा णं पुढवी जाव सव्वखुड्डिया सव्वंतेसु, एवं एएणं अभिलावेणं जाव छट्ठिया पुढवी अहेसत्तमं पुढविं पणिहाय जाव सव्वखुड्डिया सव्वंतेसु'त्ति। निरयांतरद्वारे—'निरयपरिसामंतेसु'त्ति (सू. ४७७) निरयावासानां अंतेषु पार्श्वत इत्यर्थः, यथा जीवाभिगमे, तच्चेदम्—'आउकाइया तेउका० वाउका० वणस्सइकाइया ते णं जीवा महाकम्मतरा चेव जाव महावेयणतरा चेव ?, हंता गोयमा!' इत्यादि॥ लोकमध्यद्वारे 'लोगस्स आयाममज्झे'त्ति (सू. ३७८) आयाममध्यं ऊर्ध्वाधः प्रालम्ब्य लोकस्येत्युच्यते चउत्थीए पंकप्पभाए इत्यादि, रुचकाधो नवयोजन-

तथा दिक्त्रये तत्रैव वर्त्तमानेन धर्मास्तिकायप्रदेशेन स्पृष्टस्स षड्भिः, यश्चाध उपरि च दिक्चतुष्के तत्रैव वर्त्तमानेन धर्मास्तिकायप्रदेशेन स्पृष्टस्स सप्तभिर्धर्मास्तिकायप्रदेशैः स्पृष्टः स्यादिति १, एवमधर्मास्तिकायप्रदेशैरपि २, 'छहिं'ति एकस्य लोकाकाशप्रदेशस्यालोकाकाशप्रदेशस्य वा षड्दिग्व्यवस्थितैरेव स्पर्शनात् षड्भिरित्युक्तं ३, जीवास्तिकायसूत्रे 'सिय पुट्ठेत्ति यद्यसौ लोकाकाशप्रदेशो विवक्षितः स्पृष्टः, नो पुट्ठेत्ति यद्यसावलोकाकाशप्रदेशविशेषस्तदा न स्पृष्टः, जीवानां तत्राभावादिति, एवं पुद्गलाद्धाप्रदेशैः ६ ॥ 'एगे भंते! जीवत्थि'त्ति (सू. ४८२) जघन्यपदे लोकान्तकोणलक्षणे सर्वाल्पत्वात् तत्र स्पर्शकप्रदेशानां, चतुर्भिरिति, कथं?, अध उपरि वा एको, द्वौ च दिशोरेकस्तु यत्र जीवप्रदेश एवावगाढ इत्येवं, एकश्च जीवास्तिकायप्रदेश एकत्राकाशप्रदेशादौ केवलिसमुद्घात एव लभ्यत इति, 'सत्तहिं'ति प्राग्वत् ५। 'एवं अहम्मे'त्यादि प्रागुक्तानुसारेण भावनीयं ६। धर्मास्तिकायादीनां ४ पुद्गलास्तिकायस्य चैकैकस्पर्शनोक्ता, अथ तस्यैव द्विप्रदेशादिस्कन्धानां तां दर्शयन्नाह—'दो भंते'त्ति, इह चूर्णिव्याख्यानमिदम्—लोकान्ते द्विप्रदेशिकस्कन्धः एकप्रदेशसमवगाढः, स च प्रतिद्रव्यावगाहं प्रदेश इति नयमताश्रयणेनावगाहप्रदेशस्यैकस्यापि भिन्नत्वात् द्वाभ्यां स्पृष्टः, तत्र यस्तस्योपरि अधस्ताद्वा प्रदेशस्तस्यापि पुद्गलद्वयस्पर्शनेन नयमतादेव भेदात् द्वाभ्यां, तथा पार्श्वप्रदेशावेकैकमणुं स्पृशतः, परस्परव्यवहितत्वात्, इत्येवं जघन्यपदे षड्भिः धर्मास्तिकायप्रदेशैर्द्व्यणुकस्कन्धः स्पृश्यते, नयमतानङ्गीकरणे तु चतुर्भिरेव द्व्यणुकस्य जघन्यतः स्पर्शना स्यात्, वृत्तिकृता त्वेवम्—इह यद्विन्दुद्वयं तत्परमाणुद्वयमिति ज्ञेयं, तत्र चार्वाचीनः परमाणुर्द्धर्मास्तिकायप्रदेशेनार्वाक्स्थितेन स्पृष्टः, परभागवर्त्ती च परतः स्थितेन, एवं द्वौ, तथा ययोः प्रदेशयोर्मध्ये परमाणू स्थाप्येते तयोरग्रेतनाभ्यां प्रदेशाभ्यां तौ स्पृष्टावेकैनैको द्वितीयेन च



कस्य धर्मास्तिकायप्रदेशस्यातिस्तोकैरन्यैः स्पर्शना स्यात्, तच्च भूम्यासन्नापवरककोणदेशप्रायं ∴ इहोपरितनेनैकेन द्वाभ्यां च पार्श्वत
एको विवक्षितप्रदेशः स्पृष्ट इति जघन्येन त्रिभिरिति, 'उक्कोसेणं'ति 'छहिं'ति विवक्षितस्यैक उपर्येकोऽधश्चत्वारो दिक्षु इत्येवं
षड्भिरियं प्रतरमध्ये, स्थापना 'जहण्णपदे चउहिं'ति धर्मास्तिकायप्रदेशो जघन्यपदे अधर्मास्तिकायप्रदेशैश्चतुर्भिः स्पृष्ट
इति, कथं ?, तथैव त्रयः चतुर्थो धर्मास्तिकायप्रदेशस्थानस्थित एव १ उत्कृष्टपदे सप्तभिरिति, कथं ?, षड् दिक्स्पृष्टे सप्त-
मस्तु धर्मास्तिकायप्रदेशस्य एवेति २, आकाशप्रदेशैस्सप्तभिरेव, लोकान्तेऽपि अलोकान्तेऽपि अलोकाकाशप्रदेशानां विद्यमानत्वात्
३, 'केवइएहिं जीवत्थिकाए'त्यादि, 'अणंतेहिं'ति अनन्तैरनन्तजीवसत्कानामनन्तानां प्रदेशानां तत्रैकधर्मास्तिकायप्रदेशे पार्श्व-
तश्च दिक्त्रयादौ विद्यमानत्वादिति ४, एवं पुद्गलास्तिकायप्रदेशैरपि ५ 'केवइएहिं अद्धासमएहिं'ति अद्धासमयः समयक्षेत्र एव,
न परतः, अतः स्यात् स्पृष्टः स्यान्नेति, 'जइ पुट्ठत्ति नियमं अणंतेहिं'ति अनादित्वादद्धासमयानां अथवा वर्त्तमानसमयालिङ्गिता-
न्यनन्तानि द्रव्याण्यनन्ता एव समया इत्यनन्तैस्तैः स्पृष्ट इत्युच्यते इति। अधर्मास्तिकायप्रदेशस्य शेषाणां प्रदेशैः स्पर्शना धर्म्मा-
स्तिकायप्रदेशस्पर्शनानुसारेणावसेया ६। 'एगे भंते! आगासत्थिकायपदेसे'इत्यादि 'सिय पुट्ठे'त्ति लोकमाश्रित्य, नो पुट्ठेत्ति
अलोकमाश्रित्य, 'जइ पुट्ठे'यदि स्पृष्टस्तदा जघन्यपदे एकेन धर्म्मास्तिकायप्रदेशेन स्पृष्टः, कथं ?, एवंविधलोकान्तवर्त्तिना
धर्मास्तिकायैकप्रदेशेन शेषधर्मास्तिकायप्रदेशेभ्यो निर्गतेनैकाग्रभागवर्त्यलोकाकाशः स्पृष्टः, वक्र- गतस्त्वसौ द्वाभ्यां, यस्य
चालोकाकाशखण्डकप्रदेशस्याग्रतोऽधस्तादुपरि च धर्मास्तिकायप्रदेशेन तदवगाढेनान्येन चोपरिवर्त्तिनाऽधोवर्त्तिना च द्वाभ्यां स्पृष्ट
इत्येवं चतुर्भिः, यश्चाध उपरि च तथा दिग्द्वये तत्रैव च वर्त्तमानेन धर्मास्तिकायप्रदेशेन स्पृष्टः स पञ्चभिः, यः पुनरध उपरि च

'अलोगं'ति, 'सगडुद्धिसंठिय'त्ति रुचके तुण्डं कल्पनीयं आदौ सङ्कीर्णत्वात्, ततः उत्तरोत्तरविस्तीर्णत्वादिति, 'एयप्पएसविच्छिण्ण'त्ति, कथं ?, अत आह–अणुत्तरत्ति वृद्धिवर्जिता यत इति ॥ प्रवर्त्तनद्वारे 'आगमणगमणे'इत्यादि (सू.४८०) आगमनगमने प्रतीते, भाषा–व्यक्तवचनं,'भाषि व्यक्तायां वाचि' इति धातुपाठात्, उन्मेषः–अक्षिव्यापारविशेषः, मनोयोगादयः प्रतीता एव, इह च मनोयोगादयः सामान्यरूपाः आगमनादयस्तु तद्विशेषा इति भेदेनोपात्ताः, 'जे यावण्णे तहप्पगार'त्ति ये चाप्यन्ये आगमनादिभ्योऽपरे तथाप्रकारा–आगमनादिसदृशाः भ्रमणवल्गनादयः 'चला भाव'त्ति चलस्वभावाःपर्यायाः सर्वे ते धर्मास्तिकाये सति प्रवर्त्तते, कुत इत्याह गइलक्खणे णं धम्म'त्ति,'मणस्सएगत्ती'ति मनसश्च अनेकत्वस्यैकत्वभवनमेकत्वीभावस्तस्य यत् करणं तत्तथा, 'आगासंत्थि'त्ति 'जीवदव्वाण'न्ति जीवद्रव्याणां चाजीवद्रव्याणां च भाजनभूतं, अनेनेदमुक्तं स्यात्–एतस्मिन् सति जीवानामवगाहः प्रवर्त्तते, 'एगेणवी'त्यादि (*७४) एकेन परमाण्वादिना 'से'त्ति असौ, आकाशप्रदेश इति गम्यते, पूर्णीभूतः, द्वाभ्यामपि ताभ्यामसौ पूर्णः, कथमेतद् ?, उच्यते–परिणामभेदात् यथा अपवरकाकाशमेकप्रदीपप्रभावृन्देनापि पूर्यते द्वितीयमपि तत्र माति यावच्छतमपि तेषां तत्र माति, तथौषधविशेषापादितपरिणामादेकत्र पारदकर्षे सुवर्णकर्षशतं प्रविशति, पारदकर्षीभूतं च सदोषधसामर्थ्यात् पुनः पारदस्य कर्षः सुवर्णस्य च कर्षशतं स्यात्, विचित्रत्वात् पुद्गलपरिणामस्येति, 'अवगाहणालक्खण'त्ति इहावगाहना–आश्रयभावः, 'जीवत्थिकाएणं'ति जीवास्तिकायेनेति, अन्तर्भूतभावप्रत्ययत्वात् जीवास्तिकायत्वेन, जीवतयेत्यर्थः, 'पोग्गलत्थिकाएणं'ति इहौदारिकादिवपुषां श्रोत्रेन्द्रियादीनां मनोयोगान्तानां आनप्राणानां च ग्रहणं प्रवर्त्तत इति, पुद्गलमयत्वादौदारिकादीनामिति । अस्तिकायप्रदेशस्पर्शनद्वारे 'जहण्णपदे तिहिं'ति जघन्यपदं लोकान्तनिष्कुटरूपं यत्रै-

शतान्यतिक्रम्याधो लोकः स्यात् लोकान्तं यावत्, स च सातिरेकाः सप्त रज्जवः, तन्मध्यभागश्चतुर्थ्याः पञ्चम्याश्च यदवकाशान्तरं तस्य सातिरेकमर्द्धमवगाह्य स्यादिति, तथा रुचकस्योपरि ९ योजनशतानि अतिक्रम्योर्ध्वलोको व्यपदिश्यते लोकान्तं यावत्, स च सप्त रज्जवः किञ्चिन्न्यूनाः, तस्य मध्यभागमाह—'उप्पिं सणंकुमारमाहिंदाणं कप्पाण'मिति, तथा 'उवरिमहेट्ठिल्लेसु खुड्डगपयरेसु'त्ति लोकस्य वज्रमध्यत्वाद्रत्नप्रभाया रत्नकाण्डे सर्वक्षुल्लकप्रतरद्वयमस्ति, तयोश्चोपरितनः स प्रतर उच्यते यत आरभ्य लोकस्य उपरिमुखा वृद्धिः, 'हेट्ठिल्ल'त्ति अधस्तनप्रदेशः यत आरभ्य लोकस्य अधोमुखा वृद्धिः, तयोरुपरितनाधस्तनयोः 'खुड्डगपयरेसु'त्ति क्षुल्लकप्रतरयोः सर्वलघुप्रदेशप्रतरयोः 'एत्थ णं'ति प्रज्ञापकेनोपायतः प्रदर्श्यमाने तिर्यग्लोकमध्येऽष्टप्रदेशिको रुचकः प्रज्ञप्तः, यश्च तिर्यग्लोकमध्ये उक्तः स सामर्थ्यात् तिर्यग्लोकमध्यं स्यादित्येवंभूतोऽसावष्टप्रदेशिको रुचक इत्याह—'जओ णं इमाओ इत्यादि, तस्यैवं स्थापना ॥ दिग्विदिग्प्रवहद्वारे 'किमाइय'त्ति (सू. ४७९) क आदिः—प्रथमो यस्यास्सा किमादिका, 'किंपवह'त्ति प्रवहति—प्रवर्त्तते अस्मादिति प्रवहः, कः प्रवहो यस्यास्सा (किंप्रवहा), 'कतिपएसाइय'त्ति कति प्रदेशा आदिर्यस्यास्सा कतिप्रदेशादिका, 'कइपएसुत्तर'त्ति कति प्रदेशा उत्तरे—वृद्धौ यस्यास्सा तथा 'लोगं पडुच्च मुरजसंठिय'त्ति लोकान्तस्य परिमण्डलाकारत्वेन मुरजसंस्थानता दिशः स्यात्, ततश्च लोकान्तं प्रतीत्य मुरजसंस्थितेत्युक्तं, एतस्य च पूर्वां दिशमाश्रित्य चूर्णिकारकृतेयं भावना—'पुव्वुत्तराए पदेसहाणी तहा दाहिणपुव्वाए रुयगदेसे मुरजद्धेउं दिसिअंते चउप्पदेसा दट्ठव्वा, मज्झो य तुंडं हवइ'त्ति एतस्य स्थापना,



द्वितीय इति चत्वारो, द्वौ चावगाढत्वादेव स्पृष्टावित्येवं षट्। 'बारसहिं'ति, कथं?, परमाणुद्वयेन द्वौ द्विप्रदेशावगाढत्वात् स्पृष्टौ, द्वौ चाधस्तनावुपरितनौ च द्वौ, पूर्वापरपार्श्वयोश्च द्वौ द्वौ, दक्षिणान्तपार्श्वयोश्चैकैक इति द्वादश १, एवमधर्मास्तिकायप्रदेशैरपि २। 'बारसहिं'ति इह जघन्यपदं नास्ति, लोकान्तेऽप्याकाशप्रदेशानां विद्यमानत्वात् द्वादशभिरित्युक्तम् ३। 'सेसं जहा धम्मत्थिकायस्स'त्ति अयमर्थः—'दो भंते! पोग्गलत्थिकायपदेसा केवइएहिं जीवत्थिकायपदेसेहिं पुट्ठा?, गोयमा! अणंतेहिं ४, एवं पुद्गलास्तिकायप्रदेशैरपि ५, अद्धासमयैः स्यात्स्पृष्टौ स्यान्न, यदि स्पृष्टौ तदा नियमादनन्तैरिति ६। 'तिण्णि भंते!'त्ति 'अट्ठहिं'ति, कथं?, प्रागुक्तनयमतेन अवगाढप्रदेशस्त्रिधा, अधस्तनोऽपि त्रिधा, उपरितनोऽपि च त्रिधा, द्वौ पार्श्वत इत्यष्टौ। 'सत्तरसहिं'ति प्राग्वद्भावनीयः, इह च सर्वत्र जघन्यपदे विवक्षितपरमाणुभ्यो द्विगुणा द्विरूपाधिकाश्च स्पर्शकप्रदेशाः स्युः, उत्कृष्टपदे तु उत्कृष्टपदापेक्षया विवक्षितपरमाणुभ्यः पञ्चगुणा द्विरूपाधिकाश्च ते स्युः, तत्र चैकाणोर्द्विगुणत्वे द्वौ द्वयसहितत्वे च चत्वारो जघन्यपदे स्पर्शकाः प्रदेशाः स्युः, एवं द्व्यणुकत्र्यणुकादिष्वपि, स्थापना।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | |
| ४ | ६ | ८ | १० | १२ | १४ | १४ | १४ | १० | २० | २२ |
| ७ | १२ | १७ | २२ | २७ | ३२ | ३७ | ४२ | ४७ | ५२ | |

'सव्वत्थ उक्कोसपयं भाणियव्वं'ति सर्वत्र—एकप्रदेशिकाद्यनन्तप्रदेशिकान्ते सूत्रगणे उत्कृष्टपदमेव, न जघन्यकमित्यर्थः, आकाशस्य सर्वत्र विद्यमानत्वादिति, 'तेणेव'त्ति यत्सङ्ख्येयकमयः स्कन्धः तेनैव प्रदेशसङ्ख्येयकेन द्विगुणेन द्विरूपाधिकेन स्पृष्टः, इह भावना—विंशतिप्रदेशिकः स्कन्धो लोकान्ते एकप्रदेशे स्थितः, स च नयमतेन विंशत्याऽवगाढ

प्रदेशैर्विंशत्यैव च नयमतेनैवाधस्तनैरुपरितनैर्वा प्रदेशैः(पार्श्वयो)र्द्वाभ्यां स्पृश्यत इति, उत्कृष्टपदे तु विंशत्या निरुपचरितैरवगाहप्रदेशैः एवमधस्तने २० रुपरितने २० पूर्वापरपार्श्वयोश्च विंशत्या विंशत्या, द्वाभ्यां च दक्षिणोत्तरपार्श्वस्थिताभ्यां स्पृष्टः, ततश्च विंशतिरूपः सङ्ख्याताणुकः स्कन्धः पञ्चगुणया विंशत्या प्रदेशानां प्रदेशद्वयेन च स्पृष्ट इति, अत एवोक्तम्–'उक्कोसपदे णं तेणेव संखिज्जएणं पंचगुणेणं दुरूवाहिएणं'ति । 'असंखिज्जे'त्ति पदसूत्री तथैव । 'अणंता भंते !'त्ति पदसूत्री तथैव, नवरमिह यथा जघन्यपदे औपचारिका अवगाहप्रदेशा अधस्तना उपरितना वा तथोत्कृष्टप्रदेशेऽपि, न हि निरुपचरिता अनन्ता आकाशप्रदेशा अवगाहतस्सन्ति, लोकस्याप्यसङ्ख्यातप्रदेशात्मकत्वादिति, इह प्रकरणे इमे वृद्धोक्ते गाथे स्यातां–'धम्माइएसेहिं, दुपएसाई जहण्णयपयम्मि । दुगुणा दुरूवहिएणं तेणेव कहण्णु फुसेज्जा ? ॥१॥ एत्थ पुण जहण्णपयं लोगंते तत्थ लोगमालिहिउं । फुसणा ठावेयव्वा अहवा खंभाइकोडीए ॥२॥"त्ति । 'एगे भंते ! अद्धासमए'त्ति इह वर्तमानसमयविशिष्टः समयक्षेत्रमध्यवर्ती परमाणुरद्धासमयो ग्राह्यः, अन्यथा तस्य धर्मास्तिकायादिप्रदेशैः सप्तभिः स्पर्शना न स्यात्, इह च जघन्यपदं नास्ति, नरक्षेत्रमध्यवर्त्तित्वादद्धासमयस्य जघन्यपदस्य च लोकान्त एव संभवादिति, तत्र सप्तभिरिति कथं ?, अद्धासमयविशिष्टपरमाणुद्रव्यमेकत्र धर्मास्तिकायप्रदेशेऽवगाढं, अन्ये च तस्य षट्सु दिक्ष्विति सप्त, जीवास्तिकायप्रदेशैश्चानन्तैः, एकप्रदेशेऽपि तेषामनन्तत्वादेव, 'जाव अद्धासमएहिं'ति इह यावत्करणादिदं दृश्यम्–'एकः अद्धासमयोऽनन्तैः पुद्गलास्तिकायप्रदेशैरद्धासमयैश्च स्पृष्टः, भावना चास्यैवं– अद्धासमयविशिष्टमणुद्रव्यमद्धासमयः, स चैकः पुद्गलास्तिकायप्रदेशैरनन्तैः स्पृश्यते, अद्धासमयविशिष्टानामनन्तानामप्यणुद्रव्याणामद्धासमयत्वेन विवक्षितत्वात्, तेषां च तस्य स्थाने तत्पार्श्वतश्च सद्भावादिति । धर्मास्तिकायादीनां प्रदेशतः स्पर्शनोक्ता,

अथ द्रव्यतस्तामाह—'नत्थि एगेणवि'त्ति सकलस्य धर्मास्तिकायद्रव्यस्य प्रश्नितत्वात् तद्व्यतिरिक्तस्य धर्मास्तिकायप्रदेशस्याभावादुक्तं—'नास्ति' न विद्यतेऽयं पक्षः, यदुत एकेनापि धर्मास्तिकायप्रदेशेनासौ धर्मास्तिकायः स्पृष्ट इति, तथा धर्मास्तिकायोऽधर्मास्तिकायप्रदेशैरसङ्ख्येयैः स्पृष्टः, धर्मास्तिकायप्रदेशानन्तरस्पर्शन एव व्यवस्थितत्वात् अधर्मास्तिकायसम्बन्धिनामसङ्ख्यातानामपि प्रदेशानामिति, आकाशास्तिकायप्रदेशैरसङ्ख्यैरपि, असङ्ख्येयप्रदेशस्वरूपलोकाकाशप्रमाणत्वाद्धर्म्मास्तिकायस्य, जीवपुद्गलप्रदेशैस्तु धर्मास्तिकायो नान्ते स्पृष्टः, तद्व्याप्त्या धर्मास्तिकायस्यावस्थितत्वात्, तेषां चानन्तत्वाद्, अद्धासमयैः पुनरसौ स्पृष्टश्चास्पृष्टश्च, तत्र यः स्पृष्टः सोऽनन्तैरिति ६। एवमधर्मास्तिकायस्य ६ सूत्राणि वाच्यानि, केवलं यत्र धर्मास्तिकायप्रदेशादिस्तत्प्रदेशैरेव चिन्त्यते तत्स्वस्थानमितरच्च परस्थानं, तत्र स्वस्थाने 'नत्थि एगेणवि पुट्ठे'ति निर्वचनं वाच्यं, परस्थाने च धर्मास्तिकायादित्रयसूत्रेषु ३ असङ्ख्येयैः स्पृष्ट इति वाच्यं, असङ्ख्यातप्रदेशत्वाद्धर्म्माधर्मास्तिकाययोः, तत्संस्पृष्टाकाशस्य च, जीवादित्रयसूत्रेषु चानन्तैः प्रदेशैः स्पृष्ट इति वाच्यं, अनन्तप्रदेशत्वात्तेषामिति, 'एवं एएणं गमेणं'ति, इहाकाशसूत्रेऽयं विशेषो द्रष्टव्यः—आकाशास्तिकायो धर्मास्तिकायादिप्रदेशैः स्पृष्टश्चास्पृष्टश्च, तत्र यः स्पृष्टः सोऽसङ्ख्येयैर्धर्माधर्मास्तिकाययोः प्रदेशैः जीवास्तिकायादीनां त्वनंतैरिति, 'जाव अद्धासमओ'त्ति अद्धासमयसूत्रं यावत् सूत्राणि वाच्यानि इत्यर्थः, 'जाव केवइएहिं'ति इत्यादौ यावत्करणादद्धासमयसूत्रे आद्यं पदपञ्चकं सूचितं, षष्ठं तु लिखितमेवास्ति, तत्र तु 'नत्थि एक्केणवि'त्ति निरुपचरितस्याद्धासमयस्यैव भावात्, अतीतानागतसमययोश्च विनष्टानुत्पन्नत्वेनासत्त्वात् न समयान्तरेण स्पृष्टताऽस्तीति। अथावगाहद्वारम्—तत्र 'जत्थ णं'ति (सू. ४८२) यत्र प्रदेशे एको धर्म्मास्तिकायस्य प्रदेशोऽवगाढस्तत्रान्यस्तत्प्रदेशो नास्तीतिकृत्वाऽऽह—'नत्थि एक्कोऽवि'त्ति, धर्म्मास्तिकायप्रदेशस्थानेऽधर्मा-

स्तिकायप्रदेशस्य विद्यमानत्वादाह–'एक्को चेवि'त्ति, एवमाकाशास्तिकायस्याप्येक एव, जीवास्तिकायपुद्गलास्तिकाययोः पुनरनन्ताः प्रदेशाः एकैकस्य धर्मास्तिकायप्रदेशस्य स्थाने सन्ति अतः तैः प्रत्येकमनन्तैर्व्याप्तोऽसाविति उक्तं 'अणंता'त्ति, अद्धासमयास्तु मनुष्यलोक एव सन्ति, न परतः, अतो धर्मास्तिकायप्रदेशे तेषामवगाहः अस्ति नास्ति च, यत्रास्ति तत्रानन्तानां, भावना प्राग्वत्, एतदेवाह–'अद्धासमए'त्यादि ६। 'जत्थ णं'भित्यादीन्यधर्मास्तिकायसूत्राणि ६ धर्मास्तिकायसूत्राणीव वाच्यानि, आकाशास्तिकायसूत्रेषु 'सिय ओगाढो सिय न ओगाढो' लोकाकाशैकप्रदेशे यदा द्व्यणुकस्कन्धोऽवगाढः स्यात् तदा तत्र धर्मास्तिकायप्रदेश एक एव, यदा तु द्वयोराकाशप्रदेशयोरसाववगाढः स्यात् तदा तत्र द्वौ धर्मप्रदेशाववगाढौ स्यातामित्येवमवगाहनानुसारेण धर्माकाशास्तिकाययोरपि स्यादेकः स्यात् द्वाविति भावनीयं, 'सेसं जहा धम्मत्थिकायस्स'त्ति शेषमित्युक्तापेक्षया जीवास्तिकायपुद्गलास्तिकायाद्धासमयलक्षणं त्रयं यथा धर्मास्तिकायप्रदेशवक्तव्यतायामुक्तं तथा पुद्गलप्रदेशद्वयवक्तव्यतायामपि, पुद्गलप्रदेशद्वयस्थाने तदीया अनन्ताः प्रदेशा अवगाढा इत्यर्थः। पुद्गलप्रदेशत्रयसूत्रेषु 'सिय एक्को'इत्यादि, त्रयोऽप्यणव एकत्रावगाढास्तदा तत्रैको धर्मास्तिकायप्रदेशोऽवगाढो, यदा तु द्वयोः १, २, तदा द्वाववगाढौ, यदा त्रिषु १, १, १, त्रय इति, एवमधर्मास्तिकायाकाशास्तिकाययोर्वाच्यं, 'सेसं जहेव दोण्हं'ति शेषं जीवपुद्गलाद्धासमयाश्रितं सूत्रत्रयं यथैव द्वयोः पुद्गलप्रदेशयोरवगाहचिन्तायामधीतं तथैव पुद्गलप्रदेशत्रयचिन्तायामप्यध्येयं, पुद्गलप्रदेशत्रयस्थानेऽनन्ता जीवप्रदेशावगाढा इत्येवमध्येयमित्यर्थः, 'आइल्लेहिं तिहिं अत्थिकाएहिं'ति यथा पुद्गलप्रदेशत्रयावगाहचिन्तायां धर्मास्तिकायादिसूत्रत्रये एकैकः प्रदेशो वृद्धिं नीतः एवं पुद्गलप्रदेशचतुष्टयाद्यवगाहचिन्तायामपि एकैकस्तत्र वर्द्धनीयः, तथाहि–जत्थ णं भंते! चत्तारि पुग्गलत्थिकायप्पएसा ओगाढा?

केवइया अहम्मत्थिकायप्प०?, सिय एक्को सिय दुण्णि सिय तिण्णि सिय चत्तारि इत्यादि, भावना चास्य प्रागिव, 'सेसेहिं जहेव दुण्हं'ति शेषेषु-जीवास्तिकायादिषु त्रिषु सूत्रेषु पुद्गलप्रदेशचतुष्टयचिन्तायां तथा वाच्यं यथा तेष्वेव पुद्गलप्रदेशद्वयावगाहचिन्तायामुक्तं, तच्चैवम्-'जत्थ णं भंते! चत्तारि पुग्गलत्थिकायप्पएसा अवगाढा तत्थ केवइया जीवत्थिकायप्पदेसा ओगाढा?, अणंते'त्यादि, 'जहा असंखेज्जा एवं अणंतावि'त्ति अस्यायं भावार्थः-त्रिषु 'जत्थ णं भंते! अणंता पुग्गलत्थिकायप्पएसा ओगाढा तत्थ केवइया धम्मत्थिकायप्पएसा ओगाढा? सिय एक्को सिय दुण्णि सिय तिण्णि जाव असंखेज्जा' एतावदेवाध्येयं, 'न तु सिय अणंत'त्ति, धर्मास्तिकायाधर्मास्तिकायलोकाकाशप्रदेशानामनन्तानामभावादिति। अथ प्रकारान्तरेणावगाहद्वारमेवाह-'जत्थ णं'मित्यादि, धर्मास्तिकायशब्देन समस्ततत्प्रदेशसङ्ग्रहात् प्रदेशान्तराणामभावादुच्यते-यत्र धर्मास्तिकायोऽवगाढः तत्र नास्त्येकोऽपि तत्प्रदेशोऽवगाढ इति १, अधर्मास्तिकायाकाशास्तिकाययोरसङ्ख्येयाः प्रदेशा अवगाढाः, असङ्ख्येयप्रदेशत्वादधर्मास्तिकायलोकाकाशयोः, जीवसूत्रे चानन्तास्तत्प्रदेशाः, अनन्तप्रदेशत्वाज्जीवास्तिकायस्य, पुद्गलास्तिकायाद्धासूत्रयोरप्येवम्, एतदेवाह-'एवं जाव अद्धासमय''त्ति॥ अथैकस्य पृथ्व्यादिजीवस्य स्थाने कियन्तः पृथ्व्यादिजीवा अवगाढा इत्येवमर्थं 'जीवमोगाढ'त्ति द्वारमाह-'जत्थ णं भंते! एगे'त्ति (सू.४८३) एकपृथ्वीकायिकावगाहेऽसङ्ख्येयाः प्रत्येकं पृथ्वीकायिकादयश्चत्वारः सूक्ष्मा अवगाढाः, तदाह-'जत्थ एगो तत्थ नियमा असंखिज्ज'त्ति, वनस्पतयस्त्वनन्ता इति। अथास्तिकायप्रदेशनिपदनद्वारं, तत्र च 'एयंसि णं'मित्यादि (सू. ४८४) एतस्मिन् णमिति वाक्यालङ्कारे 'चक्किय'त्ति शक्नुयात् कश्चित्पुमान्। अथ बहुसमेति द्वारम्-'बहुसमे'त्ति (सू. ४८५) अन्त्यन्तं समः, लोको हि क्वचिद्वर्द्धमानः क्वचिद्धीयमानः अतस्तन्निषेधाद् बहुसमो, वृद्धिहानिरहित इत्यर्थः,

'सव्वविग्गहिए'त्ति विग्रहो—वक्रं वंकमित्यर्थः तदस्यास्तीति विग्रहिकः, सर्वथा विग्रहिकः सर्ववैग्रहिकः, सर्वसंक्षिप्त इत्यर्थः, 'उवरिमहेट्ठिल्लेसु'त्ति उपरितनो यमवधीकृत्य ऊर्ध्वं प्रतरवृद्धिर्जाता, (एवं यतोऽधः सोऽधस्तनः) ततस्तयोरुपरितनाधस्तनयोः क्षुल्लकप्रतरयोः शेषापेक्षया लघुतरयोः रज्जुप्रमाणायामविष्कम्भयोस्तिर्यग्लोकमध्यभागवर्त्तिनोः 'एत्थ णं'ति एतयोः प्रज्ञापकेनोपदर्श्यमानतया प्रत्यक्षयोः 'विग्गहविग्गहिए'त्ति विग्रहो—वक्रं तद्युक्तो विग्रहः—शरीरं यस्यास्ति स विग्रहविग्रहिकः,'विग्गहकंडए'त्ति विग्रहो—वक्रं कण्डकं—अवयवो, विग्रहरूपं कण्डकं विग्रहकण्डकं तत्र, ब्रह्मलोककूर्पर इत्यर्थः, यत्र प्रदेशवृद्ध्या हान्या वा वक्रं स्यात् तद्विग्रहकण्डकं, तच्च प्रायो लोकान्तेष्वस्तीति। अथ लोकसंस्थानद्वारम्—'सव्वत्थोवे तिरियलोए'त्ति (सू. ४८६) अष्टादशयोजनशतायामत्वात्, 'उड्ढलोए असंखिज्जे'त्ति किंचिदूनसप्तरज्जूच्छ्रितत्वात् ॥ त्रयोदशशते चतुर्थः॥

पंचमे 'पढमो नेरइय उद्देसओ'त्ति (सू. ४८७) अयं च प्रज्ञापनायामष्टाविंशतितमस्याहारपदस्य प्रथमः, स चैवम्—नेरइयाणं भंते! किं सचित्ताहारा अचित्ताहारा मीसाहारा ?, गोयमा! नो सचित्ताहारा, अचित्ताहारा, नो मीसाहारा, एवं असुरकुमारे'त्यादि॥ ॥ त्रयोदशशते पञ्चमः॥

'गंगेए'त्ति नवमशत३२उद्देशकाभिहिते 'दो दंडग'त्ति उत्पत्तिदण्डकः उद्वर्त्तनादण्डकश्च। 'सभाविहूणं'त्ति (सू. ४८९) सुधर्माद्याः पञ्च सभा न वाच्याः, कियद्दूरं यावदियमिह चमरचञ्चाराजधानीवक्तव्यता भणितव्येत्याह—'जाव चत्तारि पासायपंतीओ'त्ति ताश्च प्राग्दर्शिता एव,'उवयारियलेणाइ व'त्ति उपकारिकालयनानि—प्रासादादिपीठकल्पानि 'उज्जाणिय'त्ति उद्यानगतजनानामुपकारकगृहाणि, नगरप्रवेशगृहाणि वा 'णिज्जाणिय'त्ति नगरनिर्गमगृहाणि 'धारवारिय'त्ति धाराप्रधानं वारि—जलं ॥२०१॥

येषु तानि धारवारिकाणि लयनानि 'आसयंति' आश्रयन्ते–ईषद् भजन्ते 'सयंति' बहु २ भजन्ते, अथवा आसयंति–ईषत् स्वपन्ति, 'सयंति' बहु २ स्वपंति, 'वसहिं'ति वासमुपयान्ति 'एवमेव'त्ति एवमेव नराणामुपकारिकालयनवच्चमरस्य ३ चमरचंच आवासो, न निवासस्थानं केवलं, किन्तु 'किड्डारत्ति'त्ति क्रीडाया रतिः–आनन्दः क्रीडारतिः, अथवा क्रीडारती, सा ते वा प्रत्ययो–निमित्तं यत्र तत् क्रीडारतिप्रत्ययं तत्रागच्छन्ति ॥ 'सिंधुसोवीरेसु'त्ति (सू. (४९०) सिन्धुनद्यासन्नाः सौवीरा देशाः, 'वीयभए'त्ति विगता ईतयो–भयानि यत्र तद्वीतभयं, विदर्भेति केचित्, 'विइण्णछत्तचामरं'ति वित्तीर्णच्छत्रचामररूपवालव्यजनिकानां तेषां, 'पउमावईओ देविओ'त्ति उदाईराज्ञा मोहात् गृहीतप्रव्रज्याऽपि राजभुवने प्रभावती व्रतिनी स्थापिता, प्रतिज्ञा ग्राहिता–त्वयाऽहं प्रतिबोध्य इति, षण्मासं यावद्दीक्षामनुपाल्य सा देवत्वं गता, यया देवत्वं गतया राजा प्रतिबोधितः, तत् प्रभावतीमृतेरनंतरं पद्मावतीप्रभृतिदेव्यः, 'अप्पत्तिएणं'ति अप्रीतिकेन–अप्रीतिस्वभावेन, मनसो विकारो मानसिकं न बहिरुपलक्ष्यमाणविकारं यत्तन्मनोमानसिकं तेन, 'सभंडमत्तो'त्ति स्वां–स्वकीयां भाण्डमात्रां–भाजनरूपपरिच्छदं उपकरणं शय्यादि गृहीत्वेत्यर्थः, 'समणुबद्ध'त्ति अव्यच्छिन्नवैरिभावः, 'नरयपरिसामंतेसु'त्ति नरकपरिपार्श्वतः 'आयावा असुरकुमार'त्ति 'आयाव'त्ति असुरकुमारदेवविशेषाः, विशेषतस्तु नावगम्यन्त इति ॥ त्रयोदशशते षष्ठः ॥

अथ सप्तमे 'आया भंते'त्ति (सू. ४९२) आत्मा–जीवो भाषास्वभावो, भाषेत्यर्थः, यतो जीवेन व्यापार्यते जीवस्य च बन्धमोक्षार्था स्यात् ततो जीवधर्मत्वाज्जीव इति व्यपदेशार्हा ज्ञानवदिति, अथ अन्या भाषा अजीवस्वरूपा, श्रोत्रेन्द्रियग्राह्यत्वेन मूर्त्ततयाऽऽत्मनो विलक्षणत्वादिति शङ्कातः प्रश्नोऽत्रोत्तरं–'नो आया भास'त्ति आत्मरूपा नासौ स्यात्, पुद्गलमयत्वात्, आत्मना च मुच्य-

मानत्वात्, तथाविधलेष्ट्वादिवत्, अचेतनत्वाच्चाकाशवत्, यच्चोक्तम्–जीवेन व्यापार्यमाणत्वाज्जीवः स्यात् ज्ञानवत् तदनैकान्तिकं, जीवव्यापारणस्य जीवादत्यन्तं भिन्नस्वरूपेऽपि दात्रादौ दर्शनादिति। 'रूवि भंते! भास'त्ति रूपिणी भदन्त! भाषा श्रोत्रस्यानुग्रहोपघातकारित्वात् तथाविधकर्णाभरणादिवत्, अथारूपिणी भाषा, चक्षुषाऽनुपलभ्यमानत्वात् धर्मास्तिकायादिवदिति शंकातः प्रश्नः, उत्तरं तु रूपिणी भाषा, यच्च चक्षुरग्राह्यत्वमरूपित्वसाधनायोक्तं तदनैकान्तिकं, परमाणुवायुपिशाचादीनां रूपवतामपि चक्षुरग्राह्यत्वेनाभिमतत्वादिति। 'सचित्ते'त्ति उत्तरं तु 'नो सचित्ता' जीवनिसृष्टपुद्गलसंहतिरूपत्वात् तथाविधलेष्टुवत्। तथा 'जीवा भंते! भास'त्ति जीवन्तीति जीवाः–प्राणधारणस्वरूपा भाषा उत तद्विलक्षणेति प्रश्नः, अत्रोत्तरम्–'नो जीवा'–उच्छ्वासादिप्राणानां तस्या अभावादिति, इह कश्चिदाह–अपौरुषेयी वेदभाषा, तन्मतं मनस्याधायाह–'जीवाणं'ति उत्तरं तु जीवानां भाषा, वर्णानां ताल्वादिव्यापारजन्यत्वात्, ताल्वादिव्यापारस्य च जीवाश्रितत्वात्, यद्यपि चाजीवेभ्यश्शब्द उत्पद्यते तथापि नासौ भाषा, पर्याप्तिजस्यैव शब्दस्य भाषात्वेनाभिमतत्वादिति। तथा 'पुव्विं'ति अत्रोत्तरम्–नो पूर्वं भाषणात् भाषा स्यात्, मृत्पिण्डावस्थायां घट इव, भाष्यमाणा निसर्गावस्थायां वर्त्तमाना भाषा, घटावस्थायां घटस्वरूपमिव, नो–नैव भाषासमयव्यतिक्रान्ता, भाषासमयो–निसृज्यमानावस्थातो यावद्भाषापरिणामसमयः तं व्यतिक्रान्ता या सा भाषा स्यात्, घटसमयातिक्रान्तघटवत्, कपालावस्थ इत्यर्थः। 'पुव्विं भंते'त्ति अत्रोत्तरं–नो–नैव प्राग् निसर्गसमयाद् भाषा द्रव्यभेदेन भिद्यते, भाष्यमाणा भाषा भिद्यते, अयमत्राभिप्रायः–इह कश्चिन्मन्दप्रयत्नो वक्ता स्यात्, स चाभिन्नान्येव शब्दद्रव्याणि निसृजति, तानि च निसृष्टान्यसङ्ख्येयात्मकत्वात् परिस्थूरत्वाच्च विभज्यते, विभज्यमानानि चासङ्ख्येयानि योजनानि गत्वा शब्दपरिणामत्यागमेव कुर्वन्ति, कश्चित्तु महाप्रयत्नः स्यात्, स

खल्वादानविसर्गप्रयत्नाभ्यां भित्त्वैव निसृजति, तानि च सूक्ष्मत्वात् बहुत्वाच्च अनन्तगुणवृद्ध्या वर्द्धमानानि षट्सु दिक्षु लोकान्तमाप्नुवन्ति, अत्र च यस्यामवस्थायां शब्दपरिणामस्तस्यां भाष्यमाणता अवसेयेति, 'नो भासासमयविइक्कंत'त्ति परित्यक्तभाषापरिणामेत्यर्थः, वक्तृप्रयत्नस्य तदानीं निवृत्तत्वादिति भावः। अथ मनोनिरूपणायाह—'आया भंते! मणो'त्ति (सू. ४९३) एतत्सूत्राणि भाषासूत्रवत् ज्ञेयानि, केवलमिह मनो—मनोद्रव्यसमुदयो मननोपकारी मनःपर्याप्तिनामकर्मोदयसम्पाद्यो, भेदश्च तेषां विदलनमात्रमिति ॥ अथ कायनिरूपणायाह—(सू. ४९४) आत्मा कायः, कायेन कृतस्यानुभवनात्, न ह्यन्येन कृतमन्योऽनुभवति, अकृतागमप्रसङ्गात्, अथान्य आत्मनः कायः, कायैकदेशच्छेदेऽपि संवेदनस्य सम्पूर्णत्वेनाभ्युपगमादिति प्रश्नः, उत्तरं तु आत्माऽपि कायः कथञ्चित्तदैक्यात् क्षीरनीरवत्, अग्नयःपिण्डवत्, अत एव कायस्पर्शे आत्मनः संवेदनं स्यात्, अत एव कायेन कृतमात्मना भवान्तरे वेद्यते, अत्यन्ताभेदे चाकृतागमप्रसङ्ग इति, 'अण्णेऽवि काए'त्ति अत्यन्ताभेदे हि शरीरांशच्छेदे जीवांशच्छेदप्रसङ्गः, तथा च संवेदनासम्पूर्णता स्यात्, तथा वपुर्दाहे आत्मनोऽपि दाहप्रसङ्गेन परलोकाभावप्रसङ्ग इत्यतः कथञ्चिदात्मनोऽन्योऽपि कायः, अन्यैस्तु कार्मणकायमाश्रित्य आत्मा काय इति व्याख्यातं, कार्मणकायस्य संसार्यात्मनश्च परस्पराव्यभिचरितत्वेन एकस्वरूपत्वात् 'अण्णेऽवि काए'त्ति औदारिकादिकायापेक्षया जीवादन्यः कायः, तद्विमोचनेन तदभेदेऽपि सिद्धिरिति, 'रूविंपि काए'त्ति रूप्यपि कायः, औदारिकादिकायस्थूलरूपापेक्षया, अरूप्यपि कायः, कार्मणकायस्यातिसूक्ष्मरूपित्वेनारूपित्वविवक्षणात्, 'एवं एक्केक्कपुच्छ'त्ति प्रागुक्तप्रकारेण एकैकसूत्रे पृच्छा विधेया, तद्यथा—'सचित्ते भंते! काए अचित्ते काए'त्ति, अत्रोत्तरम्—सचित्तोऽपि कायः, जीवदवस्थायां चैतन्ययुक्तत्वात्, अचित्तोऽपि कायः मृतावस्थायां चैतन्याभावात्, जीवोऽपि विवक्षात उच्छ्वासादिप्राणयुक्तोऽपि स्यात्

कायः, औदारिकशरीरमपेक्ष्य, 'अजीवे'त्ति अजीवोऽपि कायः उच्छ्वासादिरहितः स्यात् कार्मणवपुरपेक्ष्य, 'जीवाणवि काए'त्ति जीवानां सम्बन्धी कायः-शरीरं स्यात्, 'अजीवाणवि'त्ति अजीवानामपि स्थापनार्हदादीनां कायः-शरीरं स्यात्, शरीराकार इत्यर्थः, 'पुव्विंपि काए'त्ति जीवसम्बन्धकालात् पूर्वमपि कायः स्यात्, यथा भविष्यज्जीवसम्बन्धं मृतदर्दुरशरीरं 'काइज्जमाणेऽवि काए'त्ति जीवेन चीयमानोऽपि कायः स्यात् यथा जीवच्छरीरं, कायसमयो-जीवेन कायस्य कायताकरणलक्षणस्तं व्यतिक्रान्तो, यस्स तथा, सोऽपि काय एव मृतकलेवरवत्, 'पुव्विंपि काए भिज्जइ'त्ति जीवेन कायतया ग्रहणसमयात् पूर्वमपि कायो मधुघटादिन्यायेन द्रव्यकायो भिद्यते, प्रतिक्षणं पुद्गलचयापचयभावात्, 'काइज्जमाणे य'त्ति जीवेन कायीक्रियमाणोऽपि कायो भिद्यते सिकताकणमुष्टिग्रहणवत् पुद्गलानामनुक्षणं परिशाटभावात् 'कायसमयत्ति' कायसमयव्यतिक्रान्तस्य न कायता भूतभावतया मृतघटादिन्यायेन, भेदश्च पुद्गलानां तत्स्वभावतयेति, अथ कायस्यैव भेदानाह-'ओरालिए' औदारिकवपुरेव पुद्गलस्कन्धरूपत्वात् उपचीयमानत्वात् औदारिककायः, अयं च पर्याप्तकस्यैवेति, 'ओरालियमीसए'त्ति औदारिकमिश्रः कायः कार्मणेन, अपर्याप्तकस्यायं, 'वेउव्विए'त्ति वैक्रियः पर्याप्तकस्य देवादेः,वैक्रियमिश्रः कार्मणेन, अयं चासम्पूर्णवैक्रियशरीरस्य देवादेः 'आहारए'त्ति आहारकः आहारकशरीरनिर्वृत्तौ 'आहारमीस'त्ति आहारकपरित्यागेनौदारिककरणायोद्यतस्य आहारकमिश्रः स्यात्, मिश्रता पुनरौदारिकेणेति, 'कम्मए'त्ति विग्रहगतौ केवलिसमुद्घाते वा कार्मणः स्यादिति ॥ 'आवीइमरणे'त्ति (सू.४९५) आ समन्ताद्वीचयः प्रतिसमयमनुभूयमानायुषोऽपरापरायुर्दलिकोदयात् पूर्वपूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिन् तदावीचिकं 'ओहिमरणं'ति अवधिः-मर्यादा, ततश्चावधिना मरणं अवधिमरणं, यानि हि नारकादिभवनिबन्धनतया आयुःकर्मदलिकान्यनुभूय म्रियते यदि

पुनस्तान्येवानुभूय मरिष्यंते तदा तदवधिमरणमुच्यते, तद्द्रव्यापेक्षया पुनस्तद्ग्रहणावधिं यावज्जीवस्य मृतत्वात्, सम्भवति च गृहीतोज्झितानां ग्रहणं, परिणामवैचित्र्यात्, 'आइयंतिमरणं'ति अत्यन्ते भवमात्यन्तिकं तच्च तत् मरणं च २, यानि हि नारकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियते, मृतश्च न पुनस्तान्यनुभूय मरिष्यत इत्येवं यन्मरणं तत्तद्द्रव्यापेक्षया अत्यन्तभावित्वादात्यन्तिकमिति, वालमरणम्–अविरतमरणं, पण्डितमरणं–सर्वविरतमरणं। तत्रावीचिकमरणं पञ्चधा द्रव्यादिभेदेन, द्रव्यावीचिकमरणं च चतुर्द्धा नारकादिभेदात्, तत्र नारकद्रव्यावीचिकमरणमाह–'जण्णं'ति, यद्–यस्माद्धेतोर्नारकद्रव्ये नारकजीवत्वे वर्त्तमाना मरन्तीति योगः, 'नेरइयाउयत्ताए'त्ति नैरयिकायुष्कतया, गहियाइं स्पर्शनतः, 'बद्धाइं' बन्धनतः, 'पुट्ठाइं' पोषितानि प्रदेशप्रक्षेपतः 'कडाइं' विशिष्टानुभागतः 'पट्ठवियाइं' स्थितिसम्पादनेन निविट्ठाइं जीवप्रदेशेषु 'अभिनिविट्ठाइं' जीवप्रदेशेष्वभिव्याप्तया निविष्टानि, अतिगाढतां गतानीत्यर्थः, 'अभिसमण्णागयाइं' अभिसमन्वागतानि उदयावलिकायामागतानि द्रव्याणि 'निरंतरं'ति निरन्तरम्–अव्यवच्छेदेन, सकलसमयेष्वित्यर्थः, म्रियन्ते विमुञ्चन्तीत्यर्थः, 'इतिकट्टु'त्ति इतिहेतोर्नारकद्रव्यावीचिकमरणमुच्यत इति 'एवं जाव भावावीचियमरणे'त्ति, इह यावत्करणात्कालावीचिकमरणं स्यादिति, भवावीचिकमरणमपि द्रष्टव्यम्, तच्चेदं सूत्रम्—'कालावीइयमरणे णं भंते! कइविहे पण्णत्ते, गोयमा! चउव्विहे पण्णत्ते, तं०–नेरइयकालावीइमरणे ४, से केणट्ठेणं भंते! एवं वुचइ–नेरइकालावीइमरणे १, गोयमा! जण्णं नेरइया नेरइयकाले वट्टमाणे'त्यादि, एवं भवावीचिकमरणमप्यध्येयम्, नैरयिकद्रव्यावधिमरणसूत्रे जण्णमित्यादि, एवं चेहाक्षरघटना–नैरयिकद्रव्ये वर्त्तमाना ये नैरयिका यानि द्रव्याणि साम्प्रतं म्रियन्ते–त्यजन्ति तानि द्रव्याण्यनागतकाले पुनस्ते इति गम्यम्, मरिष्यन्ते–त्यक्ष्यन्तीति यत्तत् नैरयिकद्रव्यावधिमरणमुच्यते

इति शेषः, 'से तेण'मित्यादि निगमनम्, 'नीहारिमे अनिहारिमे'त्ति यत्पादपोपगमनमाश्रयस्यैकदेशे विधीयते तन्निर्हारिम
फलेवरस्य निर्हरणीयत्वात्, यत्तु गिरिकन्दरादौ विधीयते तदनिर्हारिमं कलेवरस्यानिर्हरणीयत्वात्, 'अप्पडिकम्मे'त्ति शरीरप्रति-
कर्मरहितमेव चतुर्विधाहारप्रत्याख्याननिष्पन्नं चेदम्, 'तं चेव'त्तिकरणान्निर्हारिममनिर्हारिमं चेति दृश्यम्, सप्रति कर्मदमेव
स्यादिति त्रयोदशशते सप्तमः ॥

'एवं बंधट्ठिइउद्देस'त्ति (सू. ४९६) एवमनेन प्रश्नोत्तरक्रमेण बन्धस्य–कर्मबन्धस्य स्थितिः, कर्मस्थितिरित्यर्थः, तदर्थ उद्देशको
बन्धस्थित्युद्देशकोऽभ्येयः, स च प्रज्ञापनात्रयोविंशतितमपदस्य द्वितीयः, इह च वाचनान्तरे सङ्ग्रहणी गाथाऽस्ति, सा चेयम्—
"पगडीणं भेयठिई बंधो ठिइ इंदियाणुवाएणं। केरिसय जहण्णठिई बंधइ उक्कोसियं वावि ॥१॥" अस्याश्चायमर्थः–कर्मप्रकृतीनां
भेदो वाच्यः,'कइ णं भंते! कम्मपयडीओ पण्णत्ताओ, गो०! अट्ठ' प्रकृतीनां स्थितिर्वाच्या,'नाणावरणिज्जस्स णं भंते! केवइयं कालं
ठिई पण्णत्ता, गो०! जहण्णेणमंतोमुहुत्तं, उक्कोसेणं तीसं सागरोवमकोडाकोडीओ'इत्यादि, तथा बन्धो ज्ञानावरणादिकर्मणामिति
इन्द्रियानुपातेन वाच्यः, एकेन्द्रियादिकः कः कियती बध्नाति, स चैवम् 'एगिंदिया णं भंते! जीवा नाणावरणिज्जस्स किं बंधंति?,
गोयमा! जहण्णेणं सागरोवमस्स तिण्णि सत्तभागे पलिओवमस्स असंखिज्जेणं भागेणं ऊणए, उक्कोसेणं ते चेव पडिपुण्णे बंधइ'इत्यादि,
तथा कीदृशो जीवो जघन्यामुत्कृष्टां वा कर्मस्थितिं बध्नाति, तच्चेदम्–'नाणावरणिज्जस्स णं भंते! कम्मस्स जहन्ने ठितिबंधए के?,
गो०! अण्णयरे सुहुमसंपराए उवसामए वा खवगए वा, एस णं गोयमा! नाणावरणिज्जस्स ठिइबंधए तव्वइरित्ते अजहण्णो'इत्यादि ॥ 

॥ त्रयोदशशतेऽष्टमः ॥

'केयाघडियं'ति ( सू. ४९७ ) रज्जुप्रान्तवद्धघटिकां गृहीत्वा 'केयाघडियाकिच्चहत्थगयाइं'ति, केयाघटिकालक्षणं कृत्यं हस्तगतं येषां तानि, तथा 'हिरण्णपेडं'ति हिरण्यस्य मञ्जूषा, 'विदलकडं'ति, विदलानां वंशार्द्धानां यः कटः स तं 'सुंबकडं'ति वीरणकटं चरमकडंति चर्मव्यूतं वध्र्यादिकं कंवलकडंति ऊर्णामयकम्बलजीनादि, वग्गुली चर्मपक्षपक्षिविशेषः 'वग्गुलिकिच्चगएणं'ति वल्गुलीलक्षणं कृत्यं-कार्यं गतं-प्राप्तं येन स तथा, तद्रूपतां वल्गुलिरूपतां गतेन-वल्गुलीरूपेणात्मना, वल्गुलीरूपं आत्मानं कृत्वा नभसि व्रजति इत्यर्थः, जलोया-जलौका जलजो द्वीन्द्रियजीवः,'उव्विहिय'त्ति उद्वृह्य, २ उत्प्रेर्य इत्यर्थः, 'वीयंवीयगसउणे'त्ति वीजवीजकाख्यः शकुनिः स्यात्, 'दोवे'त्ति द्वावपि पदौ 'समतुरंगेमाण'त्ति समौ-तुल्यौ तुरङ्गस्य-अश्वस्येव समोत्क्षेपणां कुर्वन् समतुरङ्गायमाणः, समकमुत्पाटयन्नित्यर्थः, 'पक्खिविरालए'त्ति जीवविशेषः, 'देवेमाणे'त्ति अतिक्रामन्नित्यर्थः, 'वीईउ वीइं'ति कल्लोलात् कल्लोलं 'वेरुलियं जाव'त्ति यावत्करणात् लोहिताक्षं मसारगल्लं हंसगब्भमित्यादि, 'विसं'ति मृणालं 'अवदालिय'त्ति अवदार्य विदारयित्वा 'मुणालिय'त्ति नलिनीकार्यं 'उम्मज्जिय'त्ति कायमुन्मृज्य २ उन्मग्नं कृत्वा 'किण्ह'त्ति कृष्णः, 'किण्हाभासे'त्ति कृष्ण इवावभासते कृष्णावभासः कृष्णवर्णोऽञ्जनवत् 'अणुपुव्वसुजायजाव'त्ति यावत्करणादिदं दृश्यम्, अणुपुव्वसुजायवप्पगंभीरसीयलजला अनुपूर्वेण सुजाता वप्राः-केदारा यत्र गम्भीरशीतलजला 'सद्दुन्नइयमहुरसरनाइय'त्ति इदमेवं दृश्यम्-'सुयवरहिणमयणसालकोइलकोलकभिंगारककोंडलजीवजीवकनंदीमुहकविलपिंगलखग्गिकारंडवचक्कवायकलहंससारसअणेगसउणगणमिहुणवियरिया''सद्दुन्नय'त्ति तत्र शुकादीनां सारसान्तानां अनेकेषां शकुनिगणानां मिथुनैर्विचरितं शब्दोन्नतिकं च उन्नतशब्दकं मधुरस्वरं च नादितं लपितं-यस्यां सा तथेति ॥ त्रयोदशशते नवमः ॥

'छउमत्थिय'त्ति (सू.४९८) छद्मस्थसमुद्घातः 'हनक् हिंसागत्योः' हननं घातः, सम्–एकीभावे, उत्-प्राबल्ये, ततश्च एकीभावेन प्राबल्येन च घातः समुद्घातः, अथ वे न सहैकीभावगमनं ?, उच्यते, यदाऽऽत्मा वेदनादिसमुद्घातं गतः तदा वेदनाद्यनुभवज्ञानेन परिणमित एव स्यादिति वेदनाद्यनुभवज्ञानेन सहैकीभावः, प्राबल्येन घातः कथम् ?, उच्यते, यस्माद्वेदनादिसमुद्घातपरिणतो बहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवनयोग्यान् उदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय निर्जरयति, आत्मप्रदेशैस्सह संश्लिष्टान् शातयतीत्यर्थः, अतः प्राबल्येन घात इति, अयं च षड्विध इति, तत्र 'वेयणासमुग्घाए'त्ति एकः 'छाउमत्थिए'त्यादिरतिदेशः 'जहा पन्नवणाए'त्ति इह षट्त्रिंशत्तमपदे इति शेषः, ते च शेषाः पञ्चैव, 'कसायसमुग्घाए २ मारणंतियसमुग्घाए ३ वेउव्वियसमुग्घाए ४ तेयगसमुग्घाए ५ आहारसमुग्घाए'त्ति, तत्र वेदनासमुद्घातः असद्वेद्यकर्माश्रयः कषायसमु० सकषायचारित्रमोहनीयकर्माश्रयः मारणान्तिकसमु० अन्तर्मुहूर्त्तशेषायुःकर्माश्रयः वैकुर्विकाहारकतैजससमुद्घाताः शरीरनामकर्माश्रयाः, तत्र वेदनासमुद्घातसमुद्धत आत्मा वेदनीयकर्मपुद्गलशातं करोति, कषायसमु० समुद्धतः कषायपुद्गलशातं मारणान्तिकसमु० समुद्धत आयुःकर्मपुद्गलशातं वैकुर्विकसमु० समुद्धतस्तु जीवप्रदेशान् वपुर्बहिर्निष्काश्य शरीरविष्कम्भबाहल्यमात्रमायामतश्च सङ्ख्येयानि योजनानि दण्डं निसृजति, निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयति, सूक्ष्मांश्चादत्ते, यथोक्तं कल्पे 'वेउव्वियसमुग्घाएणं समोहन्नइ समोहणित्ता संखेज्जाइं जोयणाइं दंडं निसरइ २ अहाबायरे पुग्गले परिसाडेइ अहासुहुमे पोग्गले परियायइ, एवं तैजसाहारकसमुद्घातावप्याख्येयाविति ॥ त्रयोदशशते दशमः ॥

इतिश्रीतपागच्छनायकश्रीलक्ष्मीसागरसूरिशिष्यसुमतिसाधुसूरिशिष्यश्रीहेमविमलसूरिविजयराज्ये

श्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तगणिशिष्यपं०दानशेखरगणिसमुद्धृतायां भगवतीलघुवृत्तौ त्रयोदशशतविवरणं सम्पूर्णम् ॥

अथ चतुर्दशशतमारभ्यते—तत्र उद्देशकाः, तत्सङ्ग्रहगाथा चेयम्—'चर १ उम्माय २ सरीरे'इत्यादि (*७४) तत्र 'चर'त्ति सूत्रमात्रत्वादस्य चरशब्दोपलक्षितः, चरमः प्रथम उद्देशकः 'उम्माय'त्ति उन्मादार्थत्वादुन्मादो द्वितीयः, शरीरशब्दोपलक्षितत्वाच्छरीरस्तृतीयः,'पुग्गल'त्ति पुद्गलार्थत्वात्पुद्गलः ४ 'अगणी'ति अग्निशब्दयुक्तत्वादग्निः ५'किमाहार'त्ति किमाहारा इति प्रश्नयुक्तत्वात् ६'संसिद्ध'त्ति 'चिरसंसिट्ठो सि गोयम'त्ति वाच्यः ७ 'अंतरे'ति नरकपृथ्वीनामन्तरवाच्यः ८ 'अणगार'त्ति अनगारपदवाच्यः ९ 'केवलि'त्ति केवलिस्वरूपवाच्यः १०, गाथासङ्क्षेपार्थः।'चरमं देवावासं'ति (सू.४९९) चरमम्—अनर्वाग्भागवर्त्तिनं स्थित्यादिभिर्देवावासं सौधर्मादिदेवलोकं व्यतिक्रान्तो-लङ्घितः, तदुपपातहेतुभूतलेश्यापरिणामापेक्षया. परमं-परभागवर्त्तिनं स्थित्यादिभिरेव देवावासं सनत्कुमारादिदेवलोकमसंप्राप्तः-अप्राप्तस्तदुपपातहेतुभूतलेश्यापरिणामापेक्षयैव,इदमुक्तं स्यात्-प्रशस्तेष्वध्यवसायस्थानेषूत्तरोत्तरेषु वर्त्तमानः आराद्भागस्थितसौधर्मादिगतदेवस्थित्यादिबन्धयोग्यतामतिक्रान्तः परभागवर्त्तिसनत्कुमारादिदेवगतस्थित्यादिबन्धयोग्यतां चाप्राप्तः,'एत्थ णं अंतर'त्ति इह-अवसरे'कालं करेज्ज'त्ति म्रियेत यस्तस्य क्वोत्पाद इति प्रश्नः, उत्तरं तु—'जे से तत्थ'त्ति अथ ये तत्रेति तयोश्चरमदेवावासपरमदेवावासयोः परिपार्श्वतः समीपे सौधर्मादेरासन्नाः सनत्कुमारादेर्वा तयोर्मध्यभागे, ईशानादौ इत्यर्थः,'तल्लेसा देवावास'त्ति यस्यां लेश्यायां वर्त्तमानः साधुर्मृतः सा लेश्या येषु ते तल्लेश्या देवावासाः,'तहिं'ति तेषु

देवावासेषु तस्यानगारस्य गतिः स्यात्, अत उच्यते—'जस्से गए जिए तस्से उववज्जइ'त्ति, 'से य'त्ति स पुनरनगारस्तत्र मध्य-
भागवर्त्तिनि देवावासे गतः 'विराहेज्ज'त्ति येन लेश्यापरिणामेन तत्रोत्पन्नस्तं परिणामं यदि विराधयेत् तदा 'कम्मलेस्सामेव'त्ति
कर्मणः सकाशात् या लेश्या जीवपरिणतिः सा कर्मलेश्या, भावलेश्येत्यर्थः, तामेव प्रतिपतति तस्या एव प्रतिपतति, अशुभतरां तां
याति, न तु द्रव्यलेश्यायाः प्रतिपतति, सा हि प्राक्तन्येवास्ते, द्रव्यतोऽवस्थितलेश्याभावात् देवानामिति, पक्षान्तरमाह—'से य
तत्थ'त्ति सः अनगारस्तत्र—मध्यदेवावासे गतः सन् यदि न विराधयेत्तं परिणामं तदा तामेव लेश्यां ययोत्पन्नः उपसम्पद्य विह-
रति—आस्ते 'अणगारे णं'ति ननु भावितात्माऽनगारः स कथमसुरकुमारेषूत्पद्यते, विराधितसंयमानां तत्रोत्पादादिति, उच्यते—पूर्व-
कालापेक्षया भावितात्मत्वम् अन्तकालेऽपि संयमविराधनासद्भावादसुरकुमारादितयोपपात इति न दोषः, बालतपस्वी वाऽयं भावि-
तात्मा द्रष्टव्यः॥ 'कहं सीहा गई'त्ति (सू. १००) कथं—केन प्रकारेण नारकाणामुत्पद्यमानानां शीघ्रा गतिः स्यात् इति प्रतीतम्,
यादृशेन च शीघ्रत्वेन शीघ्राऽसाविति च न प्रतीतं न ज्ञातमित्यतः कृतः प्रश्नः 'कहं सीहे'त्ति कथमिति कीदृशः, 'सीहे'त्ति शीघ्रः
गतिविषयो—गतिगोचरस्तद्धेतुत्वात्काल इत्यर्थः, कीदृशी शीघ्रा गतिः कीदृक् तत्कालश्च इति तात्पर्यम्, 'तरुणे'त्ति प्रवर्द्धमान-
वयाः, 'बलवं'ति शारीरप्राणवान् बलं च शारीरं युगं च—कालविशेषः, तद्विशिष्टबलहेतुभूतं यस्यासौ युगवान् 'आउंटियं'ति सङ्को-
चितं, 'विक्खिण्णं'ति विकीर्णं प्रसारितम्, 'साहरेज्ज'त्ति संहरेत् सङ्कोचयेत् 'विक्खिरेज्ज'त्ति विकिरेत्—प्रसारयेत् 'उम्मिसि-
यं'ति उन्मिषितं—उन्मीलितं 'निमिसेज्ज'त्ति मीलयेत् 'भवेयारूवे'त्ति काक्वाऽध्येयम्, काकुपाठे चायमर्थः, यदुत एवं मन्यसे ॥२०६॥
त्वं गौतम! भवेत् तद्रूपं—भवेत् स स्वभावः शीघ्रतायां नारकगतेस्तद्विषयः यदुक्तं विशेषणयुक्तबाहुप्रसारणादेरिति, एवं गौतम-

मतमाशङ्क्याह श्रीभगवान्—नायमर्थः समर्थः, कस्मादेवमित्याह—'नेरइयाणं'ति अयमभिप्रायो-नारकाणां गतिरेकद्वित्रिसमया बाहुप्रसारणादिका वाऽसङ्ख्येयसमया इति, कथं तादृशी गतिः स्यात् नारकाणामिति ?, 'एगसमएण व'त्ति एकेन समयेन उपपद्यन्त इति योगः, ते च ऋजुगत्यैव, वाशब्दो विकल्पे, इह च विग्रहशब्दो न सम्बन्धितः, तस्यैकसामयिकस्याभावात्, 'दुसमएण-व'त्ति द्वौ समयौ यत्र स द्विसमयस्तेन विग्रहेण, एवं त्रिसमयेन वा विग्रहेण—वक्रेण, तत्र स द्विसमयो विग्रहो यदा भरतस्य पूर्वस्या दिशो नरके पश्चिमायामुत्पद्यते तदा एकेन समयेनाधो याति, द्वितीयेन तु तिर्यगुत्पत्तिस्थानमिति, त्रिसमयविग्रहस्त्वेवम्—यदा




भरतस्य पूर्वदक्षिणयोर्दिशोर्नरके अपरोत्तरायां दिशि गत्वोत्पद्यते तदा एकेनाधः समश्रेण्या याति, द्वितीयेन च तिर्यक् पश्चिमायां, तृतीयेन तिर्यगेव वायव्यां दिशि उत्पत्तिस्थानमिति, तदनेन गतिकाल उक्तः एवं यादृशी शीघ्रा गतिस्तदुक्तमिति, 'तदा सीहागइ'त्ति, यथोत्कृष्टः समयत्रये स्यात् तदा 'सीहे गइविसए'त्ति, 'एगिंदियाणं'ति, उत्कर्षतश्चतुःसमयो विग्रहो—वक्रगतिः स्यात्, कथं ?, उच्यते—त्रसनाड्या बहिस्तादधोलोके विदिशो दिशं यात्येकेन, जीवानामनुश्रेणिगमनात्, द्वितीयेन तु लोकमध्ये प्रविशति, तृतीयेनोर्ध्वं याति, चतुर्थेन तु त्रसनाडीतो नित्यदिग्व्यवस्थितमुत्पत्तिस्थानमिति प्राप्नोति, एतच्च बाहुल्यमङ्गीकृत्योच्यते, अन्यथा पञ्चसमयो विग्रहो भवेत् एकेन्द्रियाणां, तथाहि—स्थापना चेयम्। त्रसनाड्या बहिस्तादधोलोके विदिशो दिशं यात्येकेन द्वितीयेन लोकमध्ये तृतीयेनार्ध्वलोके चतुर्थेन ततस्तिर्यक् पूर्वादिदिशा निर्गच्छति, ततः पञ्चमेन विदिग्व्यवस्थितमुत्पत्तिस्थानं

यातीति उक्तं च–"विदिसाउ दिसं पढमे बीए पइसरइ नाडिमज्झंमि। उड्ढं तइए तुरिए उ नीइ विदिसं तु पंचमए ॥१॥" 'सेसं तं चेव'त्ति 'पुढविकाइयाणं भंते! कहं सीहागइ'त्ति, सर्वं यथा नारकाणां तथा वाच्यमित्यर्थः ॥ अथानन्तरोत्पन्नत्वादि प्रतीत्यापरं तमेवाह–'अणंतरोववण्णग'त्ति (सू. ५०१) न विद्यन्तेऽन्तरं–समयादिव्यवधानं उपपन्ने–उपपाते येषां ते अनन्तरोपपन्नकाः 'परंपरोववण्णग'त्ति परम्परा–द्वित्रादिसमयता उपपन्ने–उपपाते येषां ते परम्परोपपन्नकाः, 'अणंतरपरंपरउववन्नग'त्ति अनन्तरम्–अव्यवधानं परम्परं च–द्वित्रादिसमयरूपम् अविद्यमान उपपन्न–उपपातो येषां ते तथा, एते च विग्रहगतिकाः, विग्रहगतौ हि द्विविधस्याप्युत्पादस्याविद्यमानत्वादिति, अथानन्तरोपपन्नादीनाश्रित्यायुर्बन्धमभिधातुमाह–'अणंतरे'त्यादि, इहैवानन्तरोपपन्नानां अनन्तरपरम्परानुपपन्नानां च चतुर्विधस्याप्यायुषः प्रतिषेधोऽध्येतव्यः, तस्यामवस्थायां तथाविधाध्यवसायस्थानाभावेन सर्वजीवानामायुषो बन्धाभावात् स्वायुषस्त्रिभागादौ च शेषे बन्धसद्भावात्, परम्परोपपन्नकास्तु स्वायुषः षण्मासे शेषे मतान्तरेणोत्कर्षतः षण्मासे जघन्यतश्चान्तर्मुहूर्त्ते शेषे भवप्रत्ययात्तिर्यग्मनुष्यायुषी एव कुर्वन्ति, 'नेरइय'त्ति एवं 'जाव वेमाणिय'त्ति अनेनोक्तालापकत्रययुक्तश्चतुर्विंशतिदण्डकोऽध्येतव्य इति सूचितं, यश्चात्र विशेपस्तं दर्शयतुमाह–नवरं 'पंचिंदिए'त्यादि, अथानन्तरनिर्गतत्वादिना अपरं दण्डकमाह–'नेरइयाणं'ति तत्र निश्चितस्थानान्तरप्राप्त्या गतं–गमनं निर्गतं अनन्तरसमयादिना निर्व्यवधानं निर्गतं येषां ते अनन्तरनिर्गताः, ते च येषां नरकादुद्वृत्तानां स्थानान्तरं प्राप्तानां प्रथमः समयो वर्त्तते, तथा परम्परेण–समयपरम्परया निर्गतं तेषां ते तथा, ते च येषां नरकादुद्वृत्तानां उत्पत्तिस्थानप्राप्तानां द्व्यादयः समयाः, अनन्तरपरम्परानिर्गतास्तु ये नरकादुद्वृत्ताः सन्तो विग्रहगतौ वर्त्तन्ते न तावदुत्पादक्षेत्रमाप्नुयात्, तेषामनन्तरभावेन परम्परभावेन च उत्पादक्षेत्राप्राप्तत्वेन निश्चये-

नानिर्गतत्वादिति, 'अणंतरे'त्ति इह च परम्परानिर्गता नारकाः सर्वाण्यायूंषि बध्नन्ति, यतस्ते मनुष्याः पञ्चेन्द्रियतिर्यञ्चश्च एव स्युः, ते च सर्वायुर्बन्धका एवेति, एवं सर्वेऽपि परम्परनिर्गताः, वैक्रियजन्मानः औदारिकजन्मानोऽप्युद्वृत्ताः केचिन्मनुष्यपञ्चेन्द्रियतिर्यञ्चः स्युरतस्त एव सर्वबन्धका एवेति ॥ अनन्तरं निर्गता उक्ताः, ते च क्वचिदुत्पद्यमानाः सुखेनोत्पद्यन्ते दुःखेन वेति दुःखोत्पन्नमाश्रित्याह– नेरइए'त्यादि, 'अणंतरखेदोववण्णग'त्ति अनन्तरं-समयाद्यव्यवहितं खेदेन-दुःखेनोपपन्नं-उत्पादक्षेत्रप्राप्तिलक्षणं येषां ते अनन्तरखेदोपपन्नकाः 'खेदाणुववण्णग'त्ति अनन्तरं परम्परं च खेदेन नास्ति उपपन्नकं येषां ते तथा, विग्रहगतिवर्त्तिन इत्यर्थः, 'ते चेव चत्तारि'त्ति त एव प्रागुक्ता उत्पन्नदण्डकादयः खेदशब्दविशेषिताश्चत्वारो दण्डका भणितव्याः, तत्र च प्रथमः खेदोपपन्नको द्वितीयस्तदायुर्दण्डकः तृतीयः खेदनिर्गतदण्डकः चतुर्थस्तदायुर्दण्डक इति चतुर्दशशते प्रथमः ॥

'उम्माय'त्ति, (सू.५०२) उन्माद उन्मत्तता विविक्तचेतना भ्रंश इत्यर्थः, 'जक्खाएसे य'त्ति, यक्षो-देवस्तेनावेशः-प्राणिनोऽधिष्ठानं यक्षावेशः 'मोहणिज्जस्स'त्ति तत्र मोहनीयं-मिथ्यात्वमोहनीयम् तस्योदयादुन्मादः स्यात्, यतस्तदुदयवर्त्ती जन्तुरतत्त्वं तत्त्वं मन्यते तत्त्वमप्यतत्त्वं च, चारित्रमोहनीयं वा, यतस्तदुदये जानन्नपि विषयादिस्वरूपमजानन्निव प्रवर्त्तते, यदाह–"चिंतेइ १ दट्ठुमिच्छइ २ दीहं नीससइ ३ तह जरे ४ दाहे ५। भत्तअरोयग ६ मुच्छा ७ उम्माय ८ ण याणई ९ मरणे १० ॥१॥"त्ति, अनयोश्च विशेषमाह–तत्र–तयोर्मध्ये 'सुहवेयतराए चेव'त्ति अतिशयेन सुखेन–मोहजन्योन्मादापेक्षया अक्लेशेन वेदनम्–अनुभवनं यस्यासौ सुखवेदनतरः स एव सुखवेदनतरकः, 'चेव'त्ति स्वरूपावधारणे, 'सुहविमोयण'त्ति अतिशयतः सुखेन विमोचनं–वियोजनं यस्मादसौ सुखविमोचनतरः, कप्रत्ययस्तथैव, 'तत्थ णं'ति मोहजन्योन्माद इतरापेक्षया दुःखवेदनतरः स्यात्; अनन्तसंसारकारणत्वात् संसा-

रस्य च दुःखवेदनस्वभावत्वाद्, इतरस्तु सुखविमोचनतर एव, एकभविकत्वादिति, तथा मोहजोन्माद इतरापेक्षया दुःखविमोचनतरः स्यात्, विद्यामन्त्रतन्त्रदेवानुग्रहवतामपि वादिकानां तस्यासाध्यत्वाद्, इतरस्तु सुखविमोचनतर एव स्यात्, मन्त्रमात्रेणापि तस्य निग्रहीतुं शक्यत्वादिति, आह च—सर्वत्र मन्त्रवाद्यपि यस्य न सर्वस्य निग्रहे शक्तः। मिथ्यामोहोन्मादः स केन किल कथ्यतां तुल्यः? ॥१॥" 'उम्मादं पाउणेज्ज'त्ति प्राप्नुयात् कुर्यादित्यर्थः 'पुढविकाइयाण'मित्यादौ यदुक्तम्–जहा नेरइयाणं, तेन देवे वा से असुभे पुग्गले पक्खिवेज्जा इत्येतद्यक्षावेशे पृथ्व्यादिसूत्रेष्वध्यापितम्, 'वाणमंतरे'त्यादौ यदुक्तम्–'जहा असुराणं' तेन यक्षावेश एव व्यन्तरादिसूत्रेषु 'देवे वासे महिड्डितराए'त्ति महर्द्धिकतरकः इत्येतदध्यापितम्, मोहोन्मादालापस्तु सर्वत्र समान इति ॥ अथ वृष्टिकायकरणं देवेन्द्रादीनामाह–'अत्थि'त्ति (सू. ५०३) अस्त्येतत् 'पज्जन्ने'त्ति पर्जन्यः, 'कालवासि'त्ति काले–प्रावृषि वर्षतीत्येवंशीलः कालवर्षी 'वुट्ठिकायं'ति वृष्टिकायं प्रवर्षणतो जलसमूहं 'पकरेइ'त्ति प्रकरोति, प्रवर्षतीत्यर्थः, इह स्थाने शक्रोऽपि तं प्रकरोतीति दृश्यं, तत्र पर्जन्यस्य प्रवर्षणक्रियायां तत्स्वाभाव्यतालक्षणो विधिः प्रतीत एव, शक्रप्रवर्षणक्रियाविधिस्त्वप्रतीत इति तं दर्शयन्नाह—'जाहे'त्यादि, अथवा पर्जन्य इन्द्र एवोच्यते, स च कालवर्षी काले–जिनजन्मादिमहादौ वर्षतीतिकृत्वा, 'जाहे'त्ति यदा 'से कहमियाणिं'ति स शक्रः कथं तदानीं प्रकरोति ?, वृष्टिकायमिति प्रकृतम्, असुरकुमारसूत्रे 'किं पत्तियणं'ति किं प्रत्ययं, किं कारणमाश्रित्येत्यर्थः, 'जंमणे'त्यादि, 'तमुकाइए'त्ति (सू. ५०४) तमस्कायकारिणः 'किड्डारइपत्तिय'त्ति क्रीडारूपा रतिः प्रत्ययः–कारणं यत्र तत् क्रीडारतिप्रत्ययं 'गुत्तीसंरक्खण'त्ति गोपनीयद्रव्यसंरक्षणहेताविति, चतुर्दशशते द्वितीयः ॥

'देवेणं'ति (सू. ५०५) इह कचिदियं द्वारगाथा दृश्यते–"महकाए सक्कारे सत्थेणं वीवयंति देवा उ। वीसं चेव य ठाणा

नेरइयाणं तु परिणामि ॥१॥"त्ति, गाथा, 'महकाए'त्ति महान्-बृहत्कायो-निकायो यस्य स महाकायः 'देवदंडओ भाणियव्वो'त्ति नारकपृथ्वीकायिकादीनामधिकृतव्यतिकरस्यासम्भवात् देवानामेव सम्भवात् देवदण्डकोऽत्र भणितव्यः,'सक्कारे इ व'त्ति सत्कारो वन्दनाद्यादरकरणम् वर्यवस्त्रादिदानं वा,'सक्कारो पवरवत्थमाईहिं'ति वचनात्, सन्मानस्तादृक्प्रतिपत्तिकरणं, कृतिकर्म्म-वन्दनकार्यकरणं 'अंजलि'त्ति अञ्जलिकरणं 'आसणाभिग्गहि'त्ति गौरव्यस्यासनानयनपूर्वकं उपविशतेति भणनं, 'आसणणुप्पयाणे'त्ति आसनानुप्रदानं गौरव्यमाश्रित्यासनस्य स्थानान्तरसञ्चारणं 'एंतस्स पच्चुग्गच्छण'त्ति आगच्छतो गौरव्यस्याभिमुखं गमनं 'ठियस्स'त्ति तिष्ठतो गौरव्यस्य सेवेति,'पडिसंसाहण'त्ति गच्छतोऽनुव्रजनं। (सू. ५०६) अयं विनयो नारकाणां नास्ति, नित्यं दुष्टत्वात्। (सू. ५०७) देवानां मिथो विनयमाह-'आयड्ढिय'त्ति दशमशते ३ उद्देशके 'निरवसेसं'ति समग्रं प्रथमदण्डकसूत्रं वाच्यम्, तत्राल्पर्द्धिकमहर्द्धिकालापकश्च समर्द्धिकालापकश्चेति दण्डकद्वयं दर्शितम्, केवलं समर्द्धिकालापकस्यान्तेऽयं सूत्रशेषो दृश्यः, गोयमा! पुव्विं सत्थेण अक्कमित्ता पच्छा वीईवइज्जा, नो पुव्विं वीईवइत्ता पच्छा सत्थेणं अक्कमिज्ज'त्ति, तृतीयस्तु महर्द्धिकाल्पर्द्धिकालापक एवं-महिड्ढिए णं भंते! देवे अप्पड्ढियस्स देवस्स मज्झंमज्झेणं वीइवइज्जा, से णं भंते! किं सत्थेणं अक्कमित्ता पभू अणक्कमित्ता पभू?, शस्त्रेण हत्वा अहत्वा वेत्यर्थः, गोयमा! अक्कमित्ता अणक्कमित्तावि पभू, से णं भंते! पुव्विं सत्थेणं अक्कमित्ता पच्छा वीईवइज्जा पुव्विं वीईवइत्ता पच्छा सत्थेणं अक्कमिज्जा?, गोयमा! पुव्विं वा सत्थेणं अक्कमित्ता पच्छा वीइवइज्जा पुव्विं वा वीईवइत्ता पच्छा सत्थेणं अक्कमेज्जा, चत्तारि दंडगा भाणियव्व'त्ति, तत्र प्रथमदण्डक उक्तालापकत्रयात्मको देवस्य देवस्य च, द्वितीयश्च एवंविध एव, नवरं देवस्य देव्याश्च, एवं तृतीयोऽपि नवरं देव्याश्च देवस्य च, चतुर्थोऽपि एवं, नवरं देव्या देव्याश्च, अत एवाह-जाव महिड्ढिया वेमाणिणी

असंख्नियाण् वेमाणिणीए गज्झंगज्झेणमित्यादि प्रागुक्तानुसारेण ज्ञेयमिति । वेयणापरिणामंति पुद्गलपरिणामवत् वेदनापरिणामं नारकाः प्रत्यनुभवन्ति, तथैवाभिलापः (सू. ५०८) रयणप्पभापुढविनेरइयाणं भंते ! केरिसगं वेयणापरिणामं पच्चणुब्भवमाणा विहरन्ति ?, गो० ! अणिट्ठं जाव अमणामं एवं जाव अहे सत्तमापुढविनेरइया' शेषं सूत्रातिदेशायाह-'एवं जहा 'जीवाभिगमे' इत्यादि, जीवाभिगमोक्तानि चैतानि २० पदानि, तद्यथा-"पोग्गलपरिणामे १ वेयणा य २ लेसा य ३ नामगोए य ४। अरई ५ भए य सोगे ७ खुहा ८ पिवासा य ९ वाही य १० ॥१॥ उस्सासे ११ अणुतावो १२ कोहे १३ माणे य १४ माय १५ लोभे य १६ । चत्तारि य सण्णाओ २० नेरइयाणं परीणामे ॥२॥"त्ति, तत्र चाद्यपदद्वयस्यार्थो दर्शित एव, शेषाणि त्वष्टादशपदान्यभिलापेनाध्येयानीति ॥ १४ शते तृतीयः ॥

पुनरपि पुद्गलपरिणाममाह-इह पुनरुद्देशकार्थसङ्ग्रहगाथा उच्यते, सा चेयम्-"पोग्गल १ खंधे २ जीवे ३ परमाणू सासए य ४ चरमे य ५ । दुविहे खलु परिणामो जीवाणं चेव अजीवाणं ६ ॥१॥" अस्यार्थ उद्देशकार्थाधिगम्य एव । 'पुग्गले'त्ति (सू. ५१०) पुद्गलः परमाणुः स्कन्धरूपश्च 'तीतमणंतं'ति विभक्तिपरिणामादतीतेऽनन्ते परिणामित्वात् शाश्वतेऽक्षयत्वात् समयकाले 'समयं लुक्खी'ति समयमेकं यावत् रूक्षस्पर्शसद्भावात् रूक्षी 'समयं अलुक्खी' अरूक्षस्पर्शत्वात् अरूक्षी स्निग्धस्पर्शवान् बभूव, इदं पदत्रयं परमाणौ स्कन्धे च सम्भवति, 'समयं लुक्खी'ति समयमेव रूक्षश्चारूक्षश्च रूक्षस्निग्धलक्षणस्पर्शद्वयोपेतो बभूव, इदं स्कन्धापेक्षम्, यतो द्व्यणुकादिस्कन्धो देशे रूक्षः देशे स्निग्धश्च, एवं युगपद्रूक्षस्निग्धस्पर्शसम्भवः, एवंरूपः सन्सौ अनेकवर्णपरिणामं परिणमति, पुनश्चैकवर्णादिपरिणामपरिणतिस्स्यादिति पृच्छन्नाह-'पुव्विं च णं करणेणं अणेगवण्णं अणे-

गरूवं'ति पूर्वं च एकवर्णादिपरिणामात्प्रागेव करणेन—प्रयोगकरणेन विश्रसाकरणेन वा अनेकवर्णं कालनीलवर्णादिभेदेन अनेकरूपगन्धरसस्पर्शसंस्थानभेदेन परिणामं—पर्यायं 'परिणमइ'त्ति अतीतकालविषयत्वादय परिणतवानिति द्रष्टव्यम्, पुद्गल इति प्रकृतं, स च यदि परमाणुस्तदा समयभेदेनानेकवर्णादित्वं परिणतवान्, यदि च स्कन्धस्तदा यौगपद्येन, 'अहे से'त्ति अथानन्तरं स एप चानेकवर्णादिपरिणामो निर्जीर्णः—क्षीणः स्यात्, परिणामान्तराधायककारणोपनिपातवशात्, ततो निर्जरणानन्तरं एकवर्णोऽपेतवर्णान्तरत्वादेकरूपो विवक्षितगन्धादिपर्यायापेक्षयाऽपरपर्यायाणामपेतत्वात् 'सिय'त्ति बभूव अतीतकालविषयत्वादस्येति प्रश्नः, इहोत्तरमेतदेवेति, अनेन च परिणामता पुद्गलद्रव्यस्य प्रतिपादितेति, 'पडुप्पण्णं'ति विभक्तिपरिणामात् प्रत्युत्पन्ने—वर्त्तमाने शाश्वते सदैव तस्य भावात् समये—कालमात्रे 'एवं चेव'त्तिकरणात् पूर्वसूत्रोक्तमिदं दृश्यम्, 'समयं लुक्खी समयं अलुक्खी लुक्खी वा अलुक्खी वे'त्यादि, यच्चेहानन्तमिति नाधीतं तद्वर्त्तमानसमयस्यानन्तत्वासम्भवाद्, अतीतानागतसूत्रयोस्तु अनन्तमित्यधीतं तयोरनन्तत्वसम्भवादिति। अनन्तरं पुद्गलस्वरूपमुक्तम्, पुद्गलश्च स्कन्धोऽपि स्यादिति पुद्गलभेदभूतस्य स्कन्धस्य स्वरूपं दर्शयन्नाह—'एस णं भंते! खंधे'इत्यादि। स्कन्धश्च स्वप्रदेशापेक्षया जीवोऽपि स्यादिति जीवस्वरूपमाह—'एस णं भंते! जीवे'त्ति (सू. ५१०) एष प्रत्यक्षो जीवोऽतीतेऽनन्ते शाश्वते समये समयमेकं दुःखहेतुयोगात् समयं दुःखी सुखहेतुयोगात् समयमेकं सुखी बभूव, समयमेव सुखी दुःखी वा तद्धेतुयोगात्, न पुनरेकदा दुःखसुखवेदनमस्त्येकोपयोगत्वाज्जीवस्येति, एवंरूपः सन्नसौ स्वहेतुतः किमनेकभावं परिणामं परिणमति पुनश्चैकभावपरिणामः स्यादिति पृच्छन्नाह—'पुव्विं च णं करणेणं अणेगभावं'ति पूर्वं च एकभावं परिणामात्प्रागेव करणेन—कालस्वभावादिकारणसंवलितया शुभाशुभकर्म्मबन्धहेतुभूतया क्रियया अने-

को भावः–पर्यायो दुःखितत्वादिरूपो यस्मिन् स तथा तमनेकभावं परिणाममिति योगः, 'अणेगभूयं'ति अनेकभावत्वादेवानेकरूपं परिणामस्वभावं 'परिणमइ'त्ति अतीतकालविषयत्वादस्य परिणतवान्–प्राप्तवानिति, 'अहे से'त्ति अथ तद्दुःखित्वाद्यनेकभावहेतुभूतं 'वेयणिज्जं'त्ति वेदनीयं कर्म उपलक्षणत्वाच्चास्य ज्ञानावरणीयत्वादि च निर्जीर्णं–क्षीणं स्यात् ततः पश्चात् 'एगभावे'त्ति एको भावः सांसारिकसुखविपर्ययात् स्वाभाविकसुखस्वभावो यस्यासावेकभावोऽत एवैकभूतः–एकत्वं प्राप्तः 'सिय'त्ति बभूव, कर्मकृतधर्म्मान्तरविरहादिति प्रश्नः, इहोत्तरमेतदेव, एवं प्रत्युत्पन्नानागतसूत्रे अपीति ॥ 'परमाणुपोग्गले णं'ति (सू. ५११) पुद्गलः स्कन्धोऽपि स्यात्, अतः परमाणुग्रहणं 'वण्णपज्जवेहिं'ति परि–सामस्त्येनावंति–गच्छन्ति ये ते पर्यवा–विशेषाः धर्म्मा वा इत्यनर्थान्तरं, ते च वर्णादिभेदादनेकधेत्यतो विशिष्यते–वर्णस्य पर्यवा वर्णपर्यवा अतस्तैरशाश्वतः–विनाशी, पर्यवाणां पर्यवत्वेन विनश्वरादिति, (सू. ५१२) यः परमाणुर्यस्माद्विवक्षितभावाच्च्युतस्सन् पुनस्तद्भावं न प्राप्स्यति स तद्भावापेक्षया चरमः 'अचरमे'त्ति एतद्विपरीतस्त्वचरम इति, 'दव्वादेसेणं'त्ति आदेशः–प्रकारः तेन द्रव्यादेशेन–द्रव्यप्रकारेण न चरमः, स हि द्रव्यतः परमाणुत्वाच्च्युतः सङ्घातमवाप्यापि ततश्च्युतः परमाणुत्वरूपं द्रव्यत्वमवाप्स्यतीति, 'खेत्तादेसे'त्ति क्षेत्रविशेषितत्वलक्षणप्रकारेण स्यात्कदाचिच्चरमः, कथं यत्र क्षेत्रे केवली समुद्घातं गतस्तत्र क्षेत्रे यः परमाणुरवगाढोऽसौ तत्र क्षेत्रे तेन केवलिना समुद्घातगतेन विशेषितो न कदाप्यवगाहं लप्स्यते, केवलिनो निर्वाणगमनादित्येवं क्षेत्रतश्चरमोऽसाविति, निर्विशेषेण क्षेत्रापेक्षया त्वचरमः, तत्क्षेत्रावगाहस्य पुनस्तेन लप्स्यमानत्वात् 'कालादेसेणं'ति स्यात्कथञ्चिच्चरमः, कथं?, यत्र काले पूर्वाह्णादौ केवलिना समुद्घातः कृतस्तत्रैव यः परमाणुः परमाणुतया वृतः स तं कालविशेषं केवलिसमुद्घातविशेषितं न कदापि प्राप्स्यति, तस्य केवलिनः सिद्धिगम-

नेन समुद्घातागमनादिति, तदपेक्षया कालतश्चरमोऽसाविति, सामान्यकालापेक्षया त्वचरम इति, 'भावाएसेणं'ति भावो-वर्णादिविशेषः, तेन प्रकारेण स्यात्-कथञ्चिचरमः, कथं ?, विवक्षितकेवलिसमुद्घातावसरे यः पुद्गलो वर्णादिभावविशेषं परिणतः स विवक्षितकेवलिसमुद्घातविशेषितवर्णपरिणामापेक्षया चरमो यस्मात् तत्केवलनिर्वाणे पुनस्तं परिणाममसौ न प्राप्स्यति, इदं व्याख्यानं चूर्णिकारमाश्रित्य कृतमिति, 'परिणामे'त्ति (सू.५१३) तत्र परिणमनं-द्रव्यस्यावस्थान्तरगमनं परिणामः, आह च-"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम्। न तु सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥१॥" 'परिणामपयं'ति प्रज्ञापनायां त्रयोदशं, तच्चेदम्-'जीवपरिणामे णं भंते ! कइविहे पण्णत्ते !, गो० ! दसविहे पण्णत्ते, तंजहा-गतिपरिणामे इंदियपरिणामे एवं कसायलेसाजोगुवओगनाणदंसणवेदपरिणामे'इत्यादि, तथा 'अजीवपरिणामे दसविहे पं०, तं०-बंधणपरिणामे गतिपरिणामे २ एवं संठाणे ३ वेय ४ वण्ण ५ गंध ६ रस ७ फास ८ अगुरुलहु ९ सद्दपरिणामे १०'इत्यादि ॥ १४ शते चतुर्थः ॥

इह उद्देशकार्थसङ्ग्रहगाथा दृश्यते, सा चेयम्-'नेरइय अगणिमज्झे दस ठाणा तिरियपोग्गले देवे। पव्वयभित्तीउल्लंघणा य उल्लंघणा चेव ॥१॥'त्ति, अस्यार्थ उद्देशकार्थाधिगमगम्य इति, 'नो खलु तत्थ सत्थं कमइ' (सू. ५१४) विग्रहगतिसमापन्नो हि कार्मणशरीरत्वेन सूक्ष्मत्वाच्च तत्र शस्त्रम्-अग्न्यादिकं न क्रामति, 'तत्थ णं जे से'त्ति, अविग्रहगतिसमापन्न उत्पत्तिक्षेत्रोपपन्नोऽभिधीयते, न तु ऋजुगतिसमापन्नस्तस्येह प्रकरणेऽनधिकृतत्वात्, स च अग्निकायस्य मध्ये न व्यतिव्रजति, नारकक्षेत्रे बादराग्निकायस्याभावान्मनुष्यक्षेत्र एव तद्भावात्, यदुत्तराध्ययने श्रूयते 'हुयासणे जलंतंमि, दड्ढपुव्वो अणंतसो'इत्यादि तदग्निसदृशद्रव्यान्तरापेक्षया अवसेयम्, सम्भवन्ति च तथाविधशक्तिमन्ति द्रव्याणि तेजोलेश्याद्रव्यवदिति, असुरसूत्रे विग्रहगतिको नारकवत्, अविग्रहगतिस्तु

कोऽप्यग्नेर्मध्येन व्यतिव्रजेत्, यस्तु मनुष्यलोकमागच्छति, यस्तत्र नागच्छति स न व्यतिव्रजेत्, व्यतिव्रजनेऽपि च न ध्मायंते, यतो न खलु तत्र शस्त्रं क्रमते सूक्ष्मत्वाद्वैक्रियशरीरस्य शीघ्रत्वाद् गतेरिति, 'एगिंदिया जहा नेरइय'त्ति, कथं ?, यतोऽग्निमध्येन विग्रहेऽपि व्यतिव्रजति, सूक्ष्मत्वान्न दह्यन्ते, अविग्रहगतिसमापन्नकाश्च तेऽपि नाग्नेर्मध्ये व्यतिव्रजन्ति स्थावरत्वात्, यच्च तेजोवायूनां गतित्रसतया अग्निमध्येन व्यतिव्रजनं दृश्यते तदिह न विवक्षितमिति सम्भाव्यते, स्थावरत्वमात्रस्यैव विवक्षितत्वात्, स्थावरत्वे ह्यस्ति कथञ्चित्तेषां मत्यभावो यदपेक्षया स्थावरास्ते व्यपदिश्यन्ते, अन्यथाऽधिकृतव्यपदेश्य निर्निबन्धनता स्यात्, चूर्णिकारः पुनरेवमाह— 'एगिंदियाण गई नत्थि'त्ति ते न गच्छन्ति, 'एगे वाउकाइए परपेरणेसु गच्छंतित्ति विराहिज्जं'ति, 'इड्डिपत्ता य'त्ति वैक्रियलब्धिसम्पन्नाः 'अत्थेगइए अगणिकायस्स'त्ति अस्त्येककः पञ्चेन्द्रियतिर्यक् यो मनुष्यलोकवर्त्ती स तत्राग्निकायसम्भवात्तन्मध्येन व्यतिव्रजेत्, यस्तु नरक्षेत्राद्बहिर्नासावग्नेर्मध्येन व्यतिव्रजेत्, तत्राग्न्यभावात्, तदन्यो वा तथाविधसामग्र्यभावात्, 'नो खलु तत्थ सत्थं'ति वैक्रियादिलब्धिमति पञ्चेन्द्रियतिरश्चि नाग्न्यादिकं शस्त्रं क्रमत इति । अथ दश स्थानान्यभिधातुमाह—'अणिट्ठा गई'त्ति (सू.५१५)अप्रशस्तविहायोगतिनामकर्मोदयसम्पाद्या नरकावस्थानरूपा नरकायुष्यरूपा वा 'लावण्णे'त्ति लावण्यं-शरीराकृतिविशेषः, 'जसोकित्ति'त्ति यशः सर्वदिग्गामिप्रसिद्धिः कीर्त्तिरेकदिग्गामिनी ख्यातिः दानफलभूता वा 'उट्ठाणे'त्ति उत्थानं—वीर्यविशेषरूपं, सर्वत्र अनिष्टत्वं कुत्सितत्वात्तेषामिति, 'छट्ठाणाइं'ति पृथ्वीकायिकानामेकेन्द्रियत्वेन प्रागुक्तदशस्थानकमध्ये शब्दरूपगन्धरसानामविषयः, एवं स्पर्शादीन्येव षट् ते प्रत्यनुभवन्ति, 'इट्ठाणिट्ठफासं'ति, सातासातोदयसम्भवात् शुभाशुभक्षेत्रोत्पत्तिः, यद्यपि तेषां स्थावरत्वात् गमनरूपा गतिर्नास्ति स्वभावतस्तथापि परप्रत्यया सा भवन्ती शुभाशुभत्वेनेष्टानिष्टव्यपदेशार्हा स्याद्, अथवा यद्यपि

पापरूपत्वात् तिर्यग्गतिरनिष्टैव स्यात्, तथा ईषत्प्राग्भारा अप्रतिष्ठानादिक्षेत्रोत्पत्तिद्वारेणेष्टानिष्टा गतिस्तेषां भावनीयेति, 'इट्ठाणिट्ठा ठिइ'त्ति सा च गतिवद् भावनीया, 'लावण्णे'त्ति इदं च मण्यंधपाषाणवस्तुषु भावनीयम्, 'जसोकित्ति'त्ति प्रसिद्धिरप्रसिद्धिरूपा यशःकीर्त्तिर्मण्यादिष्वेवावसेयेति, 'उट्ठाणं जाव'त्ति उत्थानादि च यद्यपि तेषां स्थावरत्वान्नास्ति तथापि प्राग्भवानुभूतोत्थानादिसंस्कारवशात्तदिष्टमनिष्टं चावसेयमिति, 'सत्तट्ठाणाइं'त्ति शब्दरूपगन्धानां तदविषयत्वात् रसस्पर्शादिस्थानानि च शेषाणि एकेन्द्रियाणामिवेष्टानिष्टान्यवसेयानि, गतिस्तु तेषां त्रसत्वाद् गमनरूपा द्विविधाऽप्यस्ति, स्थितिस्तूत्पत्तिस्थानविशेषेणेष्टानिष्टावसेयेति। अथ 'तिरियपुग्गले'ति द्वारमाह–'बाहिरए'त्ति (सू.५१६) भवधारणीयवपुर्भिन्नान् 'अपरियाइत्त'त्ति अपर्यादाय–अगृहीत्वा 'भित्तिं'ति तिर्यग्प्राकारवरंडिकादिभित्तिं 'उल्लंघित्तए'त्ति उल्लङ्घयितुं सकृदुल्लङ्घनेन 'पलंघित्तए'त्ति प्रलङ्घयितुं पुनः २ उल्लङ्घनेन ॥ १४ शते पञ्चमः ॥

'किमाहार'त्ति (सू. ५१७) किमाहारयन्ति इति किमाहाराः 'किंपरिणाम'त्ति किमाहारितं सत्परिणामयंति इति किंपरिणामाः 'किंजोणीय'त्ति किं योनिः-उत्पत्तिस्थानं येषां ते किंयोनिकाः, एवं किंस्थितिकाः स्थितिः–अवस्थानहेतुः ?, अत्रोत्तरम्–क्रमेणैव व्यक्तं दृश्यम्, नवरं 'पुग्गलजोणिय'त्ति पुद्गलाः शीतादिस्पर्शा योनी येषां ते, नारका हि शीतयोनयः उष्णयोनयश्च, 'पुग्गलठिइ'त्ति पुद्गलाः–आयुःकर्मपुद्गला स्थितिर्येषां नरके स्थितिहेतुत्वात् ते, अथ कस्मात्ते पुद्गलस्थितयः स्युः?, अत आह–'कम्मोवगे'त्ति कर्म्म–ज्ञानावरणादिपुद्गलरूपं बन्धनद्वारेणोपगच्छन्ति इति कर्मोपगाः, कर्म निदानं-नारकत्वनिमित्तं कर्मबन्धहेतुत्वं वा येषां ते कर्मनिदानाः, कर्म्मणः–कर्मपुद्गलेभ्यः सकाशात् स्थितिर्येषां ते कर्म्मस्थितयः, 'कम्मुणामेव'त्ति कर्मणैव हेतुभूतेन

मकार आगमिकः 'विप्परियासं'ति विपर्यासं–पर्यायान्तरं पर्याप्ताऽपर्याप्तादिकं 'एंति'त्ति आयान्ति–प्राप्नुवन्ति अतस्ते पुद्गलस्थितयः स्युः॥ अथाहारमाह–'वीइदव्वाइं'ति (सू. ५१८) वीचिः–विवक्षितद्रव्याणां तदवयवानां च मिथः पृथग्भावो 'विचि पृथग्भावे' इति धातुपाठात् तत्र वीचिप्रधानानि द्रव्याणि वीचिद्रव्याणि, एकादिप्रदेशन्यूनानीत्यर्थः, एतन्निषेधादवीचिद्रव्याणि, अयमर्थः–यावता द्रव्यसमुदायेनाहारः पूर्यते स एकादिप्रदेशोनो वीचिद्रव्याण्युच्यते, सकलस्त्ववीचिद्रव्याणीति, 'एगपदेसूणाइंपि' एकप्रदेशोनान्यपि अपिशब्दादनेकप्रदेशोनान्यपीति। अथ वैमानिककामभोगानाह–'जाहे'त्ति (सू. ५१९) यदा 'भोगभोगाइं'त्ति भोगाः–स्पर्शादयः भोगार्हा भोगा भोगभोगाः, मनोज्ञस्पर्शादय इत्यर्थः, 'से कह'त्ति अथ कथं–केन प्रकारेण तदानीं प्रकरोति, प्रवर्त्तते इत्यर्थः, 'नेमिपडिरूवगं'ति नेमिः–चक्रधारा तत्समं प्रतिरूपकं वृत्तत्वेन स्थानमिति शेषः, 'तिण्णि जोयण'त्ति यावत्करणादिदं वाच्यम्–सोलस य जोयणसहस्साइं दो सयाइं कोसतियं अट्ठावीसहियं धणुसयं तेरसअंगुलाइं, 'उवरिं'ति उपरिष्टात् 'जाव मणीणं फासे'त्ति भूमिभागवर्णकस्तावद्वाच्यः, यावन्मणीनां स्पर्शवर्णक इत्यर्थः, 'अब्भुग्गय'त्ति अभ्युद्गत उच्छ्रितादिः प्रासादवर्णको वाच्य इत्यर्थः, 'उल्लोए'त्ति उल्लोचो वा उल्लोक उपरितलं वा, 'पउम'त्ति पद्मलता भक्तिरचनाविचित्रः, 'जाव'त्ति यावत्करणात् 'पासाइए ४ जह वेमाणि'त्ति यथा वैमानिकानां मणिपीठिका, न तु व्यन्तरादीनां, तस्या अन्यथा स्वरूपत्वात्, 'दोहि य अणिएहिं'ति द्वाभ्यां अनीकाभ्यां–सैन्याभ्यां 'नट्टाणिए'त्ति नृत्यानीकं नृत्यजनवृन्दं इत्यर्थः, इह च यच्छक्रस्य सुधर्मसभालक्षणभोगस्थाने सत्यपि भोगार्थं नेमिप्रतिरूपकादिविकुर्वणं तज्जिनास्थ्याशातनापरिहारार्थं, सुधर्मसभायां हि माणवकस्तम्भे जिनास्थीनि समुद्गकेषु सन्ति तदासन्नभोगानुभवने तदाशातना कृता स्यादिति, 'सिंहासणं'ति सनत्कुमारेन्द्रसिंहासनं

विकुरुते, न तु शक्रेशानादिवद् देवशयनीयं, स्पर्शमात्रेण तस्य परिचारकत्वान्न शयनीयेन कार्यमिति भावः, 'सपरिवारं'ति निजपरिवारयोग्यासनपरिवृतमित्यर्थः, 'जो जस्स परिवारो'त्ति तत्र सनत्कुमारस्य परिवार उक्त एव, माहेन्द्रस्य तु सप्ततिः सहस्राणि सामानिकानां ब्रह्मणः षष्टिः सामानिकसहस्राणां, लान्तकस्य पञ्चाशत्, शुक्रस्य चत्वारिंशत्, सहस्रारस्य त्रिंशत्, प्राणतस्य विंशतिः, अच्युतस्य दश सामानिकसहस्राणि, सर्वत्र सामानिकचतुर्गुणा आत्मरक्षाः, 'पासायउच्चत्तं जं'ति तत्र सनत्कुमारमाहेन्द्रयोः षड् योजनशतानि प्रासादस्योच्चत्वं ब्रह्मलान्तकयोः सप्त शुक्रसहस्रारयोरष्टौ प्राणतेन्द्रस्याच्युतेन्द्रस्य नवेति, इह च सनत्कुमारादयः सामानिकादिपरिवारयुतास्तत्र नेमिप्रतिरूपके गच्छन्ति, तत्समक्षमपि स्पर्शादिप्रविचारणाया अविरुद्धत्वात्, शक्रेशानौ तु न तथा, सामानिकादिपरिवारसमक्षं कायप्रवीचारणाया लज्जनीयत्वेन विरुद्धत्वादिति ॥ १४ शते षष्ठः ॥

'रायगिहे'त्ति (सू. ५२०) तत्र किल वीरः केवलज्ञानानाप्त्या सखेदस्य गौतमस्वामिनः समाश्वासनायात्मनस्तस्य च भाविनीं तुल्यतामाह—'चिरसंसिट्ठोसि'त्ति चिरं—बहुकालं यावत् संश्लिष्टः-स्नेहात्सम्बद्धः चिरसंश्लिष्टः असि—भवसि मे—मया मम वा, त्वं हे गौतम !, 'संथुओ'त्ति संस्तुतः—स्नेहात्प्रशंसितः परिचितः—पुनः पुनर्दर्शनतः परिचितः, 'जुसिए'त्ति चिरसेवितः चिरप्रीतितो वा 'जुषी प्रीतिसेवनयोः' इति धातुपाठात् 'अणुगए'त्ति चिरमनुगतिको ममानुगतिकारित्वात् 'चिराणुवत्तिओ'त्ति चिरमनुकूलवृत्तिः-अनुकूलता यस्यासौ चिरानुवृत्तिः, इदं चिरसंश्लिष्टत्वादिकं कासीदित्याह—'अणंतरदेवलोए'त्ति देवभवे मनुष्यभवे चेति, तत्र किल त्रिपृष्ठभवे गौतमः सारथित्वेन चिरसंश्लिष्टत्वादि आसीद्, एवमन्येष्वपि भवेषु सम्भवतीति, एवं मयि तव गाढस्नेहत्वेन केवलं नोत्पद्यते, भविष्यति तवापि तत्स्नेहक्षये इत्यधृतिं मा कृथाः, 'किं परं मरण'त्ति किं बहुना ? परतो मरणात् अथवा कायस्य भेदाद्धेतोः 'इउ

च्चुय'त्ति इतश्च्युतौ द्वावप्यावां तुल्यौ भविष्याव इति योगः, तत्र तुल्यौ समानजीवद्रव्यौ 'एगट्ठ'त्ति एकार्थौ, मोक्षप्रयोजनाविन्त्यर्थः, एकस्थौ वा एकक्षेत्राश्रितौ सिद्धिक्षेत्रे इति, 'अविसेसमणाण'त्ति अविशेषं सामान्यं यथा स्यादेवं अनानात्वौ तुल्यज्ञानदर्शनाविति॥ एतमर्थं किमनुत्तरोपपातिका देवा जानन्तीति प्रश्नः (सू. ५२१) अत्रोत्तरम्—हन्तेति 'लद्धाओ'त्ति लब्धास्तद्विषयावधिज्ञानलब्ध्या 'पत्ताओ'त्ति प्राप्तास्तद्द्रव्यावगमतः अभिसमन्वागताः तद्गुणपर्यायपरिच्छेदतः, अयमर्थः—अनुत्तरा देवा विशिष्टावधिना मनोद्रव्यवर्गणा जानन्ति पश्यन्ति च, तासां चायोग्यवस्थायामदर्शनेन निर्वाणगमनं निश्चिन्वन्ति, ततश्चावयोर्भावितुल्यतारूपमर्थं जानन्ति पश्यन्ति च॥ 'दव्वतुल्लए'त्ति (सू.५२२) द्रव्यतः—एकाणुकाद्यपेक्षया द्रव्यान्तरेण वा तुल्यकं द्रव्यतुल्यकं, 'खेत्ततुल्ल'त्ति क्षेत्रतः—एकप्रदेशावगाढत्वादिना तुल्यकं, एवं नवरं भवो—नारकादिः भावो—वर्णादिरौदयिकादिर्वा संस्थानं परिमण्डलादि, इह तुल्यव्यतिरिक्तमतुल्यं स्यात् तदपीहोच्यते—'तुल्ला संखेज्जपएसिए'त्ति तुल्याः—समानाः सङ्ख्येयाः प्रदेशा यत्र स तथा, तुल्यग्रहणमिह सङ्ख्यातत्वस्य सङ्ख्यातभेदत्वात् न सङ्ख्यातमात्रेण तुल्यताऽस्य स्याद्, अपि तु समानसङ्ख्यात्वेनेत्यस्यार्थस्य प्रतिपादनार्थम्, एवमन्यत्रापीति, यच्चेहानन्तक्षेत्रप्रदेशावगाढत्वमनन्तसमयस्थायित्वं न नोक्तं, तदवगाहप्रदेशानां स्थितिसमयानां च पुद्गलानाश्रित्यानन्तानामभावात्, 'भावट्ठयाए'त्ति भावार्थतया 'उदइए'त्ति उदयेन—कर्म्मणां विपाकेन निष्पन्न औदयिको भावो—नारकादिपर्यायविशेषः, औदयिकस्य भावस्य नारकत्वादेर्भवतो—भावसामान्यमाश्रित्य तुल्यः—समः, 'उवसमिए'त्ति औपशमिकोऽप्येवं वाच्यः, तत्र उदीर्णस्य क्षयोऽनुदीर्णस्य विष्कम्भितोदयत्वमुपशमः तेन निर्वृत्त औपशमिकः—सम्यग्दर्शनादिः, 'खइए'त्ति कर्मक्षयः (कर्मापगमः) तेन निर्वृत्तः क्षायिकः—केवलज्ञानादिः, 'खओवसमिए'त्ति क्षयेण—उदय-

प्राप्तकर्मणां विनाशेन सह उपशमः २ तेन क्षयोपशमेन निर्वृत्तः क्षायोपशमिकः–मतिज्ञानादिपर्यायः, ननु औपशमिकस्य क्षायोपशमिकस्य च कः प्रतिविशेषः ?, उभयत्रापि उदीर्णस्य क्षयस्यानुदीर्णस्य चोपशमस्य भावाद्, उच्यते, क्षायोपशमिके विपाकवेदनमेव नास्ति, प्रदेशवेदनं पुनरस्त्येव, औपशमिके तु प्रदेशवेदनमपि नास्तीति, 'परिणामिए'त्ति परिणमनं परिणामस्स एव पारिणामिकः, 'सन्निवाइए'त्ति सन्निपातः–औदयिकभावानां द्व्यादिसंयोगस्तेन जातः सान्निपातिकः, 'संठाणतुल्लए'त्ति संस्थानं-आकृतिः, तच्च द्विधा, जीवाजीवभेदात्, तत्र अजीवसंस्थानं पञ्चधा, तत्र 'परिमण्डल'त्ति परिमण्डलं संस्थानं–बहिर्वृत्ताकारं मध्येशुषिरं यथा वलयस्य, तच्च द्विधा-घनप्रतरभेदात् 'वट्टं'ति वृत्तं परिमण्डलमेव अन्तःशुषिररहितं यथा कुलालचक्रं, इदमपि द्विधा घनप्रतरभेदात्, पुनरेकैकं द्विधा–समसङ्ख्यविषमसङ्ख्यप्रदेशभेदात्, एवं त्र्यस्रं चतुरस्रं च, त्र्यस्रं–त्रिकोणं शृङ्गाटकस्येव चतुरस्रं–चतुष्कोणं यथा कुम्भिकायाः, आयतं–दीर्घं यथा दण्डस्य, तच्च त्रिधा-श्रेण्यायतप्रतरायतघनायतभेदात्, एकैकं द्विधा–समसङ्ख्यविषमसङ्ख्यप्रदेशभेदात्, इदं च पञ्चधा विश्रसाप्रयोगाभ्यां स्यात्, जीवसंस्थानं तु संस्थानाख्यनामकर्मोत्तरप्रकृत्युदयकृतो जीवानामाकारः, तच्च षोढा–'समचउरंसे'त्यादि, सर्वाङ्गसुलक्षणं 'नग्गोह'त्ति न्यग्रोधो–वटस्तद्वत् 'परिमण्डलं' नाभीत उपरि चतुरस्रलक्षणयुक्तमधश्च विषमं, 'साइ'त्ति अधः समं नाभीतो विषमं 'खुज्ज'त्ति कुब्जं ग्रीवादौ हस्तपादयोः समं सङ्क्षिप्तकृतमध्यं 'वामणे'त्ति वामनं ग्रीवादौ हस्तपादयोर्विषमं मध्ये समं 'हुंड'त्ति हुण्डं सर्वत्र विषमं ॥ 'भत्तपचक्खाएण'ति (सू. ५२३) अनशनी मूर्च्छितः–सञ्जाताहारगृद्धिः 'अज्झुववण्णे'त्ति अप्राप्ताहारचिन्तनाधिक्येनोपपन्नः अध्युपपन्नः, आहारं–वायुतैलाभ्यङ्गादिकमोदनादिकं वा अभ्यवहार्यं, तीव्रक्षुद्वेदनीयकर्मोदयादसमाधौ सति तदुपशमनाय प्रयुक्तमाहारयति–उपभुङ्क्ते 'अहे णं'ति अथाहारानन्तरं विश्रसा

वा स्वभावत एव कालं मरणं करोति–याति, 'तओ पच्छ'त्ति ततः पश्चात्–मृतेरनन्तरं अमूर्च्छितादिविशेषण आहारमाहारयति प्रशान्तपरिणामसद्भावादिति प्रश्नः; अत्रोत्तरम्–'हन्ता गोयमे'त्यादि, अनेन तु प्रश्नार्थ एवाभ्युपगतः, कस्यापि भक्तप्रत्याख्यातुरेवम्भूतभावस्य सद्भावादिति ॥ 'लवसत्तम'त्ति ( सू. ५२४ ) लवाः–शाल्यादिकवलिकालवनक्रियाप्रमिता कालविभागाः सप्त २ सङ्ख्या मानं–प्रमाणं यस्य कालस्यासौ लवसप्तमः, लवसप्तमं कालं यावत् आयुष्यप्रभवति सति ये शुभाध्यवसायवृत्तयः सिद्धिं न गताः, अपि तु देवेषूत्पन्नाः ते लवसप्तमाः, ते सर्वार्थसिद्धानुत्तरवासिनः, 'पिक्काणं' पक्वानां 'परियायाणं'ति पर्यायगतानां–लवनीयावस्थां प्राप्तानां 'हरियाणं'ति पिङ्गीभूतनालानां 'नवपज्जएणं'ति नवं–प्रत्यग्रं 'पज्जएणं'ति प्रतापितस्यायोघनकुट्टनेन तीक्ष्णीकृतस्य पायनं–जलनिबोलनं तेन नवपायनेन 'असियएणं'ति दात्रेण 'पडिसंहरिय' प्रतिसंहृत्य विकीर्णनालान् बाहुना सङ्गृह्य 'पडिसंठविय' मुष्टिग्रहणेन सङ्क्षिप्य 'जाव इणामेव'त्ति प्रज्ञापकस्य लवनक्रियाशीघ्रत्वोपदर्शनपरचप्पुटिकादिहस्तव्यापारसूचकं वचनं 'सत्तलवे'त्ति लूयन्ते इति लवाः–शाल्यादिनालमुष्टयस्तान् सप्तलवान् 'लुएज्ज'त्ति लुनीयात्, तत्र सप्तलवलवने यावान् कालः स्यात् वाक्यशेषो दृश्यः, 'तेसिं देवाणं'ति द्रव्यदेवत्वे, साध्ववस्थायामित्यर्थः, 'तेणं चेव'त्ति यस्य भवग्रहणस्य सम्बन्धि आयुर्न पूर्णं तेनैव मनुष्यभवग्रहणेनेत्यर्थः ॥ 'छट्ठभत्तिए'त्ति (सू. ५२५) षष्ठभक्तिकः साधुर्यावत्कर्म्म क्षपयति एतावता कर्म्मणाऽनिर्जीर्णेनानुत्तरोपपातिका देवा उत्पन्ना इति ॥ १४ शते सप्तमः ॥

'आबाहाए'त्ति बाधा–मिथः पीडनं संश्लेषतः, न बाधा अबाधा तया यदन्तरं–व्यवधानमित्यर्थः, 'जोयणसहस्साइं'ति (सू. ५२६) इह योजनं प्रमाणाङ्गुलनिष्पन्नं ग्राह्यं, 'नगपुढविविमाणाई मिणसु पमाणंगुलेणं तु' इत्यत्र नगादिग्रहणस्योपलक्षणत्वाद्,

अन्यथा रविप्रकाशादेरपि प्रमाणयोजनाऽप्रमेयता स्यात्, तथा चाधोलोकग्रामेषु तत्प्रकाशाप्राप्तिः प्राप्नोति, आत्माङ्गुलस्यानियतत्वेनाव्यवहाराङ्गतया रविप्रकाशस्योच्छ्रययोजनप्रमेयत्वात्तस्य चातिलघुत्वेन प्रमाणयोजनप्रमितक्षेत्राणामव्याप्तिरिति, यच्चेषत्प्राग्भारायाः पृथिव्या लोकान्तस्य चान्तरं तदुच्छ्रयाङ्गुलनिष्पन्नयोजनप्रमेयमित्यनुमीयते, यतस्तस्य योजनस्योपरितनक्रोशस्य षड्भागे सिद्धावगाहना धनुस्त्रिभागयुक्तत्रयस्त्रिंशदधिकधनुःशतत्रयमानाऽभिहिता, सा चोच्छ्रययोजनाश्रयणत एव युज्यत इति, उक्तं च— "ईसिपब्भाराए उवरिं खलु जोयणस्स जो कोसो। कोसस्स य छब्भाए सिद्धाणोगाहणा भणिया ॥१॥" 'देसूणं जोअणं'ति इह सिद्धयलोकयोर्देशोनं योजनमन्तरमुक्तं, आवश्यके तु योजनमेव, तत्र च किञ्चिन्न्यूनताया अविवक्षणान्न विरोधो मन्तव्य इति। 'दिव्वे'त्ति (सू. ५२७) प्रधानः 'सच्चोवाए'त्ति सत्यावपातः-सफलसेवः 'सन्निहियपाडिहेर'त्ति सन्निहितं-विहितं प्रातिहार्यं—प्रतीहारकर्म्म—सान्निध्यं देवेन यस्य स तथा ॥ 'एवं जहा उववाइए जाव आराहग'त्ति (सू.५२८) इह यावत्करणादिदमर्थतो लेशेन दृश्यं, ग्रीष्मकालसमये गङ्गाया उभयकूलतः काम्पिल्यपुरात्पुरिमतालपुरं प्रति प्रस्थितानि, ततस्तेषामटवीप्रविष्टानां पूर्वमुदकं गृहीतं क्षीणं पीयमानं, ततस्ते तृष्णाभिभूता उदकदातारमलभमाना अदत्तं च तदगृह्णन्तोऽर्हन्नमस्कारपूर्वकं अनशनप्रतिपत्त्या कालं कृत्वा परलोकं गता ब्रह्मदेवलोकं, परलोकाराधका जाता इति ॥ 'घरसए'त्ति (सू. ५२९) 'एवं जहे'त्यादिना यत्सूचितं तदर्थतो लेशेनैवं दृश्यं—गृहशते २ अन्नादि भुङ्क्ते वसति तिष्ठति चेति, एतच्च श्रुत्वा गौतम आह—कथमेतत् भदन्त!, ततो वीर उवाच—गौतम! सत्यमेतत्, यतस्तस्य वैक्रियलब्धिरस्ति, ततो जनविस्मापनहेतोरेवं कुरुते, ततो गौतम उवाच—प्रव्रजिष्यत्येव भगवतां समीपे?, वीर उवाच—नैवं, केवलमयमधिगतजीवाजीवत्वादिगुणः कृतानशनो ब्रह्मलोकं गमिष्यति, ततश्च्युतश्च महाविदेहे

दृढप्रतिज्ञाभिधानो महर्द्धिको भूत्वा सेत्स्यतीति ॥ 'अव्वाबाह'त्ति (सू. ५३०) अव्याबाधाः, ते च लोकान्तिकदेवमध्यगता द्रष्टव्याः. यदाह–'सारस्सयमाइच्चा'इत्यादि, 'अच्छिपत्तंसि'त्ति अक्षिपक्ष्मणि 'आबाहं'ति ईषद्बाधां 'पबाहं'ति प्रकृष्टबाधां, 'वाबाहं'ति क्वचित्, तत्र तु व्याबाधां–विशिष्टामाबाधां 'छविच्छेयं' शरीरच्छेदं 'एसुहुमं च णं'ति इति सूक्ष्मं यथा स्यादेवं उपदर्शयेन्नाट्यविधिमिति प्रकृतं,'सपाणिणा'त्ति (सू.५३१) स्वकपाणिना यदि शक्रः शिरसः कमण्डल्वां प्रक्षेपणे प्रभुः तत्प्रक्षेपणं कथं तदानीं करोति, उच्यते, छिंदिया २ छित्त्वा क्षुरप्रादिना कूष्माडादिकमिव श्लक्ष्णखण्डीकृत्येत्यर्थः प्रक्षिपेत् कमण्डल्वां भिंदिय २ भित्त्वा–विदीर्योर्ध्वपाटनेन शाटकादिकमिव, 'कुट्टिय'त्ति कुट्टयित्वा उदूखलादौ तिलकादिकमिव 'चुण्णिय'त्ति चूर्णयित्वा शिलापुत्रकादिना गन्धद्रव्यादिकमिव 'तओ पच्छ'त्ति ततः कमण्डलुप्रक्षेपणानन्तरमित्यर्थः 'पडिसंघाएज्ज'त्ति प्रतिसङ्घातयेत्, मीलयेदित्यर्थः, 'पक्खिवेज्ज'त्ति कमण्डल्वामिति प्रकृतं ॥ 'जंभग'त्ति (सू. ५३२) जृम्भंते–विजृम्भंते स्वच्छन्दचारितया चेष्टन्ते ये ते जृम्भकाः–तिर्यग्लोकवासिनो व्यन्तरदेवाः 'पमुइय'त्ति प्रमुदिताः–तोषवन्तः, प्रक्रीडिताः–प्रधानक्रीडाः 'कंदप्प'त्ति भृशंकेलिरतिकाः 'मोहणसील'त्ति निधुवनशीलाः 'जे णं'ति यः कश्चित्पुमान् 'कुद्धे'त्ति क्रुद्धः सन् 'ते देवे'त्ति तान् देवान् 'पासेज्ज'त्ति पश्येत् 'से णं'ति स नरः 'अजसं'ति अनर्थं प्राप्नुयात्,'तुट्ठे'त्ति तुष्टः सन् यः पश्येत् 'से णं'ति स नरः 'जसं'ति यशः प्राप्नुयात् वज्रस्वामिवत् वैक्रियलब्ध्यादि. किमर्थं लभेत ?, शापानुग्रहकरणसमर्थत्वात्, तच्छीलत्वात्तेषामिति, यत उक्तम्-'देवाणं आसायणाए देवीणं आसायणयाए'त्ति वचनात्,'अन्नजंभग'त्ति अन्ने–भोजनविषये सद्भावालपबहुत्वसारस्य नैरस्यादिकरणतो जृम्भते तथा, एवं पानादिष्वपि वाच्यं, 'लेणं'ति लयनं–गृहम्, 'पुप्फफलजंभगे'त्ति उभयजृम्भकाः, वाचनान्तरे 'मंतजंभग'त्ति

दृश्यते, 'अवियत्तिजंभग'त्ति अव्यक्तया-अन्नाद्यविभागेन सामान्येन जृम्भका ये ते तथा, क्वचित्तु 'अहिवइजंभग'त्ति दृश्यते, तत्र अधिपतौ-राजादिविषये जृम्भका ये ते तथा 'दीहवेयड्ढेसु'त्ति सर्वेषु, प्रतिक्षेत्रं तेषां भावात् सप्तत्यधिकशतसङ्ख्येषु दीर्घविजयार्द्धगिरिषु, दीर्घग्रहणं च वर्त्तुलविजयार्द्धव्यवच्छेदार्थं 'जमगपव्वएसु'त्ति देवकुरुषु शीतोदानद्या उभयपार्श्वतश्चित्रकूटविचित्रकूटनामानौ पर्वतौ, उत्तरकुरुषु शीतानदीसम्बन्धिउभयपार्श्वतः यमकाख्यौ गिरी अतस्तेषु, 'कंचणपव्वएसु'त्ति उत्तरकुरुषु शीतानदीसम्बन्धिनां पञ्चानां नीलवदादिह्रदानां क्रमस्थितानां पूर्वापरतटयोर्दशदशकांचनकाख्या गिरयस्सन्ति ते च शतं भवन्ति, देवकुरुष्वप्येवं शीतोदानदीसत्कानां निषधह्रहादीनां पञ्चानां महाह्रदानामिति, तदेवं द्वे शते, एवं धातकीखण्डपूर्वार्द्धादिष्वप्यतस्तेष्विति ॥ १४ शते अष्टमः ॥

'भावियप्प'त्ति (सू. ५३३) भावितात्मा-संयमक्रियावान् साधुः आत्मनः सम्बन्धिनी कर्मणो योग्या लेश्या कृष्णादिका कर्मलेश्या तां न जानाति विशेषतो, न पश्यति च सामान्यतः, कृष्णादिलेश्यायाः कर्मद्रव्यश्लेषणस्य चातिसूक्ष्मत्वेन छद्मस्थज्ञानागोचरत्वात् 'तं पुण जीवं'ति यो जीवः कर्मलेश्यावान् तं पुनर्जीवं आत्मानं 'सरूवं'ति सरूपिणं सशरीरमित्यर्थः, अत एव सकर्म्मलेश्यं-कर्मलेश्यासहितं जानाति, शरीरस्य चक्षुर्ग्राह्यत्वात् जीवस्य च कथञ्चिच्छरीराव्यतिरेकादिति, 'सरूव'त्ति सरूपिणो-वर्णादिमन्तः 'सकम्म'त्ति पूर्ववत् पुद्गलाः स्कन्धरूपाः 'ओभासंति'त्ति प्रकाशन्ते, 'लेस्साओ'त्ति तेजांसि 'बहिया अभिनिस्सडाउ'त्ति बहिस्ताद् अभिनिसृता-निर्गताः, इह च यद्यपि चन्द्रादिविमानपुद्गला एव पृथ्वीकायिकत्वेन सचेतनत्वात् सकर्मलेश्यास्तथापि तन्निर्गतप्रकाशपुद्गलानां तद्धेतुकत्वेनोपचारात् सकर्मलेश्यत्वमवगन्तव्यमिति ॥ 'अत्त'त्ति (सू. ५३४) आ-सम-

न्तात् दुःखात् संरक्षति सुखं चोत्पादयन्तीति आत्राः आप्ता वा-एकान्तहिताः ॥ 'एगा णं सा भास'त्ति (सू. ५३५) एकाऽसौ भाषा जीवैकत्वेनोपयोगैकत्वात्, एकस्य हि एकदैक एवोपयोग इष्यते, ततश्च यदा सत्याद्यन्यतमभाषायां वर्त्तते तदा नान्यस्यां भाषेति ॥ अचिरोद्गतं-उद्गतमात्रं अत एव बालसूर्यं 'किमिदं'ति (सू. ५३६) किंस्वरूपमिदं सूर्यवस्तु, तथा किमिदं भदन्त ! सूर्यस्य-सूर्यशब्दस्यार्थः-अन्वर्थः 'सुभे सूरिए'त्ति शुभस्वरूपं सूर्यवस्तु, सूर्यविमानपृथ्वीकायिकानामातपाभिधानपुण्यप्रकृत्युदयवर्त्तित्वात् लोकेऽपि प्रशस्ततया प्रवृत्तत्वात् ज्योतिष्केन्द्रत्वाच्च, तथा शुभः सूर्यशब्दार्थः, तथाहि-सूरेभ्यः-क्षमातपोदानसङ्ग्रामादिवीरेभ्यो हितः सूरेषु वा साधुः सूर्यः,'पभ'त्ति दीप्तिः छाया शोभा प्रतिबिम्बं वा लेश्यावर्णः॥ 'अज्जत्ताए'त्ति (सू.५३७) आर्यतया-मुख्यतया 'तेउलेस्सं'ति तेजोलेश्यां-सुखासिकां, तेजोलेश्या हि सुखासिकाहेतुरिति कारणे कार्योपचारात् तेजोलेश्याशब्देन सुखासिका विवक्षितेति, 'वीईवयंति' व्यतिव्रजन्ति, व्यतिक्रामन्तीत्यर्थः, 'असुरिंदवज्जियाणं'ति चमरबलिवर्जितानां 'तेण परं'ति ततः संवत्सरात् 'सुक्के'त्ति शुक्लो निरतिचारचारित्रः 'सुक्काभिजाए'त्ति शुक्लाभिजात्यः परमशुक्ल इत्यर्थः ॥ १४ शते नवमः ॥

'केवलि'त्ति (सू. ५३८) भवस्थकेवली गृह्यते, उत्तरत्र सिद्धग्रहणादिति, 'आहोहियं'ति प्रतिनियतक्षेत्रावधिज्ञानं 'परमाहोहियं'ति परमावधिकं 'भासेज्ज'त्ति भाषेत पृष्ट एव, 'वागरेज्ज'त्ति पृष्टस्सन् व्याकुर्यात् 'ठाणं'ति उर्ध्वस्थानं, 'सेज्जं'ति शय्यां वसतिं 'निसीहियं'ति अल्पतरकालिकां वसतिं 'चेइज्ज'त्ति व्याकुर्यादिति ॥ १४ शते दशमः ॥

श्रीतपागच्छनायकश्रीलक्ष्मीसागरसूरिशिष्यश्रीसुमतिसाधुसूरिशिष्यश्रीहेमविमलसूरिविजयराज्ये

महोपाध्यायश्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तहंसगणिशिष्यदानशेखरगणिसमुद्धृतायां भगवतीलघुवृत्तौ चतुर्दशशतविवरणं सम्पूर्णं ॥

अथ पञ्चदशं शतमारभ्यते–'मंखलिपुत्ते'त्ति (सू. ५३९) मङ्खल्यभिधानः–मङ्खपुत्रः, 'चउवीस'त्ति चतुर्विंशतिवर्षप्रमाणप्रव्रज्यापर्यायः, 'दिसाचर'त्ति दिशं–मेरां चरन्ति–मन्यन्ते भगवतो वयं शिष्या इति दिक्चराः, देशचरा वा दिक्चराः, भगवच्छिष्याः पार्श्वस्थीभूता इति टीकाकारः, पासावच्चिज्जत्ति चूर्णिकारः, 'अंतियं'ति अन्तिकं–समीपं 'पाउब्भवित्थ'त्ति आगताः 'अट्ठविहं'ति अष्टविधं, पूर्वगतं निमित्तमित्यर्थः, तच्चेदम्–दिव्यं १ उत्पातं २ आन्तरिक्षं ३ भौमं ४ स्वप्नः ५ स्वरं ६ लक्षणं ७ व्यञ्जनं ८ चेत्यादि पूर्वश्रुतमध्यगतं 'मग्गदसमं'ति मार्गौ गीतमार्गवृत्तमार्गलक्षणौ सम्भाव्येते 'दसम'त्ति अत्र नवमशब्दस्य लुप्तस्य दर्शनात् नवमदशमाविति दृश्यं, ततश्च नवमदशमौ मार्गौ यत्र तत्तथा, स्वकीयैः २ 'मतिदंसणेहिं'ति मतेः–बुद्धेर्मत्या वा दर्शनानि–वस्तुज्ञानानि मतिदर्शनानि तैः 'निज्जूहंति' निर्यूथयन्ति–पूर्वगतश्रुतपर्याययूथान्निर्द्धारयन्ति, उद्धरन्ति इत्यर्थः, 'उवट्ठाइंसु'त्ति उपस्थितवन्तः, आश्रितवन्त इत्यर्थः, 'अट्ठंगस्स'त्ति अष्टाङ्गस्य 'केणइ'त्ति केनचित् तथाऽविदितस्वरूपेण 'उल्लोयमेत्तेणं' उद्देशमात्रेण 'इमाइं'ति इमानि षट् अनतिक्रमणीयानि–अव्यभिचारीणि 'वागरणाइं'ति पृष्टेन सता यानि व्याक्रियन्ते–अभिधीयन्ते तानि व्याकरणानि, पुरुषार्थोपयोगित्वाच्चैतानि षट् उक्तानि, अन्यथा नष्टमुष्टिचिन्तोल्कादीन्यन्यानि बहुनिमित्तानि गोचरीभवन्ति ॥ 'उट्ठाणपरियाणियं'ति (सू. ५४०) परियानं–विविधव्यतिकरपरिगमनं तदेव पारियानिकं–चरितं

उत्थानात्—जन्मत आरभ्य पारियानिकं उत्थानपारियानिकं, एतद्भगवता परिकथितमिति गम्यते, 'मंखे'त्ति मङ्खः—चित्रफलकव्यग्रकरो भिक्षाकः 'पाडिएक्कं'ति एकमात्मानं प्रति प्रत्येकं, पितुः फलकाद्भिन्नमित्यर्थः ॥ 'जहा भावणाए'ति (सू. ५४१) आचारद्वितीयश्रुतस्कन्धस्य पञ्चदशेऽध्ययने, अनेनेदं सूचितम् सम्मत्तपइन्ने-'नाहं समणो होहं अम्मापितरम्मि जीवंते'त्ति समाप्ताभिग्रह इत्यर्थः, 'चिचा हिरण्ण'मित्यादि, 'पढमं वासं'ति विभक्तिपरिणामात् प्रव्रज्याप्रतिपत्तेः प्रथमवर्षे 'निस्साए'त्ति निश्राय, निश्रां कृत्येत्यर्थः, 'पढमं अंतरं वासावासं'ति विभक्तिपरिणामात् प्रथमेऽन्तरः—अवसरो वर्षस्य—वृष्टेर्यत्रासावन्तरवर्षः, अथवा अन्तरेऽपि—जिगमिषितक्षेत्रमप्राप्यापि यत्र सति साधुभिरावासो विधीयतेऽवश्यं सोऽन्तरावासो-वर्षाकालस्तत्र 'वासावासं'ति वर्षासु वासः—चातुर्मासिकमवस्थानं वर्षावासस्तमुपागतः 'दोचं वासं'ति द्वितीये वर्षे 'तन्तुवाय'त्ति कुविंदशाला 'दव्वसुद्धेणं'ति द्रव्यं-ओदनादिकं शुद्धं—उद्गमादिदोषरहितं यत्र दाने तत्तथा तेन, एवमितरदपि, 'कयलक्खणे'त्ति कृतसफललक्षणः 'कया णं लोग'त्ति कृतौ—कृतशुभफलौ अवयवे समुदायोपचारात् लोकौ—इहलोकपरलोकौ 'जम्मजीवियं'त्ति जन्मनो जीवितस्य च यत्फलं तत्तथा 'तहारूवे' तथाविधे, अविज्ञातव्रतविशेष इत्यर्थः, साधौ—श्रमणे साधुरूपे—साध्वाकारे 'धम्मंतेवासि'त्ति शिल्पादिग्रहणार्थमपि शिष्यः स्यादत उच्यते—धर्मान्तेवासी, 'खज्जगविहीए'त्ति खण्डखाद्यादिभोजनविधिना 'सव्वकामगुणितेण' सर्वे कामगुणा—अभिलषितरसादयस्सञ्जाता यत्र तत्सर्वकामगुणितं तेन 'परमन्नेणं'ति परमान्नेन—क्षीरेय्या 'आयामेत्थ'त्ति आचामितवान्, तद्भोजनदानद्वारेणोच्छिष्टतासम्पादनेन तच्छुद्ध्यर्थमाचमनं कारितवान्, भोजितवानिति तात्पर्यं, 'सब्भिंतरबाहिरए'त्ति सहाभ्यन्तरेण बाह्येन च विभागेन यत्तत्तथा तत्र मग्गणगवेसणं'ति अन्वयतो मार्गणं व्यतिरेकतो गवेषणं, ततश्च समाहारद्वन्द्वः,

'सुइं व'त्ति श्रूयत इति श्रुतिस्तां, चक्षुषा किलादृश्यमानोऽर्थः शब्देन निश्चयत इति श्रुतिग्रहणम्, 'खुइं व'त्ति क्षवणं क्षुतिः—छीत्कृतं तां, एषाऽप्यदृश्यमानमनुष्यादिगमिका स्यादिति, 'पवत्तिं व'त्ति प्रवृत्तिं—वार्त्तां शाटिकाः—परिधानवस्त्राणि 'पाडियाओ'त्ति उत्तरीयवस्त्राणि, क्वचिद् 'भंडियाओ'त्ति भण्डिका रन्धनभाजनानि, 'माहणा आयामेइ'त्ति शाटकादीनर्थान् लंभयति, शाटकादीन् ब्राह्मणेभ्यो ददातीत्यर्थः, 'सउत्तरोट्ठं'ति सहोत्तरौष्ठं—सश्मश्रुकं यथा स्यादेवं 'भंडं'ति मुण्डनं कारयति नापितेन, 'पणियभूमीए'त्ति प्रणीतभूमौ—भाण्डविश्रामस्थाने प्रणीतभूमौ 'अभिसमन्नागए'त्ति मिलितः 'एयमट्ठं पडिसुणेमि'त्ति अभ्युपगच्छामि, यच्चैतस्यायोग्यस्यापि भगवतोऽङ्गीकारस्तत् छद्मस्थतया, 'अणिच्चजागरियं'ति अनित्यजागरिकां—चिन्तां, कुर्वन्निति वाक्यशेषः ॥ 'पढमसरयकालसमयंसि'त्ति (सू. ५४२) समयभाषया मार्गशीर्षे 'अप्पवुट्ठिकायंसि'त्ति, अल्पशब्दस्याभाववचनत्वादविद्यमानवर्षे इत्यर्थः, (अन्ये तु कार्त्तिकमार्गशीर्षौ शरदित्यभिधाय प्रथमशरदित्याश्विन इत्याह) अल्पवृष्टिकायत्वाच्च तत्रापि विहरतां न दूषणमिति, एतच्चासङ्गतमेव, भगवतोऽप्यवश्यं पर्युषणस्य कर्त्तव्यत्वेन पर्युषणाकल्पेऽभिहितत्वात्, 'हरियगरेरिज्जमाण'त्ति हरितक इतिकृत्वा रेरिज्जमाणेत्ति अतिशयेन राजमानः, 'तिलसंगलियाए'त्ति तिलकफलिकायां 'ममं पणिहाए'त्ति मां प्रणिधाय—मामाश्रित्य अयं मिथ्यावादी भवत्विति विकल्पं कृत्वा 'अब्भवद्दलए'त्ति अभ्ररूपं वारो—जलस्य दलकं—कारणं अभ्रवार्दलकं 'पतणतणाएति' प्रकर्षेण तणतणायते, गर्जतीत्यर्थः, 'नच्चोदगनाइमट्टियं'ति नात्युदकं नातिकर्दमं यथा स्यादेवं 'पविरल'त्ति प्रविरलाः प्रस्पर्शिकाः—विप्रुषो यत्र तत्तथा, 'रयरेणु'त्ति रजो—वातोत्पाटितं व्योमवर्त्ति रेणु—भूमिस्थितं पांशु तद्विनाशनं—तदुपशमकं 'सलिलोदग'त्ति सलिलाः—शीतादिमहानद्यः तासामिव यदुदकं रसादिगुणसाधर्म्यात् तस्य यो वर्षः स स-

लिलोदकवर्षस्तं 'पाणभूय'त्ति प्राणादिषु सामान्येन या दया सैवार्थः तद्भावस्तत्ता तया ॥ 'तत्थेव २' (सू. ५४३) तत्रैव शिरः-प्रभृतिके 'किं भवं मुणी'त्ति किं भवान् मुनिः-तपस्वी जातः 'मुणिए'त्ति ज्ञाते तत्त्वे सति, ज्ञात्वा वा तत्त्वं, अथवा किं भवान् मुनिरुतामुणिको-ग्रहगृहीतः, यूकाशय्यातरः-यूकास्थानं 'पचोसक्कइ'त्ति प्रत्यपसरतीत्यर्थः, 'सा उसिणं'ति स्वामिमुक्ता तेजोलेश्यां 'से गयमेयं'ति अथ गतं अवगतमेतन्मया हे भगवन्! यथा भगवत्प्रसादादयं न दग्धः, सम्भ्रमार्थत्वाच्च गतशब्दस्य पुनः पुनरुच्चारणं, इह गोशालकरक्षणं भगवता यत्कृतं तत्सरागत्वेन दयैकरसत्वात् भगवतः, यच्च सुनक्षत्रसर्वानुभूतिमुन्योर्न करिष्यति तद्वीतरागत्वेन लब्ध्यनुपजीवकत्वादवश्यंभाविभावत्वाच्च इति ज्ञेयमिति, 'संखित्तविउल'त्ति सङ्क्षिप्ता अप्रयोगकाले विपुला प्रयोगकाले तेजोलेश्या-लब्धिविशेषो यस्य स तथा 'सणहाए'त्ति सनखया, यस्यां पिण्डिकायां बध्यमानायां अङ्गुलीनखा अङ्गुष्ठस्याधो लगन्ति सा सनखेत्युच्यते, 'कुम्मास'त्ति कुल्माषा अर्द्धस्विन्ना मुद्गादयो, माषा इत्यन्ये, 'वियडासएणं'ति विकटंजलं तस्याश्रवः-स्थानं तेन, अमुं प्रस्तावाच्चुलुकमाहुर्वृद्धाः ॥ 'पउट्टपरिहारं'ति (सू. ५४४) परिवृत्त्य २-मृत्वा २ वनस्पतिशरीरस्य परिहारः-परिभोगस्तत्रैवोत्पादोऽसौ परिवृत्त्यपरिहारस्तं परिहरति-कुर्वतीत्यर्थः, 'खुट्टेइ'त्ति त्रोटयति, 'पउट्टे'त्ति परिवर्त्तवाद इत्यर्थः, 'आयाए अवक्कमणे'त्ति आत्मना आदाय वोपदेशं अपक्रमणं-अपसरणम् ॥ 'जहा सिवे'त्ति (सू. ५४६) यथा शिवराजर्षिचरिते 'महया अमरिसं'ति महान्तममर्षं ॥ 'एगं उवमियं'ति (सू. ५४७) एकं मम सम्बन्धि महद्वा वयं औपम्यं-उपमां, दृष्टान्तमित्यर्थः, 'चिरातीए अद्धाए'त्ति चिरमतीते काले 'उच्चावय'न्ति उच्चावचा-उत्तमनीचाः अर्थार्थिनः-द्रव्यार्थिनः अर्थलुब्धाः-अर्थगवेषिणः 'अत्थकंखिय'त्ति प्राप्तेऽप्यतृप्ताः 'अत्थपिवासिए'त्ति अप्राप्तार्थजाततृष्णाः 'पणियभंडं'ति प्रणीतं-

क्रयाणकं तद्रूपं भाण्डं, न तु भाजनमिति, 'सगडीसागडेणं'ति शकट्यो–गंत्रिकाः शकटानां समूहस्तेन शाकटेन 'पत्थयणं'ति पथ्यदनं–शम्बलं 'अकामियं'ति अकामिकां–अनीप्सितां 'अणोहियं'ति अविद्यमानजलौघामतिगहनत्वेन 'छिन्नावायं'ति व्यवच्छिन्नसार्थघोपाद्यापातां 'दीहमद्धं'ति दीर्घमार्गां दीर्घकालां वा 'महेगं वम्मीयं'ति महान्तमेकं वल्मीकं 'वपूउ'त्ति वपूंषि–शरीराणि, शिखराणीत्यर्थः, 'अब्भुग्गयाउ'त्ति अभ्युद्गतानि, उच्चोद्गतानीवोच्चानीत्यर्थः, 'अभिनिसिढाओ'त्ति अभिनिर्गताः शटाः-तदवयवरूपाः सिंहस्कन्धशटावत् येषां तानि अभिनिःशटानि इदं च तेषामूर्ध्वगतं, अथ तिर्यगाह–'तिरियं सुसंपग्गहियाइं'-ति सुसम्प्रगृहीतानि–सुसंवृत्तानि तानि, विस्तीर्णानीत्यर्थः, अधस्स्वरूपमाह–'अहेपन्नगद्धरूवाओ'त्ति सर्पार्द्धरूपाणि यादृशं पन्नगस्य दरच्छिन्नस्य पुच्छत ऊर्ध्वीकृतमर्द्धमधोऽधो विस्तीर्णमुपर्युपरि चातिश्लक्ष्णं स्याद् एवं रूपं येषां तानि, उदगरयणंति, 'आसाएस्सामि'त्ति आसादयिष्यामः, अस्यायमभिप्रायः–एवंविधभूमिगर्त्ते किल पयो भवति, वल्मीकेऽवश्यंभाविनो गर्त्ताः तत्र च जलं भविष्यति, 'अच्छपत्थं'ति पथ्यं रोगोपशमहेतुत्वात् 'जच्चं' जात्यं स्वाभाविकं 'तणुयं' तनुकं, सुजरमित्यर्थः, 'फालियं'त्ति स्फाटिकवर्णाभं, अत एव ओरालं प्रधानं उदकरत्नं 'वाहणाइं पज्जेंति' बलीवर्द्दादिवाहनानि पाययंति 'तवणिज्जं' तापनीयं तापसहं महार्थं–महाप्रयोजनं महार्घं–महामूल्यं 'महरिहं'ति महतां योग्यं विमलं–विगतागन्तुकमलं 'नित्तलं'ति निस्तलं-अभिवृत्तं, सुवर्त्तुलमित्यर्थः, 'निक्कलं'ति निष्कलं–त्रासादिरत्नदोषरहितं 'वइररयणं'ति वज्राभिधानरत्नं, 'पत्थकामए'त्ति पथ्यं–आनन्दकारणं वस्तु, 'आणुकंपिए'त्ति अनुकम्पया चरतीत्यानुकम्पिकः, 'निस्सेयस'न्ति निःश्रेयसं–विपन्मोक्षं इच्छतीति निःश्रेयसिकः 'तं होउ अलाहि पज्जत्तं'ति तत्–तस्माद्, भवतु अलं पर्याप्तमित्येते शब्दाः प्रतिषेधवाचका एकार्थाः, 'णे' अस्माकं 'उग्ग-

'विसं' दुर्जरविषं 'चंडविसं'ति दष्टनरवपुर्व्यापकविषं 'घोर'त्ति परम्परया नरसहस्रहननसमर्थं विषं, महाविषं जम्बूद्वीपप्रमितदे-हस्य व्यापकविषं, 'अइकाय'त्ति शेषाहीनां कायान् अतिक्रान्तो यस्सः अतिकायस्तं, अत एव महाकायं,'मसिमूसाकालगं'ति मषी-कज्जलं मूषा-सुवर्णादितापनभाजनं तद्वत्कृष्णं, 'अंजणपुंज'त्ति अञ्जनपुञ्जानां निकरस्येव प्रकाशो-दीप्तिर्यस्य स तथा 'तं जमलजुयल'त्ति यमलं सहवर्त्ति युगलं-द्वयं तत् चलं यथा स्यादेवं चलंत्योः-अतिचपलयोर्जिह्वयोर्यस्य सः तं 'उघ्घडफुडकुडि-ल'त्ति उत्कटकस्फुटकुटिलः वक्रः, जटिलस्कन्धदेशो, केशरिणामिवाहीनां केसरसद्भावात्, कर्कशो बलवत्त्वात्, विकटस्फुटाटोपः-फणारम्भः तत्करणे दक्षस्तं, 'लोहागर'त्ति लोहस्येवाकरे ध्यायमानस्याग्निना ताप्यमानस्य धमधमायमानो-धमधमेतिवर्णव्य-क्तिमिवोत्पादयन् घोषः-शब्दो यस्य स तं 'अणागलियं'ति अनाकलितं-अप्रमेयचण्डतीव्ररोषं 'समुहियं'त्ति शुनो मुखं श्वमुखं तस्येवाचरणं-भषणं श्वमुखिका तां,'तुरियं'त्ति त्वरितं चपलतया धमन्तं-शब्दयन्तं कुर्वन्तमित्यर्थः,'आइच्चं'ति आदित्यं निध्या-यति-पश्यति 'सभंडमत्तोवगरण'त्ति सह भाण्डमात्रया-पणितपरिच्छदेन उपकरणमात्रया वा, 'एगाहच्चं'ति एकैव आहत्या आहननं-प्रहारो यत्र भस्मीकरणे तदेकाहत्यं यथा स्यादेवं, कथमिवेत्याह-'कूडाहच्चं'ति कूटस्येव पाषाणमारणमहायंत्रस्येवाह-त्या-हननं यत्र तत् कूटाहत्यं यथा स्यादेवं,'परियाए'त्ति पर्यायः-अवस्था 'कित्तिवण्ण'त्ति कीर्त्तिः-सर्वदिग्गामिनी वर्णः-एक-दिग्व्यापी अर्द्धदिग्व्यापी शब्दः तत्स्थान एवाश्लोकः अश्लाघा इतियावत्, 'पवंति' प्लवन्ते-गच्छन्ति, 'प्लुङ् गतौ'विति वचनात्, 'गुवंति' गुप्यन्ति-व्याकुलीभवन्ति 'गुप् च व्याकुलत्वे' इति वचनात्, 'तुवंति' स्तूयन्ते, इति खल्वित्यादि इतिशब्दः प्रत्या-तगुणानुवादार्थः, 'तो णं'ति तत्-तस्मात् 'तवेणं तेएणं' तपोजन्यतेजसा-तेजोलेश्यया 'जहा वा वालेणं'ति यथा वा व्या-

लेन–उरगेण 'सारक्खामि'त्ति संरक्षामि–दाहभयात् सङ्गोपयामि, सुखस्थानप्रापणेन ॥ 'पभु'त्ति (सू. ५४८) प्रभुः–समर्थः गोशालको भस्मराशिं कर्तुमित्येकः प्रश्नः, प्रभुत्वं द्विधा–विषयमात्रापेक्षया तत्करणतश्चेति पुनः पृच्छति–'विसएणं'ति इत्यनेन प्रथमः प्रश्नः पृष्टः, 'समत्थे णं'मित्यनेन द्वितीयः, 'परितावणियं'ति परितापनिकां, क्रियां कुर्यादित्यर्थः, 'अणगाराणं' सामान्यसाधूनाम्, 'खंतिखमा' क्षान्त्या–क्रोधनिग्रहेण क्षमन्त इति क्षान्तिक्षमाः, 'थेराणं'त्ति आचार्यादिश्रुतपर्यायस्थविराणां ॥ 'पडिचोयणाए'त्ति (सू. ५४९) तन्मतप्रतिकूलचोदना–प्रोत्साहना प्रतिचोदना तया, 'पडिसारणाए'त्ति तन्मतप्रतिकूलतया विस्मृतार्थस्मारणा प्रतिसारणा तया, 'पडोयारेणं'ति प्रत्युपचारेण वा 'पडोयारेउ'त्ति प्रत्युपचारं करोतु, एवं प्रत्युपकारयतु वा, 'मिच्छं विप्पडिवण्णे'त्ति मिथ्यात्वं—म्लेच्छत्वं अनार्यत्वं वा विशेषतः प्रतिपन्नः ॥ 'सुट्ठु णं'ति (सू. ५५०) उपालम्भवचः 'आउसो'त्ति हे आयुष्मन्! चिरजीवित! काश्यपगोत्र! 'इमं सत्तमं पउट्टपरिहारं'ति सप्तमं शरीरान्तरप्रवेशं करोमीत्यर्थः, 'जेवि य आइं'ति येऽपि च आइंति निपातः, 'चउरासीइ महाकप्पसहस्साइं'इत्यादि, गोशालकसिद्धान्तार्थः स्थाप्यो, वृद्धैरव्याख्यातत्वात्, आह च चूर्णिकारः–'संदिद्धत्ताओ तस्सिद्धंतस्स न लक्खिज्जइ'त्ति, तथापि शब्दानुसारेण किञ्चिदुच्यते–'चउरासीइ महाकप्पसयसहस्साइं'ति चतुरशीतिमहाकल्पाः, कल्पाः–कालविशेषाः, तेऽपि लोकप्रसिद्धा अपि स्युरतस्तद्व्यवच्छेदार्थं उक्तं–महाकल्पा वक्ष्यमाणस्वरूपाः तेषां यानि शतसहस्राणि–लक्षाणि तानि क्षपयित्वा, तथा 'सत्त दिव्वे'त्ति सप्त दिव्यान्–देवभवान् 'सत्त संजूहे'त्ति सप्त संयूथानि–अनन्तकायजीवनिकायविशेषान् 'सत्त सण्णिगब्भे'त्ति सप्त संज्ञिगर्भान्–मनुष्यभववसतीः, एते च तन्मते सप्त मातरः स्युः, वक्ष्यति चैवमेवैतान् अयमेवेति, 'सत्त पउट्टपरिहारे'त्ति सप्त शरीरान्तरप्रवेशान्, एते च सप्त

संज्ञिगर्भानन्तरं क्रमादवसेयाः, तथा पञ्चेत्यादाविदं सम्भाव्यते-पंच 'कम्माणि सहस्साइं'ति कर्म्माणि-कर्मविषये कर्मणामित्यर्थः, पञ्च शतसहस्राणि-लक्षाणि 'तिण्णि य कम्मंसे'त्ति तांश्च कर्मभेदान् 'निवइत्ता' क्षपयित्वा अतिवाह्य 'से जहे'त्यादिना महाकल्पप्रमाणमाह, 'जहिं वा पज्जुवत्थिय'त्ति यत्र मृत्वा परि-सामस्त्येनोपरिस्थिता उपरता समाप्तेत्यर्थः, 'अद्ध'त्ति एष गङ्गाया मार्गः, 'एएणं गंगापमाणेणं'ति गङ्गायास्तन्मार्गस्यैक्याच्च गङ्गाप्रमाणेनेत्युक्तं 'एवामेव'त्ति उक्तेनैव क्रमेण 'सपुव्वावरेणं'ति सह पूर्वेण गङ्गादिना यत् परं महागङ्गादि तत् सपूर्वापरं तेन, भावप्रत्ययलोपदर्शनात् सपूर्वापरतयेत्यर्थः, 'तासिं दुविहे'त्ति तासां-गङ्गादीनां, गङ्गादिगतवालुकाकणानामित्यर्थः, द्विविध उद्धरणीयद्वैविध्यात्, 'सुहुमबोंदि कलेवरे'त्ति सूक्ष्मबोन्दीनि सूक्ष्माकाराणि कलेवराणि असङ्ख्यातखण्डीकृतवालुकाकणरूपाणि यत्रोद्धारे स तथा, 'बायरबोंदि'त्ति बादरबोन्दीनि-बादराकाराणि कलेवराणि वालुकाकणरूपाणि यत्र स तथा 'कप्पे'त्ति न व्याख्येयः, इतरस्तु व्याख्येयः, 'अवहाय'त्ति अपहाय-त्यक्त्वा 'से कोट्ठे'त्ति स कोष्ठो गङ्गासमुदायात्मकः 'खीणे'त्ति क्षीणः, नीरजः स च तद्भूमिगतरजसामप्यभावः, निर्लेपः भूमिभित्त्यादिसंश्लिष्टसिकतालेपाभावात्, 'निट्ठिए'त्ति निष्ठितो निरवयवीकृत इति, 'से तं सरे'त्ति अथ तत् कालखण्डं सरःसंज्ञं स्यात्, मानससर इत्यर्थः, 'सरप्पमाणे'त्ति सर एवोक्तलक्षणं प्रमाणं वक्ष्यमाणमहाकल्पादेर्मानससरःप्रमाणं, 'महामाणसे'त्ति मानसोत्तरं, अथ सप्त दिव्यादीनाह 'अणंताओ संजूहाओ'त्ति अनन्तजीवसमुदायरूपान्निकायविशेषात् 'चयं चइत्त'त्ति च्यवनं कृत्वा, अथवा चयं-देहं 'चइत्ता' त्यक्त्वा 'उवरिल्ले'त्ति उपरितनमध्यमाधस्तनानां मानसानां सद्भावात् तदन्यव्यवच्छेदाय उपरितनेत्युक्तं, 'माणसे'त्ति गङ्गादिप्ररूपणतः प्रागुक्तस्वरूपे सरसि, सरःप्रमाणायुष्कयुक्ते इत्यर्थः, 'संजूहे'त्ति निकायविशेषे देवे 'उव-

वज्जिइ'त्ति प्रथमो दिव्यभवः, संज्ञिगर्भसङ्ख्या सूत्रोक्तैव, एवं त्रिषु मानसेषु संयूथेषु आद्यसंयूथसहितेषु चत्वारि संयूथानि त्रयश्च देवभवाः, तथा 'माणसोत्तरे'त्ति महामानसे प्रागुक्तमहाकल्पप्रमितायुष्कतति, यच्च प्रागुक्तं चतुरशीतिमहाकल्पशतसहस्राणि क्षपयित्वेति तत्प्रथममहामानसापेक्षयेति द्रष्टव्यं, अन्यथा त्रिषु महामानसेषु बहुतराणि तानि स्युरिति, एतेषु चोपरिमादिभेदेषु मानसोत्तरेषु त्रीण्येव संयूथानि त्रयश्च देवभवाः: आदितस्तु सप्त संयूथानि षट् च देवभवाः, सप्तमदेवभवस्तु ब्रह्मलोके, स च संयूथं न स्यात्, सूत्रे संयूथत्वेनानभिहितत्वादिति। 'पाईणपडीणायए उदीणदाहिणविच्छिण्णे'त्ति इहायामविष्कम्भयोः स्थापनामात्रत्वमवगन्तव्यं, तस्य प्रतिपूर्णचन्द्रसंस्थानसंस्थितत्वेन तयोस्तुल्यत्वादिति, 'जहा ठाणपए'त्ति ब्रह्मलोकस्वरूपं तथा वाच्यं यथा स्थानपदे प्रज्ञापनाद्वितीयप्रकरणे, तच्चैवम्—'पडिपुन्नचंदसंठाणसंठिए अच्चिमालिभासरासिप्पभे'इत्यादि, 'असोगवडिंसए' यावत्करणात् सत्तवण्णवडिंसए चंपगवडिंसए चूयवडिंसए मज्झे य बंभलोयवडिंसए इत्यादि दृश्यं, 'सुकुमालग'त्ति सुकुमालकः 'भद्दलए'त्ति भद्रमूर्त्तिः, लकारककारौ स्वार्थिकाविति, 'मिउकुंडल'त्ति मृदवः कुण्डलमिव—दर्भादिमण्डलकमिव कुञ्चिताः केशा यस्य स तथा 'मट्ठगंडतल'त्ति मृष्टगण्डतले कर्णपीठके—कर्णाभरणे यस्य स तथा, देवकुमारसदृशः कुमारप्रव्रज्यायां सङ्ख्यानं—बुद्धिं प्रतिलभे इति योगः, 'अविद्धकण्णए'त्ति कुश्रुतशलाकया अविद्धकर्णः, अव्युत्पन्नमतिरित्यर्थः, 'एणेज्जस्स'त्ति इहैणकादयः पञ्च नामतोऽभिहिताः द्वौ पुनरन्त्यौ पितृनामसहिताविति, अलं—अत्यर्थं स्थिरं विवक्षितकालं यावदवश्यंस्थायित्वात् ध्रुवं तद्गुणानां ध्रुवत्वात् 'धारणिज्जं'ति धारयितुं योग्यं॥ 'दरं'ति (सू. ५५१) शृगालादिकृतं भूविवरं, 'तिणसुएणं'ति तृणशूकेन—तृणाग्रेण उपलम्भयसि—दर्शयसीत्यर्थः, 'तं मा एवं'ति गोशालकं इह कुर्विति शेषः, नार्हसि एवं कर्त्तुमिति शेषः, छाया—

प्रकृतिः ॥ उच्चावयाहिं'ति (सू. ५५२) असमञ्जसाभिः, 'आओसणाहिं'ति मृतोऽसि त्वमित्यादिभिर्वचनैराक्रोशति–शपति 'उद्धंसणाहिं'ति दुष्कुलीनेतिवचोभिः 'उद्धंसेइ'त्ति कुलाद्यभिमानादधः पातयति 'निब्भंछणाहिं'ति न त्वया मे कार्यमित्यादिभिर्निर्भर्त्सनाभिर्निर्भर्त्सयेत् नितरां दुष्टमभिधत्ते 'निच्छोडणाहिं'ति त्यजास्मान् इति 'निच्छोडह'त्ति प्राप्तमर्थं त्याजयतीति, 'नट्ठेसि'त्ति नष्टः स्वाचारत्यागात् असि–भवसि त्वं कदाचित्, विनष्टो मृतोऽसि, भ्रष्टोऽसि संपदो व्यपेतोऽसि त्वं, धर्म्मत्रयस्य यौगपद्येन योगान्नष्टविनष्टभ्रष्टोऽसीति, 'नाहि ते'त्ति नैव ते ॥ 'पादीणजाणवए'त्ति (सू. ५५३) प्राचीनजानपदः प्राच्य इत्यर्थः, 'पव्वाविए'त्ति प्रव्राजितः–शिष्यत्वेनाङ्गीकृतः 'अब्भुवगमो पव्वज्ज'त्ति वचनात्, मुण्डितश्च शिष्यत्वेनानुगमनात्, 'सेहाविय'त्ति व्रतित्वेन सेधितः, साध्वाचारसेवायां तस्य भगवतो हेतुभूतत्वात्, 'सिक्खाविय'ति शिक्षितस्तेजोलेश्याद्युपदेशदानतः, 'कोसलजाणवए'त्ति अयोध्यादेशोत्पन्नः 'वाउक्कलियाइव'त्ति वातोत्कलिका, स्थित्वा २ यो वातो वाति सा वातोत्कलिका 'वायमंडलि'त्ति मण्डलिकाभिर्यो वाति, 'सेलंसी'वेत्यादौ तृतीयार्थे सप्तमी 'आवरिज्जमाण'त्ति स्खल्यमाना 'निवरिज्ज'त्ति निवर्त्यमाना 'नो क्कमइ'त्ति न क्रमति–न प्रभवति 'नो पक्कमंति' नैव प्रकर्षेण क्रमते 'अंचियंचि'त्ति अञ्चिते–सकृद्गते अञ्चितेन वा–सकृद्गतेन देशेनांचिः–पुनर्गमनमञ्चितांचिः, अथवा अञ्चया–गमनेन सह अंचिः–आगमनमञ्चयांचि, निर्गमागम इत्यर्थः, तां कुर्यात्, 'अण्णाइट्ठे'त्ति अन्वाविष्टा–अभिव्याप्तः 'सुहत्थि'त्ति सुहस्तीव सुहस्ती 'अहप्पहाणे जणे'त्ति यथाप्रधानो जनो, यो यः प्रधानजन इत्यर्थः, 'अगणिज्झामिए'त्ति अग्निना ध्मातो–दग्धो ध्यामितो वा–ईषद्दग्धः, 'झूसिए'त्ति सेवितः क्षपितो वा 'परिणामिए'त्ति अग्निना परिणामितः, प्राक्स्वरूपत्याजनेन आत्मभावं नीतः, हततेजा धूल्यादिना, गततेजाः स्वतः, एवं नष्ट- ॥२२१॥

तेजाः अव्यक्ततेजाः भ्रष्टतेजाः स्वरूपभ्रष्टतेजाः, ध्माततेजा इत्यर्थः, लुप्ततेजाः, क्वचिदद्धीभूततेजाः, विनष्टतेजाः—निस्सत्ताकीभूततेजाः, एकार्था एते शब्दाः, 'छंदेणं'ति स्वाभिप्रायेण, यथेच्छमित्यर्थः, 'निप्पट्ठपसिण'त्ति निर्गतानि स्पृष्टानि प्रश्नव्याकरणानि यस्य स तथा तं 'रुंदाइं पलोएमाण'त्ति दीर्घदृष्टी दिक्षु प्रक्षिपन् हतमानानां सतां लक्षणमिदं दीहुण्हाइं 'नीससमाण'त्ति दीर्घोष्णान् निःश्वासान् 'अवडुं'ति कृकाटिकां ग्रीवां, 'पुयलिं पप्फोडे'त्ति पुततटिं—पुतप्रदेशं प्रस्फोटयन् 'विणिद्धुणमाणे'त्ति विनिर्द्धुवन् अहो हतोऽहमसीति कृत्वा—इति भणित्वेत्यर्थः, 'अंबकूणग'त्ति आम्रफलहस्तगतः निजतेजोजनितदाहशान्त्यर्थं आम्रास्थिकं चूपतीति भावः, गानादयस्तु मद्यपानकृता विकाराः, 'आचंदणिउदएणं'ति आतन्यकोदकं कुम्भकारस्य यद् भाजने स्थितं मनाक् मृन्मिश्रं जलं तेन ॥ 'अलाहि'त्ति (सू. ५९४) अलमत्यर्थं पर्याप्तः—शक्तो घातायेति योगः, 'घायाए' घाताय—हननाय, तदाश्रितत्रसापेक्षया, वधाय तदाश्रितस्थावरापेक्षया, 'उच्छायणयाए'त्ति उच्छादनतायै, सचेतनाचेतनतद्गतवस्तूच्छादनायेति, 'वज्जस्स'त्ति वर्ज्यस्य मद्यपानादिपापस्येत्यर्थः, 'चरिमे'त्ति न पुनरिदं भविष्यतीतिकृत्वा चरमं, तत्र पानकादीनि चत्वारि स्वगतानि, चरमता चैषां स्वस्य निर्वाणगमनेन पुनरकरणात्, एतानि च किल निर्वाणकाले जिनस्यावश्यं भावीनीति नास्त्येतेपु दोप इत्यस्य तथा नाहमेतानि दाहशान्त्यर्थं सेवामीत्यर्थस्य प्रकाशनार्थत्वादवद्यप्रच्छादनार्थानि स्युः, पुष्कलसंवर्त्तकादीनि तु बाह्यानि त्रीणि प्रकृतानुपयोगेऽपि चरमसामान्याज्जनचित्तरञ्जनाय चरमाण्युक्तानि, जनेन हि तेषां सातिशयत्वाच्चरमता श्रद्धीयते ततस्तैः सहोक्तानामाम्रकुणकपानकादीनामपि साऽनुश्रद्धेया भवतीति बुद्ध्येति, 'पाणगाइं'ति जलविशेषा व्रतयोग्या 'अपाणयाइं'मि पानकसदृशानि, शीतलत्वेन दाहशान्तिहेतवः 'गोपुट्ठए'त्ति गोपृष्ठाद्यत्पतितं 'हत्थमद्दिए'त्ति हस्तमर्द्दितं मृन्मि-

अजलं यथैतदेव आतन्यनिकोदकं 'थालपाणिए'त्ति स्थालं-उदं तत्पानकमिव दाहशान्तिहेतुत्वात् स्थालपानकं, उपलक्षणत्वादस्य भाजनान्तरग्रहोऽपि दृश्यः, एवमन्यान्यपि, नवरं त्वक्-छल्ली, संबली-कलायादिफलिका 'सुद्धापाणए'त्ति देवहस्तस्पर्श इति 'दीहालयं'ति उदकार्द्रं स्थालकं 'दोवारयं'ति उदकवारकं 'दाकुंभग'त्ति उदककुम्भः महान् घटः 'दाकलसं'ति कलशस्तु लघुतरः 'जहा पओगपए'त्ति यथा प्रज्ञापनाषोडशपदे, तत्रेदमेवमभिधीयते 'भव्वं वा फणसं वा दाडिमं वा इत्यादि, तरुणगं-नवं आमगं-अपक्वं आसगंसि-मुखे 'आवीलए'त्ति आ ईषत् पीडयेत् 'पवीलए'त्ति प्रकर्षेण 'कल'त्ति कलायो धान्यविशेषः, 'सिंबल'त्ति वृक्षविशेषः, 'ते देवे साइज्ज'त्ति यस्तौ देवौ स्वदते-अनुमन्यते 'संसि'त्ति स्वके-स्वकीये 'हल्ल'त्ति गोवालितृणसमानाकारकीटकविशेषः, लोके ग्वडमंकडीत्युच्यते 'वागरणं'ति प्रश्नः 'वागरित्तए'त्ति व्याकर्तुं-प्रष्टुमिति, 'विलिए'त्ति व्यलीकितः-सञ्जातव्यलीकः 'वीडिए'त्ति व्रीडा अस्यास्तीति व्रीडः, लज्जाप्रकर्षवान् इत्यर्थः, यावदयं पुलो गोशालकान्तिके नागच्छति इत्यर्थः; 'संगारं'ति संकेतं, अयं पुलो भवत्समीपे आगमिष्यति भवानाम्रकूणकं त्यजतु संवृतश्च भवतु एवंरूपमिति, 'तं नो खलु एस अंबकूणए'त्ति तदिदं खलु आम्रास्थिकं न स्यात् यद्व्रतिनामकल्प्यं, किं त्विदं यद् भवता दृष्टं तदाम्रत्वक् 'अंबचोयए णं एस'त्ति इयं च निर्वाणगमनकाले आश्रयणीयैव, त्वक्पानकत्वादस्या इति, तथा हल्लासंस्थानमाह-'वंसीमूल'त्ति इदं च वंशीमूलसंस्थितत्वं तृणगोवालिकाया लोकप्रतीतमेव, एतदुक्ते सति मद्यविह्वलचित्तोऽकस्मादेवमाह-'वीणं वाएहि रे वीरगा !' एतदेव द्विरावर्त्तेत इति, एतच्चोन्मादवचः तस्योपासकस्य शृण्वतोऽपि न व्यलीककारणं जातं, यो हि सिद्धिं गच्छति स चरमगेयादि कुर्यादित्यादिवचनैर्विमोहितमतित्वादिति । 'हंसलक्खणं'ति हंसस्वरूपशुक्लमित्यर्थः, 'इड्डीसक्कारे'त्ति ऋद्ध्या ये सत्काराः पूजाभेदास्तेषां

समुदायेन ॥ 'दाहवक्कंतीए' (सू. ५५५) दाहोत्पत्त्या 'सुंबेणं'ति वल्करज्ज्वा 'उड्डुभइ'त्ति अवष्ठीव्यत-निष्ठीव्यत 'आकड्ड-विकड्ढिं'ति आकर्षविकर्षिकां 'थिरीकरणट्ठयाए'त्ति प्राक्प्राप्तपूजासत्कारयोः स्थिरताहेतोर्यदिति, गोशालशरीरस्य विशिष्टपूजा न कुर्युः तदा लोक एवं ज्ञास्यति-नायं जिनो बभूव, न च जिनशिष्या इत्येवमस्थिरौ पूजासत्कारौ स्यातामिति तयोः स्थिरीक-रणार्थं अवगुणं अपावृण्वन्ति 'मालुयाकच्छए'त्ति (सू. ५५७) मालुका नाम एकास्थिका वृक्षविशेषाः तेषां यत् कक्षं—गहनं तत्तथा, 'विउले'त्ति वपुर्व्यापकत्वात् 'रोगायंके'त्ति रोगः-पीडाकारी स चासावातङ्कश्च-व्याधिरिति रोगातङ्कः, 'उज्जले'त्ति उज्ज्वलः तीव्रपीडाकृत् 'दुरहियास'त्ति दुरधिसह्यः, सोढुमशक्य इति, 'दाहवक्कंतीए'त्ति दाहो व्युत्क्रान्तः-उत्पन्नो यस्य सः स्वार्थिकेकप्रत्यये दाहव्युत्क्रान्तिकः 'अवियाइं'ति अपि चेति समुच्चये 'आइं'ति वाक्यालङ्कारे 'लोहियवच्चाइं'ति लोहितवर्चां-स्यपि-रुधिररूपपुरीषाण्यपि करोति, किमनेन पीडावर्णनेनेति ?, 'चाउव्वण्णं'ति चातुर्वर्ण्यं-ब्राह्मणादिलोकः, 'झाणंतरियाए'त्ति एकस्य ध्यानस्य समाप्तिरन्यस्यानारम्भ इत्येषा ध्यानान्तरिका तस्यां 'मणोमाणसि'त्ति मनस्येव न बहिर्वचनादिभिः अप्रकाशि-तत्वात् यन्मानसिकं-दुःखं तन्मनोमासिकं तेन, 'दुवे कवोया' इत्यादि श्रूयमाणमेवार्थं केचिन्मन्यन्ते, अन्ये त्वाहुः-कपोतः-पक्षि-विशेषः तद्वद्ये फले वर्णसाधर्म्यात् ते कपोते-कूष्माण्डे ह्रस्वे कपोते कपोतके ते च ते शरीरे वनस्पतिजीवदेहत्वात् कपोतकशरीरे अथवा कपोतकशरीरे इव धूसरे वर्णसाधर्म्यादेव ते कपोतकशरीरे-कूष्माण्डफले एव ते उपस्कृते 'तेहिं नो अट्ठो'त्ति बहुपापत्वात् 'परियासिए'त्ति परिवासितं-ह्यस्तनमित्यर्थः, 'मज्जारकडे'त्ति इत्यादि, केचित् श्रूयमाणमेवार्थं मन्यन्ते, अन्ये त्वाहुः-मार्जारो वायुविशेषः तदुपशमनाय कृतं मार्जारकृतं, अपरे त्वाहुः-मार्जारो विरालकाख्यो वनस्पतिभेदः तेन कृतं-भावितं यत्तत्तथा, किं

तदित्याह–कुर्कुटमांसं–बीजपूरकटाहं आनय, निरवद्यत्वात्, 'पत्तगं मोएइ'त्ति पात्रकं मुञ्चति 'विजयस्स'त्ति यथा विजयस्य वसुधाराद्युक्तं तथा एतस्या अपि वाच्यं। 'भारग्गसो'त्ति (सू. ५५९) भारपरिमाणतः, भारश्च भारकः पुरुषोद्वहनो विंशतिपलशतप्रमाणो वा 'कुंभग्गसो'त्ति कुम्भो जघन्य आढकानां षष्ट्या मध्यमस्त्वशीत्या उत्कृष्टः पुनः शतेन 'पउमवासे'त्ति पद्मवर्षः 'वासं वासिहिन्ति' वर्षो–वृष्टिः वर्षिष्यति 'आओसेहि'ति आक्रोशान् दास्यति 'निच्छोडेहि'त्ति पुरुषान्तरजूटितश्रमणहस्ताद्यवयवान् वियोजयिष्यति, 'निब्भच्छेहि'त्ति दुर्वचांसि वक्ष्यते, 'पमारिहि'त्ति प्रमारयिष्यति 'उद्दवेहि'त्ति अपद्रावयिष्यति 'आच्छिंदिहि' ईपद् छेत्स्यति 'विच्छिंदेहि'त्ति विशेषेण छेत्स्यति 'भिंदिहि'त्ति स्फोटयिष्यति, पात्रकाणीत्यर्थः, 'अवहरिहि'त्ति अपहरिष्यति–उद्दालयिष्यति 'णिण्णयरे करेहि'त्ति निर्नगरान्–नगरनिष्क्रान्तान् करिष्यति, 'रज्जस्स'त्ति राज्यं–स्वामिअमात्यसुहृत्कोशदुर्गबलं राष्ट्रं वा इति सप्ताङ्गमुच्यते तस्य 'विरमन्तु'त्ति विरम त्वं, विमलजिनः किलोत्सर्पिण्यामेकविंशतितमः समवाये दृश्यते, स चावसर्प्पिणीचतुर्थजिनस्थाने प्राप्नोति, तस्मादर्वाचीनजिनान्तरेषु बह्व्यः सागरोपमकोटयोऽतिक्रान्ता लभ्यन्ते, अयं च महापद्मो द्वाविंशतेः सागरोपमाणामन्ते भविष्यति, दुरवगममिदं, अथवा यो द्वाविंशतेः सागरोपमाणामन्ते तीर्थकृदुत्सर्पिण्यां भविष्यति तस्यापि विमल इति नाम सम्भाव्यते, अनेकाभिधानाभिधेयत्वान्महापुरुषाणामिति। 'पउप्प'त्ति शिष्यसन्ताने 'जहा धम्मघोसस्स'त्ति यथा धर्मघोषस्य एकादशशतैकादशोद्देशकोक्तस्य वर्णकस्तथा वाच्यं, स च 'कुलसंपन्ने'त्यादिरिति, 'रहचरियं'ति रथचर्यां 'णोल्लाविहि'त्ति नोदयिष्यति–प्रेरयिष्यति। 'सत्थोवज्झो'त्ति (सू. ५६०) शस्त्रवध्यस्सन् 'दाहवक्कन्ती' दाहोत्पत्त्या कालं कृत्वेति योगः, इह यथाक्रमेणैव संज्ञिप्रभृतयो रत्नप्रभादिषु यत उत्पद्यन्त इत्यसौ तथैवोत्पा-

दितः, आह च–"अस्सणी खलु पढमं, दोच्चं व सरीसिवा तइय पक्खी। सीहा जंति चउत्थिं उरगा पुण पंचमं पुढविं ॥' 'खह-चरविहाणाइं' विधानानि–भेदाः, 'चम्मपक्खीणं'ति वल्गुलीप्रभृतीनां 'लोमपक्खीणं' हंसादीनां 'समुग्गपक्खीणं'ति समुद्गकाकारपक्षवतां नरक्षेत्रबहिर्वर्त्तिनां वियथपक्खीणंति विस्तारितपक्षवतां समयक्षेत्रबहिर्वर्त्तिनामेव 'अणेगसयसहस्स-खुत्तो' इत्यादि यदुक्तं तत्सान्तरमवसेयं, निरन्तरं पञ्चेन्द्रियत्वलाभस्योत्कर्षतोऽप्यष्टभवप्रमाणस्यैव भावात्, यदाह–"पंचिंदियति-रियनरा सत्तट्ठभवा भवग्गहणे'त्ति, 'गंडीपयाणं'ति हस्त्यादीनां 'सणप्फयाणं'ति सनखपदानां सिंहादिनाखराणां 'उवचिया-ण'मिह यावत्करणादिदं दृश्यम्–'रोहियाणं कुंथूपिवीलियाण'मित्यादि, 'रुक्खाणं'ति वृक्षानामेकास्थिवहुवीजभेदात् द्विवि-धानां, तत्रैकास्थिका निम्बाम्रादयः बहुवीजा अस्थिकतिन्दुकादयः, 'गुच्छाणं'ति वृन्ताकिप्रभृतीनां 'कुहुणाणं'ति कुहुणानां आयकायप्रभृतिभूमिस्फोटानां,'ओसण्णं च'त्ति बाहुल्येन, 'पाईणवायाणं'त्ति पूर्ववातानां यावत्करणाच्चतुर्दिग्वातानां 'सुद्ध-वायाणं'ति मन्दस्तिमितवायूनाम्, 'इंगालाणं'ति यावत्करणात् 'मुम्मुराणं अच्चीण'मित्यादि, फुंफुकादौ मसृणाग्निरूपाणां अर्चिषां–वह्निप्रतिबद्धज्वालानामिति, 'ओसाणं'ति रात्रिजलानां 'खाओदयाणं'ति खातिकाद्युदकानां 'सक्कराणं'ति घरट्टानां, यावत्करणात् उपलानां 'बाहिं खरियत्ताए'त्ति नगरबहिर्वर्त्तिप्रान्तजनवेश्यात्वेन 'अंतोखरियत्ताए'त्ति पुरमध्यवर्त्तिशिष्टजन-वेश्यात्वेन ॥ 'पडिरूविएणं सुंकेणं'ति (सू. ५६१) प्रतिरूपिकेन–उचितेन शुल्केन–दानेन, 'भंडकरंडग'त्ति आभरणभाज-नतुल्या आदेयेत्यर्थः, 'तेल्लकेला इव'त्ति तैलकेला–तैलभाजनं सौराष्ट्रप्रसिद्धं, सा च सुष्ठु सङ्गोप्य रक्षणीया स्यात्, अन्यथा लुठति, ततश्च तैलहानिः स्यात्,'चेलपेडा इव सुसंप'त्ति वस्त्रपेटेव सुष्ठु संपरिभृता–निरुपद्रवस्थाने स्थापिता,'दाहिणिल्लेसु'त्ति

विराधितश्रामण्यत्वात्, अन्यथाऽनगाराणां वैमानिकेष्वेवोत्पत्तिः स्यात्, यच्च 'दाहिणिल्लेसु'त्ति इह यदुच्यते तत्तस्य क्रूरकर्मत्वेन दक्षिणक्षेत्रेष्वेवोत्पाद इतिकृत्वा, अविराधितचारित्र इत्यर्थः, आह च--"आराहणा य एत्थं चरणपडिवत्तिसमयओ पभिइ। आमरणंतमजस्सं संजमपरिपालणं विहिणं ॥१॥"त्ति, एवमिह यद्यपि विराधनायुक्ताश्चारित्रभवा अग्निकुमारवर्जभवनपतिज्योतिष्कत्वहेतुभवसहिता दश अविराधनाभवास्तु यथोक्तसौधर्मादिदेवलोकसर्वार्थसिद्धयुत्पत्तिहेतवः सप्त अष्टमश्च सिद्धिगमनभव इत्येवमष्टादश चारित्रभवा उक्ताः, श्रूयते चाष्टौ भवांश्चारित्रं स्यात्, तथापि न विरोधः, अविरोधनाभवानामेव ग्रहणात्, अन्ये त्वाहुः--'अट्ठ भवा उ चरित्ते' इत्यत्र सूत्रे आदानभवानां वृत्तिकृता व्याख्यातत्वात् चारित्रप्रतिपत्तिविशेषिता एव भवा ग्राह्याः, अविराधनाविशेषणं न कार्यं, अन्यथा यद्भगवद्धीरेण हालिकाय यत्प्रव्रज्याबीजमिति दापिता तन्निरर्थकं स्यात्, सम्यक्त्वमात्रेणैव बीजमात्रस्य सिद्धत्वात्, यत्तु चारित्रदानं तस्य तदष्टमचारित्रे सिद्धिरेतस्य स्यादिति विकल्पादुपपन्नं स्यादिति, यच्च दशसु विराधनाभवेषु तस्य चारित्रं प्रोक्तं तद् द्रव्यतोऽपि स्यादिति न दोषः, अन्ये त्वाहुः--नहि वृत्तिकारवचोमात्रावष्टम्भादेवाधिकृतसूत्रमन्यथा व्याख्येयं स्यात्, आवश्यकचूर्णिकारेणाप्याराधनापक्षस्य समर्थितत्वादिति, 'एवं जहा उववाइए' इत्यादि भावितमेव अम्मडपरिव्राजकदृष्टान्त इति ॥ पञ्चदशशतं भगवतीलघुवृत्तितः सम्पूर्णम् ॥

इति श्रीदानशेखरसूरिसमुद्धृतायां भगवतीलघुवृत्तौ पंचदशं शतकं

अथ षोडशशतमारभ्यते यथा 'अहगरिणि'त्ति (*७६) अधिक्रियते–ध्रियते कुट्टनार्थं लोहादि यस्यां सा अधिकरणी तत्प्रभृतिपदार्थवाच्यः प्रथमः, 'जर'त्ति जराद्यर्थवाच्यो द्वितीयः 'कम्मे'त्ति कर्म्माद्यधिकारवाच्यः ३ 'जावइय'मित्यादिशब्दे-नोपलक्षितश्चतुर्थः 'गंगदत्त'त्ति गङ्गदत्तदेववक्तव्यतार्थः ५ 'सुमिणि'त्ति स्वप्नरूपः ६ 'उवओग'त्ति उपयोगार्थः ७ 'लोग'-त्ति लोकस्वरूपार्थः ८ 'वलि'त्ति वलिसत्कपदार्थाभिधायकः ९ 'ओहि'त्ति अवधिज्ञानार्थः १० 'दीवे'त्ति द्वीपकुमारवक्तव्यतार्थः ११ 'उदहि'त्ति उदधिकुमारवक्तव्यतार्थः १२ 'दिस'त्ति दिक्कुमारविषयार्थः १३ 'थणिए'त्ति स्तनितकुमारवक्तव्यतार्थः १४ इत्यु-द्देशकगाथार्थः। 'अत्थि'त्ति (सू. ५६२) अस्त्ययं पक्षः 'अहिकरणिंसि'त्ति अधिकरण्यां 'वाउयाए'त्ति वायुकायः 'वक्कमइ'-त्ति व्युत्क्रामति, अयोघनाभिघातेनोपपद्यते?, अयं चाक्रान्तसम्भवत्वेनादावचेतनतयोत्पन्नोऽपि पश्चात् सचेतनीस्यात् इति सम्भा-व्यते। उत्पन्नस्सन् म्रियत इति प्रश्नयन्नाह–'सेसंते'त्यादि 'पुट्ठे'त्ति स्पृष्टः स्वकायशस्त्रादिना। सशरीरश्च कलेवरान्निष्क्रामति कार्मणाद्यपेक्षया, औदारिकाद्यपेक्षया त्वशरीरीति॥ अथाग्निसूत्रमाह–'इंगालकारियाए'त्ति (सू. ५६३) अङ्गारान् करोतीति अङ्गा-रकारिका–अग्निशकटिका तस्यां, न केवलं तस्यामग्निकायः स्यात्, 'अण्णोऽवित्थ'त्ति अन्योऽप्यत्र वायुकायो व्युत्क्रामति, यत्रा-ग्निस्तत्र वायुरितिकृत्वा, कस्मादेवमित्याह–'न विणे'त्यादि॥ अग्न्यधिकारादेव अग्नितप्तलोहमाश्रित्याह–'अयं'ति (सू. ५६४) लोहं 'अयकोट्ठंसि'त्ति लोहप्रतापनार्थे कुशूले 'उव्विहमाणे व'त्ति उत्क्षिपन् वा 'पव्विहइ'त्ति प्रक्षिपन् वा 'इंगालकढिणि'त्ति ईषद्वक्राग्रा लोहसंडासिका 'भत्थ'त्ति भस्त्रा–ध्मातखल्ला, इह चायःप्रभृतिपदार्थनिर्वर्त्तकजीवानां पञ्चक्रियत्वमविरतिभावेन ज्ञेय-मिति, 'चम्मट्ठे'त्ति लोहमयः प्रतलायतो लोहादिकुट्टनहेतुर्लोहकाराद्युपकरणविशेषः, 'मुट्ठिए'त्ति लघुतरो घनः 'अहिगरणि-

क्खोडि'त्ति यत्र काष्ठे अहिगरणी स्थाप्यते 'उदगदोणि'त्ति जलभाजनं यत्र तप्तं लोहं शीतलीकरणाय क्षिप्यते 'अहिगरणसाल'त्ति लोहपरिकर्मगृहं ॥ 'अहिगरणीवि'त्ति (सू. ५६५) अधिकरणं–दुर्गतिहेतुर्वस्तु तच्च विवक्षया शरीरमिन्द्रियाणि च, तथा बाह्यो हलगन्त्र्यादिः, तदस्यास्तीति अधिकरणी जीवः,'अहिगरणंपि'त्ति शरीराद्यधिकरणेभ्यः कथञ्चिदैक्यात् अधिकरणं जीवः, एतद्द्वयं जीवस्याविरतिमाश्रित्योच्यते, तेन यो विरतिमान् सशरीरादिभावेऽपि नाधिकरणी नाप्यधिकरणं, अविरतियुक्तस्य शरीरादेरधिकरणत्वात्, एतच्चतुर्विंशतिदण्डकेषु वाच्यं, 'साहिगरणि'त्ति (सू. ५६६) सहाधिकरणेन–शरीरादिना वर्त्तते यः सः साधिकरणी, शस्त्राद्यधिकरणापेक्षया तु तदविरतिरूपस्य सहवर्त्तित्वात् जीवस्साधिकरणीत्युच्यते, अत एव वक्ति–'अविरइं पडुच्च'त्ति अत एव संयतानां वपुस्सद्भावेऽप्यविरत्यभावान्न साधिकरणत्वं, 'निरहिगरणि'त्ति निरधिकरणी, अधिकरणदूरवर्त्तीत्यर्थः, स च न स्यात्, अविरतेरधिकरणभूताया अदूरवर्त्तित्वादिति, अथवा सहाधिकरणिभिः–पुत्रमित्रादिभिर्वर्त्तत इति साधिकरणी, कस्यापि जीवस्य पुत्राद्यभावे तद्विषयविरतेरभावात् साधिकरणत्वं ज्ञेयं, अतो नो निरधिकरणीति, 'आयाहिगरणि'त्ति अधिकरणी–कृष्यादिमान् आत्मनाऽधिकरणी आत्माधिकरणी, 'पराहिगरणि'त्ति परेषामधिकरणप्रवर्त्तनेनाधिकरणी पराधिकरणी, एवं तदुभयाधिकरणी च, 'आयप्पओगणिव्वत्तिए'त्ति आत्मनः प्रयोगेण–मनःप्रभृतिव्यापारेण निर्वर्त्तितं–कृतं यत्तत्तथा, एवमन्यदपि द्वयं। 'से केण'मित्यादि, अविरत्यपेक्षया त्रिविधमप्यस्तीति भावनीयं, 'एवं चेव'त्ति अनेन जीवसूत्रालापः पृथ्वीकायसूत्रे समस्तो वाच्य इति दर्शितं,'एवं वेउव्वी'त्यादि व्यक्तं, नवरं 'जस्स अत्थि'त्ति यस्य जीवपदस्य (अस्ति तत् तस्य तद्) वाच्यमिति, तत्र नारकदेवानां वायोः पञ्चेन्द्रियतिर्यग्मनुष्याणां च वैक्रियमस्तीति ज्ञेयं, 'पमायं पडुच्च'त्ति इहाहारकशरीरं साधूनामेव स्यात् तत्रावि-

रतेरभावेऽपि प्रमादादधिकरणत्वमवगन्तव्यं, नवरं 'जस्सऽत्थि'त्ति यस्यास्ति 'सोइंदियं'ति तस्य वाच्यमिति शेषः, तच्चैकेन्द्रियविकलेन्द्रियवर्जानामन्येषां स्यादिति ॥ १६ शते प्रथमः ॥

'जर'त्ति (सू. ५६७) 'जॄ वयोहानावि'ति वचनात् जरणं जरा–शरीरदुःखरूपा 'सोग'त्ति शोको–दैन्यं, एतद् द्वयं जीवानां किं स्यादिति प्रश्नः, चतुर्विंशतिदण्डके च येषां शरीरमेव तेषां जरा, येषां तु मनोऽप्यस्ति तेषामुभयमिति। 'एवं जहा ईसाणे'त्ति (सू. ५६८) यथेशानस्तृतीयशते प्रथमोद्देशके राजप्रश्नीयातिदेशेनोक्तः तथा शक्रोऽपि वाच्यः,'अभिओगे न सद्दावेइ'त्ति तत्रेशानो वीरजिनमवधिना विलोक्य आभियोगिकदेवान् शब्दयामास, शक्रस्तु नैवं, तथा तत्र लघुपराक्रमः पदात्यनीकाधिपतिर्नन्दिघोषो घण्टाताडनाय नियुक्त उक्तः, इह तु हरिणैगमैषी, तत्र विमानं पुष्पकं, इह तु पालकं वाच्यं, तत्र दक्षिणो निर्याणमार्ग उक्तः, इहोत्तरो वाच्यः, तथा नन्दीश्वरद्वीपे रतिकरपर्वत उत्तरपूर्वो ईशानेन्द्रस्य अवतारायोक्तः इह तु पूर्वदक्षिणोऽसौ वाच्यो, 'नामकं सावइ'त्ति नामकं स्वकीयं श्रावयित्वा यदुत हे भदन्त! शक्रो भवन्तं वन्दे नमस्यामि 'उग्गहि'त्ति अवगृह्यते–स्वामिना स्वीक्रियते यः सोऽवग्रहः, 'देविंदोग्गहो'त्ति देवेन्द्रः–शक्र ईशानो वा तदवग्रहो–दक्षिणं उत्तरं च लोकार्द्धं इति देवेन्द्रावग्रहः,'राउग्गहो'त्ति राजावग्रहः षट्खण्डभरतक्षेत्रं यावत् 'गिहिवइ'त्ति गृहपतिः–माण्डलिको राजा तदवग्रहः स्वकीयमण्डलं यावत् गृहपत्यवग्रहः, 'सागारिउग्गहे'त्ति सहागारेण–गृहेण वर्त्तते इति सागारिकः तदवग्रहो गृहमेवेति सागारिकावग्रहः, 'साहम्मि'त्ति सदृशधर्मेण चरन्तीति साधर्म्मिकाः–साधव एव तेषामवग्रहः तदाभाव्यं पञ्चकोशपरिमाणं क्षेत्रं, ऋतुबद्धे मासमेकं वर्षासु चतुर्मासी इति साधर्म्मिकावग्रहः, 'एवं वयइ'त्ति एवं प्रागुक्तं अहं अवग्रहमनुजानामीत्येवं वदति, सत्य एषोऽर्थ इति ॥ 'सम्मावाइ'त्ति (सू. ५६९) सम्यग्व-

महोपाध्यायश्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तहंसगणिशिष्यदानशेखरगणिसमुद्धृतायां भगवतीलघुवृत्तौ चतुर्दशशतविवरणं सम्पूर्णं ॥

अथ पञ्चदशं शतमारभ्यते–'मंखलिपुत्ते'त्ति (सू. ५३९) मङ्खल्यभिधानः–मङ्खपुत्रः, 'चउवीस'त्ति चतुर्विंशतिवर्षप्रमाणप्रव्रज्यापर्यायः, 'दिसाचर'त्ति दिशं–मेरां चरन्ति–मन्यन्ते भगवतो वयं शिष्या इति दिक्चराः, देशचरा वा दिक्चराः, भगवच्छिष्याः पार्श्वस्थीभूता इति टीकाकारः, पासावच्चिज्जत्ति चूर्णिकारः, 'अंतियं'ति अन्तिकं–समीपं 'पाउब्भवित्थ'त्ति आगताः 'अट्ठविहं'ति अष्टविधं, पूर्वगतं निमित्तमित्यर्थः, तच्चेदम्–दिव्यं १ उत्पातं २ आन्तरिक्षं ३ भौमं ४ स्वप्नः ५ स्वरं ६ लक्षणं ७ व्यञ्जनं ८ चेत्यादि पूर्वश्रुतमध्यगतं 'मग्गदसमं'ति मार्गौ गीतमार्गवृत्तमार्गलक्षणौ सम्भाव्येते 'दसम'त्ति अत्र नवमशब्दस्य लुप्तस्य दर्शनात् नवमदशमाविति दृश्यं, ततश्च नवमदशमौ मार्गौ यत्र तत्तथा, स्वकीयैः २ 'मतिदंसणेहिं'ति मतेः–बुद्धेर्मत्या वा दर्शनानि–वस्तुज्ञानानि मतिदर्शनानि तैः 'निज्जूहंति' निर्यूथयन्ति–पूर्वगतश्रुतपर्याययूथान्निर्द्धारयन्ति, उद्धरन्ति इत्यर्थः, 'उवट्ठाइंसु'त्ति उपस्थितवन्तः, आश्रितवन्त इत्यर्थः, 'अट्ठंगस्स'त्ति अष्टाङ्गस्य 'केणइ'त्ति केनचित् तथाऽविदितस्वरूपेण 'उल्लोयमेत्तेणं' उद्देशमात्रेण 'इमाइं'ति इमानि षट् अनतिक्रमणीयानि–अव्यभिचारीणि 'वागरणाइं'ति पृष्टेन सता यानि व्याक्रियन्ते–अभिधीयन्ते तानि व्याकरणानि, पुरुषार्थोपयोगित्वाच्चैतानि षट् उक्तानि, अन्यथा नष्टमुष्टिचिन्तोलूकादीन्यन्यानि बहुनिमित्तानि गोचरीभवन्ति ॥ 'उट्ठाणपरियाणियं'ति ( सू. ५४० ) परियानं–विविधव्यतिकरपरिगमनं तदेव पारियानिकं–चरितं

सप्त च मोहक्षये उपशमे वा, एवं मनुष्योऽपि, नारकादिस्तु वैमानिकान्तोऽष्टावेव इत्येवं वेदनं, 'बंधोऽवि तहेव'त्ति एकस्याः कर्म्मप्रकृतेर्वेदे-वेदनेऽन्यासां कियतीनां बन्धः स्यात् इति बन्धः प्रतिपाद्यते यत्रासौ वेदावन्ध उच्यते, सोऽपि तथैव प्रज्ञापनायामिव, स च प्रज्ञापनापड्विंशतितमपदरूपः, स चैवम्-'कइ णं भंते ! कम्मपगडीओ पं० ?, गो० ! अट्ठ णाणावरणिज्ज'मित्यादि, 'एवं नेरइयाणं जाव वेमाणियाणं, जीवे णं भंते ! नाणावरणिज्जं वेदेमाणे कइ कम्मपगडीओ बंधइ?, गो० ! सत्तविहबंधए वा एवं अट्ठविह० छव्विहबंधए वा, एगविहबंधए वा,' तत्राष्टविधबन्धकः प्रतीतः, सप्तविधबन्धकस्त्वायुर्बन्धकालादन्यत्र, षड्विधबन्धक आयुर्मोहवर्जानां सूक्ष्मसम्परायः, एकविधबन्धको वेदनीयापेक्षयोपशान्तमोहादिः, 'बन्धावेदोऽवि तहेव'त्ति एकस्याः कर्म्मप्रकृतेर्बन्धे सति अन्यासां कियतीनां वेदो भवति एवमर्थो बन्धावेद उद्देशक उच्यते, सोऽपि तथैव, प्रज्ञापनायामिवेत्यर्थः, स च प्रज्ञापनायां पञ्चविंशतितमपदरूपः, विशेषस्त्वयम्-'जीवा णं भंते ! नाणावरणिज्जं कम्मं बंधेमाणे कइ कम्मपगडीओ वेएइ ?, गो० ! नियमा अट्ठ कम्मपगडीओ वेएइ' इत्यादि। 'बंधाबंधो'त्ति एकस्या बन्धे अन्यासां कियतीनां बन्ध इति यत्रोच्यते, स च प्रज्ञापनाचतुर्विंशतितमपदरूपः, स चैवम्-'जीवे णं भंते ! नाणावरणिज्जं बंधेमाणे कइ कम्मपगडीओ बंधइ ?, गो० ! सत्त अट्ठ छ एगविहबंधए वे'त्यादि, इह गाथा दृश्यते-"वेयावेओ पढमो वेयाबंधो य बीयओ होइ। बंधावेओ तइओ चउत्थओ बंधबंधोत्ति ॥१॥" 'पुरत्थिमेणं'ति (सू. ५७२) पूर्वाह्णे इत्यर्थः, 'अवड्ढं'ति अपगतार्धं अर्द्धदिवसं यावत् न कल्पते हस्ताद्याकुञ्चयितुं, कायोत्सर्गव्यवस्थितत्वात्, 'पच्चत्थिमेणं'ति पश्चिमभागे 'अवड्ढं'ति अपार्धदिनार्द्धं यावत् कल्पते हस्ताद्याकुञ्चयितुं, कायोत्सर्गाभावात्, एतच्चूर्ण्यनुसारितया व्याख्यातं, 'तस्स य'त्ति तस्य पुनस्साधोरेवं कायोत्सर्गाभिग्रहवतः 'अंसियाउ'त्ति अर्शांसि तानि च नासि-

कासत्कानि 'लंबंति'त्ति निसरन्ति इत्यर्थः, 'तं च'त्ति तं च मुनिं कृतकायोंत्सर्गं लम्बमानार्शसं विस्तृतरोगं 'विज्जे'त्ति वैद्यः 'अदक्खु'त्ति अद्राक्षीत्, ततश्चार्शसां छेदार्थं 'ईसिं पाडेइ'त्ति तं मनाग् अनगारं भूम्यां पातयति, नापातितस्यार्शश्छेदः कर्तुं शक्यते, 'तस्स'त्ति वैद्यस्य क्रियाव्यापाररूपा सा शुभा धर्म्मबुद्ध्या छिंदानस्य, लोभादिना त्वशुभा क्रियते-भवति, 'जस्स छिज्जइ'त्ति यस्य मुनेरर्शांसि छिद्यन्ते नो तस्य क्रिया स्यात्, निर्व्यापारत्वात्, किं सर्वथा क्रियाया अभावः ?, नैवमत आह-'नण्णत्थे'ति न इति योऽयं निषेधः सोऽन्यत्रैकस्मात् धर्म्मान्तरायात्, धर्म्मान्तरायरूपा क्रिया स्यात् तस्य मुनेः, धर्म्मान्तरायश्च शुभध्यानविच्छेदादर्शश्छेदानुमोदनाद्वा ॥ १६ शते तृतीयः ॥

'अण्णगिलायए समणे'त्ति (सू. ५७३) अन्नं विना ग्लायति-ग्लानः स्यात् इत्यन्नग्लायकः प्रत्यग्रकूरादिनिष्पत्तिं यावत् बुभुक्षातुरतया प्रतीक्षितुमशक्नुवन् यः पर्युषितकूरादि प्रातरेव भुङ्क्ते कूरगडुप्राय इत्यर्थः, चूर्णिकारेण तु निःस्पृहत्वात् सीयकूरभोई अंतपंताहारेत्ति व्याख्यातं, अथ कथमिदं प्रत्याय्यं, यदुत नारको महादुःखी महताऽपि कालेन तावत् कर्म्म न क्षपयति यावत् साधुरल्पकष्टोऽल्पकालेन इति ?, उच्यते, (दृष्टान्तात्) स चायं दृष्टान्तः,'सिढिलतयावलि'त्ति शिथिलत्वचावलीतरङ्गैश्च सम्पिनद्धं-व्याप्तं गात्रं देहो यस्य सः 'पविरल'त्ति प्रविरलाः केचित् केचित् परिशटिता दन्तास्तेषां श्रेणिर्यस्य सः, आतुरो-दुःस्थः 'झंझिए'त्ति बुभुक्षितः, ईदृशः छेदनेऽसमर्थः स्यात् इत्येवं विशेषितः, 'कोसंब'त्ति कोसंबो-वृक्षविशेषः तस्य गण्डिका-खण्डविशेषः तां जटिलां-जटावतीं वलितोद्वलितामिति वृद्धाः, 'गंठिल्ल'त्ति ग्रन्थिमतीं 'वाइद्धं'ति व्यादिग्धां-विशिष्टद्रव्योपदिग्धां वक्रामिति वृद्धाः, 'अपत्तियं'ति अपात्रिकां-अविद्यमानाधारां एवंभूता च गण्डिका दुश्छेद्या स्यात् मुण्डेन-कुण्ठेन परशुना, शेष-

पुद्देशकान्तं यावत् पष्ठशतवद् व्याख्येयम् ॥ १६ शते चतुर्थः ॥

'भासित्तए वा' ( सू. ५७४ ) भाषितुं-वक्तुं 'वागरित्तए' उत्तरं दातुं इति द्वयोर्विशेषः, प्रश्नश्चायं तृतीयः, उन्मेषादि ४ आकुञ्चनादिः ५ स्थानादिः ३ विकुर्वयितुमिति ८ 'उक्खित्तपसिण'त्ति उत्क्षिप्तानि-अविस्तारितस्वरूपाणि प्रच्छनीयत्वात् प्रश्नानि व्याक्रियमाणत्वान् व्याकरणानि यानि तानि तथा ॥ 'संभंतियवंदणएणं'ति ( सू. ५७५ ) सम्भ्रान्तिः-सम्भ्रम औत्सुक्यं तया कृतं साम्भ्रान्तिकं यद्वन्दनं तेन, 'परिणममाणा पोग्गला नो परिणय'त्ति वर्त्तमानातीतकालयोर्विरोधाद्, अत आह-अपरिणमंतीतिकृत्वा 'नो परिणय'त्ति, कुत इत्याह-परिणमन्तीतिकृत्वा परिणताः नो अपरिणताः, परिणमन्तीति हि यदुच्यते तत्परिणामसद्भावेऽन्यथाऽतिप्रसङ्गात्, परिणामसद्भावे तु परिणमन्तीति व्यपदेशे परिणतत्वमवश्यंभावि, यदि हि परिणामे सत्यपि परिणतत्वं न स्यात् तदा सर्वदा तदभावप्रसङ्गः, 'परिवारो जहा सूरियाभस्स'त्ति अनेनेदं सूचितं, 'सत्तहिं अणिएहिं० ति' इत्यादि ॥ दिव्वं तेयलेस्सं'ति ( सू. ५७७ ) इह किल शक्रप्राग्भवे कार्त्तिकाख्योऽभिनवश्रेष्ठी बभूव, गङ्गदत्तस्तु जीर्णश्रेष्ठीति तयोर्मिथो मत्सरः स्यादित्यसावसहनकारणं सम्भाव्यते, 'जहा सूरियाभो'त्ति अनेनेदं ज्ञेयं-'सम्मादिट्ठी मिच्छादिट्ठी परित्तसंसारिए अणंतसंसारिए सुलहबोहिए दुल्लहबोहिए आराहए विराहए चरमे अचरमे'इत्यादि ॥ १६ शते पञ्चमः ॥

'सुविणदंसणे'त्ति ( सू. ५७८ ) स्वप्नस्य-शयनावगतार्थस्य दर्शनं-अनुभवनं स्वप्नदर्शनं तच्च पञ्चधा-'अहातच्चे'ति यथातथ्यं-सत्यं तत्त्वं वा 'पयाण'त्ति प्रतननं प्रतानो-विस्तारस्तद्रूपः स्वप्नो यथातथ्यस्तदन्यो वा प्रतान इत्युच्यते, 'चिंतासुविणे'त्ति जाग्रति सति यच्चिन्तितं तदर्थचिन्तनं निद्रामध्येऽपि तादृशमेव पश्यति, 'तव्विवरीए'त्ति यादृग्निद्रायां दृष्टं तादृग् जाग-

रणेऽपि न पश्यति स तद्विपरीतः स्वप्नः 'अविगत्तदंसणेत्ति अव्यक्तं—अस्पष्टं दर्शनं—अनुभवः स्वप्नस्य यत्र सः अव्यक्तदर्शनः
'सुत्तजागरे'त्ति नातिसुप्तो नातिजाग्रदित्यर्थः, इह सुप्तोऽपि जागरश्च द्रव्यभावाभ्यां स्यात्, तत्र द्रव्यतो निद्रापेक्षया भावतश्च-
विरत्यपेक्षया, तत्र च स्वप्नव्यतिकरो निद्रापेक्षया उक्तः, अथाविरत्यपेक्षया जीवादीनां सुप्तत्वजागरत्वे आह—'सुत्त'त्ति सर्वविर-
त्यभावात् 'जागर'त्ति सर्वविरत्या भावात् 'सुत्तजागर'त्ति किञ्चिद्विरत्यविरतिरूपसुप्ताप्रसुप्ततासद्भावादिति, 'अहातच्चं पासइ'त्ति
(सू. ५७९) संवृतो यथातथ्यं क्षीणमलत्वात् विरत्यनुभावाच्च सत्यं स्वप्नं पश्यति। 'अंतिमराइयंसि'त्ति (सू.५८०) रात्रेरंतिम-
भागे 'घोररूवदित्तिधरं'ति घोरं यद्रूपं दीप्तं च दृप्तं वा तद्धारयति यः स तथा तं 'तालपिसायं'ति तालवृक्षवद्दीर्घः पिशाचः
तालपिशाचः तं, 'पूसकोइलगं'ति पुंस्कोकिलं, कोकिलमित्यर्थः, 'उम्मीवीइ'त्ति ऊर्मयो—महाकल्लोलाः वीचयस्तु ह्रस्वाः 'हरि-
वेरुलिय'त्ति हरित्—नीलं यद्वैडूर्यं तद्वर्णसमं 'आवेढिय'त्ति आवेष्टितं सर्वत इत्यर्थः, परिवेष्टितं पुनः, उवरिंति उपरि, 'गणिपि-
डगं'ति गणीनां—अर्थपरिच्छेदानां पिटकमिव गणिपिटकं, गणिनो वाऽऽचार्यस्य सर्वस्वभाजनं द्वादशाङ्गं गणिपिटकं 'आघवेइ'त्ति
आख्यापयति सामान्यविशेषरूपतः 'पण्णवेइ'त्ति सामान्यतः 'परूवेइ'त्ति प्रतिसूत्रमर्थकथनेन 'दंसेइ'त्ति तदभिधेयप्रत्युपेक्ष-
णादिक्रियादर्शनेन 'निदंसेइ'त्ति कथञ्चिदगृह्णतोऽनुकम्पया निश्चयेन पुनः २ दर्शयति, 'उवदंसेइ'त्ति सर्वनययुक्तिभिः 'चाउ-
व्वण्णाइण्णे'त्ति चातुर्वर्णश्चासावाकीर्णश्च ज्ञानादिगुणैरिति चातुर्वर्णाकीर्णो 'पण्णवेइ'त्ति प्रज्ञापयति बोधयति, शिष्यीकुर्यादि-
त्यर्थः। 'सुविणंते'त्ति (सू. ५८१) स्वप्नान्ते स्वप्नायमानः 'गजपतिं' वा यावत्करणात् 'किंपुनरकिंपुरिसमहोरगगंधव्व'त्ति
'पासमाणे'त्ति पश्यन् पश्यत्तायुक्तः पश्यति—अवलोकयति 'दामणिं'ति बन्धनरज्जुं गवादीनां उभयोः पार्श्वतः 'संवेल्लमाणे'त्ति

संवेल्लयन्-संवर्त्तयन् 'संवेल्लियमित्ति अप्पाणं'ति संवेल्लितमित्यात्मना मन्यते विभक्तिपरिणामादिति 'उग्गोवेमाणे'त्ति उद्गोपयन् विमोहयन्नित्यर्थः,'जहा तेयनिसग्गे'त्ति यथा तेजोनिसर्ग इति नामनि गोशालकशते यावत्करणात् 'पत्तरासी वा तण० उस० वुस० गोमये'ति, 'सुरावियड'न्ति सुरारूपं यद्विकटं-जलं तस्य कुंभ इत्यादि ॥ 'कोट्ठपुडाण वि'त्ति (सू. ५८२) कोष्ठे यः पच्यते गन्धः स कोष्ठः तस्य पुटाः-पुटिकाः कोष्ठपुटाः, 'अणुवायंसि'त्ति अनुकूलवायौ सति 'उब्भिज्जमाणाण व'त्ति ऊर्ध्वं विस्तार्यमाणानां, यावत्करणात् 'निब्भज्जमाणाण व'त्ति अधो विस्तार्यमाणानामित्यादि, 'घाणसहगय'त्ति घ्राणो-गन्धस्तेन सहिताः गन्धगुणोपेता इत्यर्थः ॥ १६ शते षष्ठः ॥

'एवं जहा पण्णवणाए'त्ति (सू. ५८३) उपयोगपदं प्रज्ञापनैकोनत्रिंशत्तमं, तच्चैवम्-"तंजहा-सागारोवओगे य अणागारोवओगे य, सागारोवओगे णं भंते ! कइविहे पण्णत्ते ?, गोयमा ! अट्ठविहे पण्णत्ते, तंजहा-आभिणिबोहियनाणसागारोवओगे, एवं सुय० ओहि० मणपज्जवनाण० केवलनाण० मइअन्नाण० सुयअन्नाण० विभंगनाणसागारोवओगे' इत्यादि, 'अणागारोवओगे णं भंते ! कइविहे पन्नत्ते ?, गो० ! चउव्विहे पं०, तं०-चक्खुदंसणअणागारोवओगे अचक्खुदंसणा० ओहिदंसणअणा० केवलदंस०' एतच्च व्यक्तमेव, 'पासणापयं च नेयव्वं'ति पश्यत्तापदमिह स्थाने ज्ञेयं, तच्च प्रज्ञापनात्रिंशत्तमं पदं, तच्चेदम्-कइविहे णं भंते ! पासणया पं०?, गो० ! दुविहा, तं०-सागारपासणया अणागारपा०, सागारपासणया णं भंते !० छव्विहा पं०, तं०-सुयणाणसागारपासणया, एवं ओहि० मण० केवल० सुयअण्णाणसागारपा० विभंगणाणसागारपा०, अणागारपासणया णं भंते ! कइविहा पं० ?, गो० तिविहा पं०, तं०-चक्खुदंसणअणागारपासणया ओहिदंसणअणागा० केवलदंसणअणागारपास०'इत्यादि, अस्यायमर्थः-'पा-

सणय'त्ति पश्यतो भावः पश्यत्ता-बोधपरिणामविशेषः, ननु पश्यत्तोपयोगयोः तुल्ये साकारानाकारभेदत्वे को विशेषः ?, उच्यते, यत्र त्रैकालिकावबोधोऽस्ति तत्र पश्यत्ता, यत्र च वर्त्तमानकालस्त्रैकालिकश्च तत्रोपयोग इत्ययं विशेषः, अत एव मतिज्ञानं मत्यज्ञानं च साकारपश्यत्तया नोक्तं, तस्योत्पन्नाविनष्टार्थग्राहकत्वेन साम्प्रतकालविषयत्वात्, अथ कस्मादनाकारपश्यत्तायां चक्षुर्दर्शनमधीतं न शेषेन्द्रियदर्शनं ?, उच्यते, पश्यत्ता प्रकृष्टमीक्षणमुच्यते 'दृशिर् प्रेक्षणे' इति वचनात्, प्रेक्षणं च चक्षुर्दर्शनस्यैवास्ति, न शेषाणां, चक्षुरिन्द्रियोपयोगस्य शेषेन्द्रियोपयोगापेक्षयाऽल्पकालत्वात्, यत्र चोपयोगोऽल्पकालः तत्रेक्षणस्य प्रकर्षो झटित्यर्थपरिच्छेदात्, तदेवं चक्षुर्दर्शनस्यैव पश्यत्ता नेतरस्येति, अयं चार्थः प्रज्ञापनातो विशेषेणावगन्तव्य इति ॥ १६ शते सप्तमः ॥

'चरमंते'त्ति (सू. ५८४) चरमरूपोऽन्तश्चरमान्तस्तत्र, असङ्ख्यातप्रदेशावगाहित्वाज्जीवस्यासम्भव इत्यत आह—'नो जीव'त्ति जीवदेशादीनां त्वेकप्रदेशोऽप्यवगाहस्सम्भवति अत उक्तम्—'जीवदेसाऽवी'त्यादि 'अजीवावि'त्ति पुद्गलस्कन्धाः 'जीवदेसावि'त्ति धर्म्मास्तिकायादिदेशाः, स्कन्धदेशाश्च तत्र सम्भवन्ति, एवमजीवप्रदेशा अपि । अथ जीवदेशादिषु विशेषमाह—'जे जीवदेसा' ये जीवदेशास्ते पृथिव्याद्येकेन्द्रियजीवानां देशाः, तेषां लोकान्तेऽवश्यं भावादित्येको विकल्पः, 'अहव'त्ति प्रकारान्तरे एकेन्द्रियाणां बहुत्वाद्बहवस्तत्र देशाः स्युः, द्वीन्द्रियस्य च कादाचित्कत्वात् कदाचिद्देशः स्यादित्येको द्विकयोगविकल्पः, यद्यपि हि लोकान्ते द्वीन्द्रियो नास्ति तथापि यो द्वीन्द्रिय एकेन्द्रियेषूत्पित्सुर्मारणान्तिकसमुद्घातं गतस्तमाश्रित्यायं विकल्पः,'एवं जहे'त्यादि, यथा दशमशते आग्नेय्यीं दिशमाश्रित्योक्तं तथेह पूर्वचरमान्तमाश्रित्य वाच्यं, तदिदं—'अहवा एगिंदियस्स बेंदियस्स य देसा बेंदियाण य देसा अहवा एगिंदियदेसा तेंदियस्स य देसे' इत्यादि, अत्र यो विशेषस्तमाह—'णवरं देसेसु अणिंदियाण'मित्यादि अनिन्द्रियसत्के

दशविषये 'अहवा एगिंदियदेसा अणिंदियस्स य देसे' इत्येवंरूपः प्रथमभङ्गो दशमशते आग्नेयीप्रकरणे उक्तोऽपीह न वाच्यो, यतः केवलिसमुद्घाते कपाटाद्यवस्थायां लोकस्य प्राक् चरमान्ते प्रदेशवृद्धिहानिकृतलोकसद्भावेनानिन्द्रियस्य बहूनां देशानां सम्भवो, न त्वेकस्येति, तथा आग्नेय्यां दशविधेष्वरूपिद्रव्येषु धर्माधर्माकाशास्तिकायद्रव्याणां तस्यामभावात् सप्तविधा अरूपिण उक्ताः, लोकस्य पूर्वचरमान्ते तु अद्धासमयस्याप्यभावात् षड्विधास्ते वाच्याः, तत्राद्धासमयाभावः, तस्य समयक्षेत्र एव सद्भावाद्, अत आह–'जे अरूवी अजीवा ते छव्विहा, अद्धासमओ नत्थि'त्ति, 'उवरिल्ले चरिमंते'त्ति अनेन सिद्धोपलक्षित उपरितनचरमान्तो विवक्षितः, तत्रैकेन्द्रियदेशा अनिन्द्रियदेशाश्च सन्तीतिकृत्वाऽऽह—'जे जीवे'त्यादि, इहायमेको द्विकयोगः, त्रिकयोगेषु द्वौ २ कार्यौ, तेषु हि मध्यमभङ्गः, स चायम्–'अहवा एगिंदियदेसा अणिंदियदेसा य बेंदियस्स य देसा नत्थि' एवंरूपो नास्ति, तत्र द्वीन्द्रियस्योपरितनचरमान्ते मारणान्तिकसमुद्घातेन गतस्यापि देश एव तत्र सम्भवति, न पुनः प्रदेशवृद्धिहानिकृतलोकवशादनेकप्रतरात्मकप्राक्चरमान्तवद्देशा, उपरितनचरमान्तस्यैकप्रतररूपतया लोकदन्तकाभावेन देशानेकत्वाहेतुत्वादिति, अत आह–'एवं मज्झिल्लविरहिओ'त्ति त्रिकभङ्गक इति प्रक्रमः उपरितनचरमान्तापेक्षया। अथ जीवप्रदेशप्ररूपणायां एवं 'आइल्लविरहिओ'त्ति यदुक्तं तस्यायमर्थः–इह प्रागुक्ते भङ्गत्रये प्रदेशापेक्षया 'अहवा एगिंदियप्पदेसा य अणिंदियप्पदेसा य बेंदियस्स यप्पएसे' इत्ययं प्रथमभङ्गको न वाच्यः, द्वीन्द्रियस्य च प्रदेश इत्यस्यासम्भवात्, तदसम्भवश्च लोकव्यापकावस्थाऽनिन्द्रियवर्जजीवानां यत्रैकः प्रदेशस्तत्रासङ्ख्यातानामेव तेषां भावात्, 'अजीवा जहा दसमसए तमाए'त्ति तमाख्यां दिशमाश्रित्य सूत्रमधीतं, तथेहोपरितनचरमान्तमाश्रित्य वाच्यं, तच्चेदम्–'जे अजीवा ते दुविहा पं०, तं०–रूवि० अरूविअजीवा य, जे रूविअजीवा ते

चउव्विहा पं०, तं०—खंधा ४. जे अरूविअजीवा ते छव्विहा पं०, तं०—नो धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायपदेसा २' एवमधर्माकाशास्तिकाययोरपीति। 'लोगस्स णं भंते! हेट्ठिल्ले'इत्यादि, इह पूर्वचरमान्तवद् भंगाः कार्याः, नवरं तदीयस्य भङ्गत्रयस्य मध्यात् 'अहवा एगिंदियदेसा य बेंदियस्स देसा' एवंरूपो मध्यमभङ्गोऽत्र वर्ज्यः, उपरितनचरमान्ते प्रोक्तयुक्त्या तस्यासम्भवाद्, अत आह—'मज्झिल्लविरहिओ'त्ति, इति देशभङ्गा उक्ताः। अथ प्रदेशभङ्गानाह—'पएसा आइल्लविरहिया सव्वेसिं जहा पुरत्थिमिल्ले चरिमंते'त्ति प्रदेशचिन्तायामाद्यभङ्गरहिताः प्रदेशा वाच्या इत्यर्थः, आद्यश्च भङ्ग एकवचनान्तप्रदेशशब्दोपेतः, स च प्रदेशानामधश्चरमान्ते बहुत्वात् न सम्भवति, संभवति च 'अहवा एगिंदियपदेसा बेंदियस्स देसा अहवा एगिंदियपदेसा बिंदियाण य पएसा' इत्येतत् द्वयं, 'सव्वेसिं'ति द्वीन्द्रियादीनामनिन्द्रियान्तानां, सर्वेषां बहुत्वात् तत्प्रदेशानामपि बहुत्वं, नैकत्वं, 'विमला दिसा तहेव'त्ति दशमशते यथा विमला दिगुक्ता तथैव रत्नप्रभोपरितनचरमान्तो वाच्यः निरवशेषं यथा स्यात्, स चैवम्—'इमीसे णं भंते! रयणप्पभापुढवीए उवरिल्ले चरमंते किं जीवा? ६, गो०! नो जीवा' एकप्रदेशिकप्रतरात्मकत्वेन तत्र तेषामवस्थानाभावात् 'जीवदेसावि'त्ति जे जीवदेसा ते नियमा एगिंदियदेसा, सर्वत्र तेषां भावात्, अहवा एगिंदियदेसा य बेइंदियस्स य देसे, अहवा एगिंदियदेसा य बेंदियस्स य देसा २, अहवा एगिंदियाण य देसा ३, रत्नप्रभा हि द्वीन्द्रियाणामाश्रयस्ते चैकेन्द्रियापेक्षयाऽतिस्तोकास्ततस्तदुपरितनचरमान्ते तेषां कदाचिद्देशः स्यात् देशा वेति, एवं त्रीन्द्रियादिष्वप्यनिन्द्रियान्तेषु, तथा 'जे जीवप्पएसा ते नियमा एगिंदियप्पएसा अहवा एगिंदियपदेसावि बेंदियस्स य पएसा अहवा एगिंदियप्पएसा बेइंदियाण य पएसा' एवं त्रीन्द्रियादिष्वप्यनिन्द्रियान्तेषु, तथा 'जे अजीवा ते दुविहा पं०, तं०—रूविअजीवा अरू-

विअजीवा, जे रूविअजीवा ते चउव्विहा पं० तं०–खंधा २, जाव परमाणुपोग्गला, अरूविअजीवा ते सत्तविहा पं०, तं०–नो धम्मत्थिकाए धम्मत्थिकायस्स देसे १ धम्मत्थिकायस्सवि पदेसा २ एवमधम्मत्थिकायस्सवि २ आगासत्थिकायस्सवि २ अद्धासमए'त्ति अद्धासमयो हि मनुष्यक्षेत्रान्तर्वर्त्तिनि रत्नप्रभोपरितनचरमान्तेऽस्त्येव, 'हेट्ठिल्ले चरमंते'त्ति यथाऽधश्चरमान्तो लोकस्योक्तः एवं च रत्नप्रभापृथ्व्या अप्यसाविति, स चानन्तरोक्त एव, विशेषस्त्वयं–लोकाधस्तनचरमान्ते द्वीन्द्रियाणां देशभङ्गत्रयं मध्यमरहितमुक्तमिह तु रत्नप्रभाधस्तनचरमान्ते पञ्चेन्द्रियाणां परिपूर्णमेव तद्वाच्यं, शेषाणां द्वीन्द्रियादीनां मध्यमरहितमेव, यतो रत्नप्रभाधस्तनचरमान्ते देवपञ्चेन्द्रियाणां गमागमसद्भावेन देशो देशाश्च सम्भवन्ति, अतः पञ्चेन्द्रियाणां परिपूर्णमेव तद्देशभङ्गत्रयं द्विकयोगरूपं स्यात्, द्वीन्द्रियादीनां तु रत्नप्रभाधस्तनचरमान्ते मारणान्तिकसमुद्घातेन गतानामपि तत्र देश एव सम्भवति, न देशाः, तस्यैकप्रतररूपत्वेन देशानेकत्वाहेतुत्वात्, तेषां तत्तत्र मध्यमरहितमेव द्विकयोगेषु, अहवा ए० देसा बेंदियाण य देसा इति तृतीयभङ्गे समुद्घातगतानां द्वीन्द्रियाणां बहुत्वात् देशानामपि बहुत्वं अतोऽस्य ग्रहणं, तेन मध्यमरहितत्वमुक्तं, 'चत्तारि चरमंत'त्ति चतुर्दिग्रूपाः 'उवरिमहेट्ठिल्ला जहा रयणप्पभाए हेट्ठिल्ले'त्ति शर्करप्रभायां उपरितनाधस्तनचरमान्तौ रत्नप्रभाधस्तनचरमान्तवद्वाच्यौ, द्वीन्द्रियादिषु पूर्वोक्तयुक्तेर्मध्यमभङ्गरहितं पञ्चेन्द्रियेषु परिपूर्णं देशभङ्गत्रयं, प्रदेशचिन्तायां तु द्वीन्द्रियादिषु सर्वेष्वाद्यभङ्गरहितं शेषभङ्गद्वयं, अजीवचिन्तायां तु रूपिणां चतुष्कमरूपिणां त्वद्धासमयस्य तत्राभावेन षट्कं वाच्यमिति भावः, अथ शर्कराप्रभातिदेशेन शेषपृथ्वीनां सौधर्मादिदेवलोकानां ग्रैवेयकानां च वस्तुतवक्तव्यतामाह–'एवं जाव अहेसत्तमाए'इत्यादि, ग्रैवेयकविमानेषु यो विशेषस्तमाह–'नवर'मित्यादि, अच्युतान्तदेवलोकेषु हि देवपञ्चेन्द्रियाणां गमागमसद्भावात् उपरितनाधस्तन-

चरमान्तयोः पञ्चेन्द्रियेषु देवानाश्रित्य भङ्गत्रयं सम्भवति, ग्रैवेयकविमानेषु तु देवपञ्चेन्द्रियगमागमाभावात् द्वीन्द्रियादिष्वेव पञ्चेन्द्रियेष्वपि मध्यमभङ्गरहितं शेषं भङ्गद्वयं तयोः स्यादिति ॥ चरमाधिकारादेव परमाणुस्वरूपमाह–'परमाणु' (सू. ५८५) इत्यादि, इदं च गमनसामर्थ्यं परमाणोस्तथास्वभावत्वादिति मन्तव्यमिति । 'वासं वासइ'त्ति ( सू. ५८६ ) वर्षो–वर्षति मेघो नो वा, अचक्षुरालोके हि दृष्टिर्हस्तादिप्रसारणेन ज्ञायत इतिकृत्वा हस्तादिकं आकुञ्चयेद्वा प्रसारयेद्वा आदित एवेति । 'जीवाणं आहारोवचिया पोग्गल'त्ति (सू. ५८६) जीवानां जीवानुगता इत्यर्थः, 'आहारोपचिताः' आहारतया चयं–पुष्टिं गता इत्यर्थः, 'बोंदिचिय'त्ति अव्यक्तावयवशरीररूपतया चिताः, 'कलेवर'त्ति व्यक्तावयववपुश्चिताः, एवमुच्छ्वासचिताः पुद्गला इत्याद्यपि द्रष्टव्यं, अनेनेदमुक्तं–जीवानुगामिस्वभावाः स्युः, ततश्च यत्रैव क्षेत्रे जीवास्तत्रैव पुद्गलानां गतिः स्यात्, 'पोग्गलामेव'त्ति पुद्गलानेव 'पप्प'त्ति आश्रित्य जीवानां 'अजीवाण य'त्ति पुद्गलानां गतिधर्म्मः, 'आहिज्जइ'त्ति आख्यायते, इदमुक्तं स्यात्–यत्र क्षेत्रे पुद्गलास्तत्रैव जीवानां पुद्गलानां च गतिः स्यात्, एवं चालोके नैव सन्ति जीवाः पुद्गलाश्च, तत्र जीवपुद्गलानां गतिर्नास्ति, तदभावाच्चालोके देवो हस्ताद्याकुञ्चयितुं प्रसारयितुं च न प्रभुरिति ॥ १६ शतेऽष्टमः ॥

'जहेव चमरस्स'त्ति (सू. ५८८) यथा चमरस्य द्वितीयशताष्टमोद्देशकोक्तस्य सुधर्मसभास्वरूपं प्रोक्तं तथा बलेरपि वाच्यं, तच्च तत एवावसेयं, 'एवं पमाणं जहेव तिगिंछिकूडस्स'त्ति यथा द्वितीयशताष्टमोद्देशकोक्तचमरसत्कतिगिंछकूटाख्यगिरेः प्रमाणमुक्तं तथाऽस्यापि रुचकेन्द्रस्य वाच्यं, एतदपि ततो ज्ञेयम्, 'तं चेव पमाणं'ति यत् प्रमाणं चमरसत्कतिगिंछकूटाख्योत्पातगिर्युपरिवर्त्तिनः प्रासादावंसकस्य तदेव बलिसत्कस्यापि रुचकेन्द्राख्योत्पातगिर्युपरिवर्त्तिनस्तस्य, तदपि द्वितीयशतात् ज्ञेयं, 'सिंहा-

मणं सपरिवारं'ति प्रासादावतंसकमध्ये बलिसत्कं सिंहासनं बलिपरिवारसिंहासनोपेतं वाच्यमित्यर्थः, तदपि द्वितीयशतात् ज्ञेयं, केवलं चमरस्य सामानिकानां चतुःषष्टिसहस्राणि आसनानि आत्मरक्षकाणां तान्येव चतुर्गुणान्युक्तानि बलेस्तु सामानिकानां षष्टिसहस्रासनानि आत्मरक्षकाणां तान्येव चतुर्गुणानि अयं विशेषः, 'अट्ठो तहेव, नवरं रुयगिंदप्पभाइं'ति यथा तिगिंछकूटस्य नामान्वर्थाभिधायि वाक्यं तथाऽस्यापि वाच्यं, केवलं तिगिंछकूटान्वर्थप्रश्नोत्तरे यस्मात्तिगिंछप्रभाण्युत्पलादीनि सन्ति तेन तिगिंछकूट इत्युच्यते, इह तु रुचकेन्द्रप्रभाणि पद्मादीनि तत्र सन्ति ततो रुचकेन्द्रकूट इति वाच्यं, रुचकेन्द्रस्तु रत्नविशेष इति, 'तं चेव'त्ति तत् पुनः सूत्रमत्रैवमध्येयम्—'से केणट्ठेणं भंते ! एवं वुचइ—रुअगिंदे उप्पायपव्वए ?, गोयमा ! रुयगिंदे णं बहूइं उप्पलाइं पउमाइं कुमुयाइं जाव रुयगिंदवण्णाइं रुयगिंदलेस्साइं रुयगिंदप्पभाइं से तेणट्ठेणं रुयगिंदे उप्पायपव्वए तहेव जाव'त्ति चमरचंचाव्यतिकरे सूत्रमुक्तं इहापि तथैव वाच्यं, पणपण्णं च कोडीओ पण्णासं च सयसहस्साइं पण्णासं च सहस्साइं वीईवइत्ता इमं रयणप्पभं पुढविंति 'पमाणं तहेव'त्ति यथा चमरचञ्चायाः, तच्चेदम्—'एगं जोयणसयसहस्सं आयामविक्खंभेणं तिण्णि जोयणसयसहस्साइं सोलस य सहस्साइं दोण्णि य सत्तावीसे जोयणसए तिण्णि य कोसे अट्ठावीसं धणुसयं तेरस अंगुलाइं अद्धंगुलयं च किंचिविसेसाहियं परिक्खेवेणं पण्णत्तंति जाव बलिपेढस्स'त्ति नगरीप्रमाणाभिधानानन्तरं प्राकारतद्द्वारोपकारिकालयनप्रासादावतंसकसुधर्मसभाचैत्यभवनोपपातसभाह्रदाभिषेकालङ्कारसभाव्यवसायसभादीनां प्रमाणं स्वरूपं तावद् वाच्यं यावद्बलिपीठस्य, तच सूत्रान्तरात् ज्ञेयं, 'उववाओ'त्ति उपपातसभायां बलेरुपपातवक्तव्यता वाच्या, सा चैवम्—'तेणं कालेणं तेणं समएणं वइरोयणिंदे अहुणोववण्णमित्तए समाणे पंचविहाए पज्जत्तीए पज्जत्तिभावं गच्छइ' इत्यादि, 'जाव आयरक्ख'त्ति इह यावत्करणादभि-

नेकोऽलङ्कारग्रहणं पुस्तकवाचनं सिद्धायतनप्रतिमार्चनं सुधर्मसभागमनं, तत्रस्थस्य सामानिका अग्रमहिष्यः पर्षदोऽनीकाधिपतय आत्म-रक्षाश्च पार्श्वतो निषीदन्तीति वाच्यं, एतद्वक्तव्यताप्रतिबद्धसूत्रसङ्क्षेपायाह—'सव्वं निरवसेसं'ति, नवरं चमरस्य सागरोपमस्थितिः बलेस्तु साधिकसागरोपमस्थितिः प्रज्ञप्तेति ॥ १६ शते नवमः ॥

'ओहिपयं'ति (सू. ५८९) प्रज्ञापनात्रयस्त्रिंशत्तमं पदं, तच्चेवम्—'भवपच्चइया य खओवसमिया य, दोण्हं भवपच्चइया, तं०—देवाण य नेरइयाण य, दोण्हं खओवसमिया, तं०—मणुस्साणं पंचिंदियतिरिक्खजोणियाण य इत्यादि ॥ १६ शते दशमः ॥

'दीवे'त्यादि (सू. ५९०) एवमन्यदप्युद्देशकत्रयं भावयितव्यमिति ॥ षोडशशतं वृत्तितः सम्पूर्णम् ॥

अथ सप्तदशमारभ्यते—तत्र 'कुंजर'त्ति(%७७)श्रेणिकसुतकूणिकराज्ञो भूतानन्दो यो हस्ती तद्वाच्यः १ 'संजय'त्ति संयताद्यर्थः २ 'सेलेसि'त्ति शैलेश्यादिवाच्यः ३ 'किरिय'त्ति क्रियादिवाच्यः ४ 'ईसाण'त्ति ईशानेन्द्रवाच्यः ५ 'पुढवि'त्ति पृथिव्यर्थः ६ सप्तमश्च,'दग'त्ति अप्कायार्थः ८ नवमश्च,'वाउ'त्ति वायुकायार्थो दशमः एकादशश्च,'एगिंदिय'त्ति एकेन्द्रियार्थः १२ 'नाग'-त्ति नागकुमारार्थः १३ 'सुवण्ण'त्ति सुपर्णकुमारार्थः १४ 'विज्जु'त्ति विद्युत्कुमारार्थः १५ 'वाउ'त्ति वायुकुमारार्थः १६ 'अ-ग्गि'त्ति अग्निकुमारार्थः १७ गाथार्थः । 'भूयाणंदि'त्ति (सू. ५९१) भूतानन्दाख्यः कूणिकराज्ञः प्रधानहस्ती । 'तलं'ति (सू. ५९२) तालवृक्षं 'पचालेमाणे व'त्ति अधःप्रपातयन् वा 'पंचहिं किरियाहिं पुट्ठे'त्ति तालफलानां तालफलाश्रितजीवानां च यः प्राणा-तिपातक्रियाकारकोऽसावाद्यानामपि इतिकृत्वा पञ्चक्रियाभिः स्पृष्ट इत्युक्तं १, येऽपि च तालतालफलनिर्वर्त्तकजीवास्तेऽपि च पञ्च-

क्रियाः तदन्यर्जीवान् सङ्घट्टनादिभिरपद्रावयन्तीतिकृत्वा २ 'अहे ण'मित्यादि, अथ पुरुषकृततालफलप्रचलनादेरनन्तरं तत् तालफलमात्मनो गुरुकतया यावत्करणात् सम्भारिकतयेति दृश्यं, 'पच्चोवयमाणे'त्ति प्रत्यवपतत् यांस्तत्राकाशादौ प्राणादीन् जीवितात् व्यपरोपयति 'तओ णं'ति तेभ्यः सकाशात् कतिक्रियोऽसौ नरः ?, उच्यते, चतुष्क्रियो, वधनिमित्तभावस्याल्पत्वेन तासां चतसृणामेव विवक्षणात्, तदल्पत्वं च यथा पुरुषस्य तालफलप्रचलनादौ साक्षात् वधनिमित्तभावोऽस्ति न तथा तालफलव्यापादितजीवेष्विनिकृत्वा ३, एवं तालफलनिर्वर्त्तकजीवा अपि ४ फलनिर्वर्त्तकास्तु पंचक्रिया एव साक्षात् तेषां वधहेतुत्वात् ५, ये चाधः पततस्तालफलस्योपग्रहे—उपकारे वर्त्तन्ते ते जीवाः पञ्चक्रियाः, वधे तेषां निमित्तभावस्य बहुत्वात् ६, एतत्सूत्राणां विशेषव्याख्यानं पञ्चमशतोक्तकाण्डक्षेप्तृपुरुषसूत्रात् ज्ञेयं, एतानि च फलद्वारेण षट् क्रियास्थानान्युक्तानि, मूलादिष्वपि षडेव भावनीयानि, 'एवं जाव बीयं'ति यावत्करणात् कन्दसूत्राणीव स्कन्धत्वक्शालप्रवालपत्रपुष्पफलबीजसूत्राण्यध्येयानीति सूचितं। 'सिय तिकिरिय'त्ति ( सू. ५९३ ) यदौदारिकशरीरं परपरितापाद्यभावेन निर्वर्तयति तदा त्रिक्रियः, यदा परपरितापं कुर्वंस्तन्निर्वर्त्तयति तदा चतुष्क्रियः, यदा परमतिपातयंस्तन्निर्वर्त्तयति तदा पञ्चक्रियः, पृथक्त्वदण्डके स्याच्छब्दप्रयोगो नास्ति, एकदाऽपि सर्वविकल्पसद्भावादिति, 'छव्वीसं दंडग'त्ति पञ्च शरीराणीन्द्रियाणि च त्रयश्च योगा एते च मीलिता १३ एते चैकत्वपृथक्त्वाभ्यां गुणिताः २६। 'कइविहा णं भंते ! भावे'त्ति (सू. ५८४) इदं भावस्वरूपं प्राक् प्रोक्तमेव 'एएणं अभिलावेणं' अनुयोगद्वारे यथा तच्चेदम्—'से किं तं उदइए ?,० अट्ठकम्मपगडीणं उदएणं से तं उदइए' इत्यादि ॥ १७ शते प्रथमः ॥

'चक्किया केइ आसइत्तए व'त्ति (सू. ५९०) धर्मादौ शक्नुयात् कश्चिदासितुं. नायमर्थः समर्थो, धर्मादेरमूर्त्तत्वात् मूर्त्त एव

चासनकरणस्य शक्यत्वात् । अथान्ययुथिकमतमाह–'जस्स णं एगे पाणाएवि दंडे'त्ति (सू. ५९६) 'जस्स'त्ति येन देहिना एकप्राणिनि–एकत्रापि जीवे सापराधादौ पृथ्वीकायिकादौ वा, किं पुनर्बहुषु ?, दण्डो–वधः, 'अणिक्खित्ते'त्ति अनिक्षिप्तः–अनुज्झितोऽप्रत्याख्यातः स्यात् स एकान्तबाल एव, न बालपण्डितः, एकान्तबालत्वव्यपदेशनिबन्धनस्य सर्वप्राणिदण्डात्यागस्य भावादिति परमतं, स्वमतं तु एकप्राणिन्यपि येन दण्डपरिहारः कृतोऽसौ नैकान्तबालः, किं तर्हि ?, बालपण्डितो, विरत्यविरतिसद्भावेन मिश्रत्वात् तस्य, अथ प्रागुक्तयोः संयतपण्डितयोः शब्दतोऽर्थतश्चैक्येऽपि अस्ति कोऽपि विशेषः ?, उच्यते, संयतत्वं क्रियाद्यपेक्षं पण्डितत्वं बोधविशेषापेक्षं चेति । 'अण्णउत्थिया ण'मित्यादि (सू. ५९७) प्राणातिपातादिषु वर्त्तमानस्य देहिनः 'अण्णे जीवे'त्ति जीवति–प्राणान् धारयति इति जीवः, शरीरं प्रकृतिरित्यर्थः, स चान्यो–व्यतिरिक्तः, अन्यो जीवस्य–देहस्य सम्बन्धी अधिष्ठायकत्वादात्मा–जीवात्मा, पुरुष इत्यर्थः, अन्यत्वं च तयोः पुद्गलापुद्गलस्वभावत्वात्, ततश्च शरीरस्य प्राणातिपातादिषु वर्त्तमानस्य दृश्यमानत्वात् शरीरमेव तत्कर्तृ, न पुनरात्मा इत्येके, अन्ये त्वाहुः–जीवतीति जीवो–नारकादिपर्यायः, जीवात्मा तु सर्वभेदानुगामि जीवद्रव्यं, द्रव्यपर्याययोश्चान्यत्वं, तथाविधप्रतिभासभेदनिबन्धनत्वात् घटवत् पटात्, तथाहि–द्रव्यमनुगताकारां बुद्धिं कुर्यात् पर्यायस्त्वननुगताकारामिति, अन्ये त्वाहुः–अन्यो जीवः, अन्यश्च जीवात्मा–जीवस्यैव स्वरूपमिति, प्राणातिपातादिविचित्रक्रियाभिधानं चेह सर्वावस्थायां जीवजीवात्मनोर्भेदख्यापनार्थमिति परमतं, स्वमतं तु–'सच्चेव जीवे सच्चेव जीवाय'त्ति स एव जीवः–शरीरं स एव जीवात्मा, जीव इत्यर्थः, कथञ्चिदिति गम्यं, न ह्यनयोरत्यन्तं भेदः, अत्यन्तभेदे देहेन स्पृष्टस्यासंवेदनप्रसङ्गः, देहकृतस्य च कर्मणो जन्मान्तरे वेदनाभावप्रसङ्गः, अन्यकृतस्यान्यसंवेदने च अकृताभ्यागमप्रसङ्गः, अत्यन्तमभेदे च परलोका-

भाव इति, द्रव्यपर्यायव्याख्यानेऽपि न द्रव्यपर्याययोरत्यन्तभेदः तथाऽनुपलब्धेः, यश्च प्रतिभासभेदो नासावात्यन्तिकतद्भेदकृतः, किन्तु पदार्थानामेव तुल्यातुल्यरूपकृत इति, जीवात्मा-जीवरूपं, इह तु व्याख्याने स्वरूपवतो न स्वरूपमत्यन्तं भिन्नं, भेदे हि निःस्वरूपता तस्य प्राप्नोति, न च शब्दभेदे वस्तुनो भेदोऽस्ति शिलापुत्रकस्य वपुरित्यादाविवेति ॥ 'पुव्वामेव रूवी भवित्त'त्ति (सू. ५९८) पूर्वं विवक्षितकालात् शरीरादिपुद्गलसम्बन्धात् मूर्त्तो भूत्वा, मूर्त्त इत्यर्थः, 'अरूविं'ति अरूपिणममूर्त्तमात्मानमिति गम्यते जानामि विशेषज्ञानेन 'पासामि' पश्यामि सामान्येन दर्शनेन 'बुज्झामि'त्ति बुध्ये-श्रद्दधे अभिसमागच्छामीति सर्वज्ञानभेदैः परिच्छिनद्मि, अनेन वर्त्तमानज्ञानमुक्तं, अथातीतकाले एभिरेव धातुभिस्तदुच्यते-अभिसमन्वागतमितियावत् 'तहा गयस्स'त्ति तथा देवत्वं प्राप्तस्य 'सरूविस्स' मूर्त्तस्य सवेदस्य-स्त्र्यादिवेदयुक्तस्येत्यादि, 'सच्चेव णं भंते ! से जीव'त्ति यो देवादिरभूत् स एवासौ भदन्त ! जीवः पूर्वं पश्चात् 'अरूवि'त्ति अवर्णादिः, 'रूवि'त्ति वर्णादिमत्त्वं 'नो एवं पण्णायति'त्ति नैवं केवलिनाऽपि प्रज्ञायते, असत्त्वाद्, असत्त्वं च मुक्तस्य कर्मबन्धाभावेन शरीराभावाद् वर्णाद्यभाव इति न रूपी भूत्वा अरूपी स्यादिति ॥ १७ शते द्वितीयः ॥

'नण्णत्थेगेणं परप्पओगेणं' इति (सू. ५९९) 'णो इणट्ठे समट्ठे'त्ति योऽयं निषेधः सोऽन्यत्र, कस्मात् ?, परप्रयोगाद्, एजनादिकारणेषु मध्ये परप्रयोगेणैवैकेन शैलेश्यामेजनादि स्यात्, न कारणान्तरेणेति भावः, 'दव्वेयण'त्ति नारकादिजीवसम्पृक्तपुद्गलद्रव्याणामेजना-चलना द्रव्यैजना, 'खेत्ते'त्ति नारकादिक्षेत्रे वर्त्तमानानामेजना क्षेत्रैजना, 'काले'त्ति नारकादीनां काले वर्त्तमानानां एजना कालैजना, 'भावे'त्ति औदयिकादिभावे वर्त्तमानानां नारकादीनां तद्गतद्रव्यपुद्गलानामेजना भावैजना 'वट्टिंसु'त्ति

वृत्तवन्तः 'चिइंसु'त्ति कृतवन्तः अनुभूतवन्तो वेत्यर्थः ॥ 'चलणे'त्ति (सू. ६००) एजनैव स्फुटतरा 'सरीरचल'त्ति औदारिकादिवपुश्चलना तत्प्रायोग्यपुद्गलानां तद्रूपतया परिणामने व्यापारः चलना, एवमिन्द्रिययोगचलने अपि 'चलिंसु'त्ति औदारिकवपुश्चलनं कृतवन्तः 'निव्वेए'त्ति (सू. ६०१) निर्वेदः–संसारविरक्तता 'गुरुसाहम्मिय'त्ति गुरूणां साधर्म्मिकाणां सामान्यसाधूनां शुश्रूषणा–सेवा निन्दनं आत्मसाक्षिकं गर्हणं परसाक्षिकम् 'विणिवट्टणयाए'त्ति व्यवशमनता परस्मिन् क्रोधान्निवर्त्तयति क्रोधोज्झनं, श्रुतसहायता 'भावे'त्ति हास्यादावप्रतिबद्धता 'विउसमणम'त्ति विनिवर्त्तनमसंयमस्थानेभ्यः 'विवित्त'त्ति विविक्तस्त्र्यादिरहितशयनासनसेवनता सा तथा 'जोगपच्चक्खाण'त्ति योगानां–मनःप्रभृतीनां प्राणातिपातादिषु प्रत्याख्यानं योगप्रत्याख्यानं, 'सरीर'त्ति विषयवर्जनं वपुःप्रत्याख्यानं, कषायप्रत्या० क्रोधादिवर्जनं 'संभोगपच्चक्खाणे'त्ति सम्भोगः–स्वान्यलाभमीलनात्मकेन भोग एकमण्डलीभोक्तृत्वमित्यर्थः, तत्प्रत्याख्यानं जिनकल्पादिप्रतिपत्त्या परिहारः 'उवहि'त्ति उपधिप्रत्या० अधिकोपधिवर्जनं, क्षमा, 'भावसच्चे'त्ति भावसत्यं पारमार्थिकावितथत्वं, मनस इत्यर्थः,'एवं जोगसच्चे'त्ति योगा मनोवाक्कायास्तेषां सत्यं योगसत्यं,'करण'त्ति करणे–प्रतिलेखनादौ यथोक्तविधिकर्तृत्वं करणसत्यम् 'मणसमन्नाहरणया'त्ति मनसः समिति–सम्यक् अन्विति–स्वावस्थानानुरूपेण आहरणं संक्षेपणं मनस्समन्वाहरणता, एवमितरे अपि, क्रोधविवेकः–क्रोधत्यागः 'वेयण'त्ति वेदना क्षुधादिव्यथासहनं 'मारणंति०' मारणान्तिकोपसर्गसहनेन ॥ १७ शते तृतीयः ॥

'जहा पढमसए'त्ति (सू. ६०२) यथा प्रथमशतषष्ठोद्देशके, सा चैवम्–'सा भंते ! ओगाढा कज्जइ ?, गो० ! ओगाढा कज्जइ, णो अणोगाढा कज्जइ' इत्यादि व्याख्या प्राग्वत्, 'जंसमयं' यस्मिन् समये प्राणातिपातेन क्रिया-कर्म क्रियते इह स्थाने तस्मि-

न्निति वाक्यशेषो दृश्यः, एवं देशे प्रदेशेऽपि वाच्यम् ॥ १७ शते चतुर्थः ॥

'जहा ठाणपए'त्ति (सू. ६०४) प्रज्ञापनाद्वितीयपदे, तच्चैवम्–उड्ढं चंदिमसूरियगहगणनक्खत्ततारारूवाणं बहूइं जोयणसयाइं जोयणसहस्साइं जाव उप्पइत्ता एत्थ णं ईसाणे णामे कप्पे पण्णत्ते' इत्यादि, शक्रविमानवक्तव्यता, सा चैवम्–'अद्धतेरसजोयणसयसहस्साइं आयामविक्खंभेणं ओयालीसं जोयणसयसहस्साइं बावन्नं च सहस्साइं अट्ठ य अडयाले जोयणसए परिक्खेवेण'मित्यादि ॥

॥ १७ शते पञ्चमः ॥

'समोहए'त्ति (सू. ६०५) समवहतः–कृतमारणान्तिकसमुद्घातः 'उववज्जइ'त्ति उत्पादक्षेत्रं गत्वा 'संपाउणेज्ज'त्ति पुद्गलग्रहणं कुर्यात् उत व्यत्यय इति प्रश्नः, गो०! पुव्विं वा उववज्जित्ता पच्छा संपाउणेज्जा' मारणान्तिकसमुद्घातान्निवृत्त्य यदा प्राक्तनशरीरस्य त्यागात् कन्दुकगत्योत्पत्तिदेशं गच्छति तदोच्यते–पूर्वमुत्पद्य पश्चात् सम्प्राप्नुयात्–पुद्गलान् गृह्णीयात्, आहारयेदित्यर्थः, 'पुव्विं वा संपाउणित्ता पच्छा उववज्जिज्ज'त्ति यदा मारणान्तिकसमुद्घातगत एव म्रियते इलिकागत्योत्पादस्थानं याति तदोच्यते–पूर्वं सम्प्राप्य–पुद्गलान् गृहीत्वा पश्चात् उत्पद्यते, प्राक्तनशरीरस्थजीवप्रदेशसंहरणतः, समस्तजीवप्रदेशैः मृत्वा क्षेत्रं गतस्मात् इति भावः १ 'देसेण वा समोहण्णइ सव्वेण वा समोहण्णइ'त्ति यदा मारणान्तिकसमुद्घातगतो म्रियते तदेलिकागत्योत्पत्तिदेशं गच्छति, तत्र जीवदेशस्य पूर्वदेह एव स्थितत्वात् देशस्य चोत्पत्तिदेशे प्राप्तत्वात् देशेन समवहत इत्युच्यते, यदा तु मारणान्तिकसमुद्घातात् प्रतिनिवृत्तः सन् म्रियते तदा सर्वप्रदेशसंहारणतो गेन्दुकगत्योत्पत्तिदेशप्राप्तौ सर्वेण समवहत इत्युच्यते, तत्र न देशेन समवहन्यमान इलिकागत्या गच्छन्नित्यर्थः, पूर्वं सम्प्राप्य–पुद्गलान् गृहीत्वा पश्चादुत्पद्यते, सर्वात्मनोत्पादक्षेत्रे आग-

च्छति, 'सव्वेणं समोहणणमाणे'त्ति गेन्दुकगत्या गच्छन्नित्यर्थः, पूर्वमुत्पद्य सर्वात्मनोत्पाददेशमासाद्य पश्चात् 'संपाउणेज्ज'त्ति पुद्गलग्रहणं कुर्यादिति ॥ १७ शते षष्ठः ॥ शेषास्सुगमा एव (सू. ६०६–६१६) सप्तदशशतं लघुवृत्तितः सम्पूर्णम् ॥

---

अथ अष्टादशमारभ्यते, 'पढम'त्ति (*७८) जीवादिपदार्थानां प्रथमाप्रथमत्वादिवाच्यः १ 'विसाह'त्ति विशाखानगरीवाच्यः २ 'मागंद'त्ति माकन्दीपुत्राख्यसाधुवाच्यः ३ 'पाणाइवाय'न्ति प्राणातिपातं ४ 'असुर'त्ति असुरवाच्यः ५, 'गुल'त्ति गुलाद्यर्थविशेषवाच्यः ६ केवली ७, 'अणगार'त्ति अनगारः ८, 'भविय'त्ति भव्यद्रव्यनारकादिवाच्यः ९ 'सोमिल'त्ति सोमिलद्विजवाच्यः, १०, इति उद्देशकसङ्ग्रहगाथार्थः ॥ अत्र उद्देशकद्वारगाथामाह—"जीवाहारगभवसंणी लेस दिट्ठी य संजय कसाए। नाणे जोगुवओगे वेए य सरीरपज्जत्ती ॥१॥" प्रथमद्वारमाह—'जीवे णं भंते'त्ति (सू. ६१७) जीवो भदन्त! जीवभावेन—जीवत्वेन किं प्रथमः?, किं जीवत्वमसत्प्रथमतया प्राप्तं, उत 'अपढम'त्ति अप्रथमः, अनाद्यवस्थितजीवत्व इत्यर्थः, अत्रोत्तरम्—'अपढमे'त्ति इह प्रथमत्वाप्रथमत्वयोर्लक्षणगाथा—जो जेण पत्तपुव्वो भावो सो तेण अपढमो होइ। जो जं अपत्तपुव्वं पावइ सो तेण पढमोत्ति ॥१॥" 'एवं नेरइए'त्ति नारकोऽप्यप्रथमः, अनादिसंसारे नारकत्वस्यानन्तशः प्राप्तपूर्वत्वात्, 'सिद्धे णं भंते!' इत्यादौ 'पढमे'त्ति सिद्धेन सिद्धत्वस्याप्राप्तपूर्वस्य प्राप्तत्वात् तेनासौ प्रथम इति, बहुत्वेऽप्येवमेव, आहारकद्वारे 'आहारए णं'मित्यादि, आहारकत्वेनाप्रथमः, अनन्तभवेऽनन्तशः प्राप्तपूर्वत्वादाहारकत्वस्य, एवं नारकादिरपि, सिद्धस्त्वाहारकत्वे न पृच्छ्यते, अनाहारकत्वात्तस्येति, 'अणाहारए णं'ति 'सिय पढमे'त्ति स्यादिति कश्चिज्जीवोऽनाहारकत्वेन प्रथमः, यथा सिद्धः, कश्चिच्चाप्रथमो यथा

संसारी, संसारिणो विग्रहगतावनाहारकत्वेन प्रथमो यथा सिद्धः, कश्चिच्चाप्रथमो यथा संसारी, संसारिणो विग्रहगतावनाहारकत्वस्यानन्तशः प्राप्तपूर्वत्वात् 'एक्केक्के पुच्छा भाणियव्व'त्ति यत्र पृच्छावाक्यं न लिखितं तत्रैकस्मिन् पदे पृच्छावाक्यं वाच्यं। भव्यद्वारे "भवसिद्धिए' इत्यादि, भवसिद्धिक एकत्वेन बहुत्वेन च यथाऽऽहारकस्तथा वाच्यः, अप्रथम इत्यर्थः, यतो भव्यस्य भव्यत्वमनादिसिद्धमतोऽसौ भव्यत्वेन न प्रथमः, एवमभवसिद्धिकोऽपि, 'नोभवसिद्धिएनोअभवसिद्धिए णं'मित्यादि, इह च जीवपदं सिद्धपदमध्यान् सम्भवति, न तु नारकादीनि, नोभवसिद्धिकनोअभवसिद्धिकपदेन सिद्धस्यैवाभिधानात्. तयोरेकत्वे पृथक्त्वे प्रथमत्वं वाच्यं, संज्ञिद्वारे-'सण्णी णं'ति संज्ञी जीवः संज्ञिभावेनाप्रथमः, अनन्तशः संज्ञित्वभावात्, 'विगलिंदियवज्जं'ति एकद्वित्रिचतुरिन्द्रियान् वर्जयित्वा शेषा नारकादिवैमानिकान्ताः संज्ञिनोऽप्रथमतया वाच्या इत्यर्थः, एवमसंज्ञ्यपि, नवरं 'जाव वाणमंतर'त्ति असंज्ञिविशेषितानि जीवनारकादीनि व्यन्तरान्तानि पदान्यप्रथमतया वाच्यानि, तेषु हि संज्ञिष्वपि भूतपूर्वतयाऽसंज्ञित्वं लभ्यते, असंज्ञिनामुत्पादात्, पृथिव्यादयस्तु असंज्ञिन एव, तेषां अप्रथमत्वमेव, अनन्तशस्तल्लाभात्, उभयनिषेधपदं च जीवमनुष्यसिद्धेषु लभ्यते तत्र प्रथमत्वं वाच्यं, अत उक्तं-'नो सण्णी'त्यादि। लेश्याद्वारे 'सलेसे णं'ति 'जहा आहारए'त्ति अप्रथम इत्यर्थः, अनादित्वात् सलेश्यभावस्य 'नवरं जस्स जा लेस्सा अत्थि'त्ति यस्य नारकादेर्या कृष्णलेश्यादिर्लेश्याऽस्ति सा तस्य वाच्या. इदं च प्रतीतमेव, अलेश्यापदं तु जीवमनुष्यसिद्धेष्वस्ति तेषां च प्रथमत्वं वाच्यं नोसंज्ञिनोअसंज्ञिनामेवेति, एतदाह-'अलेसे'त्यादि। दृष्टिद्वारे- 'सम्मदिट्ठीए णं'ति 'सिय अपढमे'त्ति कश्चित्सम्यग्दृष्टिर्जीवः सम्यग्दृष्टितया प्रथमः, यस्य तत्प्रथमतया दर्शनलाभः, कश्चिदप्रथमो, येन प्रतिपातितं सन् सम्यग्दर्शनं पुनर्लब्धमिति, एवं 'एगिंदियवज्जं'ति एकेन्द्रियाणां सम्यक्त्वं

नास्ति, ततो नारकादिदण्डकचिन्तायां एकेन्द्रियान् वर्जयित्वा शेषः स्यात् प्रथमः स्यादप्रथम इति वाच्यं, प्रथमसम्यक्त्वलाभापेक्षया प्रथमः द्वितीयादिलाभापेक्षयाऽप्रथमः, सिद्धस्तु प्रथम एव सिद्धत्वानुगतस्य सम्यक्त्वस्य तदानीमेव भावात्, 'मिच्छादिट्ठी'त्यादि, 'जहा आहारग'त्ति एकत्वे पृथक्त्वे च मिथ्यादृष्टीनामप्रथमत्वमिति, अनादित्वान्मिथ्यादर्शनस्य 'सम्मामिच्छादिट्ठी'त्यादि, 'जहा सम्मदिट्ठि'त्ति स्यात्प्रथमः स्यादप्रथमः प्रथमेतरसम्यग्दर्शनलाभापेक्षयेति भावः, 'नवरं जस्सऽत्थि सम्मामिच्छ-त्तं'ति दण्डकचिन्तायां यस्य नारकादेर्मिश्रदर्शनमस्ति स एव प्रथमाप्रथमचिन्तायामधिकर्त्तव्यः, संयतद्वारे 'संजए'त्ति इह जीवपदं मनुष्यपदं च द्वे एव स्तः, तयोश्चैकत्वात्, तद्यथा सम्यग्दृष्टिरुक्तस्तथाऽसौ वाच्यः—स्यात्प्रथमः स्यादप्रथमः, एतच्च संयमस्य प्रथमेतरलाभापेक्षया ज्ञेयं, 'अस्संजए जहा आहारए'त्ति अप्रथम इत्यर्थः, असंयतत्वस्यानादित्वात्, 'संजयासंजए'त्ति संयता-संयतो जीवपदे मनुष्यपदे पञ्चेन्द्रियतिर्यक्पदे च स्याद् अत एतेष्वेकत्वादिना सम्यग्दृष्टिवद्वाच्य, स्यात् प्रथमः स्यादप्रथम इत्यर्थः, प्रथमाप्रथमत्वं च प्रथमेतरदर्शनलाभापेक्षया 'नोसंजएनोअसंजए'त्ति निषिद्धसंयमासंयममिश्रभावो जीवः सिद्धश्च स्यात् स प्रथम एवेति। कषायद्वारे—'सकसाय'त्ति कषायिण आहारवदप्रथमाः, अनादित्वात् कषायित्वस्येति, 'अकसाइ'त्ति अकषायो जीवः स्यात्प्रथमो यथाख्यातचारित्रलाभे, स्यादप्रथमो द्वितीयादिलाभे, एवं मनुष्योऽपि, सिद्धस्तु प्रथम एव, सिद्धत्वेऽकषायत्वस्य प्रथमत्वादिति। ज्ञानद्वारे—'नाणीति जहा सम्मदिट्ठि'त्ति स्यात्प्रथमः स्यादप्रथमः इत्यर्थः, तत्र केवली प्रथमः अन्यथाऽप्रथम इति, नवरं 'जं जस्स अत्थि'त्ति जीवादिदण्डकचिन्तायां यत् मतिज्ञानादि यस्य जीवनारकादेरस्ति तत्तस्य वाच्यं, 'अन्नाणी'ति 'जहा आहारए'त्ति अप्रथम इत्यर्थः, अनादित्वेनानन्तशोऽज्ञानस्य सभेदस्य लाभात्। योगद्वारे 'सयोगि'त्ति

एतदपि आहारकवदप्रथममित्यर्थः, 'जस्स जो जोगो अत्थि'त्ति जीवनारकादिदण्डकचिन्तायां यस्य जीवादेर्मनोयोगादिर्योऽस्ति स तस्य वाच्यः, स च प्रतीत एव। 'अजोगि'त्ति जीवो मनुष्यः सिद्धश्चायोगी स्यात्, स च प्रथम एव। उपयोगद्वारे 'सागारे'त्ति 'जहा अणाहारए'त्ति साकारोपयुक्ता अनाकारोपयुक्ताश्च यथाऽनाहारकोऽभिहितस्तथा वाच्याः, ते जीवपदे स्यात्प्रथमः सिद्धापेक्षया, स्यादप्रथमः संसार्यपेक्षया, नारकादिवैमानिकान्तपदेषु न प्रथमाः अप्रथमाः, अनादित्वात् तल्लाभस्य, सिद्धपदे तु प्रथमाः, साकारानाकारोपयोगविशेषितस्य सिद्धत्वस्य प्रथमत एव भावात्, वेदद्वारे 'सवेयग'त्ति 'जहा आहारए'त्ति अप्रथम एवेत्यर्थः, नवरं 'जस्स जो वेदो अत्थि'त्ति जीवादिदण्डकचिन्तायां यस्य नारकादेर्नपुंसकादिर्वेदो योऽस्ति स तस्य वाच्यः, स प्रतीत एव, 'अवेयग'त्ति अवेदको यथाऽकषायी तथा वाच्यस्त्रिष्वपि पदेषु जीवमनुष्यसिद्धलक्षणेषु, तत्र जीवमनुष्यपदयोः स्यादप्रथमः अवेदकत्वस्य प्रथमेतरलाभापेक्षया, सिद्धस्तु प्रथम एव। शरीरद्वारे-'ससरीर'त्ति अयमप्याहारकवदप्रथम एव, नवरं 'आहारकसरीरत्ति जहा सम्मदिट्ठि'त्ति स्यात्प्रथमः स्यादप्रथम इति, अयं च प्रथमेतरलाभापेक्षया, अशरीरी जीवः सिद्धश्च, स प्रथम एव। पर्याप्तिद्वारं-'पंचहिं'ति पञ्चभिः पर्याप्तिभिः पर्याप्तः ताभिरपर्याप्तकश्च आहारकवदप्रथम इति, 'जस्स जा अत्थि' दण्डकचिन्तायां यस्य याः सन्ति तस्य ताः पर्याप्तयो वाच्याः ताश्च प्रतीता एवेति। अथ प्रथमाप्रथमलक्षणगाथामाह-'जो जेण' (*७२) गाहत्ति पूर्वार्द्धं कण्ठ्यं, 'सेसेसु'त्ति सप्तम्यास्तृतीयार्थत्वात् शेषैः-प्राप्तपूर्वभावव्यतिरिक्तैः स्यात् प्रथमः, शेषैः कथंभूतैः ?-अप्राप्तपूर्वैर्विभावैरिति॥ अथ चरमादित्वं सर्वद्वारेष्वाह-'जीवे णं'ति जीवो भदन्त! जीवत्वेन किं चरमः ?, किं जीवत्वं मोक्ष्यतीत्यर्थः, अचरमत्ति ?, जीवत्वं न मोक्ष्यतीत्यर्थः, इति प्रश्नः, अत्रोत्तरम्-न चरमः, शाश्वतत्वात्, 'सिय

चरमे'त्ति यो नारकः सिद्धिं यास्यति स चरमः, अन्यस्त्वचरमः, पुनर्नरकगमनात्, एवं यावद्वैमानिकः, 'सिद्धे जहा जीवे'त्ति अचरम इति, नहि सिद्धः सिद्धतया विनंक्ष्यतीति। 'जीवा णं'ति बहुत्वदण्डकः तादृगेव, आहारकद्वारे 'आहारए सव्वत्थ'त्ति सर्वेषु जीवादिपदेषु 'सिय चरमे सिय अचरमे'त्ति कश्चिच्चरमो यो निर्वास्यति, अन्यस्त्वचरमः। आहारकपदेऽनाहारकत्वेन जीवः सिद्धश्चाचरमो वाच्यः, अनाहारकत्वस्य तदीयस्याशाश्वतत्वात् जीवश्चेह सिद्धावस्थ एव, 'सेसट्ठाणेसु'त्ति नारकादिपदेषु 'जहा आहारउ'त्ति स्याच्चरमः स्यादचरम इत्यर्थः, यो नारकादित्वेनानाहारकत्वं पुनर्न लप्स्यते स चरमः, यस्तु तत् लप्स्यतेऽसावचरमः, भव्यद्वारे 'भवसिद्धिउ'त्ति भव्यो जीवो भव्यत्वेन चरमः, सिद्धिगमनेन भव्यत्वस्य चरमत्वप्राप्तेः, एतच्च सर्वेऽपि जीवा भवसिद्धिकाः सेत्स्यन्तीति वचःप्रामाण्यादित्युक्तं, 'अभवसिद्धिओ सव्वत्थे'ति सर्वेषु जीवादिपदेषु 'नो चरम'त्ति अभव्यस्य भव्यत्वाभावात्, 'नोभव'त्ति उभयनिषेधवान् जीवपदे सिद्धिपदे च भवसिद्धिकवदचरमः, तस्य च सिद्धत्वात् सिद्धस्य सिद्धत्वपर्यायानपगमादिति, संज्ञिद्वारे संज्ञा 'जहाऽऽहारउ'त्ति संज्ञित्वेन स्याच्चरमः स्यादचरमः, एवमसंज्ञ्यपि, उभयनिषेधवांश्च जीवः सिद्धश्चाचरमो, मनुष्यस्तु चरमः, उभयनिषेधवतो मनुष्यस्य केवलित्वेन पुनर्मनुष्यत्वस्यालाभादिति। लेश्याद्वारे 'सलेसे'त्ति 'जहा आहारओ'त्ति स्याच्चरमः स्यादचरमः, तत्र ये मुक्तिगामिनस्ते सलेश्यत्वस्य चरमाः, अन्ये त्वचरमाः। दृष्टिद्वारे—'सम्मद्दिट्ठी जहा अणाहारओ'त्ति जीवस्सिद्धश्च सम्यग्दृष्टिरचरमः, यतो जीवस्य सम्यक्त्वं प्रतिपतितमप्यवश्यंभावि, सिद्धस्य तु तन्न प्रतिपतत्येव, नारकादयस्तु स्याच्चरमाः, ये नारकादयो नारकत्वादिना सह पुनः सम्यक्त्वं न लप्स्यन्ते ते चरमाः, ये त्वन्यथा तेऽचरमाः, 'मिच्छदिट्ठी जहा आहारओ'त्ति स्याच्चरमः स्यादचरमः, यो जीवो मुक्तिगामी स मिथ्यादृष्टित्वेन चरमः,

यस्त्वन्यथा सोऽचरमः, नारकादिस्तु यो मिथ्यात्वयुक्तं नारकत्वं पुनर्न लप्स्यते स चरमः,अन्यस्त्वचरमः,'सम्मामिच्छ'त्ति 'एगिंदियविगलिंदियवज्जं'ति एतेषां मिश्रं न स्यात्, नारकादिदण्डे नैते मिश्रालापका उच्चारयितव्याः, अस्य चोपलक्षणत्वेन सम्यग्दृष्टिदण्डके एकेन्द्रियवर्जमित्यपि द्रष्टव्यं, एवमन्यत्रापि यत् यत्र न सम्भवति तत्तत्र स्वयं वर्जनीयं, यथा संज्ञिपदे एकेन्द्रियादयः, असंज्ञिपदे ज्योतिष्कादयः,'सिय चरमे सिअ अचरमे'त्ति सम्यग्मिथ्यादृष्टिः स्याच्चरमो, यस्य तत्पुनर्न भविष्यति, इतरस्त्वचरमः। संयतद्वारे 'संजओ'त्ति अयमर्थः—संयतो जीवः स्याच्चरमः स्यादचरमः, यस्य पुनः संयमो न भविष्यति स चरमः, अन्यस्त्वचरमः, एवं मनुष्योऽपि, यत एतयोरेव संयतत्वं,'असंजओ तहेव'त्ति असंयतोऽपि तथैव यथाऽऽहारकः, स्याच्चरमः स्यादचरमः, एवं संयतासंयतोऽपि, केवलं जीवपञ्चेन्द्रियतिर्यङ्मनुष्यपदेष्वेव वाच्यः, नवरं जस्स जं अत्थित्ति, निषिद्धत्रयस्तु चरमः सिद्धत्वात्तस्य। कषायद्वारे—सकसाइत्ति, अयमर्थः—सकषायस्य भेदो जीवादिस्थानेषु स्याच्चरमः स्यादचरमः, तत्र यो जीवो मुक्तिगामी स सकषायत्वेन चरमः, अन्यस्त्वचरमः, नारकादिस्तु यः सकषायित्वं नारकादियुक्तं पुनर्न प्राप्स्यति स चरमः, अन्यस्त्वचरमः, 'अकसाइ'त्ति अकषायी—उपशान्तमोहादिः स जीवो मनुष्यः सिद्धश्च स्याच्चरमो, यतो जीवस्याकषायित्वं प्रतिपतितमप्यवश्यंभावि, सिद्धस्य न प्रतिपतत्येव, मनुष्यस्तु अकषायितोपेतं मनुष्यत्वं पुनर्यो न लप्स्यते स चरमः, यस्तु लप्स्यतेऽसावचरमः। ज्ञानद्वारे नाणी जहा सम्मद्दिट्ठीति यथा सम्यग्दृष्टिः तथा जीवः सिद्धश्चाचरमो, जीवो हि ज्ञानस्य सतः प्रतिपातेऽप्यवश्यं पुनर्भावेनाचरमः, सिद्धस्त्वक्षीणज्ञानभाव एव स्यात् इति चरमः, शेषास्तु ज्ञानोपेतनारकत्वादीनां पुनर्लाभसम्भवे चरमाः, अन्यथाऽचरमाश्च, 'सव्वत्थ'त्ति सर्वेषु जीवादिसिद्धान्तेषु पदेषु एकेन्द्रियवर्जेष्विति गम्यं, ज्ञानभेदापेक्षयाऽऽह—आभिणिबोहिएत्ति-

करणात् स्याच्चरमः स्यादचरमः, इति दृश्यं, तत्राभिनिबोधिकादि ज्ञानं यः केवलज्ञानप्राप्त्या पुनरपि न लप्स्यते स चरमः, अन्यस्त्वचरमः, 'जस्स जं अत्थि'त्ति यस्य जीवनारकादेर्यदाभिनिबोधिकाद्यस्ति तस्य तदाश्रित्यं, तच्च प्रतीतमेव, 'केवलि'त्ति केवलज्ञानी चरमो वाच्यः, 'अण्णाणी'ति अज्ञानी सभेदः स्याच्चरमः स्यादचरमः, योऽज्ञानं पुनर्न लप्स्यते स चरमः, यस्त्वभव्यो ज्ञानं न लप्स्यते असावचरमः, एवं यत्र यत्राहारकातिदेशः तत्र स्याच्चरमः स्यादचरम इति वाच्यं, शेषमप्यनयैव दिशाऽभ्यूह्यं। अथ चरमाचरमलक्षणगाथामाह—'जो जं पाविहि'त्ति(*८०)यो जीवनारकादिर्यत् जीवत्वनारकादिकमप्रतिपतितं वा प्राप्स्यति—लप्स्यते पुनः पुनर्भावं स तेन भावेन—तद्भावापेक्षयाऽचरमः स्यात्, तथाऽत्यन्तवियोगः सर्वथा विरहो यस्य जीवादेर्येन भावेन स तेनेति शेषः चरमः स्यादिति ॥ १८ शते प्रथमः ॥

'निगमपढमासणिए'त्ति (सू. ६१८) नैगमा—वाणिज्यकास्तेषु प्रथमासनिको—वृद्धः, 'कज्जेसु'त्ति गृहकरणस्वजनसन्मानादिकृत्येषु 'कारणेसु'त्ति कृषिवाणिज्यादिहेतुषु 'कोडुंबेसु'त्ति कौटुम्बिकेषु—सम्बन्धिजनेषु यथा राजप्रश्नीये, तत्रैवम्—मंतेसु गुज्झेसु रहस्सेसु ववहारेसु निच्छएसु आपुच्छणिज्जे' इत्यादि, मन्त्रेषु—आलोचेषु गुह्येषु—लज्जनीयव्यवहारगोपनेषु रहस्येषु—एकान्तयोग्येषु आप्रच्छनीयः प्रष्टव्य इति गम्यं ॥ १८ शते द्वितीयः ॥

'मंडियपुत्ते जाव'त्ति (सू. ६१९) यावत्करणात् पगइउवसंते पयणुकोहमाणमायालोभे इत्यादि दृश्यं, इह पृथिव्यब्वनस्पतीनामनन्तरभवे मानुषत्वप्राप्त्याऽन्तक्रिया सम्भवति, यथा मरुदेव्याः, न तेजोवायूनां, तेषामानन्तर्येण मानुषत्वाप्राप्तेः, अतः पृथिव्यादित्रयस्यैवान्तक्रियामाश्रित्य 'से नूण'मित्यादिना प्रश्नः कृतो, न तेजोवायूनां। 'भाविअप्पणो'त्ति (सू. ६२०) भावि-

नवमात्मनो ज्ञानादिभिः, अकेवलिनस्साधोरिति, तस्य हि सर्वकर्म भवोपग्राहित्रयरूपं आयुषो भेदेनाभिधास्यमानत्वात्, वेदयतः—अनुभवतः प्रदेशविपाकानुभवाभ्यां वा निर्जरयतः—आत्मप्रदेशेभ्योऽपि सर्वं कर्म्म भवोपग्राहित्रयरूपं शातयतः अथ सर्वं सर्वायुःपुद्गलापेक्षं मारं—मरणं म्रियमाणस्य—गच्छतः सर्वमौदारिकादिवपुर्विजहतः चरमशरीरं—चरमावस्थासत्कं 'मारणान्तिककम्मं'ति मरणस्य समीपं मरणान्तः—आयुष्चरमः समयः तत्र भवं मारणान्तिकं कर्म भवोपग्राहित्रयरूपं वेदयत एवं निर्जरयतः, 'सव्वलोगंपि णं'ति सर्वलोकमपि ते पुद्गला अवगाह्य तिष्ठन्तीति प्रश्नः. अत्रोत्तरम्—'हंता मागंदियपुत्ते'त्यादि, 'अणत्तं'ति अन्यत्वं, अनगारद्वयसम्बन्धिनो ये पुद्गलास्तेषां भेदं 'णाणत्तं'ति वर्णादिकृतं नानात्वं 'एवं जहा इंदिओ'त्ति एवं यथा प्रज्ञापनापञ्चदशपदस्य प्रथमोद्देशके, तथैवं वाच्यं—'ओमत्तं वा तुच्छत्तं वा गुरुयत्तं वा जाणइ पासइ?, गोयमा! नो इणट्ठे समट्ठे, से केणट्ठेणं०?, छउमत्थे णं भंते! मणुस्से तेसिं निज्जरापुग्गलाणं नो किंचि आणत्तं वा जाणइ २?, गोयमा! देवेऽवि य णं अत्थेगइए जे णं तेसिं निज्जरा० जाणइ?, गो०! नो इण०, से केण०, देवेऽवि य णं जाणइ २, से तेणट्ठेणं गोयमा! एवं वुच्चइ छउमत्थे णं मणूसे तेसिं निज्जरा० जाणइ, सुहुमा णं ते पुग्गला पण्णत्ता समणाउसो!, सव्वंपि णं लोगं ते ओगाहित्ताणं चिट्ठंति' एतच्च व्यक्तं, नवरं ओमत्तं—अवमत्वं ऊनता तुच्छत्वमित्यादि ग्रन्थगौरवभयादिह नोच्यते। 'दुविहे'त्ति (सू. ६२१) द्रव्यबन्ध आगमादिभेदादनेकविधः, केवलमुभयव्यतिरिक्तो ग्राह्यः, स च द्रव्येण स्नेहरज्ज्वादिना द्रव्यस्य वा परस्परेण बन्धो द्रव्यबन्धः, 'भावबंधे य'त्ति भावबन्ध आगमादिभेदाद् द्विधा, स चेह नोआगमतो ग्राह्यः, तत्र भावेन—मिथ्यात्वादिना भावस्य वोपयोगभावाव्यतिरेकात् जीवस्य बन्धो भावबन्धः, 'पओगबंधे'त्ति जीवप्रयो-

गेण द्रव्याणां बन्धनम् 'वीससाबंधे'त्ति विश्रसा—स्वभावतः, 'सादीयवीसस'त्ति अभ्रादीनां, अणादीति धर्मास्तिकायाधर्मास्तिकायादीनां, सिढिलित्ति तृणपूलकादीनां धणियत्ति रथचक्रादीनामिति। एयणेऽवि नाणत्तंति (सू. ६२२) एजने—कंपने यदंशादिषु तदपि नानात्वं—भेदः अनेजनावस्थापेक्षया, यावत्करणात् वेयणेऽवि णाणत्तमित्यादि द्रष्टव्यं, व्येजने इति, अयमभिप्रायो—यथा बाणस्योर्ध्वं क्षिप्तस्यैजनादिकं नानात्वमस्त्येव एवं कर्म्मणः कृतत्वक्रियमाणत्वकरिष्यमाणत्वरूपं तीव्रमन्दपरिणामभेदात् तदनुरूपकार्यकारित्वरूपं नानात्वमत्रसेयं ॥ 'सेयकालंसि'त्ति (सू. ६२३) एष्यत्काले, ग्रहणानन्तरमित्यर्थः, 'असंखिज्जं'ति गृहीतपुद्गलानामसङ्ख्येयभागमाहारीकुर्वन्ति, गृहीतानामेवानन्तभागं निर्जरयन्ति, तत उक्तं जिनैः॥ १८ शते तृतीयः॥

'असरीरपडिबद्धे'त्ति (सू. ६२४) त्यक्तसर्वशरीरो जीवः 'बायरबोंदिधरा कलेवर'त्ति स्थूराकारधराणि, न सूक्ष्माणि, कलेवरा—निर्जीवदेहाः, 'एएणं'ति एतानि प्राणातिपातादीनि सामान्येन द्विविधानि, न प्रत्येकं, तत्र पृथ्वीकायादयो जीवद्रव्याणि, प्राणातिपातादयो न जीवद्रव्याणि, किन्तु तद्धर्म्माः, अजीवद्रव्याणि धर्मास्तिकायादयः, तान्यजीवद्रव्याणि जीवपरिभोग्यत्वायागच्छन्ति, जीवैः परिभुज्यन्त इत्यर्थः, तत्र प्राणातिपातादीन् यदा कुर्यात् तदा तान् सेवते प्रवृत्तिरूपत्वात् तेषामित्येवं तत्परिभोगः, पृथिव्यादीनां तु परिभोगो गमनशोचनादिभिः प्रतीत एव, प्राणातिपातविरमणादीनां परिभोगो नास्ति, प्राणातिपातविरतिरूपत्वेन जीवस्वरूपत्वात् तेषां, धर्मास्तिकायादीनां चतुर्णाममूर्तत्वेन परमाणोः सूक्ष्मत्वेन शैलेशीप्रतिपन्नानगारस्य च प्रेषणाद्यविषयत्वेनानुपयोगित्वान्न परिभोगः ॥ 'कसायपदं निरवसेसं'त्ति(सू. ६२५)प्रज्ञापनापदं—चतुर्दशपदं, तच्चेदम्—कोहकसाए माणकसाए मायकसाए लोभकसाए इत्यादि, 'निज्जरिस्संति लोभेणं'ति अस्यैवं सम्बन्धः—'वेमाणिया णं भंते ! कइहिं ठाणेहिं अट्ठ कम्मपग-

र्डाओ निजरिस्संति ?, गोयमा ! चउहिं ठाणेहिं, तं०—कोहेणं माणेणं मायाए लोभेणं'ति इह नारकादीनामष्टापि कर्माण्युदये वर्त्तन्ते, उदयवर्त्तिनां तेषां अवश्यं निर्जरणमस्ति, कषायोदयवर्त्तिनश्च ते, ततश्च कषायोदये कर्म्मनिर्जराभावात् क्रोधादिभिर्वैमानिकानामष्टकर्मप्रकृतिनिर्जरणमुच्यते ॥ प्रागुक्तचतुःकषायाश्चतुःसङ्ख्यात्वात् कृतयुग्मलक्षणसङ्ख्याविशेषवाच्याः स्युरित्यतो युग्मस्वरूपमाह—'चत्तारि जुम्म'त्ति इह गणितपरिभाषया समो राशिर्युग्ममुच्यते विषमस्तु ओज इति, तत्र यद्यपि द्वौ राशी युग्मशब्दवाच्यौ द्वौ ओजःशब्दवाच्यौ च भवतः, तथापि इह युग्मशब्देन राशयो विवक्षिताः, अतश्चत्वारि युग्मानि—राशय इत्यर्थः, तत्र 'कडजुम्मे'त्ति कृतं—सिद्धं पूर्णं ततः परस्य राशिसंज्ञान्तरस्याभावेन न त्र्योजःप्रभृतिवदपूर्णं यत् युग्मं 'तेओए'त्ति त्रिभिरादित एव कृतयुग्माद्वोपरिवर्त्तिभिरोजो—विषमराशिस्त्र्योज इति, 'दावरजुम्मे'त्ति द्वाभ्यामादित एव कृतयुग्माद्वोपरिवर्त्तिभ्यां यदपरं युग्मं कृतयुग्मादन्यत् द्वापरयुग्मं, 'कलिओए'त्ति कलिना—एकेनादित एव कृतयुग्माद्वोपरिवर्त्तिना ओजो—विषमराशिः कल्योज इति। 'जे णं रासी'-त्यादि, यो राशिश्चतुष्केणापहारेणापह्रियमाणश्चतुष्पर्यवसितः स्यात् स कृतयुग्ममित्युच्यते, यत्र राशौ चतूरूपत्वेन चतुष्कापहारो नास्ति सोऽपि चतुष्पर्यवसितत्वसद्भावात् कृतयुग्ममेव, एवमुत्तरपदेष्वपि, 'जहण्णपदे कडजुम्मे'त्ति अत्यन्तस्तोकत्वे कृतयुग्माः—कृतयुग्मसंज्ञिताः 'उक्कोसपए'त्ति सर्वोत्कृष्टतायां त्र्योजःसंज्ञिताः, मध्यमपदे चतुर्विधा अपि, एतदाज्ञाप्रामाण्यादवगन्तव्यं। 'वणस्सइकाइया णं'ति वनस्पतिकायिका जघन्यपदे उत्कृष्टपदे चापदाः, जघन्यपदस्योत्कृष्टपदस्य च तेषामभावात्, तथाहि—जघन्यपदमुत्कृष्टपदं च तदुच्यते यन्नियतरूपं, तच्च यथा नारकादीनां कालान्तरेणापि न तथा वनस्पतिकायिकानां नियतरूपं लभ्यते, परंपरया सिद्धिगमनेन तद्राशेरनन्तत्वापरित्यागेऽप्यनियतरूपत्वादिति । 'सिद्धा जहा वणस्सइकाइय'त्ति जघन्यपदे उत्कृष्टपदे

चापदाः, अजघन्योत्कृष्टपदे च स्यात्कृतयुग्मादय इत्यर्थः, तत्र जघन्योत्कृष्टपदापेक्षयाऽपदत्वं वर्द्धमानतया तेषामनियतपरिमाणत्वाद् भावनीयमिति ॥ 'जावइया णं वर'त्ति (सू. ६२६) यावन्तः 'वर'त्ति अर्वाग्भागवर्त्तिनः, आयुष्कापेक्षया अल्पायुष्का इत्यर्थः 'अंधगवण्हिणो'त्ति अंह्रिपा—वृक्षास्तेषां वह्नयस्तदाश्रयत्वेनेत्यंह्रिपवह्नयो—बादराग्निकाया इति, अन्ये त्वाहुः—अन्धका—अप्रकाशकाः सूक्ष्मनामकर्मोदयाद् ये वह्नयः ते अंधकवह्नयो जीवाः 'तावइअ'त्ति तत्परिमाणाः 'पर'त्ति पराः प्रकृष्टाः स्थितितो दीर्घायुष इति प्रश्नः, 'हन्ते'त्युत्तरमिति ॥ १८ शते चतुर्थः ॥

'वेउव्वियसरीर'त्ति (सू. ६२७) विभूषितवपुषः 'महाकम्मतराए चेव'त्ति (सू. ६२८) इह यावत्करणात् 'महाकिरियतराए महासवतराए'त्ति दृश्यं, 'एगिंदियविगलिंदिअवज्ज'ति इहैकेन्द्रियादिवर्जनमेतेषां मायिमिथ्यादृष्टित्वेनामायिसम्यग्दृष्टिविशेषणस्यायुज्यमानत्वात् ॥ 'दो भंते! असुरकुमार'त्ति (सू. ६३०) यच्चेह मायिमिथ्यादृष्टीनामसुरकुमारादीनामृजुविकुर्वणेच्छायामपि वक्रविकुर्वणैव स्यात् तन्मायामिथ्यात्वप्रत्ययिककर्मप्रभावात्, अमायिसम्यग्दृष्टीनां तु यथेच्छं विकुर्वणा स्यात् तदार्जवोपेतसम्यक्त्वप्रत्ययकर्मवशादिति ॥ १८ शते पञ्चमः ॥

'फाणिय'त्ति (सू. ६३०) द्रवगुडः, 'गोड्ड'त्ति गोल्यं—गोल्यरसोपेतं, व्यवहारो हि लोकतस्सङ्गच्छते, ततः शेषरसवर्णादीन् सतोऽप्युपेक्षत इति, 'निच्छय'ति निश्चयमतेन पञ्चवर्णादिपरमाणूनां तत्र विद्यमानत्वात् पञ्चवर्णादिरिति ॥ 'परमाणुपोग्गले णं'मित्यादि (सू. ६२२) इह च परमाणुपुद्गले पञ्च द्वौ पञ्च च विकल्पाः, 'दुफास'त्ति स्निग्धरूक्षशीतोष्णस्पर्शानामन्यतराविरुद्धस्पर्शद्वययुक्त इति, इह ४ भेदाः शीतस्निग्धयोः शीतरूक्षयोः उष्णस्निग्धयोः उष्णरूक्षयोश्च सम्बन्धादिति, 'सिय एगवण्णे'त्ति

द्वयोरपि प्रदेशयोरेकवर्णत्वात्, इह पञ्च विकल्पाः. 'सिय दुवण्णे'त्ति प्रतिप्रदेशं वर्णान्तरभावात्, २१० विकल्पाः, एवं गन्धादिष्वपि, 'सिय दुफासे'त्ति प्रदेशत्रयस्यापि शीतस्निग्धत्वादिभावादिहापि ४ विकल्पाः 'सिय तिफासे'त्ति इहापि ४ विकल्पाः, तत्र प्रदेशत्रयस्यापि शीतभावादेकस्य च तत्र स्निग्धभावात् द्वितीयस्य रूक्षभावात् एकः, एवं न्यायेन प्रदेशद्वयस्य तुल्याभावाद् द्वितीयः, तथा प्रदेशत्रयस्यापि स्निग्धभावात् तत्र एकस्य शीतभावादेकस्योष्णभावात् तृतीयः, एवं न्यायेन प्रदेशद्वयस्य रूक्षभावाच्चतुर्थः, 'चउफासे'त्ति इह 'देसे सीए देसे उसिणे देसे निद्धे देसे लुक्खे'त्ति वचनादेक एव त्रिप्रदेशादिषु चिन्त्यः, 'सुहुमपरिणए'त्ति अनन्तप्रदेशिको बादरपरिणामोऽपि स्कन्धः स्यात् द्व्यणुकादि सूक्ष्मपरिणाम एवेत्यनन्तप्रदेशिकस्कन्धः सूक्ष्मपरिणामत्वेन विशेषितः, तत्राद्याः ४ स्पर्शाः सूक्ष्मेषु बादरेषु वा अनन्तप्रदेशिकस्कन्धेषु स्युः, मृदुकठिनगुरुलघुस्पर्शाश्च बादरेष्वेवेति ॥ १८ शते षष्ठः ॥

'जक्खाएसेणं'ति (सू. ६३३) देवावेशेन 'आविस्सइ'त्ति आविश्यते—अधिष्ठीयते, नो खलु केवली यक्षावेशेनाविश्यते, अनन्तवीर्यत्वात् तस्य, 'अण्णाइट्ठे'त्ति अन्याविष्टः—परवशीकृतः ॥ 'उवही'त्ति (सू. ६३४) उपधीयते—उपष्टभ्यते येनात्माऽसावुपधिः, 'बाहिरभंडमत्ते'त्ति बाह्यः—कर्मशरीरपृथक्स्थितो य उपधिस्तत्र भाण्डमात्रा—भाजनानि उपकरणं च—वस्त्रादि, 'एगिंदियवज्जाणं'ति एकेन्द्रियाणां भाण्डादि नास्ति इति तद्वर्जितानामन्येषां त्रिविधोऽस्तीति, 'सचित्ते'त्ति सचित्तादिद्रव्याणि शरीरादीनि 'नेरइयाणं'ति नारकाणां 'कइविहे उवही पण्णत्ते?', गो०! तिविहे सचित्तोपधिः शरीरं 'अचित्ते'त्ति अचित्तः उत्पत्तिस्थानं 'मीसए'त्ति मिश्रस्तु शरीरमेवोच्छ्वासादिपुद्गलयुक्तं, तेषां अचेतनत्वेन मिश्रत्वस्य विवक्षणादिति, 'परिग्गहे'त्ति परिगृह्यते इति

परिग्रहः, एतस्योपधेश्च को भेदः?, उच्यते, उपकारक उपधिर्ममत्वबुद्धितः परिगृह्यमाणस्तु परिग्रह इति। 'पणिहाणे'त्ति प्रकर्षेण नियते आलम्बने धानं-धरणं मनःप्रभृतेरिति प्रणिधानं॥ 'एवं जहा सत्तमसए' (सू. ६३५) इत्यादिना यत्सूचितं तच्चेदं, कालोदाईसेलोदाईसेवालोदाईप्रभृतिकानामन्ययुथिकानामेकत्रमिलितानां मिथः कथासंलापो जातो यन्महावीरः पञ्चास्तिकायान् धर्मास्तिकायादीन् प्रज्ञापयति, धर्म्माधर्म्माकाशपुद्गलास्तिकायानचेतनान् जीवास्तिकायं च सचेतनं, तथा धर्म्माधर्म्माकाशजीवास्तिकाया न रूपिणः, पुद्गलास्तिकायं च रूपिणं प्रज्ञापयति, 'से कहमेयं मण्णे'त्ति अथ कथमेतद्धर्म्मास्तिकायादि वस्तु मन्ये इति वितर्कार्थः, एवं सचेतनाचेतनादिरूपेणादृश्यमानत्वेनासम्भवत्तस्येति हृदयं, 'अविउप्पकड'त्ति अपिः सम्भावने उत्-प्राबल्येन प्रकृता-प्रस्तुता प्रकटा वा उत्प्रकृता उत्प्रकटा वा तथा अविद्वद्भिः-अजानद्भिः प्रकृता-प्रस्तुता अविद्वत्प्रकृता। 'जइ कज्जं कज्जइ'त्ति यदि तैर्धर्मास्तिकायादिभिः कार्यं स्वकीयं क्रियते तदा तेन कार्येण तान् जानीमः पश्यामः, अवगच्छाम इत्यर्थः, धूमेनाग्निरिव, अथ तैः कार्यं न क्रियते तदा न जानीमो न पश्यामः, अयमभिप्रायः-कार्यादिलिङ्गद्वारेणैवार्वाग्दृशामतीन्द्रियपदार्थानामवगमः स्यात्, न च धर्मास्तिकायादीनामसत्प्रतीतं किञ्चित् कार्यादिलिङ्गं दृश्यते इति तदभावात् तन्नो जानीम एव वयमिति, अथ मद्दुकं धर्मास्तिकायाद्यपरिज्ञानवन्तमुपालम्भयितुं यत्ते प्राहुः तदाह-'केस णं'ति क एष त्वं मद्दुक! श्रमणोपासकानां मध्ये भवसि यस्त्वमेनमर्थं श्रमणोपासकज्ञेयं धर्मास्तिकायाद्यस्तित्वलक्षणं न जानासि न पश्यसि?, न कश्चित् त्वमित्यर्थः, एवमुपालब्धः सन्नसौ यत्तैरदृश्यमानत्वेन धर्मास्तिकायाद्यसम्भव उक्तः तद्विघटनेन तान् प्रतिहन्तुमिदमाह-'घाणसहगए'इत्यादि, 'सुट्ठु णं'ति सुष्ठु त्वं मद्दुक! येन त्वया अस्तिकायानजानता न जानीम इत्युक्तं, अथ च अजानन्नपि यदि जानीम

इत्यमणिप्यस्तदाऽऽशातनाकारकोऽर्हदादीनां अभविष्यस्त्वमिति। 'तेसिं वोंदीणं अंतरं'ति (सू. ६२६) तेषां विकुर्वितवपुषां अन्तराणि, 'एवं जहा अट्ठमसए'इत्यादि, तच्चेदं—'पाएण वा अंगुलियाए वा सलागाए वा' इत्यादिना 'आलिहमाणे वा विलिहमाणे वा अगणिकाएण वा डहमाणे तेसिं जीवपदेसाणं आबाहं वा करेइ छविच्छेयं वा उप्पाएइ ?, गो०! नो इणट्ठे समट्ठे', 'जण्णं देवाणं तणं वा'त्ति (सू. ६२७) इह च यद्देवानां तृणाद्यपि प्रहरणीस्यात् तदचिन्त्यपुण्यवशात् सुभूमस्य स्थालवत् 'णिच्चविउव्वियाइं'न्ति असुराणां तु यन्नित्यविकुर्वितानि शस्त्राणि स्युः तद् देवापेक्षया तेषाममहत्तरपुण्यत्वात्, तथापि नृणामिवावगन्तव्यं। 'वीईवएज्ज'त्ति (सू. ६२८) एकया दिशा व्यतिक्रामेत् 'नो चेव णं'ति नैव सर्वतः परिभ्रमेत्, तथाविधप्रयोजनाभावादिति सम्भाव्यते। 'अत्थि णं'ति (सू. ६२९) इह देवानां कर्मपुद्गलाः शुभा आयुस्सहचरतया वेदनीया अनन्तानन्ताः स्युः ततश्च भदन्त ! सन्ति ते देवा ये तेषामनन्तानन्तकर्मांशानां मध्यादनन्तान् कर्मांशान् जघन्येन कालस्याल्पतया एकेन वर्षशतेनोत्कर्षतस्तु पञ्चभिर्वर्षशतैः क्षपयन्तीत्यादि प्रश्नः, गोयमेत्याद्युत्तरं, तत्र व्यन्तरा अनन्तान् कर्मांशान् वर्षशतेनैकेन क्षपयन्ति, अनन्तानामपि तदीयपुद्गलानामल्पानुभागतया स्तोकेनैव कालेन क्षपयितुं शक्यत्वात् तथाविधाल्पस्नेहाहारवत्, तथा तावत एव कर्मांशान् असुरकुमारवर्जितभवनपतयो द्वाभ्यां क्षपयन्ति, तदीयपुद्गलानां व्यन्तरपुद्गलापेक्षया प्रकृष्टानुभावत्वेन बहुतरकालेन क्षपयितुं शक्यत्वात् स्निग्धतराहारवत्, एवमग्रेऽपि भाव्यमिति ॥ अष्टादशशते सप्तमः ॥

'पुरओ'त्ति (सू. ६४०) द्विधा अनन्तरान्तरा पार्श्वतः पृष्ठतश्चेत्यर्थः, 'पेहाए'त्ति प्रेक्ष्य २ 'रीयं'ति गतं 'रीयमाणस्स'त्ति कुर्वतः 'कुक्कुडपोयए' कुक्कुटडिम्भः 'वट्टापोय'त्ति वर्त्तकः पक्षी, 'कुलिंगच्छाए व'त्ति कीटिकासमः 'परियावज्जेज्ज'त्ति पर्या-

पद्येत–म्रियते, एवं जहा सत्तमसए इत्यादि अनेन यत्सूचितम् तस्यार्थलेश एवं–अथ केनार्थेन भदन्त ! एवमुच्यते–गौतम ! यस्य क्रोधादयो व्यवच्छिन्नाः स्युः तस्यैर्यापथिक्येव क्रिया स्यात् 'जाव अट्ठो निक्खित्तो'त्ति, 'से केणट्ठेणं' मित्यादि अनेन वाक्यनिर्गमनं यावदित्यर्थः। 'पेच्चेह'त्ति आक्रमथ 'कायं व'त्ति देहं प्रतीत्य, व्रजाम इति योगः, देहश्चेद् गमनशक्तः स्यात् देहेन न अन्यथा, शकटादिनेत्यर्थः, 'जोयं व'त्ति योगं–संयमव्यापाररूपं ज्ञानाद्युपष्टम्भहेतुभिक्षाटनादि, न तं विनेत्यर्थः, 'दिस्स २'त्ति प्रेक्ष्य २ 'पदिस्स' पदिस्सत्ति प्रकर्षेण दृष्ट्वा ॥ 'छउमत्थे'त्ति (सू. ६४२) छद्मस्थो निरतिशयो ग्राह्य इति, 'जाणइ न पासइ'त्ति श्रुतोपयुक्तः श्रुतज्ञानी श्रुतेर्दर्शनाभावात्, एवं चतुर्भङ्गी ज्ञेया, अनन्तप्रदेशिकस्कन्धसूत्रे ४ भङ्गाः, जानाति स्पर्शनादिभिः पश्यति च चक्षुषेत्येकः, अन्यो जानाति स्पर्शनादिना न पश्येच्चक्षुषोऽभावात् इति द्वितीयः, अन्यो न जानाति स्पर्शाद्यगोचरत्वात् पश्येच्चक्षुषा इति तृतीयः, अन्यो न जानाति न पश्येच्चक्षुषोऽविषयत्वात् इति ४। अथ छद्मस्थाधिकारात् छद्मस्थभूताधोऽवधिकपरमाधोऽवधिकसूत्रे, परमाधोऽवधिकश्चावश्यमन्तर्मुहूर्तेन केवली स्यात् इति केवलिसूत्रं, 'सागारे'त्ति साकारं–विशेषग्रहणरूपं 'से' तस्य परमाधोऽवधिकस्य तदा ज्ञानं स्यात्, तद्विपर्ययभूतं च दर्शनं अतः परस्परविरुद्धयोरेकसमये नास्ति सम्भवः ॥

॥ १८ शते अष्टमः ॥

'भवियदव्वनेरइय'त्ति (सू. ६४३) द्रव्यभूता नारका द्रव्यनारकाः ते च भूतनारकपर्यायतयाऽपि स्युरिति भव्यशब्देन विशेषिताः, भव्याश्च ते नारकाश्चेति विग्रहः, ते चैकभविकबद्धायुष्काभिमुखनामगोत्रभेदाः स्युरिति। 'अंतोमुहुत्तं'ति संज्ञिनमसंज्ञिनं वा नरकगामिनमन्तर्मुहूर्तमपेक्ष्यान्तर्मुहूर्तस्थितिरुक्ता, 'पुव्वकोडि'त्ति मनुष्यं पञ्चेन्द्रियतिर्यञ्चं वाऽऽश्रित्येति, भव्यद्रव्या-

गुणर्दीनामपि जघन्या स्थितिरित्थमेव उत्कृष्टा तु 'तिण्णि पलिओवमाइं'ति उत्तरकुर्वादिमिथुनकनरादीनाश्रित्योक्ता, यतस्ते मृता देवेषूत्पद्यन्त इति, भव्यद्रव्यपृथ्वीकायिकस्य 'साइरेगाइं दो सागरोवमाइं'ति ईशानदेवमाश्रित्योक्ता. द्रव्यतेजसो द्रव्यवायोश्च 'जहा नेरइयस्स'त्ति अन्तर्मुहूर्त्तमेका अन्या च पूर्वकोटी, देवादीनां मिथुनकानां च तत्र तेजोवाय्वोरुत्पादाभावात्, तथा पञ्चेन्द्रियतिरश्चः 'उक्कोसेणं तेत्तीसं'ति सप्तमपृथ्वीनारकापेक्षयोक्तमिति ॥ १८ शते नवमः ॥

इह च साधोः क्षुरधारादिप्रवेशो वैक्रियलब्धिसामर्थ्यात् ज्ञेयः 'पंचमसए'त्ति (सू. ६४४) इत्यादि यदुक्तं तदिदम्-'अणगारे णं भंते ! भावियप्पा अगणिकायस्स मज्झंमज्झेणं वीइवइज्जा, से णं तत्थ झियाएज्जा ?, 'नो इणट्ठे'त्ति 'नो खलु तत्थ स कमइ'त्ति इत्यादि ॥ 'वाउयाएणं फुडे'त्ति (सू. ६४५) परमाणुपुद्गलो वायुकायेन स्पृष्टो-व्याप्तो मध्ये क्षिप्त इति, 'नो वा याए'त्ति नो वायुकायः परमाणुपुद्गलेन स्पृष्टः, वायोर्महत्त्वाद् अणोश्च निष्प्रदेशत्वेनातिसूक्ष्मतया व्यापकत्वाभावादिति 'अणंत पसिए णं'ति अनन्तप्रदेशिकस्कन्धो वायुना व्याप्तः स्यात्, सूक्ष्मत्वात् तस्य, वायुः पुनरनन्तप्रदेशिकस्कन्धेन स्याद् व्याप्तः, स व्याप्तः, कथं ?, यदा वायुस्कन्धापेक्षया महानसौ स्यात् तदा वायुस्तेन व्याप्तः, अन्यथा तु नेति, 'वत्थी'त्ति बस्तिर्दृतिर्वा व व्याप्तः स्यात् सामस्त्येन तद्विवरपूरणात्, नो वायुर्वस्तिना स्पृष्टः, वस्तेर्वायोः परित एव भावादिति ॥ 'अण्णमण्णबद्धा' (सू. ६४६) गाढश्लेषतः 'पुट्ठाइं'ति अगाढाश्लेषतः यावत्करणात् 'अण्णमण्णओगाढाइं'ति एकक्षेत्राश्रितानि इति दृश्यं, ' ण्णमण्णघड'त्ति परस्परसमुदायतया ॥ 'जत्त'त्ति (सू. ६४७) संयमव्यापारः 'जवणिज्जं'ति यापनीयमिन्द्रियादिवश्यता मोक्षहेतुर्धर्मः, 'फासुयविहारो' निर्जीव आश्रयः 'आवस्सय'त्ति षड्विधमावश्यकं, एतेषु च यद्यपि भगवतो न किञ्चित्क

मस्ति तथापि तत्फलसद्भावात् तदस्तीत्यवगन्तव्यं, तेषु तपस्संयमादिषु 'जयण'ति प्रवृत्तिः 'इंदियजवणिज्जं'ति इन्द्रिययापनीयं–वश्यत्वं 'नोइंदिय'त्ति नोइन्द्रिययापनीयं इत्यत्र नोशब्दस्य मिश्रवचनत्वात् इन्द्रियसहचरिताः कषायाः 'सरिसव'त्ति प्राकृतत्वात् सदृशवयसः, अन्यत्र सर्षपाः, 'दव्वमास'त्ति द्रव्यमाषाः 'कालमास'त्ति कालरूपा मासाः 'कुलत्थ'त्ति कुलस्थाः–कुलीनाः, अन्यत्र धान्यविशेषाः अथवा कुलाङ्गना वा, 'कुलकण्णय'त्ति कुलकन्यकाः कुलमातृकाः 'कुलवहुय'त्ति कुलवधूका इति त्रिविधाः। 'एगे भव'न्ति (सू. ६५८) एको भवान् इत्येकत्वस्वीकारे भगवताऽऽत्मनः कृते श्रोत्रादिविज्ञानानामवयवानां चात्मनोऽनेकतोपलब्धित एकत्वं दूषयिष्यामि, 'दुवे'त्ति द्वौ भवानिति द्वित्वाङ्गीकारे अहमेकत्वविशिष्टार्थस्य द्वित्वविरोधेन द्वित्वं दूषयिष्यामि, 'अक्खए'त्ति इत्यादिपदत्रयेण नित्यात्मपक्षः पर्यनुयुक्तः, 'अणेगभूय'त्ति अनेके भूता–अतीता भावाः, सत्ताः परिणामा वा भव्याश्च भाविनो यस्य स तथा, अनेन अतीतभविष्यत्सत्ताप्रश्नेन अनित्यपक्षः पर्यनुयुक्तः, एकतरपरिग्रहे तस्यैव दूषणायेति, ततो भगवता स्याद्वादमतेन तस्योत्तरमदायि–'एगेऽवि अहं' जीवद्रव्येण, नतु प्रदेशार्थतया, 'नाणदंसणट्ठयाए दुवे'त्ति न चैकस्य स्वभावभेदो न दृश्यते, यथैको देवदत्तादिः पुत्रत्वपितृत्वादिभावाननेकान् लभते तथा ज्ञानदर्शनार्थतयाऽहं द्विरूपः, अक्षय्यहं सर्वथा प्रदेशानां क्षयाभावात्, एवमव्ययोऽप्यहं ज्ञानादीनामव्ययत्वात्, अवस्थितोऽप्यहं असङ्ख्येयप्रदेशतो, नित्योऽप्यहं 'उवओगट्ठयाए'त्ति विविधानुपयोगानाश्रित्य अनेकभूतभावभविकोऽप्यहं, अतीतानागतकालयोरनेकविषयबोधानामात्मनः कथञ्चिदभिन्नानां भूतत्वाद् भावित्वाच्चानित्यपक्षोऽपि न दोषाय, 'जहा रायप्पसेणइज्जे'त्ति यथा राजप्रश्नीये 'चित्तो'त्ति अनेन यत्सूचितं तस्यार्थलेश एवं, यथा राजेश्वरादयस्त्यक्त्वा हिरण्यादि साधुत्वं प्रतिपद्यन्ते न तथा शक्नोम्यहं प्रव्रजितुं इतीच्छाम्यहं

अणुव्रतादि द्वादशविधं गृहिधर्मं भगवदन्तिके प्रतिपत्तुं ॥ १८ शते दशमः ॥ अष्टादशशतं वृत्तितः सम्पूर्णम् ॥

अथैकोनविंशतितममारभ्यते–उद्देशकसङ्ग्रहगाथामाह–'लेस्से'ति (*८१) लेश्योद्देशकः २ 'गब्भ'त्ति गर्भवाच्यः २ 'पुढवि'त्ति पृथ्वीवाच्यः ३ 'महासव'त्ति नारका महाश्रवा महाक्रिया इत्यादि ४ 'चरम'त्ति चरमेभ्योऽल्पस्थितिभ्यो नारकादिभ्यः परमा महास्थितयो महाकर्मतरा इत्यादि वाच्यः ५, 'दीव'त्ति द्वीपाद्यर्थः ६ 'भवणा य'त्ति भवनाद्यर्थः ७, 'निव्वत्ति'त्ति निर्वृत्तिः–निष्पत्तिः शरीरादितदर्थः ८, 'करण'त्ति करणार्थः ९ 'वणचरसुरा य'त्ति वनचरसुरा–व्यन्तरदेवास्तदर्थो दशमः १०, 'चउत्थो'त्ति (सू. ६४९) प्रज्ञापनालेश्यापदस्य सप्तदशस्य चतुर्थ उद्देशकोऽत्र भणितव्यः, स चैवं–'कण्हलेस्सा जाव सुक्कलेस्से'त्यादिरिति ॥ १९ शते प्रथमः ॥

'गब्भ'त्ति (सू. ६५०) प्रज्ञापनासप्तदशपदस्य षष्ठोद्देशको गर्भसूत्रोपलक्षितो भणितव्यः, स चायम्–कण्हलेस्से णं भंते ! मणुस्से कण्हलेस्सं गब्भं जाणेज्जा ?, हंता ! जाणेज्जा । कण्हलेस्से णं भंते ! मणुस्से नीललेस्सं गब्भं जाणेज्जा ?, हंता ! जाणेज्जा' इत्यादि ॥ १९ शते द्वितीयः ॥

तृतीये द्वारगाथामाह–'सिय १ लेस २ दिट्ठि ३ नाणे ४ जोगु ५ वओगे ६ तहा किमाहारे ७ । पाणाइवाय ८ उप्पा ९ ठिई १० समुग्घाय ११ उव्वट्टी १२ ॥१॥"ति, तत्र स्याद्द्वारे–'सिय'त्ति (सू. ६५१) स्याद्–भवेदयमर्थः, अथवा पृथ्वीकायिकाः प्रत्येकं शरीरं बध्नन्तीति सिद्धं, किंतु 'सिय'त्ति स्यात्–कदाचित् 'जाव'त्ति यावत्करणात् द्वौ वा त्रयो वा चत्वारः पञ्च पृथ्वीकायिका

जीवाः 'एगयउ'त्ति एकतः–एकीभूय, संयुज्येत्यर्थः, 'साहारण'त्ति बहूनां सामान्यशरीरं बध्नन्ति आदितस्तत्प्रायोग्यपुद्गलग्र-हणतः 'आहारेंति'त्ति उत्पत्तिसमय एव सामान्याहारग्रहणतः शरीरं वा 'बंधं'त्ति आहारितपरिणामितपुद्गलैः शरीरस्य पूर्वब-न्धापेक्षया विशेषतो बन्धं कुर्युरित्यर्थः, 'नो इणमट्ठे'त्ति यतः पृथ्वीकायिकाः प्रत्येकाहाराः प्रत्येकपरिणामाश्चातः प्रत्येकं शरीरं बध्नन्ति, तत्प्रायोग्यपुद्गलग्रहणतः, ततश्च प्राग्वदिति। किमाहारद्वारे 'पढमुद्देसए'त्ति एवं, यथा प्रज्ञापनाऽष्टाविंशतितमपदस्या-हाराख्यस्य प्रथमोद्देशके तथेह ज्ञेयं,'चिज्जंति' तत्पुद्गलजातं शरीरेन्द्रियतया परिणमंतीत्यर्थः,'चिण्णे वा से'त्ति चीर्णं वाऽऽहारितं 'से' तत्पुद्गलजातं 'उद्दाइ'त्ति अपद्रवति–विनश्यति मलवत् 'पलिसप्पइ व'त्ति परि–समन्तात् सर्पति–गच्छति तत् परिण-मति 'सण्णाइ'त्ति संज्ञाव्यावहारिकमेति 'पण्णाइ'त्ति प्रज्ञा सूक्ष्मार्थविषया मतिरेव। प्राणातिपातादिद्वारे–'पाणाइवाए उव-क्खाइज्जंति' प्राणातिपाते स्थिता इति शेषः, प्राणातिपातवृत्तय इत्यर्थः, उपाख्यायन्ते–अभिधीयन्ते, यच्चेह वचनाद्यभावेऽपि पृथ्वी-कायिकानां मृषावादादिभिरुपाख्यानं तन्मृषावादाद्यविरतिमाश्रित्योच्यत इति। अथ हन्तव्यादिजीवानां का वार्त्तेत्याह–'जेसिं पिय णं'ति येषामपि जीवानामतिपातादिविषयभूतानां प्रस्तावात् पृथ्वीकायिकानामेव सम्बन्धिना अतिपातादिना 'ते जीव'त्ति तेऽतिपातादिकारिणो जीवाः 'एवमाहिज्जं'ति अतिपातादिकारिण एते इत्याख्यायन्ते, तेषामपि जीवानामतिपातादिप्रवृत्तानां, न केवलं घातकानां, 'णो विण्णाए'त्ति नो–नैव विज्ञातं नानात्वं–भेदो यदुत वयं वध्यादयः एते तु वधकादय इति, अमनस्क-त्वात्तेषामिति। उत्पादद्वारे 'जहा वक्कंतीए'त्ति इह च व्युत्क्रान्तिः प्रज्ञापनापष्ठं पदं, तच्चेदं–'किं तिरि० मणु० देवेहिंतो उव-ज्जंति?, गो०! नो नेरइएहिंतो० तिरिमणुदेवेहिंतो उववज्जंति। समुद्घातद्वारे-'समोहयावि'त्ति समुपहताः-कृतसमुद्घाताः,

कृतदण्डा इत्यर्थः, 'असमोहय'त्ति अकृतसमुद्घाताः, दण्डादुपरता वा । उद्वर्त्तनाद्वारे 'उव्वट्टणा जहा वक्कंतीए'त्ति 'किं नेरइएसु, गो०! नो नेरइएसु, तिरियमणुस्सेसु उव्वट्टंति, नो देवेसु उव्वट्टंति, तेजस्कायिकदण्डके न उव्वट्टइ उव्वट्टणा य जहा पण्णवणाए'त्ति, इह स्याद्वादादिद्वाराणि पृथ्वीकायिकदण्डकवद्व्याख्यानि, उत्पादादिषु तु विशेषः प्रज्ञापनायामिवेहार्थतः, स एवं ज्ञेयः-तेषामुपपातस्तिर्यङ्मनुष्येभ्य एव, स्थितिरुत्कृष्टाऽहोरात्रत्रयं, उद्वृत्तास्तु ते तिर्यक्षु एवोत्पद्यन्ते, यथोत्पादादिषु विशेषस्तथा लेश्यायामपि, यतस्तेजसोऽप्रशस्तलेश्या एव, पृथ्वीकायिकास्तु आद्यचतुर्लेश्या एव, यच्चेदमिह न सूचितं तद्विचित्रत्वात्सूत्रगतेरिति, वायुकाये ४ समुद्घाताः, पृथ्व्यादीनामाद्यास्त्रयः, वायूनां तु वेदना १ कषाय २ मारणान्तिक ३ वैक्रियलक्षणाः ४, तेषां वैक्रियसम्भवात्, वनस्पतिसूत्रे 'नवरं आहारो नियमं छद्दिसिं'ति तत्रावगम्यते, लोकान्तनिष्कुटान्याश्रित्य त्रिदिगादेरप्याहारस्य तेषां सम्भवात्, बादरनिगोदान् वाऽऽश्रित्येदमवसेयं, तेषां पृथ्व्याश्रितत्वेन षड्दिगाहारस्यैव सम्भवादिति ॥ एतेषामेवावगाहनामाह-'एयस्स णं'मित्यादि (सू. ६५२) पृथिव्यप्तेजोवायुनिगोदाः ५ प्रत्येकं बादरसूक्ष्मभेदादेते १० एकादशश्च प्रत्येकवनस्पतिः, एते प्रत्येकं पर्याप्तापर्याप्तभेदाः २२, तेऽपि जघन्योत्कृष्टावगाहना इति ४४ जीवभेदेषु स्तोकादिपदन्यासेनावगाहना स्थाप्येया, स्थापना चेयम्-पृथ्वीकायस्याधः सूक्ष्मबादरपदे, तयोरधः प्रत्येकं पर्याप्तापर्याप्तपदे, तेषामधः प्रत्येकं जघन्योत्कृष्टा चावगाहना, एवमप्कायादयोऽपि स्थाप्याः, प्रत्येकवनस्पतेश्चाधः पर्याप्तापर्याप्तपदद्वयं, तयोरधः प्रत्येकं जघन्योत्कृष्टावगाहना, इह पृथ्व्यादीनामङ्गुलासङ्ख्येयभागमात्रावगाहनात्वेऽपीतरेतरापेक्षयाऽसङ्ख्येयभेदत्वादसङ्ख्येयगुणत्वं न विरुध्यते, तेनाङ्गुलासङ्ख्येयभागमात्रावगाहना ज्ञेया पृथ्व्यादीनां, प्रत्येकवनस्पतीनां तूत्कृष्टावगाहना योजनसहस्रं समधिकमवगन्तव्येति । 'सव्वसु-

हुमे'त्ति (सू. ६५३) सर्वसूक्ष्मः यथा वायुः सूक्ष्मः तेज.सूक्ष्मं, अतः 'सव्वसुहुमतराए'त्ति सर्वेषां मध्येऽतिशयेन सूक्ष्मः सूक्ष्मतरक इति, 'अणंताणं सुहुमवणस्सइकाइआणं'ति इह यावद्ग्रहणेनासङ्ख्यातानि शरीराणि ग्राह्याणि, अनन्तानामपि वनस्पतीनामेकाद्यसङ्ख्येयान्तशरीरत्वाद् अनन्तानां च तच्छरीराणामभावात्, प्राक् च सूक्ष्मवनस्पत्यवगाहनापेक्षया सूक्ष्मःवाय्ववगाहनाया असङ्ख्यातगुणत्वेनोक्तत्वादिति ॥ 'वण्णगपेसिय'त्ति (सू. ६५४) वर्णकपेपिका-चंदनपेपिका 'जुगवं'ति सुपमदुष्पमादिकालवती 'चम्मेट्ठदुहण'त्ति चर्मेष्टिकादीनि व्यायामोपकरणानि तैः समाहतानि व्यायामप्रवृत्तावत एव निचितानि-घनीभूतानि गात्राणि-अङ्गानि यत्र स तादृग् कायो यस्याः सा, एतद्विशेपणं स्त्रिया अभावात् न भण्यते, 'वइरामईए'त्ति वज्रमय्यां 'सण्हकरणीए'त्ति सूक्ष्मकरण्यां-पेपणशिलायां 'वट्टवरएणं'त्ति लोष्टकेन 'जतुगोलासमाणं'ति डिंभक्रीडनकजतुगोलकप्रमाणं, न महान्तमित्यर्थः, 'पडिसंहरियाए'त्ति शिलायाः शिलापुत्रकाच्च संहरणं-पिण्डीकरणं, प्रतिसङ्क्षेपणं तु पततः संरक्षणं, 'आलिद्ध'त्ति आदिग्धाः शिलायां लोष्टके वा लग्नाः 'संघट्टिअ'त्ति सङ्घर्पिताः-परितापिताः पीडिता अपद्रविता मारिताः 'पिट्ठ'त्ति पिष्टाः ॥ १९ शते तृतीयः ॥

'सिय भंते'त्ति (सू.६५५) स्युः-भवेयुः नारका महाश्रवाः बहुकर्मबन्धत्वात् महाक्रियाः कायिक्यादिक्रियायोगमहत्त्वात्, चतुर्णां पदानां १६ भङ्गाः स्युः, उक्तं च-"बीएण उ नेरइया हुंति चउत्थेण सुरगणा सव्वे। ओरालसरीरा पुण सव्वेहिं पएहिं भइयव्वा ॥१॥"त्ति, एतेपु नारकाणां द्वितीयो भेदोऽनुज्ञातः, तेपामाश्रवादित्रयस्य महत्त्वात् कर्म्मनिर्जरायास्त्वल्पत्वात्, शेपाणां तु प्रतिपेधः, असुरादिदेवेपु चतुर्थो भङ्गोऽनुज्ञातः, ते हि महाश्रवा महाक्रियाश्चाविरतियुक्तत्वात् अल्पवेदनाश्च प्रायेण सातोदयसम्भवात्, अल्प-

निरंगथ प्रायोऽशुभपरिमाणत्वात्, शेषा निषेध्याः, पृथ्व्यादीनां ४ पदानि, तत्परिणतेर्विचित्रत्वात् सव्यभिचाराणीति ॥ ॥ १९ शते चतुर्थः ॥

'चरमाचि'त्ति (सू. ६५६) अल्पस्थितयः 'ठिइं पडुच्च'त्ति येषां नारकाणां महती स्थितिस्ते इतरेभ्यो महाकर्मतराः अशुभकर्मापेक्षया स्युः, येषां त्वल्पा स्थितिस्ते इतरेभ्योऽल्पकर्माणः स्युरिति, 'विवरीयं'ति प्रागुक्तापेक्षया विपरीतं वाच्यं, तदिदम्—से नूणं भंते! चरमासुरकुमारेहिंतो परमासुरकुमारा अप्पकम्मतरा चेव अप्पकिरियतरा चेव इत्यादि, अल्पकर्मत्वमशुभकर्मापेक्षं अल्पक्रियत्वं कायिक्यादिक्रियापेक्षं, अल्पाश्रवत्वं तु जघन्यकर्मबन्धापेक्षं अल्पवेदनत्वं पीडाभावापेक्षं इति गम्यं। 'पुढविकाइए'त्यादि, औदारिकशरीरा अल्पस्थितिकेभ्यो महास्थितयो महाकर्मादयः स्युर्महास्थितिकत्वादेवेति, वैमानिका अल्पवेदनाः॥ 'णिदाय'त्ति (सू. ६५७) नियतं दानं—शुद्धिर्जीवस्य, 'दैप् शोधने' इति वचनात्, निदा ज्ञानमाभोग इत्यर्थः, तद्युक्ता वेदनाऽपि निदा, आभोगवतीत्यर्थः, चशब्दः समुच्चये, 'अणिदा य'त्ति अनाभोगवती जहा पण्णवणाएत्ति तदिदं—गो०! णिदायंपि अणिदायंपि वेयणं वेदेंति ॥ १९ शते पञ्चमः ॥

'जोइसमंडिउद्देसग'त्ति (सू. ६५८) ज्योतिष्कमण्डिकोद्देशकश्चैवम्—'जंबुद्दीवे णं भंते! कइ चंदा पभासिंसु पभासंति पभासिस्संति? कइ सूरिया तवइंसु ३' इत्यादि, कियद्दूरं वाच्यं, 'जाव परिणामो'त्ति, स चायम्—'दीवसमुद्दा णं भंते! किं पुढविपरिणामा पण्णत्ते'त्यादि 'जीवउववाओ'त्ति द्वीपसमुद्रेषु जीवोपपातो वाच्यः, स चायम्—'दीवसमुद्देसु णं भंते! सव्वे पाणा ४ पुढविकाइयत्ताए ६ उववण्णपुव्वा?, हंता! असइं अदुवा अणंतखुत्तो'त्ति, शेषं सूत्रलिखितमेवास्ते ॥ १९ शते षष्ठः ॥

'भोमेज्ज'त्ति (सू. ६५९) भौमेयकानि-भूमेरन्तर्भवानि एवंविधानि नगराणि 'सव्वफालियमयं'त्ति सर्वस्फटिकमयाः ॥ १९. शते सप्तमः ॥

'जीवनिव्वत्ति'त्ति (सू. ६६०) जीवस्यैकेन्द्रियादितया निर्वृत्तिर्जीवनिर्वृत्तिः 'जहा वड्डगबंधो'त्ति यथा महद्बन्धाधिकारेऽष्टमशतनवमोद्देशकोक्ते तेजसः शरीरस्य बन्ध उक्त एवमिह निर्वृत्तिर्वाच्या, सा च तत एव दृश्येति, 'कसायनिव्वत्ते'त्ति कषायवेदनीयपुद्गलनिर्वर्त्तनं 'जस्स जं संठाणं'ति अप्कायिकानां स्तिबुकसंस्थानं तेजसां सूचिकलापसंस्थानं वायूनां पताकासंस्थानं वनस्पतीनां नानाकारसंस्थानं विकलेन्द्रियाणां हुण्डं पञ्चेन्द्रियतिर्यग्मनुष्याणां ६ व्यन्तरादीनां समचतुरस्रमिति ॥ १९. शतेऽष्टमः ॥

'दव्वकरणे'त्ति (सू. ६६१) द्रव्यरूपं करणं २ दात्रादि द्रव्यस्य वा द्रव्येण शलाकादिना कटादेः करणं स्वाध्यायादेः, क्षेत्रकरणं 'कालकरणे'त्ति कालस्य काले कालेन वा करणं कालकरणं, 'भवकरणे'त्ति भवो-नारकादिः स एव करणं भवकरणं, एवं भावकरणमपि, शेषं सुगमं ॥ १९. शते नवमः ॥

नवरं 'जाव अप्पड्डियं' (सू. ६६२) यावत्करणादिदं दृश्यं-एएसि णं भंते! वाणमंतराणं कण्हलेसा जाव तेउलेसाण य कयरे कयरेहिंतो अप्पड्डि जाव महिड्डिया वा?, गो०! कण्हलेसेहिंतो नीललेसा महिड्डिया, जाव सव्वमहिड्डिया तेउलेस्सेति ॥ १९ शते दशमः ॥ एकोनविंशतितमं वृत्तितः सम्पूर्णम् ॥

---

अथ विंशतितममारभ्यते-'बेंदिय'त्ति (*८६) द्वीन्द्रियादिवाच्यः, 'आगासे'त्ति आकाशाद्यर्थः २, 'पाणवहे'त्ति

प्राणातिपातादयः ३, 'उवचए'त्ति श्रोत्रेन्द्रियाद्युपचयार्थः ४,'परमाणु'त्ति परमाणुरूपः ५,'अंतर'त्ति रत्नप्रभाशर्कराप्रभाद्यन्तरालवाच्यः ६ 'बंधे'त्ति जीवप्रयोगादिबन्धार्थः ७ 'भूमि'त्ति कर्माकर्मभूम्यादिवाच्यः ८, 'चारण'त्ति चारणश्रमणादिवाच्यः 'सोवक्कमा जीव'त्ति सोपक्रमायुषो निरुपक्रमायुषश्च जीवा दशमे वाच्याः ॥ 'सिय'त्ति (सू. ६६३) स्यात्–कदाचित्, न सर्वदा, 'एगयओ'त्ति एकतः–एकीभूय, संयुज्य इत्यर्थः, 'साहारणसरीरमन्धन्धि'त्ति साधारणशरीरमनेकजीवसामान्यं बध्नन्ति, प्रथमतया तत्प्रायोग्यपुद्गलग्रहणतः, 'पण्णवणाए'त्ति त्रीन्द्रियाणां उत्कृष्टा ४९ दिनानि चतुरिन्द्रियाणां ६ मासाः, द्वयोर्जघन्या अन्तर्मुहूर्तं,'चत्तारि णाणाइ'न्ति पञ्चेन्द्रियाणां मत्यादि ४ ज्ञानानि, केवलमनिन्द्रियाणामेव,'अत्थेगइयाणं'ति संज्ञिनामित्यर्थः,'पाणाइवाए उवक्खाइज्जंति' असंयताः,'पाणाइ०'त्ति संयताः, 'जेसिंपिय णं'ति येषामपि जीवानां सम्बन्धिना प्राणातिपातादिना ते पञ्चेन्द्रिया जीवा एवमाख्यायन्ते यथा प्राणातिपातादिमन्त एते तेषामपि जीवानामस्त्ययमर्थो यदुत केषां संज्ञिनामित्यर्थो विज्ञानं प्रतीतं नानात्वं–भेदो यदुतैते वयं वध्यादयः एते तु वधकादयः इत्यस्ति, एकेषामसंज्ञिनामित्यर्थः, नो विज्ञानं नानात्वकरमिति ॥ २० शते प्रथमः ॥

'नवरं अभिलावो'त्ति (सू. ६६४) धम्मत्थिकाए णं भंते! इत्यादिरालापकसूत्रं, नवरं–केवलं लोयं चेव फुसित्ताणं चिट्ठइ एतस्य स्थाने लोअं चेव ओगाहित्ताणं चिट्ठइ इत्ययमभिलापो द्वितीयशतकोद्देशकात् दृश्यः 'अभिवयण'त्ति (सू. ६६५) अभिवचनानि–पर्यायशब्दा इत्यर्थः, 'धम्मे'त्ति जीवपुद्गलानां गतिधारणाद्धर्मः, एवं 'धम्मत्थिकाए'त्ति धर्मास्तिकायः–प्रदेशराशिः, एवं प्राणातिपातविरमणादीन्यपि वाच्यानि, 'जे यावण्णे'त्ति ये चान्येऽपि चारित्रधर्माभिधायकास्ते सर्वेऽपि धर्मा-

स्तिकायस्याभिवचनानि, नामानीत्यर्थः। 'अधम्मे'त्ति धर्मविपरीतोऽधर्मो–जीवपुद्गलानां स्थित्युपष्टम्भकारी, शेषं प्राग्वत्, 'नभ'त्ति न भाष्यत इति नभः, 'समे'त्ति निम्नोन्नतत्वाभावात्, 'विसम'त्ति दुर्गमत्वाद्विषमं 'खहे'त्ति खनने भुवो हनने च–त्यागे यत्स्यात्तत्खहं 'विह'त्ति विशेषेण हीयते–त्यज्यते तदिति विहायः 'वीइ'त्ति विवेचनाद्विविक्ततास्वभावत्वात् 'विवर'त्ति विगतवरणतया विवरं 'अंबर'न्ति अम्बेव–मातेव जननसाधर्म्यात् अम्बा–जलं तस्य राणाद्–दानान्निरुक्तितोऽम्बरं 'अंबरसे'त्ति अम्बा–प्राग्युक्तयुक्त्या जलं तद्रूपो रसो यस्मात्तदम्बरसं 'छिड्डे'त्ति छिद्रः छेदनस्यास्तित्वात् छिद्रमिति, 'सुसिरे'त्ति शुषेः–शोषस्य दानाच्छुषिरं 'मग्गे'त्ति पथिरूपत्वान्मार्गः, 'विमुह'त्ति मुखादेरभावाद्विमुखं, 'अद्दे'त्ति अद्यते–गम्यते अनेनेति अदः, 'एवं वियद्दे'त्ति स एव विशिष्टो ऽव्यदः, 'वोमो'त्ति विशेषेणावनात् 'वोमभायणे'त्ति विश्वस्याश्रयणाद्भाजनं 'अंतलिक्खे'त्ति अन्तः–मध्ये ईक्षा–दर्शनं यस्य तदन्तरीक्षं 'सामे'त्ति श्यामं 'उवासंतरे'त्ति अवकाशरूपमन्तरं अवकाशान्तरं अगमं गमनक्रियारहितत्वात् 'वेयाइ'त्ति वेदरूपत्वात् 'चेयाइ'त्ति चेता पुद्गलानां चयकारी 'जेय'त्ति जेता कर्मरिपूणां 'आय'त्ति आत्मा सततगामित्वात् 'रंगणे'त्ति रङ्गणं रागः तद्योगाद्रंगणः, 'हिंडए'त्ति हिण्डकत्वेन हिण्डकः, गमनशील इत्यर्थः, 'पोग्गल'त्ति पूरणाद् गलनाच्च वपुरादीनामिति पुद्गलाः, 'माणव'त्ति मा निषेधे नवः–प्रत्यग्रो मानवः अनादित्वात्, पुराण इत्यर्थः, 'कत्त'त्ति कर्त्ता कर्मणां, विकर्त्ता–विशेषतो विच्छेदकः कर्मणां 'जए'त्ति अतिशयगमनाज्जगत्, जननाज्जन्तुः 'जोणी'त्ति योनिरन्येषामुत्पादकत्वात् 'सयंभु'त्ति स्वयंभवनात् स्वयंभूः 'ससरीर'त्ति सह शरीरेणेति सशरीरी 'नायए'त्ति नायकः–कर्मणां नेता 'अंतरप्प'त्ति अन्तः–मध्यरूप आत्मा, न शरीररूप इत्यन्तरात्मेति॥ २० शते द्वितीयः॥

'नण्णत्थ आयाए परिणमंति'त्ति (सू. ६६६) नान्यत्रात्मनः परिणमन्ति, आत्मानं वर्जयित्वा नान्यत्र ते वर्त्तन्ते, आत्मपर्यायत्वादेषां, पर्यायिणा सह कथञ्चिदेकत्वादात्मरूपाः सर्वे एवैते, न मनोभिन्नत्वेन परिणमन्तीति भावः। 'एवं जहे'त्यादि-(सू. ६६७) नेदं सूचितम्-कतिरसं कतिफासं परिणमइ इत्यादि॥ २० शते तृतीयः॥

'इंदियउवचए'त्ति (सू. ६६८) यथा प्रज्ञापनापञ्चदशपदस्येन्द्रियपदस्य द्वितीयोद्देशकस्तथाऽयं वाच्यः, स चैवम्-सोइंदिय० चक्खिंदियउवचए घाणिंदियउव० एवं जिब्भिंदिय० फासिंदियउवचए' इत्यादि ॥ २० शते चतुर्थः ॥

अथ परमाणुस्वरूपमुच्यते-एगवण्णे'त्ति (सू. ६६९) कालादिवर्णानामन्यतरयोगात्, एवं गन्धादिष्वपि वाच्यं 'दुफासे'त्ति शीतोष्णस्निग्धरूक्षाणामन्यतराविरुद्धस्य द्वितयस्य योगात् द्विस्पर्शः, तत्र भेदाः ४, शीतस्य स्निग्धेन रूक्षेण च द्वौ, एवमुष्णस्यापि द्वौ इति चत्वारः, शेषास्तु स्पर्शा बादराणामेव स्युः,'दुपएसिए ण'मित्यादि, द्विप्रदेशिकस्यैकवर्णता प्रदेशद्वयस्याप्येकवर्णपरिणामे, तत्र कालादिभेदेन पञ्च विकल्पाः, द्विवर्णता तु प्रतिप्रदेशं वर्णभेदात्, तत्र द्विकसंयोगजाता दश ते सूत्रसिद्धा एव, एवं गन्धरसेष्वपि, नवरं गन्धे एकत्वे द्वौ द्विकयोगे त्वेकः, रसेष्वेकत्वे पञ्च द्वित्वे तु १०, स्पर्शेषु तु द्विस्पर्शतायां चत्वारः प्रागुक्ताः, 'जइ तिफासे'त्ति,'सव्वे सीए'त्ति प्रदेशद्वयमपि शीतं, तस्यैव द्वयस्य देश एक इत्यर्थः, स्निग्धः २ देशश्च रूक्षः ३ इत्येको भङ्गः सः, एवमन्येऽपि त्रयः सूत्रसिद्धा एव, चतुःस्पर्शे त्वेकः, एवं द्वि ४ त्रि ४ चतुःस्पर्शेषु १ मीलनात् सर्वे स्पर्शभङ्गा मीलिता ९,'तिपएसिए' 'सिय कालए'त्ति त्रयाणामपि प्रदेशानां कालत्वादित्वेनैकवर्णत्वे पञ्च भेदाः द्विवर्णतायां चैकः प्रदेशः कालः प्रदेशद्वयं तु तथाविधैकप्रदेशावगाहादिकारणमपेक्ष्य एकत्वेन विवक्षितमिति स्यान्नील इत्येकः, अथवा स्यात्कालस्तथैव प्रदेशद्वयं तु भिन्नप्र-

देशावगाहादिना कारणेन भेदेन विवक्षितमतो नीलकाविति व्यपदिष्टमिति द्वितीयः, अथ द्वौ कालकावेकस्तु नील इति तृतीयः, एवमेकत्र द्विकयोगत्रयाणां भावाद्दशसु द्विकयोगेषु ३० भेदाः, एते सूत्रसिद्धा एव, त्रिवर्णतायां तु एकवचनस्यैव सम्भवात् दश त्रिकसंयोगाः स्युरिति, गन्धे त्वेकगंधे द्वौ द्विगन्धतायां तु एकत्वानेकत्वाभ्यां प्राग्वत् त्रयं 'जइ दुफासे'त्ति समुदितस्य प्रदेशत्रयस्य द्विस्पर्शतायां द्विप्रदेशिकवच्चत्वारः, त्रिस्पर्शतायां तु सर्वः शीतः, प्रदेशत्रिकस्यापि शीतत्वात्, देशश्च स्निग्ध एकप्रदेशात्मको, देशो रूक्षो द्विप्रदेशात्मको, द्वयोरपि तयोरेकप्रदेशावगाहादिनैकत्वेन विवक्षितत्वात्, एवं सर्वत्र इत्येको भङ्गः, तृतीयपदस्य बहुत्वे द्वितीयः, द्वितीयपदबहुत्वे तृतीयः, तदेवं सर्वशीतेन भङ्गत्रयं ३, एवं सर्वोष्णेनापि ३, एवं सर्वस्निग्धेनापि ३, एवं सर्वरूक्षेणापि

| | |
|---|---|
| ० | ० |
| ० | ० |

३, एवं सर्वे १२, चतुःस्पर्शतायां तु 'देसे सीए' इत्यादि एकवचनान्तपदचतुष्कः, आद्यस्थापना चेयं–अन्त्यपदस्य बहुत्वे २, स चैवं–द्वयरूपो देशः शीतः, एकरूपः उष्णः, पुनः शीतयोरेकः स्निग्धः द्वितीयश्चोष्णः, एतौ रूक्षाविति रूक्षपदे बहुत्वं, तृतीयस्तु बहुत्वरूपतृतीयपदः, स चैवं–एकरूपो देशः शीतः द्विरूपस्तूष्णः, तथा यः शीतः यश्चोष्णयोरेकस्तौ स्निग्धावित्येवं स्निग्धपदे बहुत्वं, यश्चैक उष्णः स रूक्षः, चतुर्थस्तु बहुत्वरूपद्वितीयपदः, स चैवं–स्निग्धरूपस्य द्वयस्यैकः शीतो यश्च तस्यैव द्वितीयोऽन्यश्चैको रूक्षः, एतावुष्णावित्युष्णपदे बहुत्वं, स्निग्धे तु द्वयोरेकप्रदेशाश्रितत्वादेकवचनं रूक्षे त्वेककत्वादेवेति, पञ्चमस्तु द्वितीयचतुर्थपदयोर्बहुत्वेन, स चैवं–एकः शीतः स्निग्धश्च, अन्यौ च पृथग्व्यवस्थितावुष्णौ रूक्षौ च इत्युष्णरूक्षयोर्बहुत्वं, षष्ठस्तु द्वितीयतृतीयपदयोर्बहुत्वे, स चैवम्–एकः शीतो रूक्षश्च, अन्यौ च पृथग्व्यवस्थितावुष्णौ स्निग्धौ चेत्युष्ण स्निग्धयोर्बहुत्वं, सप्तमो बहुत्वेनाद्यपदः, स चैवं–स्निग्धरूपस्य द्वयस्यैकोऽन्यश्चैकः एतौ द्वौ शीताविति बहुत्वमाद्यस्य, अष्टमस्तु बहुत्वादिनांतिमपदः, स चैवं–पृथक्स्थितयोः

शीतत्वे रूक्षत्वे च एकस्य चोष्णत्वे च स्निग्धत्वे च, नवमस्तु बहुत्वेनाद्यतृतीययोः, स चैवं—द्वयोर्भिन्नस्थितयोः शीतत्वे स्निग्धत्वे चैकस्य चोष्णत्वे रूक्षत्वे चेति 'पणवीसं भंग'त्ति द्वित्रिचतुःस्पर्शसम्बन्धिनां चतुर्द्वादशनवानां मीलनात् २५ भङ्गा इति। 'चउप्पएसिए णं'ति 'सिय कालए य नीलए य'त्ति द्वौ द्वावेकपरिणामपरिणतावितिकृत्वा स्यात्कालो नीलश्चेति १ अन्त्ययोरनेकपरिणामत्वे २ आद्ययोस्तृतीयः, उभयोश्चतुर्थः, स्थापना चैवम्, एवं दशसु द्विकसंयोगेषु प्रत्येकं चतुर्भङ्गीभावाच्चत्वारिंशद् भङ्गाः, 'जइ तिवण्णे'त्ति तत्राद्यः कालो द्वितीयो नीलः अन्त्ययोश्चैकपरिणामत्वात् लोहितकः १११ इत्येकः तृतीयस्यानेकपरिणामतया बहुत्वे द्वितीयः ११२ द्वितीयस्य १२१ तृतीयः आद्यस्य बहुत्वे चतुर्थः २११ एवमेते चत्वारो दशत्रिकसंयोगेषु स्युरिति जाताः ४०। 'जइ चउवण्णे'त्ति इह 'चतुवण्णे'त्ति इह चतुष्पदानां १६ भङ्गाः, इह पञ्चानां वर्णानां पंच चतुष्कसंयोगाः सूत्रे च सूत्रसिद्धा एव, 'सव्वे णउइ भंग'त्ति एकद्वित्रिचतुर्वर्णेषु ५। ४०। ४०। ५। एतावद्भंगभावान्नवतिस्ते स्युरिति। 'जइ एगगंधे'त्ति इत्यादि प्राग्वत 'जइ तिफासे'त्ति 'सव्वे सीए'त्ति चतुर्णां प्रदेशानां शीतपरिणामत्वात् ∷ 'देसे निद्धे'त्ति चतुर्णां मध्ये द्वयोरेकपरिणामयोः स्निग्धत्वात् १ 'देसे लुक्खे'त्ति तथैव द्वयो रूक्षत्वात् २ इत्येकः, द्वितीयस्तु तथैव, नवरं मिश्रपरिणामतया बहुवचनान्ततृतीयपदः, तृतीयस्तु बहुवचनान्तद्वितीयपदः, चतुर्थः पुनस्तथैव बहुत्वान्तद्वितीयतृतीयपदः, इत्येते सर्वशीते ४, एवं सर्वोष्णेन सर्वस्निग्धेन सर्वरूक्षेणेत्येवं जाताः १६, 'जइ चउफासे'त्ति तत्र 'देसे सीए'त्ति ∷ एकाकारप्रदेशद्वयलक्षणो देशः शीतः तथाभूत एवान्यो देश उष्णः, तथा य एव शीतः स एव स्निग्धः यश्चोष्णः स रूक्षः इत्येकः, चतुर्थपदस्य प्राग्वि बहुत्वान्तत्वे द्वितीयः, तृतीयस्य च तृतीयः, तृतीयचतुर्थयोर्बहुत्वे चतुर्थः, एवमेते १६, एषामानयनोपायगाथामाह—"अंत-

| | |
|---|---|
| १ | १ |
| १ | २ |
| २ | १ |
| २ | ७ |

लहुयस्स हेट्ठा गुरुयं ठावेह सेसमुवरिसमं। अंतं लहुएहिं पुणो पूरेज्जा भंगपत्थारे॥१॥" सङ्ख्याया अन्त्यलघुकस्य एकरूपस्य हेट्ठत्ति अधस्तात् गुरुकं द्वितयरूपमंकं स्थापयेत्, शेषमुपरितनाङ्कैः समं अन्त्यं—एकरूपैरंकै पूरयेत् भङ्गप्रस्तारे, स्थापना चेयम्। 'छत्तीसभंग'त्ति द्वित्रिचतुःस्पर्शेषु चतुःषोडशानां सम्भवात्, इह वृद्धगाथे—"वीसइमसउद्देसे चउप्पएसाइए चउप्फासे। एगबहुवयणमीसा, वीयाइया कहं भंगा?॥१॥ एकवचनबहुवचनमिश्रा द्वितीयतृतीयादयः कथं भंगाः स्युः?, यत्रैव पदे एकवचनं प्रयुक्तं तत्रैव बहुवचनं च प्रयुक्तं, एतच्च न स्यादितिकृत्वा विरोध उद्भावितः, अत्रोत्तरम्—"देसो देसा व मया दव्वखेत्तवसओ विवक्खाए। संघायभेयतदुभयभावाओ वा वयणकाले ॥२॥" अयमर्थः—देशो देशो वा इत्ययं निर्देशो न दुष्टः, एकानेकवर्णादिधर्मयुक्तद्रव्यवशेन एकानेकावगाहक्षेत्रवशेन वा देशस्यैकत्वानेकत्वविवक्षणात्, अथवा भणनप्रस्तावे सङ्घातविशेषभावेन भेदविशेषभावेन तदुभयवशेन वा तस्यैकत्वानेकत्वविवक्षणादेवेति। पञ्चप्रदेशिके 'जइ तिवण्णे'इत्यादि, त्रिषु पदेषु अष्टौ भङ्गाः, नवरमिह सप्तैव ग्राह्याः, पञ्चप्रदेशिके अष्टमस्यासम्भावात्, एवं च दशसु त्रिकसंयोगेषु सप्ततिरिति, 'जइ चउवण्णे' इत्यादि, इह चतुर्णां पदानां १६ भङ्गाः, तेषु चेह पञ्च सम्भविनः, ते च सूत्रसिद्धा एव, पंचसु वर्णेषु पञ्च चतुष्कसंयोगाः स्युः, तेषु चैषां प्रत्येकं भावात् भेदाः 'इयालं भंगसयं'ति पञ्चप्रदेशिके एकद्वित्रिचतुःपञ्चसंयोगजानां पञ्चचत्वारिंशत्सप्ततिपञ्चविंशत्येकसङ्ख्यानां भङ्गानां मीलनादेकोत्तरचत्वारिंशदधिकं भङ्गशतं स्यात्। 'छप्पएसिए णं'ति इह सर्वं पञ्चप्रदेशिकस्येव, नवरं वर्णत्रयेऽष्टौ भङ्गा वाच्याः, अष्टमस्याप्यत्र सम्भवाद्, एवं च दशसु त्रिकसंयोगेष्वशीतिर्भङ्गाः,

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | २ | १ | १ | २ | १ | १ | १ | २ | २ | १ | १ |
| १ | १ | १ | २ | १ | २ | १ | २ | २ | १ | १ | २ | २ | २ | १ | १ |
| १ | १ | २ | १ | १ | २ | २ | १ | २ | १ | २ | १ | २ | २ | २ | १ |
| १ | १ | २ | २ | १ | २ | २ | २ | २ | १ | २ | २ | २ | २ | २ | २ |

मेतेऽपि १६ भङ्गाः, 'एवं गुरुएणं'ति 'एगत्तेणं'ति तथा कर्कशादिनैकवचनान्तेन गुरुपदेन बहुवचनांतेन ४ तथा गुरूणाभ्यां ४, एवं गुरुशीताभ्यां ४, एवं गुरुशीतोष्णैः ४, एवमेते १६, तथा गुरुलघुभ्यां बहुवचनान्ताभ्यां ४, एवं गुरुलघूष्णैः ४, गुरुलघुशीतैः ४ गुरुलघुशीतोष्णैः ४ एते १६, एते आदितः सर्वेऽपि ६४, 'कक्खडमउएहिं एगत्तेहिं'ति कर्कशमृदुपदाभ्यामेकवचनान्ताभ्यां ६४ भङ्गा लब्धा इत्यर्थः, 'ताहे'त्ति तदनन्तरं 'कक्खडेणं'ति कर्कशपदेनैकत्वगेन, एकवचनान्तेनेत्यर्थः, 'मउएणं'ति 'पोहत्तएणं'ति मृदुपदेन पृथक्त्वगेन, अनेकवचनान्तेनेत्यर्थः, 'एते चेव'त्ति एत एव प्रागुक्ताः ६४ भङ्गाः कर्त्तव्याः, 'ताहे कक्खडेणं'ति ततः कर्कशपदेन बहुवचनान्तेन मृदुपदेनैकवचनान्तेन ६४, एताश्चादितश्चतस्रः चतुःषष्ट्यो मीलिताः द्वे शते पञ्चाशदधिके स्यातां 'सव्वे ते अट्ठफासे'त्ति दो छप्पन्ना भंगसया भवंति। एतत्सुखबोधाय यन्त्रकमिदं–दे क दे क दे मृ दे गु दे ल दे शी दे उ दे नि दे रू। 'बारसछण्णउयसया भंगा भवंति'त्ति बादरस्कन्धे चतुरादिकाः स्पर्शाः स्युः, तत्र चतुःस्पर्शादिषु क्रमात् षोडशानामष्टाविंशत्युत्तरशतस्य चतुरशीत्यधिकशतत्रयस्य द्वादशोत्तरशतपञ्चकस्य षट्पञ्चाशदधिशतद्वयस्य च भावाद् यथोक्तं मानं स्यात्। 'कइविहे'त्ति (सू. ६७१) द्रव्यरूपः परमाणुर्द्रव्यपरमाणुः–एकोऽणुः, वर्णादिभावानामविवक्षणात् द्रव्यत्वस्यैव च विवक्षणादिति, एवं क्षेत्रपरमाणुराकाशप्रदेशः, कालपरमाणुः समयः, भावपरमाणुः परमाणुरेव वर्णादिभावानां प्राधान्यविवक्षणात् सर्वजघन्यकालत्वादिर्वा, 'चउव्विहे'त्ति एकोऽपि द्रव्यपरमाणुर्विवक्षया चतुःस्वभावः 'अच्छेज्जे'त्ति अच्छेद्यः शस्त्रादिना, अदाह्योऽग्निना सूक्ष्मत्वाद् अत एवाग्राह्यो हस्तादिना 'अणड्ढे'त्ति समसंख्यावयवाभावात् 'अमज्झे'त्ति विषमसङ्ख्यावयवाभावात् 'अप्पएसे'त्ति निरंशः, अवयवाभावात्, 'अविभाइमे'त्ति अविभागेन निर्वृत्तोऽविभागिमः, एकरूप इत्यर्थः, विभाजयितुमशक्यो वेति ॥२० शते पञ्चमः॥

अन्या च कर्कशमृद्वोः, एवं सर्वमीलने १२८ भङ्गाः स्युः, 'छप्फासे'त्ति तत्र सर्वकर्कशो १ गुरुश्च २ देशश्च शीतः ३ उष्णः ४ स्निग्धो ५ रूक्षश्चेति ६, इह च देशशीतादीनां चतुर्णां पदानामेकत्वादिना १६, एते च सर्वकर्कशगुरुभ्यां लब्धाः, एत एव कर्कशलघुभ्यां लभ्यन्ते, तदेवं ३२, इयं च द्वात्रिंशत सर्वकर्कशपदेन लब्धा, इयमेव च सर्वमृदुना लभ्यते, सर्वे जाताः ६४ भङ्गाः, इयं च चतुःषष्टिः सर्वकर्कशगुरुलक्षणेन द्विकसंयोगेन सविपर्ययेण लब्धा, तदेवमन्योऽप्येवंविधो द्विकसंयोगस्तां लभते, कर्कशगुरुशीतस्निग्धलक्षणानां चतुर्णां पदानां षड् द्विकसंयोगाः, तदेवं चतुःषष्टिः षड्भिर्द्विकसंयोगैर्गुणिता ३८४ भङ्गाः स्युः, 'सव्वेऽवि ते छप्फासे'त्ति, 'जे सत्तप्फासे'त्ति इहाद्यं कर्कशाख्यं पदं स्कन्धव्यापकत्वाद्विपक्षरहितं शेषाणि तु गुर्वादीनि षट् स्कन्धदेशाश्रितत्वात् सविपक्षाणीत्येवं सप्त स्पर्शाः, एषां च गुरूणां पदानामेकत्वानेकत्वाभ्यां ६४ भङ्गाः स्युः, ते च सर्वशब्दविशेषितेन आदिस्थेन कर्कशपदेन लब्धाः, एवं मृदुपदेनापि, एवं जातं १२८, एवं गुरुलघुभ्यां शेषैः षड्भिः सह १२८, शीतोष्णाभ्यामपि १२८, एवं स्निग्धरूक्षाभ्यामपि, तदेवमष्टाविंशत्युत्तरशतस्य चतुर्भिर्गुणने जाताः ५१२ भङ्गाः, एवं सत्तफासे पंच बारसुत्तरा भंगसयेति । 'अट्ठफासे'त्ति चतुर्णां कर्कशादिपदानां सविपर्ययाणामाश्रयणादष्टौ स्पर्शाः, एते च बादरस्कन्धस्य द्विधाविकल्पितस्यैकत्र देशे चत्वारोऽविरुद्धाः, विरुद्धास्तु द्वितीये, एषु चैकत्वानेकत्वाभ्यां भङ्गाः स्युः, तत्र रूक्षपदेनैकवचनान्तेन च द्वावेतौ स्निग्धैकत्ववचनेन लब्धौ, एतावेव स्निग्धबहुत्वं लभेते, एते चत्वारः, एते च सूत्रमध्ये चतुष्ककेन सूचिताः, एतेष्वेवाष्टसु पदेषु उष्णपदेन बहुवचनान्तेनोक्तचतुर्भङ्गीयुक्तेनान्ये चत्वारः, एवं शीतपदेन बहुवचनान्तेन एत एव ४, तथा शीतोष्णपदाभ्यां बहुवचनान्ताभ्यां ४, तथा लघुशीतपदाभ्यां गुरुशीतपदाभ्यां बहुवचनान्ताभ्यां ४ एवं लघूष्णपदाभ्यां ४ एवं लघुशीतोष्णपदैः ४, एवं-

चतुर्वर्णे तु प्रागुक्तानां अष्टमद्वादशान्तिमभंगत्रयवर्जितानां शेषा एकादश स्युः, एषां च पञ्चसु चतुष्कसंयोगेषु प्रत्येकं भावात् पञ्चपञ्चाशदिति 'जइ पंचवण्णे'त्ति षड् भङ्गाः, 'छ.सीयं भंगसयं'ति एकादिसंयोगसम्भवानां पञ्चचत्वारिंशदशीतिपञ्चाशत्–षट्सङ्ख्यभङ्गकानां मीलनात् षडुत्तराशीत्यधिकं भङ्गकशतं स्यादिति, 'सत्तपएसिए'त्ति इह चतुर्वर्णत्वे प्रागुक्तानां षोडशानामन्तिमवर्जाः शेषाः १५ स्युः, एषां च पञ्चसु चतुष्कसंयोगेषु प्रत्येकं भावात् ७५ भङ्गाः 'जइ पंचवण्णे'त्ति इह पञ्चानां पदानां ३२ भङ्गाः, स्युः, तेष्वाद्यानां षोडशानामष्टमद्वादशान्त्यत्रयवर्जिताः शेषाः उत्तरेषां च षोडशानामाद्यास्त्रयः पञ्चमनवमौ चैवं सर्वेऽपि १९ सम्भवन्ति, 'दोसोला भंगसय'त्ति एकद्वित्रिचतुःपञ्चकसंयोगजानां पञ्चचत्वारिंशदशीतिपञ्चाधिकसप्ततिषोडशसङ्ख्यानां भङ्गकानां मीलनात् द्वे शते षोडशोत्तरे स्यातामिति ॥ 'अट्ठपदेसिए'त्ति इह चतुर्वर्णत्वे प्रागुक्ताः १६ स्युः, तेषां च प्रत्येकं पञ्चसु चतुष्कसंयोगेषु भावात् ८० भङ्गाः, पञ्चवर्णत्वे तु ३२ भङ्गानां १६–२४–२८ अन्त्यत्रयवर्जाः शेषाः २६ भङ्गाः स्युः, 'दो इक्कतीसाइं'ति प्रागुक्तानां पञ्चचत्वारिंशदशीत्यशीतिषडुत्तरविंशतिसङ्ख्यानां मीलनात् द्वे शते एकत्रिंशदुत्तरे स्यातां। 'नवपदेसियस्स'त्ति इह पञ्चवर्णत्वे द्वात्रिंशद्भङ्गानामन्त्य एव न स्यात्, शेषं प्रागुक्तानुसारेण भाव्यं। 'बादरपरिणए णं'ति (सू. ६७०) सर्व एव कर्कशो गुरुः शीतः स्निग्धश्च एकदैवाविरुद्धानां स्पर्शानां सम्भवादित्येको भङ्गः, चतुर्थपदव्यत्यये द्वितीयः, एवमेते एकादिपदव्यभिचारेण १६ भङ्गाः, 'पंचप्फासे'त्ति कर्कशगुरुशीतैः स्निग्धरूक्षयोरेकानेकत्वकृता चतुर्भङ्गी लब्धा, एवमेव च कर्कशगुरूष्णैर्लभ्यत इत्येवमष्टौ, एते चाष्टौ कर्कशगुरुभ्यामेव, अन्ये कर्कशलघुभ्यां, एवमेते १६ कर्कशपदेन लब्धाः, एत एव मृदुपदं लभत इत्येवं कर्कशपद एव द्वात्रिंशत् स्निग्धरूक्षयोरेकत्वादिना लब्धा, अन्या द्वात्रिंशच्छीतोष्णयोः अन्या च गुरुलघ्वोः

एवं 'जहा सत्तरसमसए छट्ठुद्देसे'त्ति (सू. ६७२) अनेन यदुक्तं तदाह-पुव्विं वा उववज्जित्ता पच्छा आहारेज्जा पुव्विं वा आहारित्ता पच्छा उववज्जेज्जा इत्यादि, अस्यायमर्थः-यो गंदुकगतिः सन् समुद्घातगामी स पूर्वमुत्पद्यते, तत्र गच्छेदित्यर्थः, पश्चादाहारयति-वपुर्योग्यान् पुद्गलान् गृह्णाति, अत एवोक्तं-'पुव्विं वा उववज्जित्ते'ति, यः पुनरिलिकासमयसमुद्घातगामी स पूर्वमाहारायति, क्षेत्रे प्रदेशक्षेपणेनाहारं गृह्णातीत्यर्थः, तत्समनन्तरमेव प्राक्तनवपुःप्रदेशान् उत्पत्तिक्षेत्रे संहरति, अत उक्तं 'पुव्विं आहारित्ते'ति। विंशतितमशते षष्ठो, वाचनान्तराभिप्रायेण तु पृथिव्यब्वायुविषयकत्वादुद्देशकत्रयमिदमतोऽष्टमः (सू. ६७३-४) 'जीवप्पयोगबंधे'त्ति (सू. ६७५) जीवस्य प्रयोगेण-मनःप्रभृतिव्यापारेण बन्धः-कर्मपुद्गलानां आत्मप्रदेशेषु संश्लेषः, 'अनंतरबंधे'त्ति येषां पुद्गलानां बद्धानां सतामनन्तरः समयो वर्त्तते तेषामनन्तरबन्ध उच्यते, येषां तु बद्धानां द्वितीयादिः समयो वर्त्तते तेषां परम्परबन्धः। 'नाणावरणिज्जोदयस्स'त्ति ज्ञानावरणीयोदयरूपकर्मणः, उदयमाप्तज्ञानावरणीयकर्मण इत्यर्थः, बन्धोऽस्य भूतभावापेक्षयेति, अथ ज्ञानावरणीयादिकर्म किञ्चिज्ज्ञानाद्यावारकतया विपाकतो वेद्यते किञ्चित्प्रदेशत एवेत्युदयेन विशेषितं कर्म, अथवा ज्ञानावरणीयोदये यद् बध्यते वेद्यते वा तत् ज्ञानावरणीयोदयमेव तस्य, एवमन्यत्रापि, 'सम्मदिट्ठीए'त्ति ननु सम्मदिट्ठीए इत्यादौ कथं बन्धो?, दृष्टिज्ञानानामपौद्गलिकत्वात्, अत्रोच्यते, नेह बन्धशब्देन कर्मपुद्गलानां बन्धो विवक्षितः, किन्तु सम्बन्धमात्रं, तच्च जीवस्य दृष्ट्यादिभिर्धर्मैस्सहास्त्येव, जीवप्रयोगबन्धादिव्यपदेश्यत्वं च तस्य जीववीर्यप्रभवत्वात्, अत एव मतिज्ञानस्येत्याद्यपि निरवद्यं, ज्ञानस्य ज्ञेयेन सह सम्बन्धविवक्षणादिति, इह सङ्ग्रहगाथे-"जीवप्पओगबंधे अणंतरपरंपरे य बोद्धव्वे। पगडी ८ उदए ८ वेदे ३ दंसणमोहे चरित्ते य ॥१॥ ओरालिय वेउव्विय आहारग तेय कम्मए चेव। सण्णा ४ लेसा ६ दिट्ठी ३ नाणा-

व्यवहारतः शीर्षप्रहेलिकायाः परतः सङ्ख्यायाश्च सङ्ख्यातत्वेनासङ्ख्यातत्वेन च वक्तुं न शक्यते सः अवक्तव्यः, स एककस्तेना वक्तव्यत एककेन—एकत्वोत्पादेन सञ्चिता अवक्तव्यसञ्चिताः, तत्र नारकादयस्त्रिधा अपि, एकसमयेन तेषामेकादीनामसङ्ख्यातानान्तानामुत्पादात्, पृथ्वीकायादयस्तु पंच अकतिसञ्चिता एव, तेषां समयेनासङ्ख्यातानामेव प्रवेशात्, वनस्पतयस्तु यद्यपि अनन्ता उत्पद्यन्ते तथापि प्रवेशनं विजातीयेभ्य आगतानां यस्तत्रोत्पादस्तद्विवक्षितं, असङ्ख्याता एव च विजातीयेभ्य उद्वृत्तास्तत्रोत्पद्यन्ते इति सूत्रे उक्तं 'एवं जाव वणस्सइकाइय'त्ति, सिद्धा नोअकसिसञ्चिताः, अनन्तानामसङ्ख्यातानाञ्च तेषां समयेनासम्भवादिति ॥ एषामल्पबहुत्वमाह—'एएसि'न्ति अवक्तव्यकसञ्चिताः स्तोकाः, अवक्तव्यस्थानस्यैकत्वात्, कतिसञ्चिता सङ्ख्यातगुणाः, सङ्ख्यातस्थानकानां संख्यातभेदत्वात्, अकतिसञ्चितास्त्वसङ्ख्यातगुणाः, असङ्ख्यातस्थानकानामसङ्ख्यातत्वादित्येके, अन्ये त्वाहुः वस्तुस्वभावोऽत्र कारणं, न तु स्थानकाल्पत्वादि, कथमन्यथा सिद्धाः कतिसञ्चिताः, स्थानकबहुत्वेऽपि स्तोकाः, अवक्तव्यकाः स्थानकस्यैकत्वेऽपि सङ्ख्यातगुणाः, द्वयादित्वेन केवलिनामल्पानामायुरसमाप्तेः, इयं च लोकस्वभावादेवेति १। 'नेरइयाणं'ति 'छक्कसमज्जिय'त्ति षट् परिमाणमस्येति षट्कं—वृन्दं तेन समर्जिताः—पिण्डिताः षट्कसमर्जिताः, अयमर्थः—एकत्र समये ये षट्कसमर्जिता उच्यन्ते, 'नोछक्कसमज्जिय'त्ति नोषट्कं—षट्काभावः, ते चैकादयपञ्चान्ताः, तेन नोषट्केन एकाद्युत्पादेन ये समर्जितास्ते तथा २। तथा 'छक्केण य नो छक्केण य समज्जिय'त्ति एकत्र समये येषां षट्कमुत्पन्नमेकाद्यधिकं ते षट्केन नोषट्केन च समर्जिता उक्ताः ३। छक्केहि य समज्जिय'त्ति एकत्र समये येषां बहूनि षट्कान्युत्पन्नानि ते षट्कैः समर्जिता उक्ताः ४। तथा 'छक्केहि य नोछक्केण य समज्जिय'त्ति एकत्र समये येषां बहूनि षट्कान्येकाद्यधिकानि ते षट्कैर्नोषट्केन च समर्जिताः ५। एते पञ्च विकल्पाः, इह च नारकादीनां

तपोलब्धिं क्षममाणस्य-अधिसहमानस्य, तपः कुर्वत इत्यर्थः, 'सीहा गइ'त्ति शीघ्रा गतिः, 'जंबुदीवे'त्ति ततश्च 'देवे णं'ति 'हव्वमागच्छेज्जा' इत्यत्र यथा शीघ्राऽस्य देवस्य गतिरित्ययं वाक्यशेषो दृश्यः, 'से णं तस्स ठाणस्स'त्ति अयं भावः—लब्ध्युपजीवनं किल प्रमादस्तस्मिन् सेवितेऽनालोचिते च न स्याच्चारित्राराधना, यदत्रोक्तं विद्याचारणस्योत्पातद्वयेन गमनं एकेनागमनं च जङ्घाचारणस्य (सू. ६८५) तु गमनमेकेन आगमनं च द्वयेन तल्लब्धिस्वभावात्, अन्ये त्वाहुः—विद्याचारणस्य गमनकाले विद्याऽभ्यस्ततरा स्यादित्येकेनागमनं, गमने तु न तथेति, जङ्घाचारणस्य तु लब्धिरुपजीव्यमानाऽल्पसामर्थ्या स्यात् इत्यागमनं द्वाभ्यां, गमनं चैकेन ॥ २० शते नवमः ॥

'सोवक्कमाउय'त्ति (सू. ६८६) उपक्रमोऽप्राप्तकालस्यायुषो निर्जरणं तेन सह यत्तत् सोपक्रमं तदायुर्वन्तः सोपक्रमायुषः, तद्विपरीता निरुपक्रमायुषः । इह गाथे—"देवा नेरइयावि य असंखवासाउया य तिरिमणुया । उत्तमपुरिसा य तहा चरमसरीरा य निरुवक्कमा ॥१॥ सेसा संसारत्था हवेज्ज सोवक्कमा य इयरे य । सोवक्कमनिरुवक्कमभेओ भणिओ समासेणं ॥२॥" ति, 'आओवक्कमेणं'ति (सू. ६८७) आत्मना—स्वयमेव आयुष उपक्रमः आत्मोपक्रमस्तेन, मृत्वा इति शेषः, उत्पद्यन्ते नारकाः यथा श्रेणिकः, परोपक्रमेण—परकृतमरणेन यथा कूणिकः, निरुपक्रमेण स्वभावेन यथा कालसौकरिकः, यतः सोपक्रमायुष इतरे च तत्रोत्पद्यन्ते, 'आयड्ढिय'त्ति आत्मऋद्ध्या, नेश्वरादिप्रभावेनेत्यर्थः, 'आयकम्मुण'त्ति आत्मकर्मणा 'आयप्पओगेण'त्ति आत्मव्यापारेण । 'नेरइय'त्ति (सू. ६८८) कतिसञ्चिताः कति सङ्ख्यावाची, ततश्च कतित्वेन सञ्चिताः—एकसमये सङ्ख्यातोत्पादेन पिण्डिताः कतिसञ्चिताः, एवं 'अकइसंचिय'त्ति नवरं 'अकइ'त्ति सङ्ख्यानिषेधः असङ्ख्यातत्वमनन्तत्वं च, 'अव्वत्तग'त्ति द्व्यादिसङ्ख्या-

व्यवहाराः शीर्षप्रहेलिकायाः परतः सङ्ख्यायाश्च सङ्ख्यातत्वेनासङ्ख्यातत्वेन च वक्तुं न शक्यते सः अवक्तव्यः, स एककस्तेना वक्तव्यक एककेन-एकत्वोत्पादेन सञ्चिता अवक्तव्यकसञ्चिताः, तत्र नारकादयस्त्रिधा अपि, एकसमयेन तेषामेकादीनामसङ्ख्यातानामनन्तानामुत्पादात्, पृथ्वीकायादयस्तु पंच अकतिसञ्चिता एव, तेषां समयेनासङ्ख्यातानामेव प्रवेशात्, वनस्पतयस्तु यद्यपि अनन्ता उत्पद्यन्ते तथापि प्रवेशनं विजातीयेभ्य आगतानां यस्तत्रोत्पादस्तद्विवक्षितं, असङ्ख्याता एव च विजातीयेभ्य उद्वृत्तास्तत्रोत्पद्यन्ते इति सूत्रे उक्तं 'एवं जाव वणस्सइकाइय'त्ति, सिद्धा नोअकतिसञ्चिताः, अनन्तानामसङ्ख्यातानाञ्च तेषां समयेनासम्भवादिति ॥ एषामल्पबहुत्वमाह-'एएसि'मित्यादि अवक्तव्यकसञ्चिताः स्तोकाः, अवक्तव्यस्थानस्यैकत्वात्, कतिसञ्चिता सङ्ख्यातगुणाः, सङ्ख्यातस्थानकानां सङ्ख्यातभेदत्वात्, अकतिसञ्चितास्त्वसङ्ख्यातगुणाः, असङ्ख्यातस्थानकानामसङ्ख्यातत्वादित्येके, अन्ये त्वाहुः-वस्तुस्वभावोऽत्र कारणं, न तु स्थानकाल्पत्वादि, कथमन्यथा सिद्धाः कतिसञ्चिताः, स्थानकबहुत्वेऽपि स्तोकाः, अवक्तव्यकाः स्थानकस्यैकत्वेऽपि सङ्ख्यातगुणाः, द्वयादित्वेन वे नलिनामल्पानामायुःसमासैः, इयं च लोकस्वभावादेवेति १। 'नेरइयाणं'ति 'छक्कसमज्जिय'त्ति षट् परिमाणमस्येति षट्कं-वृन्दं तेन समर्जिताः-पिण्डिताः षट्कसमर्जिताः, अयमर्थः-एकत्र समये ये षट्कसमर्जिता उत्पन्ने, 'नोछक्कसमज्जिय'त्ति नोषट्कं-षट्काभावः, ते चैकादयः पञ्चान्ताः, तेन नोषट्केन एकाद्युत्पादेन ये समर्जितास्ते तथा २। तथा 'छक्केण य नो छक्केण य समज्जिय'त्ति एकत्र समये येषां षट्कमुत्पन्नमेकाद्यधिकं ते षट्केन नोषट्केन च समर्जिता उक्ताः ३। छक्केहिं य समज्जिय'त्ति एकत्र समये येषां बहूनि षट्कान्युत्पन्नानि ते षट्कैः समर्जिता उक्ताः ४। तथा 'छक्केहि य नोछक्केण य समज्जिय'त्ति एकत्र समये येषां बहूनि षट्कान्येकाद्यधिकानि ते षट्कैर्नोषट्केन च समर्जिताः ५। एते पञ्च विकल्पाः, इह च नारकादीनां

पञ्च विकल्पाः सम्भवन्ति, एकादीनामसङ्ख्यातान्तानां तेषां समयेनोत्पत्तेः, असङ्ख्यातेष्वपि च ज्ञानिनः पद्मानि व्यवस्थापयन्ति, एकेन्द्रियाणां त्वसङ्ख्यातानामेव प्रवेशनात् पद्मैः समार्जिताः, तथा पद्मैर्नोपद्मेन च समार्जिताः इति विकल्पद्वयस्यैव सम्भवः, अत एवाह–'पुढविकाइयाणं'ति एषामल्पबहुत्वचिन्तायां नारकादयः स्तोकाः आद्याः, पद्मस्थानस्यैकत्वात्, द्वितीयास्तु सङ्ख्यातगुणाः, नोपद्मस्थानानां बहुत्वात्, एवं तृतीयचतुर्थपञ्चमेषु स्थानबाहुल्यात् सूत्रोक्तं बहुत्वमवसेयमित्येके, अन्ये तु वस्तुस्वभावादिति, एवं १२ सूत्राणि चेति ॥ २० शते दशमः ॥ भगवतीलघुवृत्तौ वृत्तितो विंशतितमं शतं सम्पूर्णम् ॥

—⋄⋄⋄⋄⋄⋄⋄—

अथैकविंशतितममारभ्यते–'साली'त्यादि, (*८७) शाल्यादिधान्यविशेषरूपोद्देशकदशकात्मको वर्गः १ शालिरेवोच्यते, एवमन्यत्रापि, उद्देशकदशकं चैवम्–मूले १ कंदे २ खंधे ३, तया य ४ साले ५ पवाल ६ पत्ते य ७ पुप्फे य ८ फले ९ बीए १० तेऽविय एक्केक्कए होइ ॥१॥" 'उद्देसे'त्ति १ 'कल'त्ति कलायादिधान्यविषयः २ 'अयसि'त्ति अतसीप्रभृतिधान्यविषयः ३ 'वंसे'त्ति वंशादिपर्वगविशेषविषयः ४ 'इक्खु'त्ति इक्ष्वादिपर्वगविशेषविषयः ५ 'दब्भ'त्ति दर्भशब्दोपलक्षणत्वात् 'सेडियभंतियकोत्तियदब्भे' इत्यादितृणभेदविषयः ६ 'अज्झवरोह'त्ति वृक्षे समुत्पन्नो विजातीयो वृक्षविशेषोऽध्यवरोहकः तत्प्रभृतिशाकप्रायवनस्पतिविषयः ७ 'तुलसी'त्ति तुलसीप्रभृतिवनस्पतिविषयः ८, एतेऽष्टौ वर्गाः, दशानामुद्देशकानां वर्गाः समुदाया दशवर्गाः, सर्वेऽशीतिः पुनरुद्देशकाः स्युरिति, वर्गे २ उद्देशकदशकभावादिति । तत्र प्रथमवर्गस्तत्र प्रथमोद्देशक उच्यते–'रायगिहे'इत्यादि, (सू. ६८९) 'जहा वक्कंतीए'त्ति यथा प्रज्ञापना ६ पदे, तत्र नैवमुत्पादो–नो नारकेभ्य उत्पद्यन्ते, किन्तु तिर्यग्मनुष्येभ्यः, तथा

प्पभाए पंचविहसंघयणी'त्ति आद्ययोरेव पृथिव्योः सेवार्त्तेनोत्पद्यन्ते, एवं चतुर्थी ४ पञ्चमी ३ षष्ठी २ सप्तमीषु १ एकैकं संहननं हीयत इति। अथ सप्तमपृथिवीमाश्रित्याह–'पज्जत्ते'त्यादि, 'इत्थिवेया न उववज्जंति'त्ति षष्ठ्यन्तास्वेव पृथ्वीषु स्त्रीणामुत्पत्तेः, 'जहण्णेणं तिण्णि भवग्गहणाइं'ति मत्स्यस्य सप्तमपृथ्वीनारकत्वेनोत्पद्य पुनर्मत्स्येष्वेवोत्पत्तौ 'उक्को० सत्तभव'त्ति मत्स्यो भूत्वा १ सप्तम्याङ्गतः २ पुनर्मत्स्यः ३ पुनरपि सप्तम्याङ्गतः ४ पुनरपि तथैव मत्स्यः ५ सप्तम्यां च ६ पुनर्मत्स्यः ७ इति। 'कालादेसेणं'ति २२ सागराणि जघन्यस्थितिसप्तमपृथ्वीनारकभवसत्कानि अन्तर्मुहूर्त्तद्वयं च प्रथममत्स्यभवसत्कमिति, 'छावट्ठिं'ति वारत्रयं सप्तम्यां २२ सागरायुष्कतयोत्पत्तेः, पूर्वकोटयश्चतुर्षु नारकभवान्तरितेषु मत्स्यभवेष्विति, अत इदं ज्ञायते–सप्तम्यां जघन्यस्थितिषूत्कर्षतस्त्रीनेव वारानुत्पद्यत इति, कथमन्यथेदक्कालपरिमाणं स्याद्, इह चोत्कृष्टः कालो विवक्षितः, तेन जघन्यस्थितिषु त्रीन् वारानुत्पादितः, एवं हि चतुर्थी पूर्वकोटिर्लभ्यते, उत्कृष्टस्थितिः पुनर्वारद्वयोत्पादने षट्षष्टिस्सागराणां स्यात्, पूर्वकोट्यः पुनस्तिस्र एवेति १ 'सो चेव जहण्ण'त्ति इत्यादिरतु द्वितीयो गमः २ 'सो चेव उक्कोस'त्ति इति, तत्र च 'उक्कोसेणं पंच'त्ति मत्स्यभवाः ३ नारकभवौ २, अत एव उत्कृष्टस्थितिषु सप्तम्यां वारद्वयमेवोत्पत्तेः ५, 'सो चेव जहण्णकालट्ठिइओ'त्ति ४, तत्र च 'सच्चेव रयणप्पभपुढविजहण्णकालट्ठिइवत्तव्वय'त्ति सैव रत्नप्रभाचतुर्थगमवक्तव्यता वाच्या, नवरमयं विशेषः–प्रथमायां ६ संहननानि वेदाः ३ उक्ताः, इह तु सप्तमपृथ्वीचतुर्थगमे प्रथममेव संहननं स्त्रीवेदनिषेधश्च वाच्य इति, शेषा गमाः स्वयमूह्याः। अथ नराधिकारो 'उक्को० संखेज्जा उववज्जंति' (सू. ६९६) गर्भजनराणां सदा सङ्ख्यातानामेवास्तित्वात्, नवरं 'चत्तारि नाणाइं'ति अवध्यादौ प्रतिपतिते सति केषांचिन्नरकेषूत्पत्तेः, आह च चूर्णिकारः–'ओहिनाणमणपज्जवनाणआहारसरीराणि लद्धूण परिसाडित्ता

त्ता य नील० त्ते य काउ० त्ता य ६ किण्हले० त्ता य नील० त्ता य काउ० त्ते य ७ किण्हलेसो० त्ता य नीलले० त्ता य काउले० त्ता य ८, एवमेककयोगे ६ द्विकयोगे १२ त्रिकयोगे ८ सर्वांकमीलने जाताः २६ विकल्पा इति, 'दिट्ठी'त्यादि दृष्टिपदादारभ्येन्द्रियपद यावदुत्पलोद्देशवन्नेयं, तत्र दृष्टौ मिथ्यादृष्टयस्ते ज्ञानेऽज्ञानिनः योगे काययोगिनः उपयोगे द्विविधोपयोगाः, एवमन्यदपि तत एव वाच्यम्—'से णं भंते!' इत्यादिना 'असंखेज्जंकाल'मित्येतदन्त्येनानुबन्ध उक्तः। अथ कायसम्बन्धमाह—'से ण'मित्यादि, 'एवं जहा उप्पलुद्देसए'त्ति. अनेन चेदं सूचितं-गोयमा! भवादेसेणं जहण्णेणं दो भवग्गहणाइं उक्कोसेणं असंखिज्जाइं भवग्गहणाइं, कालादेसेणं जहण्णेणं अंतोमुहुत्तं उक्कोसेणं असंखिज्जं कालमित्यादि, 'आहारो जहा उप्पलुद्देसए'त्ति, स चैवं—ते णं भंते! जीवा किमाहारमाहारेंति ?, गो०! दव्वओ अणंतप्पएसियाइं' इत्यादि, 'समुग्घाए'त्यादि तत्रायमर्थलेशः—तेषां जीवानामाद्यास्त्रयः समुद्घाताः, तथा मारणान्तिकसमुद्घातेन समवहता म्रियन्ते असमवहताः, तत उद्वृत्तास्ते तिर्यक्षु मनुष्येषु वोत्पद्यन्त इति ॥ २१ शते प्रथमः ॥

(सू. ६९०) एवं समस्तोऽपि वर्गः सूत्रसिद्धः, एवमन्येऽपि ७, नवरं ८० भङ्गाः एवं चतसृषु लेश्यासु-एकत्वे ४ बहुत्वे ४ तथा पदचतुष्केषु षट्सु द्विकसंयोगेषु प्रत्येकं चतुर्भङ्गिकाभावात् २४, तथा त्रिकसंयोगेषु प्रत्येकमष्टानां सद्भावात् ३२, चतुष्कसंयोगे च १६, एवं ८० भङ्गा इति, इह चैवमवगाहनागाथा वृद्धोक्ता—मूले १ कंदे २ खंधे ३ तयाय ४ साले ५ पवाल ६ पत्ते ७ य। सत्तसुवि धणुपुहुत्तं अंगुलमो पुप्फ ८ फल ९ वीए १० ॥१॥'त्ति ॥ २१ शतं संपूर्णम् ॥

अथ द्वाविंशं व्याख्यायते, तत्रोद्देशकवर्गसङ्ग्रहगाथेयम्–'ताले'त्यादि (*८८) तालतमालप्रमुखवृक्षविशेषविषयोद्देशकदशकात्मकः १ वर्गः, (सू. ६९२) उद्देशके च मूलकन्दादिविषयभेदाः पूर्ववत्, 'एगट्ठिय'त्ति एकमस्थिकं फलमध्ये येषां ते तथा, ते च निम्बाम्रजम्ब्वादयो द्वितीये वाच्याः, 'बहुबीयगा य'त्ति बहूनि बीजानि फलेषु येषां ते तथा, ते च अस्थिकतिन्दुकबदरकपित्थादयो वृक्षविशेषास्तृतीये वाच्याः, 'गुच्छा य'त्ति गुच्छा–वृन्ताकीप्रमुखास्ते चतुर्थे वाच्याः, 'गुम्म'त्ति गुल्माः सरियकनवमालिकाकोरिण्टकादयस्ते पंचमे वाच्याः, 'वल्ली य'त्ति वल्ल्यः कालिङ्गीतुम्बीप्रमुखास्ताः षष्ठे वाच्याः, 'छद्दस'त्ति षड्वर्गा दशोद्देशकप्रमाणाः, अत एव प्रत्येकं दशोद्देशकप्रमाणत्वाद्वर्गाणामिह षष्टिरुद्देशकाः स्युरिति, शतमिदमनन्तरशतवद् व्याख्येयं, यस्तु विशेषस्स सूत्रसिद्ध एव, इह चेयं वृद्धोक्ता गाथा–"पत्तपवाले पुप्फे फले य बीए य होइ उववाओ। रुक्खेसु सुरगणाणं पसत्थरसवण्णगंधेसु ॥१॥" २२ शतं सम्पूर्णम् ॥

अथ त्रयोविंशं शतमारभ्यते, तत्रोद्देशकवर्गसङ्ग्रहगाथेयम्–'आलुए'त्ति (*८९) (सू. ६९३) आलुकमूलकादिसाधारणवनस्पतिभेदविषयोद्देशकदशकात्मकः १ वर्गः, 'लोही'ति लोहीप्रभृत्यनन्तकायिकविषयो द्वितीयः, 'अवए'त्ति अवककवकप्रमुखानन्तकायाख्यस्तृतीयः, 'पाढ'त्ति पाठामृगवालुकीमधुरसादिवनस्पतिभेदविषयश्चतुर्थः, 'मासवण्णी य'त्ति मासपर्णीप्रभृतिवल्लीविषयः पञ्चमः, तन्नामक एवेति, पञ्चैतेऽनन्तरोक्ता दशोद्देशकप्रमाणा वर्गाः, यत एवमतः ५० उद्देशकाः स्युः इह शते ॥२३ शतं सम्पूर्णम् ॥

अथ चतुर्विंशतितममारभ्यते-तदुद्देशकद्वारसङ्ग्रहगाथेयम्-'उववाय'त्ति (*९०-९१) नारकादयः कुत उत्पद्यन्ते इत्युत्पादो वाच्यः १ 'परीमाणं'ति ये नारकादिषूत्पत्स्यन्ते तेषां स्वकाये उत्पद्यमानानां परिमाणं वाच्यं २ 'संघयणं'ति तेषामेव नारकादिषूत्पित्सूनां संहननं वाच्यं ३ 'उच्चत्तं'त्ति नरकादिषु यायिनामवगाहनाप्रमाणं वाच्यं ४, एवं संस्थानाद्यपि ज्ञेयं ५, 'अणुबंध'त्ति विवक्षितपर्यायेणाव्यवच्छिन्नेनावस्थानं 'कायसंवेहो'त्ति विवक्षितकायात् कायान्तरे तुल्यकाये वा गत्वा पुनरपि यथासम्भवं तत्रैवागमनं। अथारब्धशतोद्देशकपरिज्ञानगाथामाह-'जीवपदे'त्यादि(*९२) इयं गाथा प्रागुक्तद्वारगाथाद्वयादादौ क्वचिद् दृश्यते, तत्र प्रथमोद्देशको व्याख्यायते-तत्र च कायसंवेधद्वारे 'से णं भंते! पज्जत्ते असवणी'त्यादि (सू. ६९३) 'भवादेसेणं'ति भवप्रकारेण 'दो भवग्गहणाइं'ति एकत्रासंज्ञी १ द्वितीये नारकः २, ततो निर्गतः सन् अनन्तरतया संज्ञित्वमेव लभते, न पुनरसंज्ञित्वमिति, 'कालाएसेणं'ति कालप्रकारेण, कालत इत्यर्थः, नारकाणां १० वर्षसहस्रा स्थितिर्जघन्या, सा चासंज्ञिभवसत्कजघन्यान्तर्मुहूर्त्ताधिका, 'उक्कोसेणं'ति इह पल्योपमासङ्ख्येयभागः प्राग्भवासंज्ञिनारकोत्कृष्टायुष्करूपः पूर्वकोटी चासंज्ञ्युत्कृष्टायुष्करूपेति, एवमेते सामान्येषु रत्नप्रभानारकेषूत्पित्सवोऽसंज्ञिनः, प्रोक्तो दण्डकः प्रथमः। अथ जघन्यस्थितिषु तेषूत्पित्सूंस्तान्निरूपयन्नाह-'पज्जत्ते'त्यादि, सर्वं चेदं प्रतीतार्थमेव, २ दण्डकः, उत्कृष्टस्थितिषु रत्नप्रभानारकेषूत्पित्सूनपि वाच्यः ३, एवमेते त्रयो गमा निर्विशेषणमसंज्ञिनमाश्रित्योक्ताः, एवमेते एव तं पर्याप्तासंज्ञिनं जघन्यस्थितिक ३ मुत्कृष्टस्थितिकं ३ चाश्रित्य वाच्याः, तदेवमेते ९ गमाः, तत्र जघन्यस्थितिपर्याप्तासंज्ञिनमाश्रित्य ९, सामान्यनारकगम उच्यते 'जहण्णे'त्यादि 'आउं उज्झवसाणा अणुबंधो य'त्ति आयुरन्तर्मुहूर्त्तमेव, जघन्यस्थितेरसंज्ञिनोऽधिकृतत्वात्, अध्यवसायस्थानान्यप्रशस्तान्येवान्तर्मुहूर्त्तस्थितिकत्वात्, दीर्घ-

स्थितेर्हि तस्य द्विविधान्यपि तानि सम्भवन्ति, कालस्य बहुत्वाद्, अनुबन्धश्च स्थितिसम एवेति, कायसंवेधे तु नारकाणां जघन्याया उत्कृष्टायाश्च स्थितेरुपर्यन्तर्मुहूर्त्तं वाच्यमिति ४, एवं जघन्यस्थिकं तं जघन्यस्थितिकेषु तेषूत्पादयन्नाह–'जहण्णकालठिती'त्यादि ५, एवं जघन्यस्थितिकं तमुत्कृष्टस्थितिकेषु तेषूत्पादयन्नाह ६, अथ जघन्यस्थितिकं तं पर्याप्तसंज्ञिनं सामान्येषु तेषूत्पादयन्नाह ७, एवमुत्कृष्टस्थितिकं जघन्यस्थितिषु तेषूत्पादयन्नाह–'उक्कोसकाले'त्यादि ८, एवमुत्कृष्टस्थितिकं तमुत्कृष्टस्थितिषु तेषूत्पादयन्नाह–'उक्कोसकाले'त्यादि ९। एवमसंज्ञिनः पञ्चेन्द्रियतिरश्चो नारकेषूत्पादो नवधोक्तः। अथ संज्ञिनस्तस्यैव तथैव तमाह–'जइ सण्णी'-त्यादि (सू. ६९४) 'तिण्णि नाणा तिण्णि अण्णाणा भयणाए'त्ति तिरश्चां संज्ञिनां नरकगामिनां ज्ञानानि अज्ञानानि च त्रीणि भजनया स्युरिति, द्वे वा त्रीणि वा स्युरित्यर्थः, नवरं पंच समुग्घाया 'आइल्लग'त्ति असंज्ञिनः पञ्चेन्द्रियतिरश्चः त्रयः समुद्घाताः, संज्ञिनस्तु नरकं यियासोः पञ्चाद्याः, अन्त्ययोर्नराणामेव भावात्, 'जहण्णेणं दो भवग्गहणाइं'ति संज्ञिपञ्चेन्द्रि-यतिर्यक्षूत्पद्य पुनर्नरकेषूत्पद्यते, ततो मनुष्येष्वेवमधिकृतकायसंवेधे भवद्वयं जघन्यतः स्याद्, एवं भवग्रहणाष्टकमपि भावनीयं, अनेनेदमुक्तं–संज्ञिपञ्चेन्द्रियतिर्यङ् ततो नारकः पुनस्संज्ञिपञ्चेन्द्रियतिर्यङ् पुनर्नारकस्ततस्संज्ञिपञ्चेन्द्रियतिर्यङ् पुनस्तस्यामेव पृथिव्यां नारकः एवमष्टावेव भवानुत्पद्यते, नवमभवे तु नर एव स्यादिति, एव मौघिक औघिकेषु नारकेषूत्पादितः, अयं प्रथमगमः, 'पज्जत्ते-त्यादिस्तु २, 'सो चेव उक्कोसकालट्ठिइए'त्यादिस्तु ३ 'जहण्णकाले'त्यादि ४, तत्र 'इमाइं अट्ठ नाणत्ताइं'ति, तानि चैवम्–तत्र शरीरावगाहनोत्कृष्टा योजनसहस्रमुक्ता इह तु धनुःपृथक्त्वं, तत्र लेश्याः ६ इह त्वाद्यास्तिस्रः, तत्र दृष्टिस्त्रिधा इह तु मिथ्या-दृगेव, तत्राज्ञानानि त्रीणि भजनया इह तु द्वे एवाज्ञाने, तत्राद्याः ५ समुद्घाता इह तु ३, आउं अज्झवसाणा अणुबंधो य

जघन्येषु असंण्णीणं'ति जघन्यस्थितिकासंज्ञिगम इत्येतत्यर्थः, तत्र आयुरिहान्तर्मुहूर्तं अध्यवसायस्थानान्यप्रशस्तान्येव, 'अणुबंधोऽप्य-न्तर्मुहूर्त्तमेवेति, 'अवसेसं'मित्यादि, अवशेषं यथाऽसंज्ञिन औघिकप्रथमगमे, समर्थनवाक्यं चेदं, अवसेसो सो चेव गमओ'त्ति, 'अने-नैवैतदर्थस्य गतत्वादिति, 'सो चेव जहण्णकाले'त्यादिस्तु संज्ञिविषये पञ्चमो गमः, इह च 'सो चेव'त्ति स एव संज्ञी जघ-न्यस्थितिः ५ 'सो चेव उक्कोसे'त्यादि ६ 'उक्कोसकाले'त्यादि ७, तत्र च 'एयंमि चेव पढमगमओ'त्ति एतेनायेव संज्ञिनां प्रथमगमो—यत्रौघिक औघिकेषूत्पादितः, 'नवरं'मित्यादि, तत्र जघन्या अन्तर्मुहूर्त्तरूपाऽसंज्ञिनः स्थितिरुक्ता सेह न वाच्या, एव-मनुबन्धोऽपि, तद्रूपत्वात्तस्येति ७, 'सो चेव'त्ति स एवोत्कृष्टस्थितिस्संज्ञी ८ 'उक्कोसे'त्यादि ९ 'उक्कोसेणवि कालेवउ'त्ति उप-क्षेपः—प्रस्तावना, स च प्रतिगममौचित्येन वाच्यः, निक्षेपस्तु निर्गमनं, सोऽप्येवमेवेति, एवं रत्नप्रभावक्तव्यतोक्ता २। अथ तं संज्ञि-नमाश्रित्य शर्कराप्रभावक्तव्यतोच्यते, तत्रौघिक औघिकेषु तावदुच्यते—'पज्जत्ते'त्यादि (सू. ६९५) 'लद्धी सच्चेव'त्ति परिमाण-संहननादीनां प्राप्तिर्यैव रत्नप्रभायामुत्पित्सोरुक्ता सैव समग्रा शर्करायां वाच्या, 'सागरोवमं'ति शर्करायां जघन्या स्थितिः सागरो-पमान्तर्मुहूर्तं च संज्ञिभवसत्कमिति, 'उक्कोसेणं बारस'त्ति द्वितीयायामुत्कर्षतः सागरोपम ३ स्थितिः तस्याश्चतुर्गुणत्वे द्वादश, एवं पूर्वकोट्योऽपि चतुर्षु संज्ञितिर्यग्भवेषु च ४, 'नेरइयट्ठिइसंवेहेसु'त्ति तत्र प्रथमायां आयुर्द्वारे संवेधद्वारे १० वर्षसहस्राणि सागरोपमं चोक्तं द्वितीयादिषु पुनर्जघन्यत उत्कर्षतश्च सागरोपमाण्येव वाच्यानि, यतः इक्कं १ तिण्णि २ सत्त ३ दस ४ सतर ५ अय-रसावीस ६ तित्तीस ७ इति, रत्नप्रभागमतुल्या ९ गमाः, कियद् दूरं यावदित्याह—'जाव छट्ठपुढवि'त्ति 'चउग्गुणा कायव्व'त्ति उत्कृष्टकायसंवेध इति, 'वालुयप्पभाए'त्ति तत्र ७ सागराणि उत्कर्षतः स्थितिः, सा च चतुर्गुणिता २८, एवमुत्तरत्रापि, 'वालुय-

प्पभाए पंचविहसंघयणी'त्ति आद्ययोरेव पृथिव्योः सेवार्त्तेनोत्पद्यन्ते, एवं चतुर्थी ४ पञ्चमी ३ षष्ठी २ सप्तमीषु १ एकैकं संहननं हीयत इति। अथ सप्तमपृथिवीमाश्रित्याह–'पज्जत्ते'त्यादि, 'इत्थिवेया न उववज्जंति'त्ति षष्ठयन्तास्वेव पृथ्वीषु स्त्रीणामुत्पत्तेः, 'जहण्णेणं तिण्णि भवग्गहणाइं'ति मत्स्यस्य सप्तमपृथ्वीनारकत्वेनोत्पद्य पुनर्मत्स्येष्वेवोत्पत्तौ 'उक्को० सत्त भव'त्ति मत्स्यो भूत्वा १ सप्तम्याङ्गतः २ पुनर्मत्स्यः ३ पुनरपि सप्तम्याङ्गतः ४ पुनरपि तथैव मत्स्यः ५ सप्तम्यां च ६ पुनर्मत्स्यः ७ इति। 'कालादेसेणं'ति २२ सागराणि जघन्यस्थितिसप्तमपृथ्वीनारकभवसत्कानि अन्तर्मुहूर्त्तद्वयं च प्रथममत्स्यभवसत्कमिति, 'छावट्ठिं'ति वारत्रयं सप्तम्यां २२ सागरायुष्कतयोत्पत्तेः, पूर्वकोटयश्चतुर्षु नारकभवान्तरितेषु मत्स्यभवेष्विति, अत इदं ज्ञायते–सप्तम्यां जघन्यस्थितिषूत्कर्षतस्त्रीनेव वारानुत्पद्यत इति, कथमन्यथेदक्कालपरिमाणं स्याद्, इह चोत्कृष्टः कालो विवक्षितः, तेन जघन्यस्थितिषु त्रीन् वारानुत्पादितः, एवं हि चतुर्थी पूर्वकोटिर्लभ्यते, उत्कृष्टस्थितिः पुनर्वारद्वयोत्पादने षट्षष्टिस्सागराणां स्यात्, पूर्वकोट्यः पुनस्तिस्र एवेति १ 'सो चेव जहण्ण'त्ति इत्यादिरतु द्वितीयो गमः २ 'सो चेव उक्कोस'त्ति इति, तत्र च 'उक्कोसेणं पंच'त्ति मत्स्यभवाः ३ नारकभवौ २, अत एव उत्कृष्टस्थितिषु सप्तम्यां वारद्वयमेवोत्पत्तेः ५, 'सो चेव जहण्णकालट्ठिइओ'त्ति ४, तत्र च 'सच्चेव रयणप्पभपुढविजहण्णकालट्ठिइवत्तव्वय'त्ति सैव रत्नप्रभाचतुर्थगमवक्तव्यता वाच्या, नवरमयं विशेषः–प्रथमायां ६ संहननानि वेदाः ३ उक्ताः, इह तु सप्तमपृथ्वीचतुर्थगमे प्रथममेव संहननं स्त्रीवेदनिषेधश्च वाच्य इति, शेषा गमाः स्वयमूह्याः। अथ नराधिकारो 'उव० संखेज्जा उववज्जंति' (सू. ६९६) गर्भजनराणां सदा सङ्ख्यातानामेवास्तित्वात्, नवरं 'चत्तारि नाणाइं'ति अवध्यादौ प्रतिपतिते सति केषांचिन्नरकेषूत्पत्तेः, आह च चूर्णिकारः–'ओहिनाणमणपज्जवनाणआहारसरीराणि लद्धूण परिसाडित्ता

उववज्जइ'त्ति, 'जहण्णेणं मासपुहुत्तं'ति, इदमुक्तं स्यात्—जन्मतो मासद्वयान्तर्वर्त्यायुर्नरो नरकं न याति, 'दसवाससहस्साइं'ति जघन्यं नारकायुः, 'मासपुहुत्तमब्भहियाइं'ति इह मासपृथक्त्वं जघन्यं नरकयायिनरायुः 'चत्तारि सागरोवमाइं'ति उत्कृष्टं रत्नप्रभानारकभवचतुष्कायुः 'चउहिं पुव्वकोडीहिं'ति इह चतस्रः पूर्वकोटयो नरकयायिनरभवचतुष्कोत्कृष्टायुस्सत्काः, इदमत्र ज्ञेयम्—मनुष्यो भूत्वा चतुर एव वारान् एकस्यां पृथव्यां नारकः स्यात्, पुनश्च तिर्यगेव स्यात्, जघन्यस्थितिक औधिकेषु इत्यत्र चतुर्थे गमे 'इमाइं पंच नाणत्ताइं'ति वपुरवगाहने जघन्येतराभ्यामङ्गुलपृथक्त्वं, प्रथमगमे तु सा जघन्यतोऽङ्गुलपृथक्त्वं उत्कर्षतः पञ्च-धनुःशतानि १ तथेह त्रीणि ज्ञानानि त्रीण्यज्ञानानि भजनया, जघन्यस्थितिकस्यैषामेव भावात्, पूर्वं तु चत्वारि ज्ञानान्युक्तानीति २, तथेहाद्याः ५ समुद्घाताः, जघन्यस्थितिकस्यैषामेव सम्भवात्, प्राक् च षडुक्ताः, अजघन्यस्थितिकस्याहारकसमुद्घातस्यापि सम्भवात् ३, तथेह स्थितिरनुबन्धश्च जघन्यत उत्कृष्टतश्च मासपृथक्त्वं, प्राक् स्थित्यनुबन्धो जघन्यतो मासपृथक्त्वमुत्कर्षतस्तु पूर्वकोट्यभिहितेति, शेषगमास्तु स्वयमूह्याः। अथ शर्कराप्रभायां (सू.६९७) अनेनेदमुक्तं स्यात्, 'रयणिपुहुत्तं'ति सरीरोगाहणा जहण्णेणं, द्विहस्तप्रमाणेभ्यो हीनतरप्रमाणा द्वितीयस्यां नोत्पद्यन्ते, 'जहण्णेणं वासपुहुत्तं'ति वर्षद्वयायुर्भ्यो हीनतरायुषो द्वितीयायां नोत्पद्यन्ते, 'एवं एसा ओहिएसु तिसु गमएसु'त्ति ओहिओ ओहिएसु १ ओहिओ जहण्णठिईएसु २ ओहिओ उक्कोसठिइएसु ३, एते औधिकास्त्रयो गमाः, एतेष्वेवानन्तरोक्ता मनुष्यलब्धिः परिमाणं संहननप्राप्तिः, नानात्वं त्विदं यदुत नारकस्थितिं कालादेशेन कायसंवेधं च जानीयाः, तत्र प्रथमगमे स्थित्यादिकं सूत्रसिद्धमेव, द्वितीये तु औघिको जघन्यस्थितिष्वित्यत्र नारकस्थिति-र्जघन्येतराभ्यां सागरोपमं, कालतस्तु संवेधो जघन्यतो नरसत्कवर्षपृथक्त्वाधिकं सागरोपममुत्कर्षतस्तु सागरोपम ४ पूर्वकोट्य-

धिकानि, तृतीयेऽप्येवमेव, नवरं सागरोपमस्थाने जघन्यतः सागरत्रयं सागरचतुष्टयस्थाने तूत्कर्षतः सागरोपमद्वादशकं वाच्यमिति, 'सो चेवे'त्यादि, चतुर्थादिगमत्रयं, तत्र च 'संवेहो उवजुज्जिऊण भाणियव्वो'त्ति, स चैवम्—जघन्यस्थितिक औघिकेष्वित्यत्र गमे संवेधः कालादेशेन जघन्यतः सागरोपमं वर्षपृथक्त्वाधिकं उत्कर्षतो द्वादश सागराणि वर्षपृथक्त्वचतुष्काधिकानि, जघन्यस्थितिर्जघन्यस्थितिकेन कालतः कायसंवेधः सागरोपमं वर्षपृथक्त्वाधिकं उत्कर्षतः ४ सागराणि वर्षपृथक्त्वचतुष्काधिकानि, एवं षष्ठगमो ह्यूह्यः। 'सो चेवे'त्यादि, सप्तमादिगमत्रयं, तत्र च 'इमं नाणत्त'मित्यादि वपुरवगाहना पूर्वं हस्तपृथक्त्वं धनुःशतपञ्चकं चोक्ता इह तु शतपञ्चकमेव, एवमन्यदपि नानात्वमूह्यं 'मणुस्सठिती जाणियव्व'त्ति तिर्यक्स्थितिर्जघन्याऽन्तर्मुहूर्त्तमुक्ता, मनुष्यगमेषु तु मनुष्यस्थितिर्ज्ञातव्या, सा जघन्या द्वितीयादिगामिनां वर्षपृथक्त्वं उत्कृष्टा तु पूर्वकोटीति, सप्तमपृथ्वीप्रथमगमे 'तेत्तीसं सागरोवमाइं पुव्वकोडीअब्भहिआइं' इहोत्कृष्टः कायसंवेध एतावन्तमेव कालं स्यात् सप्तमपृथ्वीनारकस्य, तत उद्वृत्तस्य मनुष्येष्वनुत्पादेन मनुष्य १ नारकभवद्वयभावेनैवैतावत एव कालस्य भावादिति ॥ २४ शते प्रथमः ॥

द्वितीय आरभ्यते—'उक्कोसेणं पलिओवमस्स असंखिज्जइभागट्ठिइएसु उववज्जेज्जा' (सू. ६९८) इह पल्योपमासङ्ख्येयभागग्रहणेन पूर्वकोटी ग्राह्या, यतः पर्याप्तासंज्ञिपञ्चेन्द्रियतिरश्चः सम्मूर्च्छिमस्योत्कर्षतः पूर्वकोटीप्रमाणमायुः स्यात्, स चोत्कर्षतः स्वायुष्कतुल्यमेव देवायुर्बध्नाति, नाधिकं, अत आह चूर्णिकार—: 'उक्कोसेणं सतुल्लपुव्वकोडिआउयं निव्वत्तेइ, न य संमुच्छिमो पुव्वकोडिआउयत्ताओ परो अच्छति', अथ असङ्ख्यातवर्षायुःसंज्ञिपञ्चेन्द्रियतिर्यग्गमेषु 'उक्कोसेणं तिपलिओवमट्ठिइएसु उववज्जेज्ज'त्ति इदं देवकुर्वादिमिथुनकतिरश्चोऽधिकृत्योक्तं, ते हि पल्योपमायुष्कत्वेनासङ्ख्यातवर्षायुषः स्युस्ते च स्वा-

युःसमं देवायुर्बध्नन्तीति, 'संखेज्जा उववज्जंति'त्ति असङ्ख्यातवर्षायुस्तिर्यञ्चामसङ्ख्यातानां कदाचिदप्यनुत्पादात्, 'वइरोसभ' त्ति असङ्ख्यातवर्षायुषां यतस्तदेव स्यात्, 'जहण्णेणं धणुपुहुत्तं'ति इदं पक्षिणोऽधिकृत्योक्तं, पक्षिणामुत्कर्षतो धनुःपृथक्त्वप्रमाणवपुस्त्वात्, आह च–'धणुयपुहुत्तं पक्खिसु'त्ति, असङ्ख्यातवर्षायुषोऽपि ते स्युर्यदाह–'पलिआसंखेज्जपक्खीसु'त्ति पल्योपमासङ्ख्येयभागः पक्षिणामायुरिति, 'उक्कोसेणं छग्गाउयाइं'ति इदं च देवकुर्वादिहस्त्यादीनधिकृत्योक्तं, 'नो नपुंसगवेयग'त्ति असङ्ख्यातवर्षायुषो हि नपुंसकवेदा न स्युरिति, 'उक्को० तिपलिओवमाइं'ति त्रीण्यसङ्ख्यातवर्षायुषस्तिर्यग्भवसम्बन्धीनि त्रीणि चासुरभवसम्बन्धीनीत्येवं ६, न च देवभवादुद्वृत्तः पुनरप्यसङ्ख्यातवर्षायुष्केषूत्पद्यते इति, 'सो चेव अप्पणा जहण्णकालट्ठिइ'त्ति चतुर्थो गमः, इह जघन्यकालस्थितिकस्सातिरेकपूर्वकोटिआयुष्कप्रभृतिकः 'उक्को० साइरेग'त्ति असङ्ख्यातवर्षायुषां पक्ष्यादीनां सातिरेका पूर्वकोटिरायुः, ते च स्वायुस्तुल्यं देवायुः कुर्युरितिकृत्वा सातिरेकेत्याद्युक्तमिति 'उक्को० सातिरेगं धणुसहस्सं'ति यदुक्तं तत्सप्तमकुलकरप्राक्कालभाविनो हस्त्यादीनपेक्ष्येति सम्भाव्यते, तथाहि–सङ्ख्यातवर्षायुर्जघन्यस्थितिकः प्रक्रान्तः, स च सातिरेकपूर्वकोट्यायुः स्यादिति, तथैवागमे व्यवहृतेः, तत्कालीनहस्त्यादयश्चैतद्द्विगुणोच्छ्रयाः, अतः सप्तमकुलकरप्राक्कालभाविनामसङ्ख्यातवर्षायुषां हस्त्यादीनां यथोक्तमवगाहनाप्रमाणं लभ्यत इति, संवेधस्तु 'साइरेगाउ दो पुव्वकोडीओ'त्ति एका सातिरेका पूर्वकोटी तिर्यग्भवसत्का अन्या तु सातिरेकैवासुरभवसत्केति ४, 'जहण्णओ जहण्णेसु'त्ति पञ्चमे 'असुरकुमारठिइं संवेहं च जाणिज्ज'त्ति तत्र जघन्याऽसुरकुमारस्थितिर्दशवर्षसहस्राणि संवेधस्तु सातिरेका पूर्वकोटी १० वर्षसहस्राणि चेति ५, शेषगमास्तु स्वयमेव वाच्याः, एवमुत्पादितोऽसङ्ख्यातवर्षायुः संज्ञिपञ्चेन्द्रियतिर्यङ् असुरेषु, अथ सङ्ख्यात-

वर्षायुरसावुत्पाद्यते 'जइ संखेज्ज'त्ति,'उक्को० सातिरेगसागरोवमट्ठिइएसु'त्ति यदुक्तं तद् बलिनिकायमाश्रित्येति, 'तिसुवि गमएसु इमं नाणत्तं'ति जघन्यकालस्थितिकसम्बन्धिष्वौघिकादिषु 'चत्तारि लेसाउ'त्ति रत्नप्रभापृथ्वीगामिनां जघन्यस्थितिकानां तिस्रस्तत्रोक्ताः एषु पुनस्ताश्चतस्रः, असुरेषु तेजोलेश्यावानप्युत्पद्यते, तथा रत्नप्रभापृथ्वीगामिनां जघन्यस्थितिकानामध्यवसायस्थानान्यप्रशस्तान्येवोक्तानीह तु प्रशस्तान्यपि, दीर्घस्थितिकत्वे हि द्विविधान्यपि सम्भवन्ति, न त्वितरेषु, कालस्याल्पत्वात्, 'संवेहो साइरेगेण सागरोवमेण'त्ति रत्नप्रभागमेषु सागरेण संवेध उक्तः, असुरकुमारगमेषु तु सातिरेकसागरेणासौ कार्यः, बलिपक्षापेक्षया तस्यैव भावादिति, अथ नरेभ्योऽसुरानुत्पादयन्नाह–'जइ मणुस्सेहिंतो'इत्यादि 'उक्को० तिपलिओवमट्ठिइएसु'त्ति देवकुर्वादिनरा हि उत्कर्षतः स्वायुस्समस्यैव देवायुषो बन्धकाः अतः 'तिपलिओवमट्ठिइएसु' इत्युक्तं, नवरं 'सरीरोगाहण'त्ति तत्र प्रथम औघिकः औघिकेषु, द्वितीयस्तु औघिको जघन्यस्थितिषु, तत्रौघिकोऽसङ्ख्यातवर्षायुस्संज्ञी नरो जघन्यतः सातिरेक ५०० धनुःप्रमाणः स्यात्, तथा सप्तमकुलकरप्राक्कालभावी मिथुनकनरः उत्कर्षतस्त्रिगव्यूतमानो, यथा देवकुर्वादिमिथुनकनरः, स च प्रथमगमे, द्वितीये च जघन्यायुरुत्कृष्टायुरपीति द्विधाऽपि सम्भवति, तृतीये तु त्रिगव्यूतावगाहन एव, यस्मादसावेवोत्कर्षस्थितिषु पल्योपमत्रयायुष्केषूत्पद्यते, उत्कर्षतः स्वायुःसमायुर्बन्धकत्वात्तस्येति, अथ सङ्ख्यातवर्षायुःसंज्ञिनरमाश्रित्याह–'जइ संखेज्जे'त्यादि प्राग्वत्सर्वं ज्ञेयमिति ॥ २४ शते द्वितीयः ॥

उक्को० देसूणदुपलिओवमट्ठिइएसुत्ति (सू. ६९९) यदुक्तं तदौदीच्यनागकुमारापेक्षया, यतस्तत्र द्वे देशोने पल्योपमे उत्कर्षत आयुः स्याद्, आह च–'दाहिण दिवड्ढपलियं उत्तरओ हुंति दुन्नि देसूणा' इति, उत्कृष्टसंवेधपदे 'देसूणाइं पंच पलि-

ओवमाइं'ति पल्योपमत्रयं असङ्ख्यातवर्षायुस्तिर्यक्सम्बन्धि द्वे न देशोने ते नागकुमारसत्के इति यथोक्तं तत् स्यात्, द्वितीयगमे 'नागकुमारठिइं संवेहं च जाणेज्ज'त्ति तत्र जघन्या नागकुमारस्थितिर्दशवर्षसहस्राणि, संवेधस्तु कालतो जघन्यसाधिकपूर्वकोटीदशवर्षसहस्राधिकः, उत्कर्षः पुनः पल्योपमत्रयं तैरेवाधिकमिति, तृतीयगमे 'उक्कोसकालट्ठिइएसु'त्ति देशोनद्विपल्योपमायुष्केष्वित्यर्थः, तथा 'ठिई जहण्णेणं'ति यदुक्तं तदवसर्पिण्यां सुषमाख्यद्वितीयारकस्य कियत्यपि भागेऽतीतेऽसङ्ख्यातवर्षायुषस्तिरश्चोऽधिकृत्योक्तं, एषामेवैतत्प्रमाणायुष्कत्वात्, एषामेव च स्वायुःसमदेवायुर्बन्धकत्वेनोत्कृष्टस्थितिषु नागकुमारेषूत्पादात्, 'तिण्णि पलिओवमाइं'ति एतच्च देवकुर्वाद्यसङ्ख्यातजीवितिरश्चोऽधिकृत्योक्तं, ते च उत्कृष्टतः त्रिपल्योपमायुषोऽपि तत्र मध्यमस्थित्या देशोनद्विपल्योपममानमायुर्बध्नन्ति, यतस्ते स्वायुषस्समं हीनतरं वा तद्बध्नंति, न तु महत्तरमिति. अथ सङ्ख्यातायुःसंज्ञिपञ्चेन्द्रियतिर्यञ्चमाश्रित्याह-'जइ संखेज्ज'त्ति प्राग्वत् ज्ञेयमिति ॥ २४ शते तृतीयः ॥

(सू. ७००) एवमन्येऽष्टाविलोकादशः ॥ अथ १२ पृथ्वीकायिकोद्देशक उच्यते-'जहा वक्कंतीए'त्ति (सू. ७०१) यदुक्तं तदेवं दृश्यं-किं एगिंदियतिरिक्खजोणिएहिंतो जाव पंचिंदियतिरिक्खजोणिएहिंतो उववज्जंति ?, गोयमा ! एगिंदियतिरिक्खजोणिएहिंतोवि उववज्जंती'त्यादि, तृतीयगमे 'जहण्णेणं एक्को वे'त्यादि, प्राक्तनगमयोरुत्पित्सुबहुत्वेनासङ्ख्याता एवोत्पद्यन्त एवमुक्तं, इह तु उत्कृष्टस्थितय एकादयोऽसङ्ख्यातान्ताश्चोत्पद्यन्ते, उत्कृष्टस्थितिकेषूत्पित्सूनामल्पत्वेनैकादीनामपि उत्पादसम्भवात्, 'उक्को० अट्ठ भवग्गहणाइं'ति इहेदमवगन्तव्यं-यत्र संवेधे पक्षद्वयस्य मध्ये एकत्रापि पक्षे उत्कृष्टा स्थितिः स्यात् तत्रोत्कर्षतोऽष्टौ भवग्रहणानि, तदन्यत्र त्वसङ्ख्यातानि, ततश्चेहोत्पत्तिविषयभूतजीवेषूत्कृष्टा स्थितिरित्युत्कर्षतोऽष्टौ भवग्रहणानि, एवमग्रेऽपि वाच्यं, 'कायचरं

वाससयसहस्सं'ति द्वाविंशतेर्वर्षसहस्राणामष्टाभिर्भवग्रहणैर्गुणने ७६ वर्षसहस्राधिकं वर्षलक्षं स्यादिति १७६०००, चतुर्थे गमे 'तिण्णि लेसाओ'त्ति जघन्यस्थितिकेषु देवो नोत्पद्यत इति तेषु तेजोलेश्या नास्ति, षष्ठे गमे 'उक्को० अट्ठासीइं वाससहस्साइं'ति तत्र जघन्यस्थितिकस्योत्कृष्टस्थितिकस्य च चतुष्कृत्व उत्पन्नत्वात् २२ वर्षसहस्राणि चतुर्गुणितानि अष्टाशीतिः स्युः ४ अन्तर्मुहूर्त्तानीति, ९ गमे 'जह० चोयालीसं'ति २२ वर्षसहस्राणि भवद्वयात् द्विगुणितानि ४४ सहस्राणि स्युः । एवं पृथिवीकायिकेभ्य उत्पादितः, अथासावेवाप्कायिकेभ्य उत्पाद्यते, 'जइ आउक्काइए'त्ति 'चउक्कभेदो'त्ति सूक्ष्मबादरयोः पर्याप्तकापर्याप्तकभेदात् 'संवेहो तइयछट्ठे'इत्यादि, तत्र भवादेशेन जघन्यतः संवेधः सर्वगमेषु भवग्रहणद्वयरूपः प्रतीतः, उत्कृष्टत्वे यो विशेषः स दर्श्यते, तत्र तृतीयादिषु सूत्रोक्तेषु पञ्चसु गमेषूत्कर्षतः संवेधोऽष्टौ भवग्रहणानि, प्राग्दर्शिताया अष्टभवग्रहणनिबन्धनभूतायाः स्थितेस्तृतीयषष्ठसप्तमाष्टमेष्वेकपक्षे नवमे च उभयत्राप्युत्कृष्टस्थितेर्भावात्, 'सेसेसु चउसु गमएसु'त्ति शेषेषु चतुर्षु गमेषु प्रथमद्वितीयचतुर्थपञ्चमलक्षणेषूत्कर्षतोऽसङ्ख्यातानि भवग्रहणानि, एकत्रापि पक्षे उत्कृष्टस्थितेरभावात्, 'तइय गमए कालादेसेणं जहण्णेणं बावीसं'ति पृथ्वीकायिकानामुत्पत्तिस्थानभूतानामुत्कृष्टस्थितित्वात्, 'अन्तोमुहुत्त'त्ति अप्कायिकस्य तत्रोत्पित्सोरौघिकत्वेऽपि जघन्यकालस्य विवक्षितत्वेनान्तर्मुहूर्त्तस्थितिकत्वात्, 'उक्को० सोलसुत्तरं'ति इहोत्कृष्टस्थितिकत्वात् पृथ्वीकायिनां च तेषां चतुर्णां भवानां भावात् तत्रोत्पित्सोश्चाप्कायिकस्यौघिकत्वेऽप्युत्कृष्टकालस्य विवक्षितत्वादुत्कृष्टस्थितयश्चत्वारस्तद्भवाः, एवं च पृथ्वीकायिकस्य द्वाविंशतेर्वर्षसहस्राणां सप्तानां च सहस्राणामप्कायसत्कानां चतुर्गुणने ८८०००, २८००० मीलने च ११६०००, 'छट्ठे गमए'इत्यादि, षष्ठगमे हि अप्कायो जघन्यस्थितिक उत्कृष्टस्थितिपृथ्वीकायिकेषूत्पद्यते इत्यन्तर्मुहूर्त्तस्य वर्षस-

हस्राविंशतेश्च प्रत्येकं चतुर्भवग्रहणगुणितत्वे पृथ्वीकायस्य उत्कृष्टं यथोक्तं कालमानं स्यात् ८८०००, एवं सप्तमादिगमसंवेधा अभ्यूह्याः, नवरं नवमभंगे जघन्येन २९ वर्षसहस्राणि अप्कायिकपृथ्वीकायिकोत्कृष्टस्थित्योरप्कायपृथ्वीकाययोरेकभवापेक्षया जघन्यस्थितेर्मीलनादिति। अथ तेजस्कायिकेभ्यः पृथ्वीकायिकमुत्पादयन्नाह—'तिण्णि लेसाओ'त्ति अप्कायिकेषु देवोत्पत्तेस्तेजोलेश्या सद्भावात् चतस्रस्ता उक्ताः, इह तु तदभावात्तिस्र एव, 'ठिई जाणियव्व'त्ति तत्र तेजसु जघन्या स्थितिरन्तर्मुहूर्तमितरा तु त्रीण्यहोरात्राणि, 'तइयगमए'त्ति तृतीयगमे औघिकस्तेजस्कायिक उत्कृष्टस्थितिषु पृथिवीकायिकेषु उत्पद्यते इत्यत्रैकस्य पक्षस्योत्कृष्टस्थितिकत्वमतोऽष्टौ भवाः, तत्र चतुर्षु पृथिवीकायिकोत्कृष्टभवेषु द्वाविंशतेर्वर्षसहस्राणां चतुर्गुणनेऽष्टाशीतिस्तानि स्युः, चतुर्षु तेजस्कायिकभवेषु उत्कर्षतः प्रत्येकमहोरात्रत्रिके चतुर्भिर्गुणिते १२ अहोरात्राणीति, 'एवं संवेहो उवउजिऊण भाणियव्वो'त्ति स चैवं—षष्ठादिनवान्तेषु गमेषु ८ भवाः तेषु कालमानं यथोक्तं ज्ञेयं, शेषगमेषु तूत्कर्षतः असङ्ख्यातभवाः कालोऽप्यसङ्ख्येय एवेति। अथ वायुकायिकेभ्यः पृथ्वीकायमुत्पादयन्नाह—'संवेहो वाससहस्सेहिं कायव्वो'त्ति वायूनामुत्कर्षतः वर्षसहस्रत्रयस्थितिकत्वात् 'उक्को० एगं० वाससयसहस्सं'ति अत्र ८ भवाः, तेषु चतुर्षु द्वाविंशतेश्चतुर्गुणने ८८००० पुनरन्येषु चतुर्षु वायुभवेषु वर्षसहस्रत्रयस्य चतुर्गुणितेषु जाताः १२०००, एवं द्वयोर्मीलने वर्षलक्षमिति, 'एवं संवेहो उवजुजिऊण भाणियव्वो'त्ति स च यत्रोत्कृष्टस्थितिसम्भवस्तत्रोत्कर्षतः ८ भवाः इतरत्र त्वसङ्ख्यातभवाः कालतोऽसङ्ख्यात एव वाच्यः। अथ वनस्पतिभ्यस्तमुत्पादयन्नाह, अथ वनस्पतिकायानामप्कायवत् ९ गमा भणितव्याः, योऽत्र विशेषस्तमाह—'णाणासंठिए'त्यादि, अप्कायस्य स्तिबुकाकारावगाहना एषां तु नानासंस्थानस्थितता, तथा 'पढमएसु'त्ति प्रथमेषु औघिकेषु गमेषु पाश्चात्येषु चोत्कृष्टस्थितिगमेष्ववगाहना

वनस्पतिकायिकानां, द्विधाऽपि मध्यमेषु, जघन्यस्थितिगमेषु त्रिषु यथा पृथ्वीकायेषु उत्पद्यमानानामुक्ता तथैव वाच्या, अङ्गुलासङ्ख्यातभागमात्रेत्यर्थः, 'संवेहो ठिई य जाणियव्व'त्ति तत्र स्थितिरुत्कर्षतः १० वर्षसहस्राणि, जघन्या तु प्रतीतैव, एतदनुसारेण संवेधोऽपि ज्ञेयः, तमेव चैकत्र गमे दर्शयति-'तइए'त्ति, 'उक्को० अट्ठावीसुत्तरवाससयसहस्स'ति इह गमे उत्कर्षतः ८ भवाः तेषु ४ पृथ्व्या ४ वनस्पतेः, तत्र चतुर्षु पृथ्वीभवेषु उत्कृष्टेषु वर्ष ८८००० तथा वनस्पतेः १० वर्षसहस्रायुष्कत्वाच्चतुर्षु भवेषु ४००००, उभयमीलने यथोक्तमानमिति ॥ अथ द्वीन्द्रियेभ्यस्तमुत्पादयन्नाह-'बारस जोयणाइं'ति (सू. ७०२) यदुक्तं तत् शंखमाश्रित्य, यदाह-'संखो पुण बारस जोयणाइं'ति 'सम्मदिट्ठी-व'त्ति एतच्चोच्यते सास्वादनसम्यक्त्वापेक्षया, इयं च वक्तव्यतौघिकद्वीन्द्रियस्यौघिकपृथ्वीकायिकेषु, एवमेतस्य जघन्यस्थितिष्वपि, तस्यैवोत्कृष्टस्थितिषूत्पत्तौ संवेधे विशेषोऽत एवाह-'नवर'मित्यादि,'अट्ठ भव'त्ति एकपक्षस्योत्कृष्टस्थितिकत्वात् 'अडयालीसाए'त्ति चतुर्षु द्वीन्द्रियभवेषु १२ वर्षमानेषु ४८ वर्षाणि स्युः, तैरधिकानि ८८ वर्षसहस्राणि, द्वितीयस्यापि गमत्रयस्यैवं वक्तव्यता, विशेषमाह-'नवरं'ति इह सप्त नानात्वानि, वपुरवगाहना, यथा पृथ्वीकायानामङ्गुलासङ्ख्येयभागमात्रमित्यर्थः, प्राग्गमत्रये तु १२ योजनमानाऽपि उक्ता, तथा 'नो सम्मदिट्ठी' जघन्यस्थितितया सास्वादनसम्यग्दृष्टीनामनुत्पादात्, प्राक्तनगमे तु सम्यग्दृष्टिरप्युक्तः, तेषु मध्यमोत्कृष्टस्थितिभावात् २, तथा द्वे ज्ञाने प्राक्तने गमे ज्ञाने अज्ञाने अप्युक्ते ३, योगद्वारे कस्यापि जघन्यस्थितिकत्वेन पर्याप्तकत्वान्न वाग्योगः प्राक्-चासावप्युक्तः ४, स्थितिरन्तर्मुहूर्त्तमेव प्राक् च १२ वर्षाणि ५, अत्राध्यवसानान्यप्रशस्तानि प्रागुभयरूपाणि ६, सप्तमं नानात्वं अनुबन्धः ७, संवेधस्तु द्वितीयत्रयस्याद्ययोर्गमयोरुत्कर्षतो भवादेशेनासङ्ख्येयभवलक्षणः कालादेशेन सङ्ख्येयकालः, तृतीये तु विशेषमाह-'तइ-

ए गमए'त्ति अन्त्यगमत्रये 'कालादेसेणं उवजुज्जिऊण'त्ति यत्तदेव प्रथमगमे कालत उत्कर्षतः ८८ सहस्राणि ४८ वर्षैरधिकानि, द्वितीये तु संवेधः सूत्रसिद्ध एवेति, अथ त्रीन्द्रियेभ्यस्तमुत्पादयन्नाह—'छण्णउइं सयं राइंदिय'त्ति इह तृतीयगमेऽष्टौ भवाः, तत्र चतुर्षु त्रीन्द्रियभवेषु उत्कर्षतः ४९ दिनानि तेषु यथोक्तं कालमानं स्यादिति, 'मज्झिमा तिण्णि गमा तहेव' यथा मध्यगमा—त्रीन्द्रियगमाः 'संवेहो उवजुज्जिऊण'त्ति स पश्चिमगमत्रये भवादेशेन तूत्कर्षतः प्रत्येकं ८ भवाः, कालादेशेन तु पश्चिमगमत्रयस्य प्रथमगमे तृतीयगमे चोत्कर्षतः ८८ वर्षसहस्राणि १९६ दिनाधिकानि, द्वितीये तु १९६ दिनशतं ४ अन्तर्मुहूर्त्ताधिकं। अथ चतुरिन्द्रियेभ्यस्तमुत्पादयन्नाह—'नवरं एएसु चेव'त्ति वक्ष्यमाणेष्ववगाहनादिषु नानात्वानि त्रीन्द्रियत्रीन्द्रियप्रकरणापेक्षया चतुरिन्द्रियप्रकरणे विशेषाद् भणितव्यानि स्युः, तान्येव दर्शयति—'सरीरे'त्यादि, 'सेसं तहेव'त्ति शेषं—उपपातादिद्वारजातं तथैव यथा त्रीन्द्रियस्य, यस्तु संवेधे विशेषो न दर्शितः स स्वयमूह्यः। अथ असंज्ञिपञ्चेन्द्रियतिर्यग्भ्यस्तमुत्पादयन्नाह—'उक्को० अट्ठ भव'त्ति अनेनेदं ज्ञायते, यथोत्कर्षतः पञ्चेन्द्रियतिरश्चोऽष्टैव निरन्तरं भवाः स्युः, एवं सदृग्भवान्तरान्तरिता अपि भवान्तरैरसदृशैरेव स्युः, 'कालादेसेण उवजुज्जिऊण'त्ति अत्र प्रथमे गमे कालतः संवेधः सूत्रे दर्शित एव, द्वितीये तूत्कर्षतोऽसौ ४ पूर्वकोट्यः ४ अन्तर्मुहूर्त्तैरधिकाः, तृतीये तु ता एव ८८ वर्षसहस्रैरधिकाः, उत्तरगमेषु त्वतिदेशद्वारेण सूत्रोक्त एवासौ ज्ञेयः॥ अथ संज्ञिपञ्चेन्द्रियेभ्यस्तिर्यग्भ्यस्तमुत्पादयन्नाह—'जइ सन्नी'त्यादि, 'एवं संवेहो नवसु गमएसु'त्ति एवमुक्ताभिलापेन संवेधो नवस्वपि गमेषु यथा असंज्ञिनां तथैवाशेषोऽत्र वाच्यः, असंज्ञिनां संज्ञिनां चैव पृथ्वीपूत्पित्सूनां जघन्यतोऽन्तर्मुहूर्त्तायुष्कत्वात् उत्कर्षतश्च पूर्वकोट्यायुष्कत्वादिति, 'लद्धी से'त्यादि लब्धिः परिमाणसंहननादिप्राप्तिः 'से' तस्य पृथ्वीकायेषूत्पित्सोः संज्ञिनः आद्यगमत्रये 'एस

चेव'त्ति या रत्नप्रभायामुत्पित्सोस्तस्यैव मध्यमेऽपि गमत्रये एवैव लब्धिः, विशेषस्त्वयम्—'नवरं' नव च नानात्वानि जघन्यस्थितिकत्वात् स्युः, तानि चावगाहना १ लेश्या २ दृष्टि ३ अज्ञान ४ योग ५ समुद्घात ६ स्थित्य ७ ध्यवसान ८ अनुबन्धाख्यानि ९। अथ नरेभ्यस्तमुत्पादयन्नाह—'एवं जहे'त्यादि (सू. ७०३) यथा ह्यसंज्ञिपञ्चेन्द्रियतिरश्चो जघन्यस्थितिकस्य त्रयो गमाः तथैव तस्यापि त्रय औघिका गमाः स्युः, अजघन्योत्कृष्टस्थितिकत्वात् सम्मूर्च्छिमनराणां न शेषगमषट्कसम्भवः। अथ संज्ञिनरमाश्रित्याह—'जहेव रयणप्पभाए'त्ति संज्ञिनरस्यैवेति प्रक्रमः 'नवरं'ति रत्नप्रभायामुत्पित्सोर्हि नरस्यावगाहना जघन्येनाङ्गुलपृथक्त्वमुक्तं इह त्वङ्गुलासङ्ख्येयभागः, स्थितिश्च जघन्येन मासपृथक्त्वं प्रोक्तं इह त्वन्तर्मुहूर्त्तमिति, संवेधस्तु नवस्वपि गमेषु यथा पृथ्वीकायेषूत्पद्यमानस्य संज्ञिपञ्चेन्द्रियतिरश्च उक्तः तथैवेह वाच्यः, संज्ञिनो नरस्य तिरश्चश्च पृथ्वीकायिषूत्पित्सोर्जघन्यस्थितेरन्तर्मुहूर्त्तमानत्वादुत्कृष्टायास्तु पूर्वकोटीमानत्वादिति, 'मज्झिल्ले'त्यादि जघन्यस्थितिसत्कगमत्रये लब्धिस्तथेह वाच्या, यथा तत्रैव गमत्रये संज्ञिपञ्चेन्द्रियतिरश्च उक्ता, सा च तत्सूत्रादेवात्र ज्ञेया, 'पच्छिल्ले'त्ति औघिकगमेषु हि अङ्गुलासङ्ख्येयभागरूपाप्यवगाहना अन्तर्मुहूर्त्तरूपाऽपि स्थितिरुक्ता सा चेह न वाच्या, अत एवाह—'नवरं'ति 'ओगाहणं'त्ति अथ देवेभ्यस्तमुत्पादयन्नाह—'छण्हं संघयणाणं असंघयणी' इह यावत्करणादिदं दृश्यं 'णेवऽट्ठी णेव छिरा णेव ण्हारू णेवंच्छिमं ( छण्हं संघयणाणं अ ) संघयणी, जे पोग्गला इट्ठा कंता पिया मणुण्णा मणामा ते तेसिं संघायत्ताए०त्ति' तत्थ णं जा सा भवधारणिज्जा सा जहण्णेणं'ति उत्पादकालेऽनाभोगतः कर्मपारतन्त्र्यादङ्गुलासङ्ख्येयभागमात्राऽवगाहना स्यात्; उत्तरवैक्रिया तु जघन्या अङ्गुलस्य सङ्ख्येयभागमाना स्याद्, आभोगजनितत्वात् तस्याः न तथाविधा सूक्ष्मता स्यात् यादृशी भवधारणीयाया इति, 'तत्थ णं जा सा उत्तरवेउव्विय'त्ति यथा स्वेच्छावशेन

संस्थाननिष्पादनादिति, 'तिण्णि अण्णाणा भयणाए'त्ति ये असुरकुमारा असंज्ञिभ्य आगत्योत्पद्यन्ते तेषामपर्याप्तकावस्थायां विभङ्गस्याभावात् शेषाणां तु तद्भावादज्ञानेषु भजनोक्ता, 'जहण्णेणं दसवास'त्ति तत्र १० वर्षसहस्राण्यसुरकुमारेष्वन्तर्मुहूर्त्तं तु पृथ्वीकायिकेष्विति, इत्थमेव 'उक्कोसेणं'ति एतावानेव चोत्कर्षतोऽप्यत्र संवेधकालः पृथ्वीत उद्वृत्तस्यासुरकुमारेषूत्पादाभावादिति, 'मज्झिल्लएसु पच्छिल्लएसु'इत्यादि, अयं चेह स्थितिविशेषो-मध्यमेषु जघन्याऽसुराणां १० वर्षसहस्राणि स्थितिः; अन्त्यगमेषु च साधिकसागरोपममिति। ज्योतिष्कदण्डके-'तिण्णि नाणा तिण्णि अण्णाणा नियम'त्ति इहासंज्ञी नोत्पद्यते, संज्ञिनस्तूत्पत्तिसमय एव सम्यग्दृष्टेः ३ ज्ञानानि मत्यादीनि इतरस्य त्वज्ञानानि मत्यादीनि स्युः, 'अट्ठभाग'त्ति अष्टमो भागो अष्टभागः स एवावयवे समुदायोपचाराद् अष्टभागपल्योपमं, इदं च तारकदेवदेवीमाश्रित्योक्तं, 'उक्कोसेणं पलिओवमं'ति इदं च चन्द्रविमानदेवानाश्रित्योक्तमिति। एवं वैमानिकेभ्यस्तमुत्पादयन्नाह-'जई'त्यादि, एतच्च सर्वं प्राग्वज्ज्ञेयमिति। २४ शते द्वादशः॥

(सू. ७०४) त्रयोदशे नास्ति लेख्यम्। चतुर्दशे तु लिख्यते 'देवेसु न उववज्जंति'त्ति (सू. ७०५) देवेभ्य उद्वृत्तास्तेजस्कायेषु नोत्पद्यंते। (सू. ७०६) एवं पञ्चदशेऽपि। अथ षोडशे लिख्यते-'जाहे वणस्सइकाइओ'त्ति (सू. ७०७) अनेन वनस्पतेरेवानन्तानां उद्वृत्तिरस्ति नान्यतरस्मात् इत्येवकरणादावेदितं, शेषाणां हि सर्वेषामप्यसङ्ख्यातत्वात्, तथाऽनन्तानामुत्पादो वनस्पतिष्वेव, कायान्तरस्यानन्तानामभाजनत्वादित्यावेदितं, इह च प्रथमद्वितीयचतुर्थपञ्चमगमेष्वनुत्कृष्टस्थितिभावादनन्ता उत्पद्यन्त इत्युच्यते, तथा तेष्वेव प्रथमद्वितीयचतुर्थपञ्चमगमेषु अनुत्कृष्टस्थितित्वादेवोत्कर्षतो भवादेशेनानन्तानि भवग्रहणानि वाच्यानि, कालादेशेन चानन्तः कालः, शेषेषु तु पञ्चसु तृतीयषष्ठसप्तमादिषु ८ भवाः उत्कृष्टस्थितिभावात् 'ठिइं संवेहं च जाणेज्ज'त्ति तत्र

स्थितिर्जघन्या उत्कृष्टा च सर्वेष्वपि गमेषु प्रतीतैव, संवेधस्तु तृतीयसप्तमयोर्जघन्येन दश वर्षसहस्राण्यन्तर्मुहूर्त्ताधिकानि उत्कर्षतोऽष्टसु भवग्रहणेषु दशसहस्र्याः प्रत्येकं भावादशीतिर्वर्षसहस्राणि, षष्ठाष्टमयोस्तु जघन्येन १० वर्षसहस्राण्यन्तर्मुहूर्त्ताधिकानि, उत्कृष्टतस्तु ४४ वर्षसहस्राण्यन्तर्मुहूर्त्तचतुष्टयाधिकानि, नवमे तु जघन्यतः २० वर्षसहस्राण्युत्कर्षतस्त्वशीतिरिति ॥ २४ शते षोडशः॥

अथ द्वीन्द्रियस्य २४ दण्डकोत्पादरूपः सप्तदश आरभ्यते–'सच्चेव पुढविकाइयस्स'त्ति (सू. ७०८) या पृथ्वीकायिकस्य पृथ्वीकायिकेषूत्पित्सोर्लब्धिः प्रागुक्ता द्वीन्द्रियत्वेऽपि सैवेत्यर्थः। 'तेसु चेव चउसु'त्ति तेष्वेव चतुर्षु गमेषु प्रथमद्वितीयचतुर्थपञ्चमसंज्ञेषु, 'सेसेसु पंचसु'त्ति शेषेषु पञ्चसु तृतीयषष्ठसप्तमाष्टमनवमगमेषु 'एवं'ति यथा पृथ्वीकायिकेन सह द्वीन्द्रियस्य संवेध उक्तः एवमप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियैः सह संवेधो वाच्यः, तदेवाह–चतुर्षु प्रागुक्तेषु गमेषूत्कर्षतो भवादेशेन संख्येया भवाः, पञ्चसु तृतीयादिषु ८ भवाः, कालादेशेन च या यस्य स्थितिस्तत्संयोजनेन संवेधो वाच्यः। पञ्चेन्द्रियतिर्यग्नरैस्सह द्वीन्द्रियस्य तथैव सर्वगमेषु ८ भवा वाच्याः ॥ २४ शते सप्तदशः ॥

'ठिइं संवेहं'ति (सू.७०९) स्थितिं त्रीन्द्रियेषूत्पित्सूनां पृथिव्यादीनामायुः संवेधं च त्रीन्द्रियोत्पित्सुपृथिव्यादीनां त्रीन्द्रियाणां च स्थितेः प्रयोगं जानीयात्, तदेव क्वचिद्दर्शयति–'तेउकाइएसु'त्ति तेजस्कायिकैः सार्द्धं त्रीन्द्रियाणां स्थितिसंवेधस्तृतीयगमे प्रतीतः, उत्कर्षेण द्वे अष्टोत्तरे रात्रिंदिवशते, कथं?, औघिकस्य तैजस्कायिकस्य चतुर्षु भवेषूत्कर्षेण त्र्यहोरात्रमानत्वात् ४ भव(चतुष्क)स्य द्वादशाहोरात्राणि, उत्कृष्टस्थितिश्च त्रीन्द्रियस्योत्कर्षतः चतुर्षु भवेषु ४९ दिनमानत्वेन ४ भव(चतुष्क)स्य शतं षण्णवत्यधिकं स्यात्, राशिद्वयमीलने चाष्टोत्तरे द्वे रात्रिंदिवशते स्यातामिति। 'बेइंदिएहिं'ति 'अडयालीसं'ति द्वीन्द्रियस्योत्कर्षतो

१२ वर्षप्रमाणेषु चतुर्षु भवेषु ४८ संवत्सराः, चतुर्षु त्रीन्द्रियभवग्रहणेषु उत्कर्षेण ४९ अहोरात्रमानेषु १९६ दिनमानं स्यात्, 'तेंदिएहिं'ति 'थाणउयाइं'ति अष्टसु त्रीन्द्रियभवेषु उत्कर्षेण ४९ दिनमानेषु ३९२ दिनानि स्युः, 'एवं सव्वत्थे'ति अनेन चतुरिन्द्रियसंज्ञ्यसंज्ञितिर्यग्नरैस्सह त्रीन्द्रियाणां तृतीयगमसंवेधः कार्य इति सूचितं, तृतीयगमसंवेधदर्शनेन षष्ठादिगमसंवेधा अपि सूचिता द्रष्टव्याः, तेषामप्यष्टभविकत्वात्, प्रथमादिगमचतुष्कसंवेधस्तु भवादेशेनोत्कर्षतः सङ्ख्यातभवग्रहणरूपः, कालादेशेन त्वसङ्ख्यातकालरूप इति ॥ २४ शतेऽष्टादशः ॥

(सू. ६१०) एकोनविंशे न लेख्यमस्ति ॥ विंशतितमे तु लिख्यते—'उक्कोसेणं पुव्वकोडि'त्ति (सू. ७११) नारकाणामसङ्ख्यातवर्षायुष्केष्वनुत्पादादिति, 'असुरकुमाराणं'ति पृथ्वीकायिकेषूत्पद्यमानानामसुराणां या चैव वक्तव्यता परिमाणादिका प्रागुक्ता सेह नारकाणां पञ्चेन्द्रियतिर्यक्षूत्पद्यमानानां वाच्या, विशेषस्त्वेवं—'नवरं'ति, 'जहण्णेणं'ति उत्पत्तिसमयापेक्षमिदं, 'उक्को० सत्त धणूइं'ति इदं च त्रयोदशप्रस्तटापेक्षं, प्रथमप्रस्तटादिषु पुनरेवं 'रयणाइ पढमपयरे हत्थतियं'ति १, 'उक्को० पण्णरस'त्ति इयमवगाहना भवधारणीयायाः, उत्तरवैक्रियायास्तु तस्या द्विगुणेति, 'समुग्घाया चत्तारि'त्ति वैक्रियान्ताः 'सेसं तहेव'त्ति शेषं दृष्ट्यादिकं तथैव यथाऽसुराणां, 'सो चेव'त्ति २ गमः, 'सेसं तहेव'त्ति यथौघिकगमे प्रथमे 'एवं सेसावि'त्ति एवमनन्तरोक्तगमद्वयक्रमेण शेषा अपि ७ गमा भणितव्याः, ननु नैवंकरणात् यादृशी स्थितिर्जघन्योत्कृष्टभेदा आद्ययोर्गमयोर्नारकाणामुक्ता तादृश्येव मध्यमेऽन्तिमे च गमत्रये प्राप्नोति, तत्रोच्यते—'जहेव नेरइयउद्देसए'त्ति यथैव नैरयिकोद्देशके प्रथमशतसत्के संज्ञिपञ्चेन्द्रियतिर्यग्भिः सह नारकाणां मध्यमेषु गमेषु पश्चिमेषु त्रिषु गमेषु च स्थितिनानात्वं स्यात् तथैवेहापि, 'सरीरो-

गाहण'त्ति वपुरवगाहना यथा प्रज्ञापनायां २१ पदे, सा च सामान्यत एवं,'सत्त धणु तिन्नि रयणी छच्चेव य अंगुलाइं पढमाए। पुढवीए पुढवीए दुगुणा दुगुणं व सेसासु॥१॥"त्ति,'तिन्नि नाणाइं'ति द्वितीयादिषु संज्ञिभ्य एवोत्पद्यन्ते ते च त्रिज्ञानास्त्र्यज्ञाना वा नियमात् स्युः, 'उक्को० छावट्ठी'ति इह भवानां कालस्य च बहुत्वं विवक्षितं, तच्च जघन्यस्थितित्वे नारकस्य लभ्यत इति, २२ सागरायुर्नारको भूत्वा पञ्चेन्द्रियतिर्यक्षु पूर्वकोट्यायुर्जातः, एवं वारत्रये ६६ सागराणि पूर्वकोटीत्रयं च स्याद्, यदि चोत्कृष्टस्थितिः ३३ सागरायुर्नारको भूत्वा पूर्वकोट्यायुःपञ्चेन्द्रियतिर्यक्षूत्पद्यते तदा वारद्वयमेवैवमुत्पत्तिः स्यात्, ततश्च ६६ सागराणि पूर्वकोटीद्वयं च स्यात्, तृतीया तु तिर्यग्भवपूर्वकोटी न लभ्यत इति नोत्कृष्टता भवानां कालस्य च स्यादिति, उत्पादितो नरकेभ्यः पञ्चेन्द्रियतिर्यग्योनिकः, अथ तिर्यग्योनिकेभ्यस्तमुत्पादयन्नाह–'जइ'त्ति'जच्चेव अप्पणो'त्ति यैवात्मनः पृथ्वीकायस्य स्वस्थाने–पृथ्वीकायत्वे उत्पद्यमानस्य वक्तव्यता उक्ता सैवात्रापि वाच्या, केवलं तत्र परिमाणद्वारे प्रतिसमयमसङ्ख्येया उत्पद्यन्ते इत्युक्तं इह त्वेकादिः, एतदेवाह–'नवरं'ति तथा पृथ्वीकायेभ्यः पृथ्वीकायेषूत्पद्यमानस्य संवेधद्वारे प्रथमद्वितीयचतुर्थपञ्चमगमेषु उत्कर्षतोऽसङ्ख्याता भवाः प्रोक्ताः, शेषे तु ८ भवाः, इह पुनरष्टावेव नवस्वपीति, 'कालाएसेणं उभओ ठिईए करेज्ज'त्ति कालादेशेन संवेधं पृथ्वीकायिकस्य संज्ञिपञ्चेन्द्रियतिरश्चश्च स्थित्यां कुर्यात्, तथाहि–प्रथमे गमे कालाएसेणं जहण्णेणं दो अंतोमुहुत्ताइंति पृथ्वीसत्कं पंचेन्द्रियसत्कं चेति, उत्कर्षतः ८८ सहस्रवर्षाणि पृथ्वीसत्कानि ४ पूर्वकोटयः पञ्चेन्द्रियतिर्यक्सत्काः, एवं शेषेष्वपि गमेषु संवेध ऊह्य इति, 'सव्वत्थ अप्पणो'त्ति सर्वत्राप्कायिकादिभ्यश्चतुरिन्द्रियान्तेभ्य उद्वृत्तानां पञ्चेन्द्रियतिर्यक्षूत्पादे 'अप्पणो'त्ति अप्कायादेः सत्का लब्धिः परिमाणादिर्वाच्या, सा च प्राक्सूत्रतो ज्ञेया, 'जहेव पुढविकाइएसु उववज्जमाणाणं'ति इत्यादि,

यथा पृथ्वीकायेभ्यः पञ्चेन्द्रियतिर्यक्षूत्पद्यमानानां जीवानां लब्धिरुक्ता तथैवाप्कायिकादिभ्यश्चतुरिन्द्रियान्तेभ्य उत्पद्यमानानां सा वाच्येति। असंज्ञिभ्यः पञ्चेन्द्रियतिर्यगुत्पादाधिकारे-'उक्कोसेणं पलिओवमस्स'त्ति अनेनासंज्ञिपञ्चेन्द्रियाणामसङ्ख्यातवर्षायुष्केषु पञ्चेन्द्रियतिर्यक्षूत्पत्तिरुक्ता, 'अवसेसं जहेव'त्ति अवशेषं परिमाणादिद्वारजातं यथा पृथ्वीकायेषूत्पद्यमानस्यासंज्ञिनः पृथ्वीकायोद्देशके उक्तं तथैवासंज्ञिनः पञ्चेन्द्रियतिर्यक्षूत्पद्यमानस्य वाच्यमिति, 'उक्कोसेणं पलिओवमस्स'त्ति, कथं ?, असंज्ञी पूर्वकोट्यायुः पूर्वकोट्यायुष्केष्वेव पञ्चेन्द्रियतिर्यक्षूत्पन्न इत्येवं सप्तसु भवेषु सप्त पूर्वकोट्यः अष्टमभवे तु मिथुनकतिर्यक्षु पल्योपमासङ्ख्येयभागप्रमाणायुष्केषूत्पन्न इति, तृतीयगमे 'उक्कोसेणं संखेज्जा उववज्जंति'त्ति असङ्ख्यातवर्षायुषां पञ्चेन्द्रियतिरश्चामसङ्ख्यातानामभावादिति, चतुर्थगमे 'उक्कोसेणं पुव्वकोडिआउएसु'त्ति जघन्यायुरसंज्ञी सङ्ख्यातायुष्केष्वेव पञ्चेन्द्रियतिर्यक्षूत्पद्यते इतिकृत्वा पूर्वकोट्यायुष्केष्वित्युक्तं, 'अवसेसं जहा एयस्स'त्ति इहावशेषं-परिमाणादि एतस्य-असंज्ञितिर्यक्पञ्चेन्द्रियस्य 'मज्झिमेसु'त्ति जघन्यस्थितिगमेषु 'एवं जहा रयणप्पभाए'त्ति तत्र संहननोच्चत्वादि अनुबन्धसंवेधान्तं 'णवरं परिमाणं'ति तच्चेदं-'संखेज्जा उववज्जंति'त्ति ॥ अथ संज्ञिपञ्चेन्द्रियेभ्यः पञ्चेन्द्रियतिर्यञ्चमुत्पादयन्नाह-'जइ सण्णी'ति, 'अवसेसं'ति अवशेषं-परिमाणादि यथैतस्यैव, संज्ञिपञ्चेन्द्रियतिरश्च इत्यर्थः, केवलं तत्रावगाहना ७ धनूंषि इहोत्कर्षतो योजनसहस्रमाना, सा च मत्स्यादीनाश्रित्य ज्ञेयेति, 'नवरं'ति, 'उक्कोसेणं तिण्णि'त्ति अस्य भावना प्रागिव, 'लद्धी से जहा एयस्स'त्ति एतच्च तत्सूत्रानुसारेण ज्ञेयं, 'संवेहो जहेव'त्ति 'एत्थ चेव'त्ति पञ्चेन्द्रियतिर्यगुद्देशके, स चैवं 'भवादेसेणं'ति भवादेशेन जघन्येन द्वौ भवौ उत्को० ८ भवाः, कालादेशेन जघन्येन द्वे अन्तर्मुहूर्ते उत्कर्षतः ४ पूर्वकोट्योऽन्तर्मुहूर्त्तचतुष्काधिकाः, एष जघन्यस्थितिक औघिकेष्वित्यत्र संवेधः,

जघन्यस्थितिको जघन्यस्थितिकेष्वित्यत्र चान्तर्मुहूर्त्तैः संवेधः, जघन्यस्थितिक उत्कृष्टस्थितिकेष्वित्यत्र पुनरन्तर्मुहूर्त्तैः पूर्वकोटीभिश्च संवेधः, नवमगमे 'नवरं परिमाण'मिति तत्र परिमाणं उत्कर्षतः सङ्ख्याता उत्पद्यन्ते, अवगाहना चोत्कर्षतो योजनसहस्रमानेति। अथ मनुष्येभ्यस्तमुत्पादयन्नाह—'लद्धी से तिसुवि गमएसु'त्ति लब्धिः परिमाणादिका 'से' तस्यासंज्ञिनरस्याद्येषु त्रिष्वपि गमेषु, यतो नवानां गमानां मध्ये आद्या एव त्रयो गमाः सम्भवन्ति, जघन्यतोऽप्युत्कर्षतोऽपि चान्तर्मुहूर्त्तस्थितिकत्वात् तस्येति, 'एत्थ चेव'त्ति अत्रैव पञ्चेन्द्रियतिर्यगुद्देशके असंज्ञिपञ्चेन्द्रियतिर्यग्भ्यः पञ्चेन्द्रियतिर्यगुत्पादाधिकारे 'नो संखेज्जवासाउएहिंतो'त्ति असङ्ख्यातवर्षायुषो नरा देवेष्वेवोत्पद्यन्ते, न तिर्यक्ष्विति, 'लद्धी से'त्ति लब्धिः परिमाणादिप्राप्तिः 'से' तस्य असंज्ञिमनुष्यस्य यथैतस्यैव संज्ञिनरस्य पृथ्वीकायेषूत्पद्यमानस्य प्रथमे उक्ता, सा चैवं—परिमाणतो जघन्येनैको द्वौ वा उत्कर्षेण तु सङ्ख्याता एवोत्पद्यन्ते, स्वभावतोऽपि सङ्ख्यातत्वात् संज्ञिनराणां, तथा ६ संहननिनः उत्कर्षतः ५०० धनुरवगाहनाः ६ संस्थानिनः ६ लेश्याः त्रिविधदृष्टयः भजनया चतुर्ज्ञानाख्यज्ञानाश्च त्रियोगाः द्व्युपयोगाः चतुःसंज्ञाः चतुष्कषायाः पञ्चेन्द्रियाः ६ समुद्घाताः सातासातवेदनास्त्रिविधवेदाः जघन्येनान्तर्मुहूर्त्तायुषः, उत्कर्षेण पूर्वकोट्यायुषः अप्रशस्ताध्यवसानाः स्थितिसमानुबन्धाः, कायसंवेधस्तु भवादेशेन जघन्येन द्वौ भवौ उत्कर्षेण त्वष्टौ भवाः, कालादेशेन तु लिखित एवास्ते १, द्वितीयगमे 'सच्चेव वत्तव्वय'त्ति प्रथमगमोक्ता, केवलमिह संवेधः कालादेशेन जघन्यतो द्वे अन्तर्मुहूर्त्ते उत्कर्षतः ४ पूर्वकोटयश्चतुरन्तर्मुहूर्त्ताधिकाः, तृतीयेऽप्येवं, नवरं 'ओगाहणा जहण्णेणं'ति अनेनेदमवसितं—अङ्गुलपृथक्त्वाद्धीनतरवपुर्नरो नोत्कृष्टायुष्केषु तिर्यक्षूत्पद्यते, तथा 'मासपुहुत्तं'ति अनेनापि मासपृथक्त्वाद्धीनतरायुष्को नरो नोत्कृष्टस्थितिषु तिर्यक्षूत्पद्यते इत्युक्तं, 'जहा सण्णिपञ्चेन्दियतिरिक्खजोणिय-

स्स'त्ति नवरं 'परिमाणं'ति तत्र परिमाणद्वारे उत्कर्षतोऽसङ्ख्येयास्ते उत्पद्यन्ते इत्युक्तं, इह तु संज्ञिनराणां सङ्ख्येयत्वेन सङ्-
ख्येया उत्पद्यन्त इति वाच्यं, संहननादिद्वाराणि यथा तत्रोक्तानि तथेह ज्ञेयानि, तानि चैवं-तेषां ६ संहननानि जघन्योत्कर्षाभ्या-
मङ्गुलासङ्ख्येयभागमात्रावगाहना ६ संस्थानानि ३ लेश्याः मिथ्यादृग् द्वे अज्ञाने कायरूपो योगः २ उपयोगौ ४ कषायाः ५ इन्द्रि-
याणि ३ समुद्घाताः द्वे वेदने ३ वेदाः जघन्योत्कर्षाभ्यामप्यन्तर्मुहूर्त्तायुषः अप्रशस्ताध्यवसायाः आयुस्समानोऽनुबन्धः, कायसंवे-
धस्तु भवादेशेन द्वौ भवौ, उत्कर्षतो ८ भवाः, कालादेशेन तु संज्ञिनरपञ्चेन्द्रियतिर्यक्स्थित्यनुसारतो ज्ञेय इति। अथ देवेभ्यः
पञ्चेन्द्रियतिर्यक्ष्वुत्पादयन्नाह-'जइ देवेहिंतो'त्ति, 'असुरकुमाराणं लद्धी'त्ति असुराणां लब्धिः परिमाणादिका,'एवं जाव
ईसाणदेवस्स'त्ति यथा पृथ्वीकायेषु देवोत्पत्तिरुक्ता तथा असुरकुमारादिईशानान्तदेवपञ्चेन्द्रियतिर्यक्षु सा वाच्येति, ईशानकान्त
एव च देवः पृथ्वीकायेषूत्पद्यते इतिकृत्वोक्तं 'जाव ईसाणस्स'त्ति, असुराणां चैवं लब्धिः एकाद्यसङ्ख्येयान्तानां तेषां पञ्चेन्द्रि-
यतिर्यक्षु समयेनोत्पादः, तथा संहननाभावः, जघन्यतोऽङ्गुलासङ्ख्येयभागमात्रोत्कर्षतः ७ हस्तमाना भवधारणीया...अवगाहना,
इतरा तु जघन्यतोऽङ्गुलसङ्ख्येयभागमाना, उत्कर्षतस्तु योजनलक्षमाना, संस्थानं समचतुरस्रं, उत्तरवैक्रियापेक्षया तु नानाविधं, ४
लेश्याः त्रिविधा दृष्टिः ३ ज्ञानानि अवश्यं अज्ञानानि ३ भजनया, योगादीनि पञ्च पदानि प्रतीतानि, समुद्घाता आद्याः ५ वेदना
द्विधा पुंस्त्रीवेदद्वयं १० वर्षसहस्राणि जघन्या स्थितिः उत्कृष्टा तु सातिरेकं सागरोपमं, शेषं द्वारद्वयं तु प्रतीतं, संवेधं तु सामान्यत
आह-'भवादेसेणं सव्वत्थे'ति नागकुमारादिवक्तव्यतास्वनुयुक्त्या वाच्या, 'ओगाहणा जहा ओगाहणसंठाणे'त्ति अव- ॥२६५॥
गाहना यथा अवगाहनासंस्थाने प्रज्ञापनाया एकविंशतितमपदे, तत्र चैवं देवानामवगाहना-भवणवणजोइसोहम्मीसाणे सत्तहत्थ-

तणुमाणं। एकेकहाणि सेसे दुदुगे य दुगे चउक्के य ॥१॥", 'जहा ठिइ एएहिं'ति प्रज्ञापनायाश्चतुर्थपदे स्थितिश्च प्रतीतैव ॥ २४ शते २० उद्देशः ॥

अथ २१ उद्देशके नारकेभ्यो नरमुत्पादयन्नाह–'जहण्णेणं मासपुहुत्तठिइयेसु'त्ति (सू. ७१२) अनेनेदमुक्तं–रत्नप्रभानारका जघन्यं नरायुर्बध्नतो मासपृथक्त्वाद्धीनतरं न बध्नन्ति, तथाविधपरिणामासम्भवादित्येवमन्यत्रापि कारणं वाच्यं, तथा परिमाणद्वारे–'उक्कोसेणं एगसमएणं संखेज्जा उववज्जंति' नारकाणां सम्मूर्च्छिमेषु नरेषु उत्पादाभावात् गर्भजानां सङ्ख्यातत्वात् सङ्ख्याता एव ते उत्पद्यन्ते, 'जहा तर्हि तहा इहं'ति यथा तत्र पञ्चेन्द्रियतिर्यगुद्देशके रत्नप्रभानारकेभ्य उत्पद्यमानानां पञ्चेन्द्रियतिरश्चां जघन्यतोऽन्तर्मुहूर्त्तस्थितिकत्वादन्तर्मुहूर्त्तैः संवेधः कृतः तथेह नरोद्देशके नराणां जघन्यस्थितिमाश्रित्य मासपृथक्त्वैः संवेधः कार्य इति भावः, 'कालादेसेणं जहण्णेणं'ति इत्यादि। शर्कराप्रभादिवक्तव्यता तु पञ्चेन्द्रियतिर्यगुद्देशकानुसारेण ज्ञेया। अथ तिर्यग्भ्यो मनुष्यमुत्पादयन्नाह–'जइ तिरिक्खे'त्यादि, इह पृथ्वीकायादुत्पद्यमानस्य पञ्चेन्द्रियतिरश्चो या वक्तव्यता सैव तत उत्पद्यमानस्य नरस्यापि, एतदेवाह–'एवं जहेव'त्ति, 'नवरं तइए'त्ति तत्र तृतीये औघिकेभ्यः पृथ्वीकायेभ्य उत्कृष्टस्थितिषु नरेषु ये उत्पद्यन्ते ते उत्कृष्टतस्सङ्ख्याता एव स्युः, यद्यपि नरास्सम्मूर्च्छिमसङ्ग्रहादसङ्ख्याताः स्युः तथाप्युत्कृष्टस्थितयः पूर्वकोट्यायुषः सङ्ख्याता एव, पञ्चेन्द्रियतिर्यञ्चस्त्वसङ्ख्याता अपि स्युरिति, एवं षष्ठे नवमे चेति, 'जाहे अप्पणे'त्यादि, अयमर्थो–मध्यगमानां प्रथमगमे औघिकेषूत्पद्यमानतायामित्यर्थः अध्यवसानानि प्रशस्तानि उत्कृष्टस्थितिकत्वेनोत्पत्तौ अप्रशस्तानि च जघन्यस्थितिकत्वेनोत्पत्तौ 'बीयगमए'त्ति जघन्यस्थितिकस्य जघन्यस्थितिषूत्पत्तावप्रशस्तानि, प्रशस्ताध्यवसानेभ्यो जघन्यस्थिति-

कत्वेनानुत्पत्तेरिति, एवं तृतीयोऽपि वाच्यः ॥ अप्कायादिभिश्च तदुत्पादमतिदेशेनाह–'एवं आउकाइयाणवि'त्ति देवाधिकारे 'जाव-ईसाणदेव'त्ति यथाऽसुरा नरेषु पञ्चेन्द्रियतिर्यग्योनिकोद्देशवक्तव्यतातिदेशेनोत्पादिता एवं नागकुमारादय ईशानान्ता उत्पादनीयाः, सदृग्वक्तव्यत्वात्, यथा च तत्र जघन्यस्थितेः परिणामस्य च नानात्वमुक्तं तथैतेष्वपि, अत आह—'एयाणि चेव णाणत्ताणि'त्ति सनत्कुमारादिवक्तव्यतायां विशेषोऽस्ति तं भेदेन दर्शयति–'सणंकुमारे'त्यादि, 'एसा उक्कोसठिई भाणियव्व'त्ति यदा औघिकेभ्यश्च देवेभ्य औघिकादिनरेषूत्पद्यते तदोत्कृष्टस्थितिसंवेधविवक्षायां नरभवान्तरितैश्चतुर्भिस्सनत्कुमारदेवभवैरष्टाविंशत्यादिसागरोपममाना स्यात्, सप्तादिसागरोपममानत्वात् तस्या इति, यदा पुनर्जघन्यस्थितिकदेवेभ्य औघिकादिनरेषूत्पद्यते तदा जघन्यस्थितिः स्यात्, सा च चतुर्गुणिता सनत्कुमारादीनामष्टादिसागराणि, द्व्यादिसागरोपममानत्वात् तस्या इति,'आणयदेवे णं'ति, 'उक्कोसेणं छब्भव'त्ति त्रीणि देवसंबंधीनि त्रीणि नरसत्कानि इत्येवं षट्,'अट्ठारससागरोवमाइं'ति आनते जघन्यस्थितेरेवंभूतत्वात्, 'उक्कोसेणं सत्तावण्णं'ति आनते उत्कृष्टस्थितेः १९ सागरोपमप्रमाणाया भवत्रयगुणनेन ५७ सागराणि स्युरिति। ग्रैवेयकाधिकारे 'एगे भवधारणिज्जे'त्ति कल्पातीतदेवानामुत्तरवैक्रियं नास्तीत्यर्थः, 'नो चेव णं वेउव्विए'त्ति ग्रैवेयकदेवानां ५ समुद्घाताः लब्ध्यपेक्षया सम्भवन्ति, केवलं वैक्रियतैजसाभ्यां न ते समुद्घातं कृतवन्तः कुर्वन्ति करिष्यन्ति वा, प्रयोजनाभावादित्यर्थः, 'जहण्णेणं बावीसं'ति प्रथमग्रैवेयके जघन्येन तेषां २२ सागराणि 'उक्कोसेणं एक्कतीसं'ति ९ ग्रैवेयके उत्कर्षतः ३१ तानि सागराणि, 'उक्कोसेणं तेणउइं'ति इहोत्कृष्टतः ६ भवाः, त्रिषु देवभवेषूत्कर्षतो भवं २ प्रति सागराणामेकत्रिंशत् तत् त्रिगुणने त्रिनवतिस्तेषां स्यात्, त्रिभिरुत्कृष्टैर्नरजन्मभिस्तिस्रः पूर्वकोटयः स्युरिति। सर्वार्थसिद्धदेवाधिकारे आद्या एव

त्रयो गमाः स्युः, सर्वार्थसिद्धदेवानां जघन्यस्थितेरभावात् मध्यमगमत्रयं न स्यात्, उत्कृष्टस्थितेरभावाच्चान्तिममिति ॥ २४ शते २१ उद्देशः ॥

असङ्ख्यातवर्षायुःसंज्ञिपञ्चेन्द्रियाधिकारे–'उक्कोसेणं चत्तारि'त्ति (सू. ७१३) त्रिपल्यायुःसंज्ञिपञ्चेन्द्रियतिर्यङ् पल्योपमायुर्व्यन्तरो जात इति ४ पल्योपमानि, द्वितीयगमे 'जहेव नागकुमाराणं बिइयगमे वत्तव्वय'त्ति सा च प्रथमगमसमैव, नवरं जघन्यत उत्कर्षतश्च १० वर्षसहस्राणि, संवेधतः 'कालाएसेणं जहण्णेणं०' तृतीयगमे 'ठिई से जहण्णेण पलिओवमं'ति यद्यपि सातिरेका पूर्वकोटी जघन्यतोऽसङ्ख्यातवर्षायुषां तिरश्चामायुरस्ति तथाऽपीह पल्योपममुक्तं, पल्योपमायुर्व्यन्तरेषूत्पादयिष्यमाणत्वात्, यतोऽसङ्ख्यातवर्षायुः स्वायुषो बृहत्तरायुष्कदेवेषु नोत्पद्यते, एतच्च प्रागुक्तमेवेति, 'ओगाहणा जहण्णेणं गाउयं'ति येषां पल्योपममायुस्तेषामवगाहना गव्यूतं, ते च सुषमदुष्षमायामिति ॥ २४ शते २२ उद्देशकः ॥

'जहण्णेणं दो अट्ठभागपलिओवमाइं'ति (सू. ७१४) द्वौ पल्योपमाष्टभागावित्यर्थः, तत्रैकोऽसङ्ख्यातायुष्कसम्बन्धी द्वितीयो ज्योतिष्कसम्बन्धीति, 'उक्कोसेणं चत्तारि पलिओवमाइं वाससयसहस्समब्भहियाइं' त्रीण्यसङ्ख्यातायुःसत्कानि एकं च सातिरेकं चन्द्रविमानज्योतिष्कसत्कमिति, तृतीयगमे 'ठिई जहण्णेणं पलिओवमं वाससयसहस्समब्भहियं'ति यद्यप्यसङ्ख्यातवर्षायुषां सातिरेका पूर्वकोटी जघन्यतः स्थितिः स्यात् तथाऽपीह पल्योपमं वर्षलक्षाधिकमुक्तं, एतत्प्रमाणायुष्केषु ज्योतिष्केषूत्पत्स्यमानत्वात्, यतोऽसङ्ख्यातवर्षायुः स्वायुषो बृहत्तरायुष्केषु देवेषु नोत्पद्यते, एतच्च प्राग्दर्शितमेव, चतुर्थगमे जघन्यकालस्थितिकोऽसङ्ख्यातवर्षायुरौघिकेषु ज्योतिष्केषूत्पन्नः, तत्र सङ्ख्यातायुषो यद्यपि पल्योपमाष्टभागाद्धीनतरमपि जघन्यमा-

युष्कं स्यात् तथापि ज्योतिषां ततो हीनतरं नास्ति, स्वायुस्तुल्यायुर्बन्धकाश्चोत्कर्षतोऽसङ्ख्यातवर्षायुष इतीह जघन्यस्थितिकास्ते पल्योपमाष्टभागायुषः स्युः, ते च विमलवाहनादिकुलकरकालात् पूर्वतरकालभुवो हस्त्यादयः, औघिकज्योतिष्का अप्येवंविधा एव तेषामुत्पत्तिस्थानं स्युः, 'जहण्णेणं अट्ठभागपलिओवमट्ठिइएसु'त्ति इत्याद्युक्तं,'ओगाहणा जहण्णेणं धणुपुहुत्तं' यदुक्तं तत्पल्योपमाष्टभागमानायुषो विमलवाहनादिपूर्वतरकालभाविनो हस्त्यादिव्यतिरिक्तक्षुद्रकायचतुष्पदानपेक्ष्य ज्ञेयं, 'उक्कोसेणं साइरेगाइं अट्ठारस धणुसयाइं'ति एतच्च विमलवाहनादिपूर्वतरकालभाविहस्त्यादीनपेक्ष्योक्तं, यतो विमलवाहनो नवधनुःशतमानावगाहनः तत्कालहस्त्यादयश्च तद्द्विगुणाः, तत्पूर्वतरकालभाविनश्च ते सातिरेकतरप्रमाणाः स्युः, 'जहण्णकालठिइयस्स एस चेव'त्ति पञ्चषष्ठगमयोरत्रैवान्तर्भावात्, यतः पल्योपमाष्टभागमानायुषो मिथुनकतिरश्चः पञ्चमगमे षष्ठगमे च पल्योपमाष्टभागमानमेवायुः स्यात्, प्राग्भावितं चैतदिति, सप्तमादिगमेषूत्कृष्टैव त्रिपल्योपमलक्षणा तिरश्चः स्थितिः, ज्योतिष्कस्य तु सप्तमे द्विधा प्रतीतैव, अष्टमे पल्योपमाष्टभागरूपा नवमे सातिरेकपल्योपमरूपा, संवेधश्च तदनुसारेण कार्यः,'एए सत्त गमग'त्ति प्रथमास्त्रयः मध्यमत्रयस्थाने एकः पश्चिमास्तु त्रय एवेति सप्त, असङ्ख्यातवर्षायुष्कनराधिकारे 'ओगाहणा साइरेगाइं धणुसयाइं'ति विमलवाहनकुलकरपूर्वकालीननरापेक्षया, 'तिण्णि गाउयाइं'ति एतच्चैकान्तसुषमादिभाविनरापेक्षया 'मज्झिमगमए'त्ति पूर्वोक्तनीतेस्त्रिभिरप्येक एवायमिति ॥ २४ शते २३ उद्देशः ॥

'जहण्णेणं पलिओवमठिइएसु'त्ति (सू. ७१५) सौधर्मे जघन्येनान्यस्यायुषोऽसत्त्वात् 'उक्कोसेणं तिपलिओवमठिएसु'त्ति यद्यपि सौधर्मे बहुतरायुष्कमस्ति तथाप्युत्कर्षतस्त्रिपल्योपमायुष्का एव तिर्यञ्चः स्युः, तदनतिरिक्तं च देवायुर्न बध्नन्ति,'दो पलि- ॥२६७॥

ओवमाइं'ति एकं तिर्यग्भवसत्कमपरं च देवभवसत्कं 'छ पलिओवमाइं'ति त्रीणि पल्योपमानि तिर्यग्भवसत्कानि त्रीण्येव देवभवसत्कानीति 'सोचेव अप्पणा जहण्णकालठिईओ जाउ'त्ति गमत्रयेऽप्येको गमो, भावना तु दर्शितैव, 'जहण्णेणं धणुपुहुत्तं'ति क्षुद्रकायचतुष्पदापेक्षं, 'उक्कोसेणं दो गाउयाइं'ति यत्र क्षेत्रे काले वा गव्यूतमाना नराः स्युः तत्सम्बन्धिनो हस्त्यादीनपेक्ष्योक्तमिति। सङ्ख्यातायुःपञ्चेन्द्रियतिर्यगधिकारे 'जाहे अप्पणा जहण्णकालठिईओ'त्ति इत्यादौ 'नो सम्माभिच्छद्दिट्ठि'त्ति मिश्रदृष्टिर्निषेध्यः, जघन्यस्थितिकस्य तदसम्भवाद्, अजघन्यस्थितिकेषु दृष्टित्रयस्यापि भावादिति, तथा ज्ञानादिद्वारे द्वे ज्ञाने अज्ञाने वा स्यातां, जघन्यस्थितेरन्यज्ञानाज्ञानयोरभावादिति। अथ नराधिकारे 'नवरं आइल्लएसु दोसु गमएसु'त्ति आद्यगमयोर्हि पूर्वत्र धनुःपृथक्त्वं जघन्यावगाहना उत्कृष्टा तु गव्यूत ६ माना, इह तु जघन्येन 'गाउय'मित्यादि, तृतीयगमे तु जघन्यत उत्कर्षतश्च ६ गव्यूतान्युक्तानि, इह तु त्रीणि, चतुर्थगमे तु प्राग्जघन्यतो धनुःपृथग् उत्कर्षतो द्वे गव्यूते प्रोक्ते, इह तु जघन्यत उत्कर्षतश्च गव्यूतं, एवमन्यदप्यूह्यं, ईशानदेवाधिकारे 'साइरेगं पलिओवमं'ति ईशाने सातिरेकपल्योपमस्य जघन्यस्थितित्वात्, 'चउत्थगमएसु'त्ति ये सातिरेकपल्योपमायुषस्तिर्यञ्चः सुषमांशोद्भवाः क्षुद्रकायास्तानपेक्ष्योक्तं, 'ओगाहणा धणुपुहुत्तं उक्कोसेणं साइरेगाइं दो गाउयाइं'ति एतच्च यत्र काले सातिरेकगव्यूतमाना नराः स्युः तत्कालभवान् हस्त्यादीनपेक्ष्योक्तं, तथा 'जेसु ठाणेसु'त्ति सौधर्मदेवाधिकारे येषु स्थानेषु सङ्ख्यातवर्षायुर्नराणां गव्यूतमुक्तं 'तेसु ठाणेसु इहं'ति जघन्यतः सातिरेकपल्योपमस्थितिकत्वादीशानदेवस्य प्रासन्यदेवस्थित्यनुसारेण चासङ्ख्यातवर्षायुर्नराणां स्थितिसद्भावात् तदनुसारेणैव च तेषामवगाहनाभावादिति, सनत्कुमारदेवाधिकारे 'जाहे अप्पणा जहण्णे'त्यादि, 'पंच लेसाओ आइल्लाओ कायव्वाओ'त्ति

जघन्यस्थितिस्तिर्यङ् सनत्कुमारे उत्पित्सुर्जघन्यस्थितिसामर्थ्यात् कृष्णादीनां ४ लेश्यानामन्यतरस्यां परिणतो भूत्वा मृतिकाले पद्म-लेश्यामासाद्य म्रियते, ततस्तत्रोत्पद्यते, यतोऽग्रेतनभवपरिणामे सति जीवः परभवं गच्छतीत्यागमः, तद्देवस्य ५ लेश्याः स्युः, 'लंतगादीणं जहण्णे'त्यादि, एतद्भावना अनन्तरोक्तन्यायेन कार्या, 'संघयणाइं बंभलोयलंतएसु पंच आइल्लगाणि'त्ति छेदवर्तिसंहननस्य चतुर्णामेव देवलोकानां गमने निबन्धनत्वात्, यदाह—'छेवट्ठेण उ गम्मइ'त्ति वचनात्, 'जहण्णेणं तिण्णि भवग्गहणाइं'ति आनतादिदेवो नरेभ्य एवोत्पद्यते तेष्वेव न प्रत्यागच्छतीति जघन्यतो भवत्रयं स्यात्, एवं भवसप्तकमप्युत्क-र्षतो भाव्यमिति, 'उक्कोसेणं सत्तावण्ण'न्ति आनतादिदेवानामुत्कर्षतः १९ सागराणि आयुः तस्य च भवत्रयभावेन ५७ सागराणि नरभवचतुष्कपूर्वकोटीचतुष्काधिकानि स्युरिति, इति २४ शते २४ उद्देशः ॥

इति श्रीपरमगुरुलक्ष्मीसागरसूरिशिष्यश्रीसुमतिसाधुसूरिशिष्यश्रीहेमविमलसूरिविजयराज्ये शतार्थिश्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तहंसगणिशिष्यश्रीदानशेखरगणिसमुद्धृत-भगवतीलघुवृत्तौ चतुर्विंशतितमशतकविवरणं सम्पूर्णम् ॥

अथ पञ्चविंशतितममारभ्यते—यथा तत्र सङ्ग्रहगाथा चेयम्—लेसा य दव्व संठाणे'त्ति (*९३) लेश्यार्थवाच्यः १ द्रव्यवाचकः २ संस्थानवाच्यः ३ 'जुम्म'त्ति कृतयुग्माद्यर्थः ४ 'पज्जव'त्ति पर्यववाच्यः ५ पुलाकादिनिर्ग्रन्थवाच्यः ६ 'समणा य'त्ति सामायिकादिसंयतार्थवाच्यः ७ नारकोत्पत्त्यादिवाच्यः ८ 'भविया भविए'त्ति भव्याभव्यवाच्यौ उद्देशकौ १० 'सम्म'त्ति सम्यग्दृष्टिवाच्यः ११, 'मिच्छे य'त्ति मिथ्यादृग्वाच्यः १२॥ तत्र १ उद्देशके 'लेसाविभागो'त्ति (सू. ७१६) स च 'नेरइयाणं भंते! कइ लेस्साओ पण्णत्ता' इत्यादि, 'अप्पाबहुयं व'त्ति तदेवं 'एएसि णं भंते! जीवाणं सलेसाणं कण्हलेसाणं नीललेसाण'मित्यादि, कियद्दूरं तद्वाच्यमित्याह—'जाव चउव्विहाणं देवाणं'ति, तच्चेदम्—एएसि णं भंते! भवणवासीणं वाणमंतराणं जोइसियाणं वेमाणियाणं देवाणं देवीण य कण्हलेसाणं जाव सुक्कलेसाण य कयरे कयरेहिंतो'इत्यादि। अथ संसारसमापन्नजीवान् तद्योगाल्पबहुत्वं च निरूपयन्नाह—'सुहुम'त्ति (सू. ७१७) सूक्ष्मनामकर्मोदयात् 'अपज्जत्तग'त्ति अपर्याप्तका अपर्याप्तनामकर्मोदयात्, एवमितरे, तद्विपरीतत्वात्, 'बायर'त्ति बादरनामकर्मोदयात्, एते चत्वारोऽपि जीवभेदाः पृथिव्याद्येकेन्द्रियाणां 'जहण्णुक्कोसगस्स जोगस्स'त्ति जघन्यः—अपकृष्टः कांचिद्व्यक्तिमाश्रित्य स एव व्यक्त्यन्तरापेक्षया उत्कृष्टो जघन्योत्कर्षः, तस्य योगस्य वीर्यान्तरायक्षयोपशमादिसमुत्थकायपरिस्पंदस्य, एतस्य च योगस्य १४ जीवस्थानसंबंधात् जघन्योत्कर्षभेदाच्चाष्टाविंशतिविधस्याल्पबहुत्वादि जीवविशेषात् स्यात्, तत्र 'सव्वत्थोवे'त्ति सूक्ष्मस्य पृथ्व्यादेः सूक्ष्मत्वाच्छरीरस्य तस्याप्यपर्याप्तकत्वेनासम्पूर्णत्वात् तत्रापि जघन्यस्य विवक्षितत्वात् सर्वेभ्यो वक्ष्यमाणेभ्यो योगेभ्यः सकाशात् स्तोकः सर्वस्तोकः स्यात् जघन्यो योगः, पुनर्विग्रहिककार्मण औदारिकपुद्गलग्रहणप्रथमसमयवर्त्ती, तदनन्तरं च समयवृद्ध्या अजघन्योत्कृष्टो यावत् सर्वोत्कृष्टो न स्यात्, बादरजीवस्य

पृथ्व्यादेरपर्याप्तकस्य जघन्यो योगः प्रागुक्तापेक्षया असङ्ख्यातगुणवृद्धो बादरत्वादेवेति, एवमुत्तरत्रापि असङ्ख्यातगुणत्वं दृश्यं, इह च यद्यपि पर्याप्तत्रीन्द्रियोत्कृष्टकायापेक्षया पर्याप्तकानां द्वीन्द्रियाणां संज्ञिनामसंज्ञिनां च पञ्चेन्द्रियाणामुत्कृष्टः कायस्सङ्ख्यातगुणः स्यात्, सङ्ख्यातयोजनप्रमाणत्वात्, तथाऽपीह योगस्य विवक्षितत्वात् तस्य च क्षयोपशमविशेषसामर्थ्यात् यथोक्तमसङ्ख्यातगुणत्वं न विरुध्यते, न ह्यल्पकायस्य अल्पस्पन्दः स्यात् महाकायस्य वा महानेव, व्यत्ययेनापि तस्य दर्शनादिति, इह चेयं स्थापना—

| सुहुम अपज्ज | सुहुम प. | बादर अप. | बादर प. | बेइं. अप. | बे. पज. |
|---|---|---|---|---|---|
| जघन्ययोग १ | जघन्य ८ | असं. २ | जघ. ३ | जघ. यो. ९ | ज. १४ |
| उत्कृष्टयोग १० | उत्कृष्ट १२ | उत्कृ. ११ | उत्कृ. १३ | उत्कृ. १९ | उत्कृ. २४ |

| त्री. अ. प. | त्री. पज. | च. अप. | च। पज. | असं। अ. | असंप. | सं। अप. | सं। प |
|---|---|---|---|---|---|---|---|
| ज. घ. ४ | जघ. १५ | ज. ५ | जघ. १६ | जघन्य ६ | जघ. १७ | ज. १८ | ज. ७ |
| उ. २० | उत्कृ. २५ | उत्कृ. २१ | उ. २६ | उत्कृ. २२ | उत्कृ. २७ | उ. २८ | उ. २३ |

योगाधिकारादेवेदमाह—'दो भंते!' इत्यादि (सू. ७१८) प्रथमः समय उपपन्नयोर्ययोस्तौ प्रथमसमयोपपन्नौ, उत्पत्तिश्चेह नरकक्षेत्रप्राप्तिः, सा तावद् द्वयोरपि विग्रहेण ऋजुगत्या वा एकस्य वा विग्रहेणान्यस्य च ऋजुगत्येति। 'समजोगि'त्ति (सू. ७१९) समो योगो विद्यते ययोस्तौ समयोगिनौ, एवं विषमयोगिनौ, 'आहारगाउ वे'ति आहारकाद्वा—आहारकनारकमाश्रित्य 'से'त्ति स नारकोऽनाहारकः अनाहारकाद्वा—अनाहारकनारकमाश्रित्य आहारकः, किमित्याह—'सिय हीणे'त्ति यो नारको विग्रहाभावेन नारक एवोत्पन्नोऽसौ निरन्तराहारकत्वादुपचित एव, तदपेक्षया च यो विग्रहगत्याऽनाहारको भूत्वोत्पन्नोऽसौ हीनः, पूर्वमनाहारकत्वेनानुपचितत्वाद्धीनयोगत्वेन च विषमयोगी स्यादित्यर्थः, 'सिय तुल्ले'त्ति यौ समानसमयया विग्रहगत्याऽनाहारकौ भूत्वोत्पन्नौ, ऋजुगत्या वा गत्वोत्पन्नौ तयोरेकः

अन्यापेक्षया तुल्यः, समयोगी स्यादित्यर्थः, 'अब्भहिय'त्ति यो विग्रहाभावेनाहारक एवागतोऽसौ विग्रहगत्यनाहारकापेक्षया चितत्वेनाभ्यधिको, विषमयोगीति भावः, इह च 'आहारयाओ वा से अणाहारए' इत्यनेन च हीनतायाः 'अणाहारयाओ वा आहारए' इत्यनेन चाभ्यधिकताया निबन्धनमुक्तं, अथ योगस्यैवाल्पबहुत्वं प्रकारान्तरेणाह–'एयस्स णं'मित्यादि, इहापि योगः परिस्पन्द एव, अस्य चेयं स्थापना ॥ २५ शते प्रथमः ॥

| सत्यम ॥ | अस. | मि. | असत्यामृषा | सत्य वा. | अ. वा. | मि. | असत्या. | औ. | औमि. | वै. | वैमि. | आ. | आमि. | कार्म. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| जघन्य १२ | १२ | १२ | १० मनोयो. | गू १२ | १२ | १२ | १२ | ४ | असं. ३ | ५ | ६ | ११ | ७ | १ |
| उत्कृष्ट १४ | १४ | १४ | १४ गं. | १४ | १४ | १४ | १४ | १४ | ९ | १४ | ९ | १३ | ८ | ६ |

द्वितीये द्रव्याधिकारमाह–'जहा अजीवपज्जव'त्ति (सू. ७२०) यथा प्रज्ञापनाया विशेषाख्ये पञ्चमे पदे जीवपर्यवा उक्ताः, तत्सूत्राण्येवमाह–'अरूविअजीवदव्वा णं भंते! कइविहा पण्णत्ता?, गो०! दसविहा पं०, तं०–धम्मत्थिकाए' इत्यादि, तथा रूविअजीवदव्वा णं भंते! कइविहा पण्णत्ता?, गोयमा! चउव्विहा पण्णत्ता, तंजहा–खंधा' इत्यादि, तथा 'ते णं भंते! किं संखेज्जा असंखेज्जा अणंता?; अणंता, से केणट्ठेणं भंते! एवं वुच्चइ?, गो०! अणंता परमाणू, अणंता दुपएसिया खंधा, अणंता तिपएसिया खंधा, जाव अणंता अणंतपदेसिया खंधा' इति। द्रव्याधिकारादेवेदमाह–'जीवदव्वाणं भंते! अजीवदव्वे'त्यादि (सू. ७२१) इह जीवद्रव्याणि परिभोजकानि सचेतनत्वेन ग्राहकत्वात्, अन्यानि तु परिभोग्यानि, अचेतनतया ग्राह्यत्वादिति। द्रव्याधिकारादेवेदमाह–'से नूणं'ति (सू. ७२२) 'असंखेज्ज'त्ति असङ्ख्यातप्रदेशात्मक इत्यर्थः, 'अणंताइं दव्वाइं'ति जीवपरमाण्वादीनि

'आगासे भइयव्वाइं'ति सप्तम्याश्च षष्ठ्यर्थत्वात् आकाशस्य भक्तव्यानि, धारणीयानीत्यर्थः, पृच्छतोऽयमभिप्रायः-कथमसङ्ख्यातप्रदेशात्मके लोकाकाशे अनन्तानां द्रव्याणामवस्थानं?, हंता! इत्यादिना तत्र तेषामनन्तानामपि अवस्थानं आवेदितं, यथाऽपवरकाकाशे प्रदीपप्रभापुद्गलभृतेऽन्यान्यदीपप्रभा अवतिष्ठन्ते, तथाविधपुद्गलपरिणामाद्, एवमेवासङ्ख्यातेऽपि लोके तेष्वेव २ प्रदेशेषु द्रव्याणां तथाविधपरिणामवशेनावस्थानादनन्तानामपि तेषामवस्थानमविरुद्धमिति। अथ तेषां चयापचयाद्याह-'कइदिसं पोग्गला चिज्जंति'त्ति कतिभ्यो दिग्भ्य आगत्य एकत्राकाशप्रदेशे चीयन्ते, छिज्जंति-व्यतिरिक्ताः स्युः, 'उवचिज्जंति' पुद्गलाः स्कन्धरूपा पुद्गलान्तरसम्पर्कादुपचिताः स्युः, 'अवचिज्जंति' स्कन्धरूपा एव पुद्गलाः प्रदेशविघटनेनापचीयन्ते। 'ठियाइं'ति (सू. ७२३) स्थितानि जीवप्रदेशावगाढक्षेत्रस्य मध्यवर्त्तीनि, अस्थितानि च तदनन्तरवर्त्तीनि, तानि पुनरौदारिकवपुःपरिणामादाकृष्य गृह्णाति, 'किं दव्वओ गिण्हइ' किं द्रव्यमाश्रित्य गृह्णाति?, द्रव्यतः किंस्वरूपाणि गृह्णातीत्यर्थः, एवं क्षेत्रतः-क्षेत्रमाश्रित्य, कतिप्रदेशावगाढानीत्यर्थः, वैक्रियवपुरधिकारे 'नियमं छद्दिसं'ति, तत्रायमभिप्रायः-वैक्रियशरीरी पञ्चेन्द्रिय एव स्यात्, स नाड्या मध्य एव, ततो षण्णामपि दिशामनावृतत्त्वमलोकेन विवक्षितलोकदेशस्येत्यत उच्यते 'नियमं छद्दिसं'ति यच्च, वायुकायिकानां त्रसनाड्या बहिरपि वैक्रियकरणं स्यात् तदिह न विवक्षितं, अप्रधानत्वात् तस्य, तथा लोकान्तनिष्कुटे वा वैक्रियशरीरी वायुर्न सम्भवति, तैजससूत्रे 'ठियाइं गिण्हइ'त्ति जीवोऽवगाढक्षेत्रमध्यवर्त्तीन्येव गृह्णाति, 'नो अठियाइं'ति तदनन्तरवर्त्तीनि गृह्णाति, तस्याकर्षपरिणामाभावात्, 'जहा भासापदे'त्ति यथा प्रज्ञापनायां ११ पदे तथा वाच्यं, तच्च 'एगपएसियाइं'ति द्रव्यविषयं षड्दिक्त्वं च, एवमिदमपि। श्रोत्रेन्द्रियद्रव्यग्रहणं हि नाडीमध्य एव च 'सिय तिदिसं'ति नास्ति, व्याघाताभावात्,

'फासिंदियत्ताए जहा ओरालिय'त्ति, अयमर्थः—स्पर्शनेन्द्रियतया द्रव्याणि गृह्णाति यथौदारिकवपुःस्थितास्थितानि षड्दिगागतप्रभृतीनि 'मणजोगत्ताए'त्ति 'नियमं छद्दिसिं'ति मनोयोगतया तथा द्रव्याणि गृह्णाति, यथा कार्मणं स्थितान्येव गृह्णाति, केवलं तत्र व्याघातेनेत्युक्तं इह तु नियमात् षड्दिशीत्येवं वाच्यं, नाडीमध्य एव मनोद्रव्यग्रहणभावात्, अत्रसानां हि तन्नास्ति, एवं—मनोद्रव्यवद्वाग्द्रव्याणि गृह्णातीत्यर्थः, 'कायजोगत्ताए'त्ति काययोगद्रव्याणि स्थितास्थितानि षड्दिगागतप्रभृतीनि 'काइ'त्ति शरीराणि ५ इन्द्रियाणि ५ योगास्त्रयः आनप्राणं च, सर्वाणि १४ पदानि ॥ २५ शते द्वितीयः ॥

तृतीये पुद्गलसंस्थानान्याह, संस्थानानि स्कन्धाकाराः 'अणित्थंत्थि'त्ति (सू. ७२४) इत्थं—अनेन प्रकारेण परिमण्डलादिना तिष्ठतीति इत्थंस्थं न इत्थंस्थमनित्थस्थं परिमण्डलादिभिन्नं 'दव्वत्थयाए'त्ति द्रव्यरूपमर्थमाश्रित्य 'पएस'त्ति प्रदेशरूपमर्थमाश्रित्य 'दव्वट्ठपएसट्ठ'त्ति तदुभयमाश्रित्य 'सव्वत्थोवा परिमंडल'त्ति इह यानि संस्थानानि यत्संस्थानापेक्षया बहुतरप्रदेशावगाहानि तानि तदपेक्षया स्तोकानि तथाविधस्वभावत्वात्, तत्र च परिमण्डलं संस्थानं जघन्यतोऽपि विंशतिप्रदेशावगाहाद्बहुतरप्रदेशावगाहि, वृत्तत्र्यस्रचतुरस्रायतानि तु क्रमाज्जघन्यतः पञ्चचतुस्त्रिद्विप्रदेशावगाहित्वात् अल्पप्रदेशावगाहीनि, अतः सर्वेभ्यो बहुतरप्रदेशावगाहित्वात् परिमण्डलस्य परिमण्डलसंस्थानानि सर्वेभ्यः सकाशात् स्तोकानि इत्यादि। 'से किं तं आयारो''त्ति(सू.७३२) प्राकृतत्वात् कोऽसावाचारः ?, 'आयारगोयर'इत्यनेनेदं सूचितम् 'आयारगोयरविणयवेणइयसिक्खाभासाचरणकरणजायमायावित्तीओ आघविज्जंति'त्ति तत्राचारो—ज्ञानाद्यनेकभेदभिन्नः गोचरो—भिक्षाग्रहणविधिः विनयो—ज्ञानादिविनयः वैनयिकं—विनयफलं कर्म कार्यादि शिक्षाग्रहणासेवनाभेदभिन्ना अथवा वैनयिको विनेयो वा शिष्यस्तस्य शिक्षा वैनयिकशिक्षा विनयशिक्षा वा भाषा सत्या

असत्यामृषा च अभाषा-मृषा सत्यामृषा वा चरणं-व्रतादि करणं-विशुद्ध्यादि यात्रा-संयमयात्रा मात्रा-तदर्थं आहारप्रमाणं वृत्तिः-विविधैरभिग्रहविशेषैर्वर्त्तनं, आचारश्च गोचरश्चेति द्वन्द्वः, एवमंगपरूवणा भाणियव्वा, 'जहा नंदीए'त्ति एवं प्रागुक्तसूत्रेणा-नाराद्यङ्गप्ररूपणा भणितव्या यथा नन्द्यां, सा चेयमङ्गप्ररूपणा नन्द्युक्ता कियद्दूरं वाच्या इत्याह-'सुत्तत्थो' गाहा (*९४) सूत्रा-र्थमात्रप्रतिपादनपरः सूत्रार्थः अनुयोगः, खलुशब्द एवार्थो, गुरुणा सूत्रार्थमात्राभिधानलक्षण एव प्रथमोऽनुयोगः कार्यो, मा भूत् प्राथमिकशिष्याणां मतिमोह इति, द्वितीयोऽनुयोगः सूत्रस्पर्शकनिर्युक्तिमिश्रः कार्यः, तृतीयस्त्वनुयोगो निरवशेषो, निरवशेषस्य प्रसक्तानुप्रसक्तस्यार्थकथनात्, एष विधिः स्यात् सूत्रस्यार्थेनानुरूपतया योजनलक्षणानुयोगे इति गाथार्थः ॥ अथायं तृतीय उद्देशो-ऽतिसूक्ष्मार्थत्वादनुपयोगित्वाच्च अव्याख्यातोऽपि न विव्रियते, विशेषार्थिना तु बृहद्वृत्तिर्विलोक्या ॥ २५ शते तृतीयः ॥

चतुर्थेऽपीदमादिसूत्रम्-'करण'मित्यादि (सू. ७३४) 'कइजुम्म'त्ति संज्ञाशब्दत्वाद्राशिः नेरइयाणं भंते! कइ जुम्मेत्यादौ 'अट्ठो तहेव'त्ति स एवार्थः, जे णं नेरइया चउक्कएणं अवहारेणं अवहीरमाणा २ चउपज्जवसिया सिया ते णं नेरइया कडजुम्मेत्यादि स्वरूपश्चतुर्थ उद्देशकोऽप्यतिसूक्ष्मार्थत्वादनुपयोगित्वाच्च न विव्रियते, विशेषार्थिना तु वृत्तिर्विलोक्या ॥ २५ शते चतुर्थः ॥

पञ्चमस्यादिसूत्रमिदम्-'कइविहे'त्ति 'पज्जव'त्ति (सू. ७४६) पर्यवा गुणा धर्मा विशेषा इति पर्यायाः, 'जीवपज्जवा य'त्ति जीवपर्यवाः, एवं अजीवपर्यवा अपि. 'पज्जवपयं निरवसेसं भाणियव्वं जहा पण्णवणाए'त्ति पर्यवपदं च-विशेषपदं प्रज्ञाप-नायां पञ्चमं, तच्चेदम्-जीवपज्जवा णं भंते! किं संखेज्जा असंखेज्जा अणंता?, गो०! नो संखेज्जा नो असंखेज्जा अणंते'त्यादि ॥ २५ शते पञ्चमः ॥

अथ षष्ठ आरभ्यते, तत्र तिस्रो द्वारगाथा उच्यंते—'पण्णवण १ वेय २ रागे ३ कप्प ४ चरित्त ५ पडिसेवणा ६ नाणे ७। तित्थे ८ लिंग ९ सरीरे १० खित्ते ११ काल १२ गति १३ संजम १४ निगासे १५ ॥१॥ (*९५) जोगु १६ वओग १७ कसाए १८ लेसा १९ परिमाण २० बंध २१ वेदे य २२। कम्मोदीरण २३ उवसंपजहण २४ सण्णा य २५ आहारे २६ ॥२॥ (*९६) भव २७ आगरिसे २८ कालं २९ तरे ३० समुग्घाय ३१ खेत्त ३२ फुसणा ३३ य। भावे ३४ परिमाणे ३५ खलु अप्पाबहुयं ३६ नियंठाणं॥३॥(*९७)' 'नियंठ'त्ति निर्गताः सबाह्याभ्यन्तरात् ग्रन्थादिति निर्ग्रन्थाः, तत्र 'पुलाए'त्ति पुलाको—निःसारो धान्यकणस्तद्वत् पुलाकः, संयमसारापेक्षया, स च संयमवानपि मनाक् तमसारं कुर्वन् पुलाक इत्युच्यते १ 'बउसे'त्ति बकुशं—शबलं, ततश्च बकुशसंयमयोगाद्बकुशः २ 'कुसीले'त्ति कुत्सितं शीलं—चरणमस्येति कुशीलः 'नियंठे'त्ति निर्गतो ग्रन्थात् मोहनीयकर्मादिति निर्ग्रन्थः ४, 'सिणाए'त्ति स्नात इव स्नातो घातिकर्ममलक्षालनात्, तत्र पुलाको द्विधा—लब्धिप्रतिसेवाभेदात्, तत्र लब्धिपुलाको लब्धिविशेषवान्, यदाह—संघाइयाण कज्जे चुण्णिज्जा चक्कवट्टिसिन्नंपि। तीए लद्धीएँ जुओ लद्धिपुलाओ मुणेयव्वो ॥१॥" प्रतिसेवापुलाकमाह—'नाणपुलाए'त्ति ज्ञानविराधको ज्ञानपुलाकः, एवं दर्शनपुलाकादीनाह—'खलियाइदूसणेहिं नाणं संकाइएहिं सम्मत्तं। मूलत्तरगुणपडिसेवणाएँ चरणं विराहेइ ॥१॥ लिंगपुलाओ अन्नं निक्कारणओ करेइ जो लिंगं। मणसा अकप्पियाणं निसेवओ होअहासुहुमो ॥२॥" बकुशो द्विधा—उपकरणशरीरभेदात्, तत्र वस्त्राद्युपकरणविभूषानुवर्त्तनशील उपकरणबकुशः, वपुर्विभूषानुवर्त्ती शरीरबकुशः, स चायं पञ्चधा, 'आभोगबउस'त्ति आभोगः साधूनां वपुरुपकृत्यादिविभूषाकरणं अपकृत्यमिति ज्ञानं तत्प्रधानो बकुश आभोगबकुशः, इहाप्युक्तम्—आभोगे जाणंतो करेइ दोसं अजाणमणभोगे। मूलुत्तरेहिं

संवुड निव्वरीओ असंवुडो होइ ॥ १ ॥ आच्छिमुहं मज्जमाणो होइ अहासुहुमओ तहा नउसो। अहवा जाणिजंतो असंवुडो संवुडो इयरो ॥२॥" 'पडिसेवणाकुसीले'त्ति सेवना-सम्यगाराधना तद्विपरीता प्रतिषेवना तया कुशीलः, एवं कषायकुशीलादयोऽपि ज्ञेयाः, यदाह-"इह नाणाइकुसीलो उवजीवं होइ नाणपभिईए। अहसुहुमो पुण तुस्सं एस तवस्सित्तिसंसाए॥१॥" 'नाणकसायकुसील'त्ति ज्ञानं प्रति कषायकुशीलो ज्ञानकषायकुशीलः, यदाह-"नाणे दंसणलिंगे जो जुंजइ कोहमाणमाईहिं। सो नाणाइकुसीलो कसायओ होइ विन्नेओ ॥१॥ चारित्तंमि कुसीलो कसायओ जो पयच्छई सावं। मणसा कोहाईए निसेवयं होअहासुहुमो ॥२॥ अहवावि कसाएहिं नाणाईणं विराहए जो ऊ। सो नाणाइकुसीलो नेओ वक्खाणभेएणं॥३॥" 'पढमसमयनियंठे'इत्यादि, उपशान्तमोहाद्धायाः क्षीणमोहच्छद्मस्थाद्धायाश्चान्तर्मुहूर्त्तप्रमाणायाः प्रथमसमये वर्त्तमानः प्रथमसमयनिर्ग्रन्थः, शेषेष्वप्रथमसमयनिर्ग्रन्थः, एवं निर्ग्रन्थाद्धायाश्चरमसमये चरमसमयनिर्ग्रन्थः, शेषेष्वन्यः, सामान्येन तु यथासूक्ष्म इति पारिभाषिकी संज्ञा, यदुक्तम्-अंतमुहुत्तपमाणयनिग्गंथद्धाए पढमसमयंमि। पढमसमओ णियंठो अण्णेसु अपढमसमओ सो ॥१॥ एमेव तयद्धाए चरमे समयंमि चरमसमओ सो। सेसेसु पुण अचरमो सामण्णेणं तु अहसुहुमो ॥२॥" 'अच्छवि'त्ति छवियोगात् छविः-शरीरं तद्योगनिरोधेन यस्य नास्त्यसावच्छविक इति, अशबलो निरतिचारचरित्रत्वात्, 'अपरिस्सावी'त्ति अबन्धको, निरुद्धयोग इत्यर्थः, अयं च पञ्चमः स्नातके भेदः, उत्तराध्ययनेषु त्वर्हन् जिनः केवलीत्ययं पञ्चमः प्रोक्तः, अपरिश्रावीतिपदं तु नाधीतमेव, ततश्च एवं सम्भावयामः-शब्दनयापेक्षया एतेषां भेदा भावनीयाः, शक्रपुरन्दरावित्र १। अथ वेदद्वारे-'नो अवेयए होज्ज'त्ति, पुलाकवकुशप्रतिसेवाकुशीलानामुपशमक्षपकश्रेण्योरभावात्, 'नो इत्थिवेयए'त्ति स्त्रियाः पुलाकलब्धेरभावात्, 'पुरिसनपुंसगवेयए'त्ति नरः सन् यो

नपुंसकवेदको वर्द्धितकत्वादिभावेनासौ स्यात् पुरुषनपुंसकवेदको, न स्वरूपेणेतियावत्, 'कसायकुसीले ण'मित्यादौ, 'उवसंतवेदए होज्ज'त्ति सूक्ष्मसम्परायगुणस्थानं यावत् कषायकुशीलः स्यात्, स च प्रमत्ताप्रमत्तापूर्वकरणेषु सवेदः अनिवृत्तिबादरे तूपशान्तेषु क्षीणेषु वा वेदेष्ववेदः स्यात् सूक्ष्मसंपराये वेति, 'नियंठे ण'मित्यादौ 'उवसंतवेदए वा होज्जा खीणवे०' श्रेणिद्वये निर्ग्रन्थत्वभावात् 'सिणाए ण'मित्यादौ 'नो उवसंतवेयए होज्जा, खीणवेयए होज्ज'त्ति क्षपकश्रेण्यामेव स्नातकस्य भावादिति। रागद्वारे 'किं सरागो'त्ति (सू. ७५२) सरागः—सकषायः। कल्पद्वारे—'किं ठियकप्पे'त्ति (सू. ७५३) आचेलक्यादिषु १० पदेषु प्रथमपश्चिमतीर्थकृत्साधवः स्थिता एव, अवश्यं तत्पालनादिति, तेषां स्थितिः—कल्पः, तत्र वा पुलाकः स्यात्, मध्यमतीर्थकृत्साधवस्तु तेषु स्थिताश्चास्थिताश्चेत्यस्थितकल्पस्तेषां तत्र वा पुलाकः स्यात्, एवं सर्वेऽपि, अथवा कल्पो जिनकल्पः स्थविरकल्पश्चेति द्विधा, तमाश्रित्याह—'किं जिणकप्पे'त्ति 'कप्पातीते'त्ति जिनकल्पस्थविरकल्पाभ्यामन्यत्र, 'कसायकुसीले ण'मित्यादौ 'कप्पातीए वा होज्ज'त्ति कल्पातीते वा कषायकुशीलः स्यात्, कल्पातीतस्य छद्मस्थतीर्थकृतः सकषायत्वादिति, 'नियंठे ण'मित्यादौ 'कप्पातीते होज्जा' निर्ग्रन्थः कल्पातीत एव स्यात्, यतस्तस्य जिनकल्पस्थविरकल्पधर्मा न सन्ति॥ चरित्रद्वारे (सू. ७५४) व्यक्तमेव, प्रतिसेवनाद्वारे 'पडिसेवए'त्ति (सू. ७५५) सञ्ज्वलनकषायोदयात् संयमप्रतिकूलार्थस्य सेवकः प्रतिसेवकः, संयमविराधक इत्यर्थः, एवं मूलगुणप्रतिसेवकः, नवरमुत्तरगुणा—दशविधप्रत्याख्यानरूपाः, 'दसविहस्स'त्ति 'अणागयमइक्कंत'मित्यादि दशविधं, 'नमुक्कार पोरिसीए'इत्याद्यपि दशविधं, 'अण्णयरं'ति एकतरं प्रत्याख्यानं विराधयेत्, पिण्डविशुद्ध्यादिविराधकत्वमपि सम्भाव्यत इति। (सू. ७५६) ज्ञानद्वारे मतिज्ञानादीनि। (सू. ७५७) श्रुतद्वारे अष्टप्रवचनमात्रश्रुतं बकुशस्य जघन्यं स्यात्,

तत्रोत्तराध्ययनेषु प्रवचनमातृनामकमध्ययनं, न तद् गुरुत्वात्। तीर्थद्वारे 'तित्थे'त्ति (सू. ७५८) संघे सति 'कसायकुसीले'त्ति कषायकुशीलश्च छद्मस्थावस्थायां तीर्थकरोऽपि स्यादतस्तदपेक्षया तीर्थव्यवच्छेदे च तदन्योऽप्यसौ स्यादिति तदन्यापेक्षया च 'तित्थे वा होज्जे'त्युच्यते, अत एवाह-'जइ अतित्थे होज्जा किं तित्थगरे होज्जे'त्यादि। (सू. ७५९) लिङ्गद्वारे लिङ्गं द्विधा-द्रव्यभावभेदात्, तत्र च स्वलिङ्गं रजोहरणादि, परलिङ्गं द्विधा-कुतीर्थिलिङ्गं गृहस्थलिङ्गं च. स्वलिङ्गं च 'सलिंगे'त्ति, त्रिविधलिङ्गेऽपि स्याद्द्रव्यलिङ्गानपेक्षत्वाच्चरणपरिणामस्येति। (सू. ७६०) शरीरद्वारं व्यक्तम्। क्षेत्रद्वारे-'जम्मणसंतिभावं'ति (सू.७६१) जन्म-उत्पादः सद्भावश्च विवक्षितक्षेत्रादन्यत्र जातस्य तत्र चरणभावेनास्तित्वमेतयोस्ततः तौ प्रतीत्य कर्मभूमौ स्यात्, तत्र जायते विहरति चेत्यर्थः, अकर्मभूमौ पुनरसौ न स्यात्, तज्जातस्य चारित्राभावात्, न च तत्र वर्त्तते, पुलाकलब्धौ वर्त्तमानस्य देवादिभिः संहर्त्तुमशक्यत्वात्, बकुशसूत्रे 'नो अकम्मभूमीए'त्ति अकर्मभूमौ बकुशस्य न जन्म स्यात्, तत्र परं स्वकृतः परकृतश्च विहारस्सम्भवति, अतः 'संहरणं पडुच्च'त्ति संहरणं-क्षेत्रान्तरे देवादिभिर्नयनं। (सू. ७६२) कालद्वारे त्रिविधः कालोऽवसर्पिण्यादिः, तत्राद्यद्वयं भरतैरावतयोस्तृतीयस्तु महाविदेहहैमवतादिषु, 'सुसमदुस्समकाले वा होज्ज'त्ति आदिदेवकाल इत्यर्थः, 'दुस्समसुसमकाले व'त्ति चतुर्थेऽऽके इत्यर्थः, उक्तात् समाद्वयाच्चान्यत्र चासौ स्यात्, 'सब्भावं'त्ति अवसर्पिण्यां सद्भावं प्रतीत्य ३।४।५ आरकेषु स्यात्, तत्र चतुर्थारके जातस्सन् पञ्चमेऽपि वर्त्तते, तृतीयतुर्यारकस्य सद्भावस्तु तज्जन्मपूर्वकः, 'जइ उस्सप्पिणी'त्यादि, उत्सर्पिण्यां २।३।४। आरकेषु जन्मतः स्यात्, तत्र द्वितीयस्यान्ते जायते तृतीये तु चरणं प्रतिपद्यते, तृतीयचतुर्थयोश्च जायते चरणं च प्रतिपद्यते, सद्भावं पुनः प्रतीत्य तृतीयचतुर्थयोरेव तस्य सत्ता, तयोरेव चरणप्रतिपत्तेरिति, 'जइ णोउसप्पि-

णी'त्यादि, 'सुसमसुसमपलिभागे'त्ति सुषमसुषमायाः प्रतिभागः—सादृश्यं यत्र काले स तथा, स च देवकुरूत्तरकुरुषु, एवं सुषमप्रतिभागो हरिवर्षरम्यकवर्षेषु, सुषमदुष्षमाप्रतिभागो हिमवतैरण्यवतेषु, दुष्षमसुषमाप्रतिभागो महाविदेहेषु, निर्ग्रन्थस्नातकौ पुलाकवद्वाच्यौ, 'नवरं एएसिं'ति पुलाकस्य प्रागुक्तयुक्त्या संहरणं नास्ति, एतयोश्च तत् संहरणमस्तीतिकृत्वा तद्वाच्यं, संहरणद्वारेण च यत्तयोः सर्वकालेषु सम्भवः असौ पूर्वसंहृतयोर्निर्ग्रन्थस्नातकत्वप्राप्तौ द्रष्टव्यो, यतो नापगतवेदानां संहरणमस्तीति, यदाह—"समणी-१ मवगयवेयं २ परिहार ३ पुलाय ४ मप्पमत्तं ५ च। चोद्दसपुव्विं ६ आहारगं ७ च न य कोइ संहरइ ॥१॥"त्ति (सू. ७६३) गतिद्वारे—सौधर्मादिका देवगतिरिन्द्रादयस्तद्देहायुश्च पुलाकादीनां निरूप्यते—'अविराहणं पडुच्च'त्ति अविराधना हि ज्ञानादीनां यथावत्पालनात् अनुपजीवना अतस्तां प्रतीत्य, अविराधकास्सन्त इत्यर्थः, 'अण्णयरेसु उववज्जेज्ज'त्ति भवनपत्यादीनामन्यतरेषु देवेषूत्पद्येत, विराधितसंयमानां भवनपत्याद्युत्पादस्योक्तत्वात्, यच्च प्रागुक्तं 'विमाणेसु उववज्जेज्ज'त्ति तत् संयमाविराधकत्व-माश्रित्य ज्ञेयं। संयमद्वारे—संयमस्थानानि तेषामल्पबहुत्वादि चिन्त्यते, तत्र 'पुलागस्से'त्यादि (सू. ७७४) संयमः—चारित्रं तस्य स्थानानि—प्रकर्षापकर्षकृता भेदाः संयमस्थानानि तानि च प्रत्येकं सर्वाकाशप्रदेशाग्रगुणितसर्वाकाशपरिमाणपर्यवोपेतानि स्युः, तानि च पुलाकस्यासङ्ख्यातानि स्युः, विचित्रत्वात् चारित्रमोहनीयक्षयोपशमस्य, एवं यावत्कषायकुशीलस्य, 'अजहण्णमणुक्कोस-एणं'ति निर्ग्रन्थस्यैकं संयमस्थानं स्यात्, कषायाणामुपशमस्य क्षयस्य चाविचित्रत्वेन शुद्धेरेकविधत्वाद्, एकत्वादेव च तदजघन्योत्कृष्टं, बहुष्वेव जघन्योत्कृष्टसद्भावादिति। अथ पुलाकादीनां मिथः संयमस्थानाल्पबहुत्वमाह—'एएसि णं'ति सर्वेभ्यः स्तोकं सर्व-स्तोकं निर्ग्रन्थस्य स्नातकस्य च संयमस्थानं, कुतः?, शुद्धेरेकविधत्वात्, पुलाकादीनां तूक्तक्रमेणासङ्ख्येयगुणानि तानि, क्षयो-

पशमवैचित्र्यात् ॥ अथ संनिकर्षद्वारम्—संनिकर्षः संयोजनं मिथः पुलाकादीनां ॥ तत्राह—'चारित्तपज्जव'त्ति (सू.७३५) चारित्रस्य पर्यवा—भेदास्ते च बुद्धिकृता अविभागपलिच्छेदाः 'सट्ठाणसंनिगासेणं'ति स्वं—आत्मीयं स्थानं पर्यवाणामाश्रयः स्वस्थानं, पुलाकादेः पुलाकादिरेव, तस्य पर्यवो—भेदस्तेन, 'किं हीणे'त्ति विशुद्धसंयमस्थानसम्बन्धित्वेन विशुद्धतरपर्यवापेक्षयाऽविशुद्धतरसंयमस्थानसम्बन्धित्वेनाविशुद्धतराः पर्यवा हीनास्तद्योगात् साधुरपि हीनः, 'तुल्ले'त्ति तुल्यशुद्धिपर्यवयोगात्तुल्यः, 'अब्भहिए'त्ति विशुद्धैरन्यपर्यवयोगादभ्यधिकः, 'सिय हीणे'त्ति अशुद्धसंयमस्थानवर्त्तित्वात् 'सिय तुल्ले'त्ति एकसंयमस्थानवर्त्तित्वात्, 'अणंतभागहीणे'त्ति किलासद्भावस्थापनया पुलाकस्योत्कृष्टसंयमस्थानपर्यवाग्रं दश [१०००० / १००] सहस्राणि, तस्य सर्वजीवानन्तकेन शतपरिमाणतया कल्पितेन भागे हृते लब्धं शतं १००, द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नव सहस्राणि नवशताधिकानि [९९०० / १००] पूर्वभागलब्धं शतं तत्र प्रक्षिप्तं जातानि दश सहस्राणि, ततोऽसौ सर्वजीवानन्तकभागहारलब्धेन शतेन हीन इत्यनन्तभागहीनः 'असंखेज्जभागहीणे वा'त्ति पूर्वोक्तकल्पितपर्यवराशेर्दश सहस्राणीत्यस्य [१०००० / ५०] लोकाकाशप्रदेशपरिमाणेनासङ्ख्येयकेन कल्पनया पञ्चाशत्प्रमाणेन भागे हृते लब्धा द्विशती द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नवसहस्राण्यष्टौ च शतानि [९८०० / २००] पूर्वभागलब्धा च द्विशती सा तत्र प्रक्षिप्ता जातानि दश सहस्राणि, ततोऽसौ लोकाकाशप्रदेशपरिमाणासङ्ख्येयभागहा- [२००] रलब्धेन शतद्वयेन हीन इत्यसङ्ख्येयभागहीनः । 'संखेज्जभागहीणे वा'त्ति पूर्वोक्तकल्पितपर्यायराशेर्दशसहस्रस्य [१०००० / १०] उत्कृष्टसङ्ख्येयकेन कल्पनया दशकपरिमाणेन भागे हृते लब्धं सहस्रं [९००० / १०००] द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं नवसहस्राणि पूर्वभागलब्धं च सहस्रं प्रक्षिप्तं, जातानि दशसह-

स्राणि, ततोऽसावुत्कृष्टसङ्ख्येयकभागहारलब्धेन सहस्रेण हीन इति सङ्ख्येयभागहीनः, 'सङ्ख्येयगुणहीणे व'त्ति किलैकस्य चरणपर्यवाग्रं कल्पनया सहस्रदशकं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं सहस्रं, ततश्चोत्कृष्टसङ्ख्येयकेन कल्पनया दशकपरिमाणेन गुणकारेण गुणितः सहस्रो राशिर्जायते दशसहस्राणि, स च तेनोत्कृष्टसङ्ख्येयकेन कल्पनया दशपरिमाणेन गुणकारेण हीनोऽनभ्यस्त इति सङ्ख्येयगुणहीनः, 'असंखिज्जगुणहीणे व'त्ति किलैकस्य पुलाकस्य चरणपर्यवाग्रं कल्पनया सहस्रदशकं, द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं च द्विशती, ततश्च लोकाकाशप्रदेशपरिमाणेनासङ्ख्येयकेन कल्पनया पञ्चाशत्प्रमाणेन गुणकारेण गुणितो द्विशतिको राशिर्जायते दशसहस्राणि, स च तेन लोकाकाशप्रदेशपरिमाणासङ्ख्येयेन कल्पनया पञ्चाशत्प्रमाणेन गुणकारेण हीन इत्यसङ्ख्येयगुणहीन इति, 'अणंतगुणहीणे व'त्ति किलैकस्य पुलाकस्य चरणपर्यवाग्रं कल्पनया सहस्रदशकं द्वितीयप्रतियोगिपुलाकचरणपर्यवाग्रं च शतं, ततश्च सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण गुणितः शतिको राशिर्जायते दशसहस्राणि, स च तेन सर्वजीवानन्तकेन कल्पनया शतपरिमाणेन गुणकारेण हीन इत्यनन्तगुणहीनः, एवमभ्यधिकषट्स्थानकशब्दार्थोऽप्येभिरेव च भागापहारगुणकारैर्व्याख्येयः, तथाहि—एकस्य पुलाकस्य कल्पनया दशसहस्राणि चरणपर्यवमानं, तदन्यस्य नवशताधिकानि नव सहस्राणि, ततो द्वितीयापेक्षया प्रथमोऽनन्तभागाभ्यधिकः, तथा यस्य नवसहस्राणि अष्टौ शतानि पर्यवाग्रं तस्मात् प्रथमोऽसङ्ख्येयभागाधिकः, तथा यस्य नव सहस्राणि चरणपर्यवाग्रं तस्मात्प्रथमः सङ्ख्येयभागाधिकः, तथा यस्य चरणपर्यवाग्रं सहस्रमानं तदपेक्षया प्रथमः सङ्ख्येयगुणाधिकः तथा यस्य चरणपर्यवाग्रं द्विशती, तदपेक्षयाऽऽद्योऽनन्तगुणाधिकः। 'पुलाए णं भंते ! बउसेति परट्ठाणसंनिगासेणं'ति विजातीययोगमाश्रित्येत्यर्थः, विजातीयश्च पुलाकस्य बकुशादीनः, तथा-

विधविशुद्ध्यभावात्, 'कसायकुसीलेणं समं छट्ठाण'त्ति, पुलाकापेक्षया यथा उक्तस्तथा कषायकुशीलापेक्षयाऽपि वाच्य इति, तत्र पुलाकः कषायकुशीलाद्धीनो वा स्यात्, अविशुद्धसंयमस्थानवृत्तित्वात्, तुल्यो वा स्यात् समसंयमस्थानवृत्तित्वात्, अधिको वा स्याच्छुद्धतरसंयमस्थानवृत्तित्वात्, यतः पुलाकस्य कषायकुशीलस्य च सर्वजघन्यानि संयमस्थानानि अधः, ततस्ते युगपदसङ्ख्येयानि संयमस्थानानि गच्छतः, तुल्याध्यवसानत्वात्, ततः पुलाको व्यवच्छिद्यते, हीनपरिणामत्वात्, व्यवच्छिन्ने पुलाके कषायकुशील एक एवासङ्ख्येयानि संयमस्थानानि गच्छति, शुभतरपरिणामत्वात्, ततः प्रतिसेवनाकषायकुशीलौ च सङ्ख्येयानि संयमस्थानानि गच्छतः, ततश्च प्रतिसेवनाकुशीलो व्यवच्छिद्यते, कषायकुशीलस्त्वसङ्ख्येयानि संयमस्थानानि गच्छति, ततः सोऽपि व्यवच्छिद्यते, ततो निर्ग्रन्थस्नातकावेकं संयमस्थानं प्राप्नुतः, 'नियण्ठस्स जहा बउसस्स'त्ति पुलाको निर्ग्रन्थादनन्तगुणहीन इत्यर्थः। शेषैस्सह पुलाकश्चिन्तितः, अथ बकुशश्चिन्त्यते—बकुशः पुलाकादनन्तगुणाभ्यधिको, विशुद्धपरिणामत्वात्, बकुशात्तु हीनादिर्विचित्रपरिणामत्वात्, प्रतिसेवाकषायकुशीलाभ्यामपि हीनादिरेव, निर्ग्रन्थस्नातकाभ्यामपि हीन एवेति 'पडिसेवणाकुसीलस्स एवं चेव बउसवत्तव्वया भाणियव्व'त्ति प्रतिसेवाकुशीलस्तथा वाच्यः, यथा बकुश इत्यर्थः, कषायकुशीलोऽपि बकुशवद्वाच्यः, केवलं पुलाकात् बकुशोऽधिक एवोक्तः, सकषायस्तु षट्स्थानपतितो वाच्यः, हीनादिरित्यर्थः, तत्परिणामस्य पुलाकापेक्षया हीनसमाधिकस्वभावत्वात् ॥ अथ तेषां जघन्यादिभेदानां पुलाकादिसम्बन्धिनामल्पत्वाद्याह—'एएसिणं'॥ योगद्वारे 'अजोगी वा होज्ज'त्ति (सू. ७६६) इहायोगी शैलेशीकरणे १६। उपयोगद्वारं (सू. ७६७) सुगमत्वान्न विवृतं १७। कषायद्वारे—'सकसायी होज्ज'त्ति (सू. ७६८) पुलाकस्य कषायाणां क्षयस्योपशमस्य चाभावात्। 'तिसु होमाण'त्ति उपशमश्रेण्यां क्षपकश्रेण्यां वा सञ्ज्वलने क्रोधे उपशान्ते क्षीणे वा

शेषेषु त्रिषु एवं माने विगते द्वयोःमायायां तु विगतायां सूक्ष्मसम्परायगुणस्थानके एकत्र लोभे भवेदिति। लेश्याद्वारे—'तिसु विसुद्धासु'त्ति (सू.७६९) भावलेश्यापेक्षया प्रशस्तासु तिसृषु पुलाकादयस्त्रयः स्युः, कषायकुशीलस्तु षट्स्वपि, सकषायमेवाश्रित्य 'पुव्वपडिवण्णओ पुण अण्णयरीए उ लेसाए'इत्येतदुक्तमिति सम्भाव्यते. 'एक्काए परमसुक्काए'त्ति शुक्लध्यानतृतीयभेदाभावावसरे या लेश्या सा परमशुक्ला, अन्यदा तु शुक्लैव, साऽपीतरजीवशुक्ललेश्यापेक्षया परमशुक्लेति। परिणामद्वारे 'वड्ढमाणपरिणामे'त्ति (सू. ७७०) तत्र वर्द्धमानः शुद्धेरुत्कर्षं गच्छन्, हीयमानस्त्वपकर्षं गच्छन्, अवस्थितस्तु स्थिर इति, तत्र निर्ग्रन्थो हीयमानपरिणामो न स्यात्, तस्य परिणामहानौ कषायकुशीलव्यपदेशात्; स्नातकस्तु हानिकारणाभावात् न हीयमानपरिणामः स्यादिति ॥ 'पुलाए णं'ति तत्र पुलाको वर्द्धमानपरिणामकाले कषायविशेषेणाबाधिते तस्मिन् तस्यैकादिकं समयमनुभवतीत्युच्यते जघन्येनैकं समयमिति 'उक्कोसेणमंतोमुहुत्तं'ति एतत्स्वभावात् वर्द्धमानपरिणामस्य, एवं बकुशप्रतिसेवाकुशीलकषायकुशीलेष्वपि, नवरं बकुशादीनां जघन्यत एकसमयता मरणादपीष्टा, न पुनः पुलाकस्य, पुलाकत्वे मरणाभावात्, सहि मरणकाले कषायकुशीलत्वादिना परिणमति, यच्च प्राक् पुलाकस्य कालगमनं तद्भूतभावापेक्षयेति, निर्ग्रन्थो जघन्येनोत्कर्षेण चान्तर्मुहूर्त्तं वर्द्धमानपरिणामः स्यात्, केवलज्ञानोत्पत्तौ परिणामान्तराभावात्, अवस्थितपरिणामः पुनर्निर्ग्रन्थस्य जघन्यत एकं समयं मरणात् स्यादिति, 'सिणाए णं भंते'त्ति स्नातको जघन्येतराभ्यां अन्तर्मुहूर्त्तवर्द्धमानपरिणामः, शैलेश्यां तस्यास्तत्प्रमाणत्वात्, अवस्थितपरिणामकालोऽपि जघन्यस्तस्यान्तर्मुहूर्त्तं, कथं ?. उच्यते—यः केवलज्ञानोत्पादानन्तरमन्तर्मुहूर्त्तमवस्थितपरिणामो भूत्वा शैलेशीं प्रतिपद्यते तदपेक्षयेति, 'उक्कोसेणं देसूणा'त्ति पूर्वकोट्यायुर्नरस्य जन्मतो जघन्येन नवसु वर्षेष्वतिगतेषु केवलज्ञानमुत्पद्यते, ततोऽसौ तदूनां पूर्वकोटीम-

वस्थितपरिणामः शैलेशीं यावद्विहरति, शैलेश्यां च वर्द्धमानपरिणामः स्यादिति देशोनामिति। बन्धद्वारे–'आउयवज्जाओ'त्ति (सू.७७१) पुलाकस्यायुर्बन्धो न तद्बन्धाध्यवसायस्थानानां तस्याभावादिति,'बउसे'त्ति त्रिभागादिकशेषायुषो हि जीवा आयुर्बध्नन्तीति, त्रिभागद्वयादौ तन्न बध्नन्तीतिकृत्वा बकुशादयः सप्तानामष्टानां वा कर्मणां बन्धकाः स्युरिति, 'बंधमाणे'त्ति कषायकुशीलो हि सूक्ष्मसम्परायत्वे आयुर्न बध्नाति, अप्रमत्तान्तत्वात् तद्बन्धकस्य, मोहनीयं च बादरकषायोदयाभावान्न बध्नातीति शेषाः षडेवेति, 'एगं वेयणिज्जं'ति निर्ग्रन्थो वेदनीयमेव बध्नाति, बन्धहेतुषु योगानामेव सद्भावात्, 'अबन्धए वे'ति अयोगी बन्धहेतूनां सर्वेषामभावादबन्धक एव। वेदनद्वारे–'मोहणिज्जवज्जा व'त्ति (सू. ७७२) निर्ग्रन्थो हि मोहनीयं न वेदयति, तस्योपशान्तत्वात् क्षीणत्वाद्वा, स्नातकस्य घातिकर्मणां क्षीणत्वाद्वेदनीयादीनामेव वेदनमत उच्यते–'वेयणिज्जे'त्यादि। उदीरणद्वारे–'आउयवेयणिज्जवज्जाउ'त्ति (सू. ७७३) अयमर्थः–पुलाकः आयुर्वेदनीयप्रकृतीर्नोदीरयति, तथाविधाध्यवसायस्थानाभावात्, किन्तु पूर्वं ते उदीर्य पुलाकतां गच्छति, एवमुत्तरत्रापि यो याः प्रकृतीर्नोदीरयति स ताः पूर्वमुदीर्य बकुशादितां प्राप्नोति, स्नातकः सयोग्यवस्थायां तु नामगोत्रयोरेवोदीरकः, आयुर्वेदनीये तु पूर्वोदीर्णे एव, अयोग्यवस्थायां त्वनुदीरक एवेति॥'उवसंपज्जण'त्ति द्वारं (सू. ७७४) तत्रोपसम्पदुपसम्पत्तिः–प्राप्तिः 'जहण'त्ति हानं–त्यागः, उपसंपच्च हानं च उपसंपद्धानं, किं पुलाकत्वादि त्यक्त्वा किं सकषायत्वादिकमुपसम्पद्यत इत्यर्थः 'पुलाए णं'ति पुलाकः पुलाकत्वं त्यक्त्वा संयतः कषायकुशील एव स्यात्, तत्सदृशसंयमस्थानसद्भावात्, एवं यस्य यत्सदृशानि संयमस्थानानि सन्ति स तद्भावमुपसम्पद्यते. मुक्त्वा कषायकुशीलादीन्, कषायकुशीलो हि विद्यमानसमानसंयमस्थानकं च निर्ग्रन्थभावं, निर्ग्रन्थस्तु कषायित्वं, स्नातकस्तु सिध्यत्येव, निर्ग्रन्थसूत्रे कषायकुशीलं वा

सियाणं वा, इह भावप्रत्ययलोपात् कषायकुशीलत्वमिति दृश्यं, एवं पूर्वसूत्रेष्वपि, तत्रोपशमनिर्ग्रन्थः श्रेणीतः प्रच्यवमानः सकषायः स्यात्, श्रेणीमस्तके तु मृतोऽसौ देवत्वेनोत्पन्नोऽसंयतः स्यात्, नो संयतासंयतो, देवत्वे तदभावाद्, यद्यपि च श्रेणीपतितोऽसौ संयतासंयतोऽपि स्यात् तथापि नासौ देशविरत इहोक्तः, अनन्तरतया देशविरत्यभावादिति। संज्ञाद्वारे (सू. ७७५) इह संज्ञा आहारादिः तत्रोपयुक्तः, कथञ्चिदाहाराद्यभिष्वङ्गवान्, नोसंज्ञोपयुक्तस्तु आहाराद्युपभोगेऽपि तत्रानभिष्वक्तः, तत्र पुलाकनिर्ग्रन्थस्नातका नोसंज्ञोपयुक्ता भवन्त्याहारादिष्वनभिष्वङ्गा एव, ननु निर्ग्रन्थस्नातकावेवं युक्तौ वीतरागत्वात्, न तु पुलाकः, सरागत्वात्, नैवं, नहि सरागत्वे निरभिष्वङ्गता सर्वथा नास्तीति वक्तुं शक्यते, बकुशादीनां सरागत्वेऽपि निःसङ्गताया अपि प्रतिपादितत्वात्, चूर्णिकारस्त्वाह–'नोसन्ना नाणसण्ण'त्ति, तत्र च पुलाकनिर्ग्रन्थस्नातका नोसंज्ञोपयुक्ता–ज्ञानप्रधानोपयोगवन्तो, न पुनराहारादिसंज्ञोपयुक्ताः, बकुशादयस्तूभयथापि तथाविधसंयमस्थानस्वभावादिति। आहारकद्वारे–'आहारए होज्ज'त्ति (सू. ७७६) पुलाकादिनिर्ग्रन्थानां विग्रहगत्यादीनामनाहारकत्वकारणानामभावादाहारकत्वमेव, 'सिणायए'त्ति स्नातकः, केवलिसमुद्घाते तृतीयचतुर्थपञ्चमसमयेष्वयोग्यवस्थायां चानाहारकः स्यात्, ततोऽन्यत्र पुनराहारकः। भवद्वारे–'पुलाए णं'ति (सू. ७७७) पुलाको जघन्यत एकस्मिन् भवग्रहणे भूत्वा कषायकुशीलादिकसंयतत्वान्तरमेकशोऽनेकशो वा तत्रैव भवे भवान्तरे वाऽवाप्य सिध्यति, उत्कृष्टतस्तु देवादिभवान्तरितान् त्रीन् भवान् पुलाकत्वमवाप्य सिध्यति, 'बउसे'त्यादि, इह कश्चिदेकत्र भवे बकुशत्वमवाप्य कषायकुशीलत्वादेव सिध्यति, कश्चित्त्वेकत्रैव बकुशत्वमवाप्य भवान्तरेषु तदनवाप्यैव सिध्यति, अत उच्यते 'जहण्णेणं एक्कं भवग्गहणं'ति, 'उक्कोसेणं अट्ठ'त्ति किलाष्टौ भवग्रहणान्युत्कृष्टतया चरणमात्रमवाप्यते, तत्र कश्चित्तान्यष्टौ बकुशतया पर्यन्तिमभवे सकषायत्वा-

दियुक्तया पूरयति, अत उच्यते—'उक्कोसेणमट्ठ'त्ति ॥ अथाकर्षद्वारं, (सू. ७७८) तत्राकर्षणमाकर्षः—चारित्रस्य प्राप्तिरिति 'एगभवग्गहणीय'त्ति एकभवग्रहणे ये स्युः 'सयग्गसो'त्ति शतपरिमाणेनेत्यर्थः, शतानां पृथक्त्वं—नवशतानि यावत् चारित्रभावपरावर्त्तः स्यादिति शतपृथक्त्वमिति भावना, उक्तं च—'तिण्ह सहस्सपुहुत्तं सयपुहुत्तं च होइ विरईए'त्ति । 'उक्कोसेणं दो तिण्णि'त्ति एकत्र भवे वारद्वयमुपशमश्रेणिकरणादुपशमनिर्ग्रन्थत्वस्य द्वावाकर्षाविति, 'पुलागस्से'त्यादि 'नाणाभवग्गहणिय'त्ति नानाविधेषु भवग्रहणेषु ये स्युरित्यर्थः, 'जहण्णेणं दो तिण्णि'त्ति एक आकर्ष एकत्र भवे द्वितीयोऽन्यत्रेत्येवमनेकत्र भवे द्वौ आकर्षौ, 'उक्कोसेणं सत्त'त्ति पुलाकत्वमुत्कर्षतस्त्रिषु भवेषु स्यात्, एकत्र च तदुत्कर्षतो वारत्रयं स्यात्, ततश्च प्रथमभवे एक आकर्षोऽन्यत्र भवद्वये त्रयस्त्रय इत्यादिभिर्विकल्पैः सप्त ते स्युरिति, 'बउसस्स'त्ति 'उक्कोसेणं सहस्सग्गसो'त्ति बकुशस्याष्टौ भवग्रहणान्युत्कर्षत उक्तानि, एकत्र भवग्रहणे उत्कर्षत आकर्षाणां शतपृथक्त्वमुक्तं, तत्र च यदाऽष्टास्वपि भवग्रहणेषूत्कर्षतो नव प्रत्येकमाकर्षशतानि स्युस्तदा नवानां शतानामष्टभिर्गुणनात् सप्त सहस्राणि द्विशताधिकानि स्युः, 'निग्गंठस्स'त्ति 'उक्कोसेणं पंच'त्ति निर्ग्रन्थस्योत्कर्षतस्त्रीणि भवग्रहणानि उक्तानि, एकत्र भवे द्वावाकर्षौ, एवमेकत्र द्वावन्यत्र च द्वावपरत्र चैकं क्षपकनिर्ग्रन्थाकर्षं कृत्वा सिद्ध्यतीतिकृत्वोच्यते पञ्चेति ॥ 'पुलाए णं'ति ( सू. ७७९ ) 'जहण्णेणं अंतोमुहुत्तं'ति पुलाकत्वं श्रितोऽन्तर्मुहूर्त्तापरिपूर्त्तौ पुलाको न म्रियते, नापि प्रतिपततीतिकृत्वा जघन्यतोऽन्तर्मुहूर्त्तमित्युच्यते, उत्कर्षतोऽप्येवं, एतत्प्रमाणत्वादेतत्स्वभावस्य, 'बउसे'त्ति 'जहण्णेणमेक्कं समयं'ति बकुशस्य चरणप्रतिपत्त्यनन्तरसमय एव मरणसम्भवादिति, 'उक्कोसेणं देसूणा पुव्वकोडि'त्ति पूर्वकोट्यायुषोऽष्टवर्षान्ते चरणप्रतिपत्ताविति 'निग्गंठे णं'ति 'जहण्णेणं एक्कं समयं'ति उपशान्तमोहस्य प्रथमसमयसमनन्तरमेव मर-

णसम्भवात् 'उक्को० अंतोमुहुत्तं'ति निर्ग्रन्थाद्धाया एतत्प्रमाणत्वादिति, 'सिणायए णं'ति 'जह० अंतोमुहुत्तं'ति आयुष्कान्तिमान्तर्मुहूर्त्ते केवलोत्पत्तावन्तर्मुहूर्त्तं जघन्यः स्नातककालः स्यादिति ॥ पुलाकादीनामेकत्वेन कालमानं प्रोक्तं, अथ पृथक्त्वेनाह-'पुलायाणं'ति जघन्येनैकं समयमिति, कथं ?, पुलाकस्यैकस्य योऽन्तर्मुहूर्त्तकालस्तस्यान्तसमयेऽन्यः पुलाकत्वं प्रतिपन्न इत्येवं जघन्यत्वविवक्षया द्वयोः पुलाकयोरेकत्र समये सद्भावोऽस्ति, द्वित्वे च जघन्यं पृथक्त्वं स्यादिति, 'उ०ो० अंतोमुहुत्तं'ति यद्यपि पुलाका उत्कर्षतः एकदा सहस्रपृथक्त्वप्रमिताः प्राप्यन्ते, तथाऽप्यन्तर्मुहूर्त्तत्वात्तदद्धाया बहुत्वेऽपि तेषामन्तर्मुहूर्त्तमेव तत्कालः, केवलं बहूनां स्थितौ यदन्तर्मुहूर्त्तं तदेकपुलाकस्थित्यन्तर्मुहूर्त्तान्महत्तरमिति ज्ञेयं, बकुशादीनां तु स्थितिकालः सर्वाद्धा, प्रत्येकं तेषां बहुस्थितिकत्वादिति, 'नियंठा जह पुलाय'त्ति तच्चैवं-जघन्येनैकं समयमुत्कृष्टतोऽन्तर्मुहूर्त्तमिति । अन्तरद्वारे-'पुलागस्स णं'ति (सू. ७८०) तत्र पुलाकः पुलाको भूत्वा कियता कालेन पुलाकत्वमापद्यते ?, उच्यते, जघन्यतोऽन्तर्मुहूर्त्तं स्थित्वा पुनः पुलाक एव स्यात्, उत्कर्षतः पुनरनन्तेन कालेन पुलाकत्वमाप्नोति, कालानन्त्यमेव कालतो नियमयन्नाह-'अणंताउ'त्ति, इदमेव क्षेत्रत आह-'खेत्तओ'त्ति स चानन्तः कालः क्षेत्रतो मीयमानः किंमान इत्याह-'अवड्ढ'मिति, तत्र पुद्गलपरावर्त्त एवं श्रूयते-किल केनापि प्राणिना प्रतिप्रदेशं म्रियमाणेन मरणैर्यावता कालेन लोकः समस्तोऽपि व्याप्यते तावता क्षेत्रतः पुद्गलपरावर्त्तः स्यात्, स च समग्रोऽपि स्यादत आह-अपार्द्धं, अर्द्धमात्रमित्यर्थः, अथार्धोऽप्यर्द्धतः पूर्णः स्यादत आह-देसूणं'ति देशेन-भागेन न्यूनमिति, 'सिणायस्स नत्थि अंतरं'ति प्रतिपाताभावात्, एकत्वापेक्षया पुलाकादीनामन्तरमुक्तं, अथ पृथक्त्वापेक्षया तदेवाह-'पुलायाणं'ति इति व्यक्तं ॥ समुद्घातद्वारे 'कसायसमुग्घाए'त्ति (सू. ७८०) चरित्रवतां सञ्ज्वलनकषायोदयसम्भवेन कषायोदयसमुद्घातः स्यादिति,

'मारणंतिय'न्ति इह च पुलाकस्य मरणाभावेऽपि मारणान्तिकसमुद्घातोऽपि न विरुद्धः, समुद्घातान्निवृत्तस्य कपायकुशीलत्वादिपरिणामे सति मरणभावात्, 'नियंठस्स नत्थि एक्कोवि'त्ति तथास्वभावत्वादिति । क्षेत्रद्वारे (सू. ७८२) तत्र क्षेत्रं–अवगाहनाक्षेत्रं तत्र 'असंखिज्जइ भागे'त्ति शरीरस्थो दण्डकपाटकरणकाले च लोकासङ्ख्येयभागवृत्तिः केवली, शरीरादीनां तावन्मात्रत्वात्, 'असंखेज्जेसु'त्ति मथिकरणकाले बहोर्लोकस्य व्याप्तत्वेन स्तोकस्य चाव्याप्ततयोक्तत्वाल्लोकस्यासङ्ख्येयेषु भागेषु स्नातको वर्त्तते, लोकापूरणे च सर्वलोक इति । स्पर्शनाद्वारे स्पर्शना क्षेत्रवत्, नवरं क्षेत्रमवगाढमात्रं स्पर्शना त्ववगाढस्य तत्पार्श्ववर्त्तिनोश्चेति विशेषः । भावद्वारं व्यक्तमेव । परिणामद्वारे च 'पुलायाणं'ति ननु सर्वसंयतानां कोटीसहस्रपृथक्त्वं श्रूयते, इह तु केवलानामेव कपायकुशीलानां तदुक्तं ततः पुलाकादिमानानि ततोऽतिरिच्यन्त इति कथं न विरोध ?, उच्यते, कपायकुशीलानां यत्कोटीसहस्रपृथक्त्वं तत् द्वित्रादिकोटीसहस्ररूपं कल्पयित्वा पुलाकबकुशादिसङ्ख्या तत्र प्रवेश्यते, ततः समस्तसंयतमानं यदुक्तं तन्नातिरिच्यते । अल्पबहुत्वद्वारे–'पुलागा संखेज्जगुण'त्ति तेषामुत्कर्षतः सहस्रपृथक्त्वसङ्ख्यत्वात्, 'सिणाया संखेज्ज'त्ति तेषामुत्कर्षतः कोटीपृथक्त्वमानत्वात् 'पडिसेवणाकुसीला संखेज्ज'त्ति कथमेतत् ?, तेषामप्युत्कर्षतः कोटीशतपृथक्त्वमानतयोक्तत्वात्, सत्यं, किन्तु बकुशानां यत् कोटीपृथक्त्वं तद् द्वित्रादिकोटीशतमानं, प्रतिसेविनां तु कोटीशतपृथक्त्वं चतुःषट्कोटीशतमानमिति न विरोधः, कपायिणां तु सङ्ख्यातगुणत्वं व्यक्तमेव, उत्कर्षतः कोटीसहस्रपृथक्त्वमानतया तेषामुक्तत्वादिति ॥ २५ शते षष्ठः ॥

'इत्तरिए'त्ति (सू. ७८६) इत्वरिकस्य भाविव्यपदेशान्तरत्वेनाल्पकालिकस्य सामायिकस्यास्तित्वादित्वरिकः, स चारोपयिष्यमाणमहाव्रतः प्रथमपश्चिमतीर्थसाधुः, 'आवकहिए य'त्ति यावत्कथस्य-भाविव्यपदेशान्तराभावात् यावज्जीविकस्य सामायिकस्यास्ति- 

त्वाद्यावत्कथिकः, स च मध्यमजिनमहाविदेहजिनसत्कसाधुः, 'साइयारे'त्ति सातिचारस्य यदारोप्यते तत्सातिचारमेव छेदोपस्थापनीयं, तद्योगात् साधुरपि सातिचार एव, एवं निरतिचारच्छेदोपस्थापनीययोगान्निरतिचारः, स च विनेयः, पार्श्वनाथतीर्थात् वीरतीर्थसङ्क्रान्तौ वा, छेदोपस्थापनीयसाधुश्च प्रथमपश्चिमतीर्थयोरेव स्यादिति। 'निव्विसमाणे'त्ति परिहारितपस्तपस्यन् 'निव्विट्ठकाइए'त्ति, निर्विशमानकानुचरका इत्यर्थः, 'संकिलिस्समाणए'त्ति उपशमश्रेणीतः प्रच्यवमानः, 'विसुज्झमाणए'त्ति उपशमश्रेणीं क्षपकश्रेणीं वा समारोहन्, 'छउमत्थे केवली य'त्ति व्यक्तं। अथ सामायिकसंयतादीनां स्वरूपं गाथाभिराह–'सामाइयंमि उ'गाहा (*९८) कण्ठ्या, 'छेदोवट्ठावणे'त्ति (*९९) छेदेन–पूर्वपर्यायच्छेदेनोपस्थानं व्रतेषु यत्र तच्छेदोपस्थापनं यद्योगात् छेदोपस्थानः, स च सातिचार इतरश्च स्यात्, 'परिहरइ' गाहा (*१००) परिहरति–निर्विशमानकादिभेदं तप आसेवते यः साधुः। 'लोभाणु०' (*१०१) लोभाणून्–लोभलक्षणकषायसूक्ष्मकिट्टिकाः वेदयन् यो वर्त्तते 'उवसंते'गाहा (*१०२) उपशान्ते मोहनीयकर्मणि यः छद्मस्थः क्षीणे वा यः छद्मस्थो जिनो वा वर्त्तते स यथाख्यातसंयम इति। वेदद्वारे (सू. ७८७) सामायिकसंयतः अवेदकोऽपि स्यात्, नवमगुणस्थानके हि वेदस्योपशमः क्षयो वा स्यात्, नवमगुणस्थानकं यावत् सामायिकसंयतो व्यपदिश्यते, सामायिकसंयतस्सवेदस्त्रिवेदोऽप्यवेदश्च स्यात्, अवेदस्तु क्षीणोपशान्तवेद इत्यर्थः, 'परिहारविसुद्धी य'त्ति पुरुषवेदो वा पुरुषनपुंसकवेदो वा स्यादिति, 'सुहुमसंपराए'त्ति क्षीणोपशान्तवेदत्वेनावेद इत्यर्थः, एवमन्यान्यपि अतिदेशसूत्राण्यनन्तरोद्देशकानुसारेण स्वयं ज्ञेयानि। कल्पद्वारे 'अट्ठियकप्पे'त्ति अस्थितकल्पो हि मध्यमजिनमहाविदेहजिनतीर्थेषु स्यात्, तत्र छेदोपस्थापनीयं नास्ति चारित्रद्वारमाश्रित्येदमुक्तं। 'सामाइयसंजए णं भंते! किं पुलाए'इत्यादि (सू. ७८८) पुलाकादिपरिणामस्य चारि-

त्रत्वात्। ज्ञानद्वारे 'अहक्खायसंजयस्स पंच नाणाइं भयणाए'त्ति 'जहा नाणुद्देसए'त्ति इह च ज्ञानोद्देशकोऽष्टमशते द्वितीयोद्देशकस्य ज्ञानवक्तव्यतार्थमेवान्तरप्रकारः, भजना पुनः केवलिनो यथाख्यातचारित्रिणः केवलज्ञानं छद्मस्थवीतरागयथाख्यातचारित्रिणो द्वे वा त्रीणि वा चत्वारि वा ज्ञानानि भवन्ति एवंरूपा, श्रुताधिकारे यथाख्यातसंयतो यदि निर्ग्रन्थस्तदाऽष्टप्रवचनमात्रादिचतुर्दशपूर्वान्तं श्रुतं, यदि तु स्नातकस्तदा श्रुतातीतः, अत एवाह—'जहण्णेणमट्ठपवयणमायाओ'त्ति। कालद्वारे (सू. ७८९) 'एवं छेदोवट्ठावणिए'त्ति अनेन बकुशसमः कालतः छेदोपस्थापनीयः साधुरुक्तः, तत्र बकुशस्योत्सर्पिणीव्यतिरिक्तकाले जन्मतः सद्भावतश्च सुषमसुषमादिप्रतिभागत्रये निषेध उक्तः, दुष्षमसुषमाप्रतिभागे च विधिः, छेदोपस्थापनीयसंयतस्य तु तत्रापि तन्निषेधार्थमाह—'नवरं'मित्यादि। संयमस्थानद्वारे 'सुहुमसंपराए'त्ति (सू. ७९१) 'असंखिज्जा अंतोमुहुत्तिया' अन्तर्मुहूर्त्ते भवान्यान्तर्मुहूर्त्तिकानि, अन्तर्मुहूर्त्तमाना हि तदद्धा, तस्याश्च प्रतिसमयं चरणविशुद्धिविशेषभावादसङ्ख्येयानि तानि स्युः, यथाख्याते त्वेकमेव तदद्धायाश्चरणविशुद्धेर्निर्विशेषत्वादिति। संयमस्थानानि एकविंशतिः, तत्रैकमुपरितनं यथाख्यातस्य, ततोऽधस्तनानि सूक्ष्मसम्परायस्य, तानि च तस्मादसङ्ख्येयगुणानि द्रष्टव्यानि, तेभ्योऽधश्चत्वारि त्यक्त्वाऽन्येऽष्टौ परिहारिकस्य, तानि पूर्वेभ्योऽसङ्ख्येयगुणानि द्रष्टव्यानि, ततस्त्यक्त्वा तानि यानि चत्वार्यष्टौ च प्रागुक्तानि तेभ्योऽन्यानि च चत्वारीत्येवं तानि षोडश सामायिकच्छेदोपस्थापनीयसंयतयोः, पूर्वेभ्यश्चैतान्यसङ्ख्यातगुणानीति। सन्निकर्षद्वारे—'सामाइयसंजए णं भंते! सामाइयसंजयस्स'त्ति (सू. ७९२) 'सिय हीणे'त्ति, असङ्ख्यातानि तस्य संयमस्थानानि, तत्र यदैको हीनशुद्धिकोऽन्यस्त्वितरत्र वर्त्तते तदाऽल्पः, हीनाधिकत्वे च षट्स्थानपतितत्वं स्यादत आह—'छट्ठाणवडिए'त्ति। उपयोगद्वारे—सामायिकसंयतादीनां पुलाकवदुपयोगद्वयं

स्यात् 'नवरं सुहुमसंपराए'त्ति सूक्ष्मसम्परायः साकारोपयुक्तस्तथास्वभावत्वादिति । लेश्याद्वारे-यथाख्यातसाधुस्स्नातकसद्दशुक्तः, स्नातकश्च सलेश्योऽलेश्यो वा, यदि भवेत् तदा परशुक्ललेश्यः स्यादित्युक्तं, यथाख्यातसाधोस्तु निर्ग्रन्थत्वापेक्षया निर्विशेषणापि शुक्ललेश्या स्यादतोऽस्य विशेषमाह-'नवरं जई'त्यादि । परिणामद्वारे-'सुहुमसंपराए'त्ति (सू.७९३) 'वड्ढमाणपरिणामे'त्ति सूक्ष्मसम्परायसाधुः श्रेणीं समारोहन् वर्द्धमानपरिणामस्ततो भ्रश्यन् हीयमानपरिणामः, अवस्थितपरिणामस्त्वसौ न स्यात्, गुणस्थानस्वभावत्वादिति, तथा 'सुहुमसंपरायसंजए णं भंते! केवइयं कालं'ति 'जहण्णेणं एक्कं समयं'ति सूक्ष्मसम्परायस्य जघन्यतो वर्द्धमानपरिणाम एकसमयं, प्रतिपत्तिसमयानन्तरमेव मरणात्, 'उक्कोसेणं अंतोमुहुत्तं'ति तद्गुणस्थानकस्यैतावत्प्रमाणत्वात्, एवं तस्य हीयमानपरिणामोऽपि वाच्यः, 'अहक्खायसंजए णं भंते'त्ति 'जहण्णेणं अंतोमुहुत्तं उक्कोसेणमंतोमुहुत्तं'त्ति यो यथाख्यातसाधुः केवलज्ञानमुत्पादयिष्यति यश्च शैलेशीप्रतिपन्नस्तस्य वर्द्धमानपरिणामो जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तं, तदुत्तरकालं तद्व्यवच्छेदात्, अवस्थितपरिणामस्तु जघन्येनैकं समयं, उपशमाद्धायाः प्रथमसमयानन्तरमेव मरणात्, 'उक्को० देसूणा पुव्वकोडि'त्ति एतच्च प्राग्वद्भाव्यं । बन्धद्वारे 'छ कम्मपयडीओ बंधइ'त्ति (सू. ७९४) सूक्ष्मसम्परायसाधुस्त्वायुर्न बध्नात्यप्रमत्तान्तत्वात् तद्बन्धस्य, मोहनीयं च बादरकषायोदयाभावान्न बध्नातीति तद्वर्जषट्कर्मप्रकृतीर्बध्नातीति । वेदद्वारे-'सत्तविहवेयए वा चउविहवेयए व'त्ति यथाख्यातसाधुर्निर्ग्रन्थावस्थायां मोहवर्जानां सप्तानां कर्मप्रकृतीनां वेदको, मोहनीयस्योपशान्तत्वात् क्षीणत्वाद्वा, स्नातकावस्थायां तु चतसृणामेव, घातिकर्मप्रकृतीनां तस्य क्षीणत्वात् । उपसंपद्द्वारे-'सामाइयसंजए णं'ति ( सू. ७९५ ) सामायिकसाधुस्सामायिकसंयतत्वं त्यजति छेदोपस्थापनीयसंयतत्वं प्रतिपद्यते, चतुर्यामधर्मात् पञ्चयामधर्म-

सङ्गो पार्श्वनाथशिष्यवत्, शिक्षको वा महाव्रतारोपणे, सूक्ष्मसम्परायसाधुत्वं वा प्रतिपद्यते, श्रेणिगत इतो ऽसंयमादि वा, भावप्रतिपाता-दिति, तथा छेदोपस्थापनीयसाधुः छेदोपस्थापनीयसाधुत्वं त्यजन् सामायिकसाधुत्वं प्रतिपद्यते यथाऽऽदिदेवतीर्थसाधुरजितस्वामितीर्थं प्रतिपद्यमानः, परिहारविशुद्धिकसंयतत्वं वा प्रतिपद्यते, छेदोपस्थापनीयवत एव परिहारविशुद्धिकत्वात्, परिहारविशुद्धिकसाधुत्वं त्य-जन् छेदोपस्थापनीयसाधुत्वं प्रतिपद्यते, पुनर्गच्छाद्याश्रयणात्, असंयमं वा प्रतिपद्यते, देवत्वोत्पत्ताविति, तथा सूक्ष्मसम्परायसाधुत्वं प्रतिपातेन त्यजन् सामायिकसाधुत्वं प्रतिपद्यते, यदि पूर्वं सामायिकसाधुरभूत्, छेदोपस्थापनीयसाधुत्वं वा प्रतिपद्यते, यदि पूर्वं छेदोप-स्थापनीयसाधुरभूत्, यथाख्यातसाधुत्वं वा प्रतिपद्यते, श्रेणीसमारोहणात् इति, तथा यथाख्यातसाधुर्यथाख्यातसाधुत्वं त्यजन् श्रेणी-प्रतिपातात् सूक्ष्मसम्परायसाधुत्वं प्रतिपद्यते, असंयमं वा प्रतिपद्यते, उपशान्तमोहत्वे मरणाद्देवोत्पत्तौ, सिद्धिगतिं चोपसम्पद्यते स्नातकत्वे सति । आकर्षद्वारे–'सयपुहुत्तं'ति (सू. ७९७) छेदोपस्थापनीयस्योत्कर्षतो विंशतिपृथक्त्वं–पञ्चादिविंशतय आक-र्षाणां स्युः, 'उक्कोसेणं तिण्णि'त्ति परिहारविशुद्धिकसाधुत्वं त्रीन् वारानेकत्र भवे उत्कर्षतः प्रतिपद्यते, 'उक्कोसेणं चत्तारि'त्ति एकत्र भवे उपशमश्रेणीद्वयसम्भवेन प्रत्येकं संक्लिश्यमानविशुध्यमानलक्षणसूक्ष्मसम्परायद्वयभावाच्चतस्रः प्रतिपत्तयः सूक्ष्मसम्परायसा-धुत्वे स्युः, 'उक्कोसेणं दोण्णि'त्ति उपशमश्रेणीद्वयसम्भवादिति, नानाभवग्रहणाकर्षाधिकारे 'उक्कोसेणं उवरिं नवण्हं सयाणं अंतोसहस्सस्स'त्ति, कथं ?, छेदस्य भवाष्टके षड् विंशतय आकर्षाणां स्युः, ताश्चाष्टाभिर्गुणिता ९६० अधिकाः स्युः, इदं च सम्भ-वाश्रयमाश्रित्य संख्याविशेषप्रदर्शनमतोऽन्यथापि यथा नव शतान्यधिकानि (नि भवन्ति तथा कार्यं) 'उक्कोसेणं सत्त'त्ति कथं ?, एकत्र भवे तेषां ग्रहणानुज्ञानात् भवत्रयस्य च तदभिधानादेकत्र भवे त्रयं द्वितीये द्वयं तृतीये द्वयमित्यादि

विकल्पतः सप्ताकर्षाः परिहारिकविशुद्धिकस्येति, 'उक्को० नव'त्ति, कथं ?, सूक्ष्मसम्परायस्यैकत्र भवे आकर्षचतुष्कस्योक्तत्वाद्भवत्रयस्य च तस्याभिधानादेकत्र चत्वारो द्वितीये चत्वारस्तृतीये चैक इत्येवं ९। 'उक्कोसेणं पंच'त्ति, कथं, यथाख्यातसाधोरेकभवे द्वावाकर्षौ द्वितीये च द्वावाकर्षावेकत्र चैक इत्येवं पञ्च। कालद्वारे–'सामाइए'त्यादि (सू.७९८) सामायिकप्रतिपत्तिसमयसमनन्तरमेव मरणादेकः समयः 'उक्कोसेणं देसूणेहिं'ति इति यदुक्तं तद् गर्भसमयादारभ्य ज्ञेयं, अन्यथा जन्मदिनापेक्षयाऽष्टवर्षोनिकैव मा स्यात्, 'परिहारविसुद्धीए जहण्णेणं समयं'ति मरणापेक्षमेतत्, 'उक्कोसेणं देसूणएहिं'ति अस्यायमर्थो–देशोननववर्षजन्मपर्यायेण केनापि पूर्वकोट्यायुषा प्रव्रज्या प्रतिपन्ना, तस्य च विंशतिवर्षप्रव्रज्यापर्यायस्य दृष्टिवादोऽनुज्ञातः, ततश्चासौ परिहारविशुद्धिकं प्रतिपन्नः, तच्चाष्टादशमासमानमप्यविच्छिन्नतत्परिणामेन तेनाजन्म पालितमित्येवमेकोनत्रिंशद्वर्षोनां पूर्वकोटीं यावत्तत्स्यादिति, 'अहक्खाए जहा सामाइयसंजए'त्ति तत्र जघन्यतः एकसमयमुपशमावस्थायां मरणात् उत्कर्षतो देशोनां पूर्वकोटीं स्नातकयथाख्यातापेक्षयेति, पृथक्त्वेन कालचिन्तायां 'छेओवट्ठावणिए'त्ति तत्रोत्सर्प्पिण्यामादितीर्थकरस्य तीर्थं यावच्छेदोपस्थापनीयं स्यात्, तीर्थं च तस्य सार्द्धे द्वे वर्षशते स्यादत उक्तम् 'अड्ढाइज्जाइं'ति, तथाऽवसर्पिण्यामादिजिनतीर्थं यावच्छेदोपस्थापनीयं स्यात्, तच्च ५० सागरोपमकोटीलक्षा इत्यत उक्कोसेणं पण्णासमित्याद्युक्तं, परिहारविशुद्धिकालो जघन्येन 'देसूणाइं'ति, कथं ?, उत्सर्प्पिण्यामाद्यजिनान्तिकं कश्चिद्वर्षशतायुः परिहारविशुद्धिकं श्रितः, तस्यान्तिके तज्जीवितान्तेऽन्यो वर्षशतायुरेव, ततः परतो न तस्य प्रतिपत्तिरस्तीत्येवं द्वे वर्षशते, तयोश्च प्रत्येकमेकोनत्रिंशद्वर्षेषु तत्प्रतिपत्तिरेवमष्टपञ्चाशता वर्षैर्न्यूने ते इति देशोने इत्युक्तं, एतच्च टीकाकारव्याख्यानं, चूर्णिकारव्याख्यानमप्येवमेव, किन्त्ववसर्प्पिण्यन्तिमजिनापेक्षमिति विशेषः,

'उक्को० दो देसूणाओ'त्ति कथं ?, अवसर्प्पिण्यामादिजिनान्तिके पूर्वकोट्यायुः कश्चित्परिहारविशुद्धिकं प्रतिपन्नः, तस्यान्तिके तज्जीवितान्तेऽन्यस्तादृगेव प्रतिपन्नः, एवं पूर्वकोटीद्वयं तथैव देशोनं परिहारविशुद्धिकसाधुत्वं स्यादिति । अन्तरद्वारे—'जहन्नेणं तेवट्ठिं'ति कथं ?, अवसर्प्पिण्यां दुष्षमां यावच्छेदोपस्थापनीयं प्रवर्त्तते, ततस्तस्यां एवैकविंशतिवर्षसहस्रमानायामेकान्तदुष्षमायामुत्सर्प्पिण्याश्चैकान्तदुष्षमायां दुष्षमायां च तत्प्रमाणायामेव तदभावः स्याद्, एवं चैकविंशतित्रयेण त्रिषष्टिर्वर्षसहस्राणामन्तरमिति । 'उक्कोसेणमट्ठारस'त्ति किलोत्सर्पिण्यां चतुर्विंशतितमजिनतीर्थे छेदोपस्थापनीयं प्रवर्त्तते, ततश्च सुषमदुष्षमादिसमात्रये क्रमेण द्वित्रिचतुःसागरकोटाकोटीप्रमाणेऽतीते अवसर्पिण्याश्चैकान्तसुषमादित्रये क्रमेण चतुस्त्रिद्विसागरकोटाकोटीमानेऽतीतप्राये आदितीर्थे छेदोपस्थापनीयं प्रवर्त्तते, एवं यथोक्तं छेदोपस्थापनीयस्यान्तरं स्यात्, यच्चेह किञ्चिन्न पूर्यते यच्च पूर्वसूत्रेऽतिरिच्यते तदल्पत्वान्न विवक्षितमिति । 'परिहारविसुद्धियस्स'त्ति परिहारविशुद्धिकसाधोरन्तरं जघन्यं ८४ वर्षसहस्राणि, कथं ?, अवसर्पिण्या दुष्षमैकान्तदुष्षमयोरुत्सर्पिण्याश्चैकान्तदुष्षमादुष्षमयोः प्रत्येकं २१ वर्षसहस्रप्रमाणत्वेन चतुरशीतिर्वर्षसहस्राणां स्यात्, तत्र च परिहारविशुद्धिकं न स्यात् इतिकृत्वा जघन्यमन्तरं तस्य यथोक्तं स्यात् तच्च, इह वीरजिनानन्तरं यो दुष्षमायां परिहारविशुद्धिककालो यश्चोत्सर्प्पिण्यास्तृतीयसमायां परिहारविशुद्धिकप्रतिपत्तिकालात्पूर्वः कालो नासौ विवक्षितोऽल्पत्वादिति, 'उक्को० अट्ठारससागरोवम'त्ति छेदोपस्थापनीयोत्कृष्टान्तरवदस्य भावना कार्येति । परिमाणद्वारे—'जहण्णेणं कोडिसयपुहुत्तं'ति, 'उक्कोसेणवि कोडिसयपुहुत्तं'ति इहोत्कृष्टं छेदोपस्थापनीयसंयतपरिमाणमादिजिनतीर्थान्याश्रित्य सम्भवति, जघन्यं तु तत्सम्यग्नावगम्यते, यतो दुष्षमान्ते भरतादिषु १० क्षेत्रेषु प्रत्येकं तद्द्वयस्य भावाद्विंशतिरेव तेषां श्रूयते, केचिदेवमाहुः—आदितीर्थकराणां यस्तीर्थकालस्तदपेक्षयैव

ज्ञेयं, कोटीशतपृथक्त्वं च जघन्यमल्पतरमुत्कृष्टं च बहुतरमिति । अल्पबहुत्वद्वारे 'सव्वत्थोवा सुहुम'त्ति स्तोकत्वात् तत्कालस्य, निर्ग्रन्थतुल्यत्वेन च शतपृथक्त्वप्रमाणत्वात् तेषां, 'छेदोवट्ठावणिय'त्ति कोटीशतपृथक्त्वमानतायां तेषामुक्तत्वात्, 'सामाइयसंजया संखेज्ज'त्ति कषायकुशीलसमानतया कोटीसहस्रपृथक्त्वमानत्वेनोक्तत्वात्तेषामिति ॥ 'पडिसेवण'त्ति (*१०३) चारित्रं प्रति प्रतिकूला सेवा प्रतिसेवा तां ॥ आलोचनादोषगुणान् गुरुगुणांश्चाह–'दसविह'त्ति (सू. ७९९) 'दप्पप्पमायणाभोगे'त्ति इह सप्तमी प्रत्येकं दृश्या, तेन दर्पे सति प्रतिसेवी स्यात्, दर्प्पो–वल्गनादिः, प्रमादो–मद्यविकथादिस्तस्मिन्, अनाभोगश्च–अज्ञानं तस्मिन्, आतुरो–बुभुक्षातृड्बाधितस्तस्मिन् 'आवईइ य'त्ति आपदि सत्यां, आपच्च द्रव्यादिभेदेन चतुर्द्धा, तत्र द्रव्यापत् प्रासुकद्रव्यालाभः क्षेत्रापत् कान्तारक्षेत्रपतितत्वं कालापद् दुर्भिक्षकालप्राप्तिः भावापद् ग्लानत्वमिति, 'संकिन्ने'त्ति सङ्कीर्णे स्वपरपक्षव्याकुलत्वे सति, 'संकिए'त्ति क्वचित्पाठस्तत्र च शङ्किते आधाकर्मादित्वेन शङ्कितभक्तादिविषये, निशीथपाठे तु 'तिंतणे' इत्यपि, तत्र तिंतणत्वे सति, तच्चाहाराद्यलाभे सति सखेदं वचनं, 'सहसक्कारे'त्ति सहसाकारे–आकस्मिकक्रियायां यथा 'पुव्विं अपासिऊणं छूढे पायंमि जं पुणो पासे । न य तरइ नियत्तेउं पायं सहसाकरणमेयं ॥१॥' 'भयप्पओसा य'त्ति भयात्–सिंहादिभयेन प्रतिसेवा स्यात्, तथा प्रद्वेषाच्च, प्रद्वेषश्च–क्रोधादिः, 'वीमंस'त्ति विमर्शात्–शिक्षकादिपरीक्षणादिति १० प्रतिसेवाः स्युरिति । 'आकंपइत्ता' गाहा(१०४*)आकंप्य–वैयावृत्त्याद्यावर्जितो गुरुः स्तोकं प्रायश्चित्तं मे दास्यतीति बुद्ध्या गुरुं वैयावृत्त्यादिना आवर्ज्य यदालोचनमसावालोचनादोषः, 'अणुमाणयित्त'त्ति अनुमान्य–अनुमानं कृत्वा लघुतरापराधनिवेदनेन मृदुदण्डादित्वमाचार्यस्याकलय्य यदालोचनमसौ तद्दोषः, 'जं दिट्ठं'ति यदाचार्यादिना दृष्टमपराधजातं बादरं वा सूक्ष्मं वा, छन्नं लज्जया, 'सद्दाउलयं'ति

शब्दाकुलं—बृहच्छब्दं यथा स्यादेवमालोचयति, अगीतार्थान् श्रावयन्नित्यर्थः, 'बहुजणं'त्ति बहवो जना आलोचनागुरवो यत्र तद् बहुजनं यथा स्यात् 'अव्वत्त'त्ति अव्यक्तः—अगीतार्थस्तस्मै गुरवे यदालोचनं तदप्यव्यक्तमिति उच्यते 'तस्सेवि'त्ति यदपराधमालोचयिष्यति शिष्यस्तमेव यो गुरुस्सेवते स तत्सेवी, नन्वेतावंतो गुणा आलोचकस्य कथमन्विष्यन्ते इति, उच्यते, जातिसम्पन्नोऽकृत्यं न कुर्यात्, कृतं च सम्यगालोचयति, कुलसम्पन्नोऽङ्गीकृतप्रायश्चित्तस्य कर्त्ता स्यात्, विनयसम्पन्नो वंदनादिक्रियाप्रयोक्ता स्यात्, ज्ञानसम्पन्नः कृत्याकृत्यविभागज्ञः, दर्शनसम्पन्नः प्रायश्चित्ताच्छुद्धिं श्रद्धत्ते, चारित्रसम्पन्नः प्रायश्चित्तमङ्गीकुर्यात्, क्षान्तो गुरुभिरुपालम्भितो न कुप्यति, दान्तः अमायी अगोपयन् अपराधमालोचयति, 'आयारवं'ति आलोचितापराधानामवधारणावान् 'ववहारवं'ति आगमश्रुतादिपञ्चविधव्यवहारवान् 'उव्वीलए'त्ति अपव्रीडकः, लज्जया अतिचारान् गोपायन्तं विलज्जीकृत्य सम्यगालोचनाकारयिता 'पकुव्वए'त्ति आलोचितेष्वपराधेषु प्रायश्चित्तदानतो विशुद्धिं कारयितुं समर्थः अपरिश्रावी (शिष्येणालोचितापराधानामन्यस्याकथयिता) 'निज्जावए'त्ति निर्यापकः, असमर्थस्य प्रायश्चित्तस्य खण्डशः करणेन निर्वाहकः, 'अवायदंसि'त्ति आलोचनाया अदाने पारलौकिकापायदर्शनशील इति ॥ अथ सामाचारीमाह—'दसविहा सामायारी'ति (मू. ८००) (*१०६) प्रतीता चेयं, नवरं आपृच्छा कार्ये प्रश्नः, प्रतिपृच्छा तु प्राग्निषिद्धे कार्य एव, तथा छन्दना प्राग्गृहीतेन भक्तादिना, निमन्त्रणं त्वगृहीतेन, उपसम्पच्च ज्ञानाद्यर्थमाचार्यान्तराश्रयणमिति। 'आलोयणारिहे'ति आलोचनार्हं १ प्रतिक्रमणं—मिथ्यादुष्कृतं २ तदुभयं—आलोचनामिथ्यादुष्कृते ३ विवेकः—अशुद्धभक्तादित्यागः ४ व्युत्सर्गः ५ तपो—निर्विकृतिकादि ६ छेदः—प्रव्रज्यापर्यायह्रस्वीकरणं ७ मूलं—महाव्रतारोपणं ८ अनवस्थाप्यं—कृततपसो व्रतारोपणं ९ पाराञ्चिकं—लिङ्गादिभेदम् १०। 'चियत्तोवगरण'त्ति (मू. ८०२)

लक्षणोपेततया संयतस्यैव 'साइज्जणय'त्ति स्वदनता, परिभोजनमिति चूर्ण्यामुक्तं, 'जं वत्थाइ धरेइ तम्मिवि ममत्तं नत्थि, जइ कोइ मग्गइ तस्स देइ'त्ति 'अप्पसद्दे'त्ति अल्पशब्दो रात्र्यादावसंयतजागरणभयात् 'झंझ'त्ति झंझा कोपात् विप्रकीर्णा वचोरचना, चूर्ण्यां तूक्तं 'झंझा अणत्थयबहुप्पलावित्तं' तुमंतुमो हार्दः कोपः, 'दव्वाभिग्गह'त्ति द्रव्याभिग्रहाश्च लेपकृतादिद्रव्यविषयाः, 'जहा उववाइए' अनेनेदं सूचितम्—खेत्ताभिग्गहचरए कालाभि० भावाभिग्ग० 'ठाणाइए'त्ति स्थानं—कायोत्सर्गादिकमतिशयेन ददाति—गच्छतीति स्थानातिदः 'अल्लीण'त्ति आ ईषल्लीनः संवृतः, एवं प्रालीनोऽपि 'जहा सोमिलुद्देसे'त्ति अष्टादशशतस्य दशमोद्देशके, एतेन यत्सूचितं तत्ततो ज्ञेयं, 'दंसणविणए'त्ति दर्शनविनयः सम्यग्दृष्टिषु शुश्रूषादिरूपः 'चरित्तविणए'त्ति सामायिकादिचरित्राणां सम्यक्श्रद्धानकरणप्ररूपणानि 'लोगोवयार'त्ति लोकानामुपचारो—व्यवहारः पूजा वा तद्रूपो विनयः, शुश्रूषणा—सेवा सैव विनयः शुश्रूषणाविनयः 'अणच्चासायणाविणए'त्ति अतिशयेन आशातना अत्याशातना तन्निषेधरूपो विनयोऽनत्याशातनाविनयः 'किरियाए अणच्चासायणाविणए'त्ति इह क्रियाऽस्ति परलोकोऽस्ति आत्मा अस्ति मुक्तिरस्तीति प्ररूपणात्मिका गृह्यते 'संभोगस्स अणच्चासायण'त्ति सम्भोगस्य—समानधार्मिकाणां मिथोभक्तादिदानग्रहणरूपस्यानत्याशातना—विपर्यासवत्करणपरिवर्जनं 'वण्णसंजलण'त्ति सद्भूतगुणवर्णनेन यशोदीपनं 'अकिरिए'त्ति कायिकादिक्रियाभिष्वङ्गवर्जितं 'निरुवक्केस'त्ति स्वगतशोकाद्युपक्लेशवियुक्तं 'अणण्हय'त्ति अनाश्रवकरं 'अच्छविकरे'त्ति क्षपिः—स्वपरयोरवशत्वं यत्तत्करणशीलं न स्यात् तदक्षपिकरं 'अभूताभिसंकणे'त्ति यतो भूतान्यभिशङ्कन्ते—बिभ्यति तस्माद्यदन्यत्तदभूताभिशङ्कनं 'आउत्ते'ति आगुप्तस्य साधोस्सम्बन्धि यत्तदागुप्तमेव 'उल्लंघणे य'त्ति ऊर्ध्वं लङ्घनं उल्लङ्घनं द्वारार्गलावरण्डिकादेः 'सव्विंदियजोग'त्ति सर्वेषामिन्द्रियव्यापाराणां प्रयोग

इत्यर्थः, 'अब्भासवत्तियं'ति अभ्यासो—गौरवस्य समीपं तत्र वर्त्ती तद्भावोऽभ्यासवर्त्तित्वं 'परच्छन्दाणुवत्तियं'ति परस्य-आराध्यस्य छन्दः—अभिप्रायस्तस्यानुवर्त्ती तद्भावस्तत्त्वं 'कज्जहेउं'ति कार्यहेतोः ज्ञानादिनिमित्तं, भक्तादिदानमिति गम्यं,'कय-पडिकइया' कृतप्रतिकृतता नाम विनयात् प्रसादिता गुरवः श्रुतं दास्यन्तीत्यभिप्रायेणाशनादिदानप्रयत्नः, 'अत्तगवेसणय'त्ति आर्त्तो ग्लानस्तं गवेपयति भैषज्यादिना यः स आर्त्तगवेपणस्तद्भाव आर्त्तगवेपणता। ध्यानसूत्रे 'अमणुण्णसंपओगसंपउत्ते'त्ति (सू. ८०३) अमनोज्ञः शब्दादिस्तस्य सम्प्रयोगो—योगस्तेन सम्प्रयुक्तः तस्यामनोज्ञशब्दादेर्वियोगस्मृतिसमन्वागतश्चापि स्यात् 'कंदणय'त्ति महता शब्देन विरवणं 'सोयण'त्ति दीनता 'तिप्पणय'त्ति तेपनता तिपः क्षरणार्थत्वादश्रुमोचनं 'परिदेवणय'त्ति परिदेवनता पुनः २ क्लिष्टभाषणता 'तेयाणुबंधि'त्ति स्तेयं—चौर्यं तदनुबन्धवत् स्तेयानुबन्धि 'सारक्खणाणुबंधि'त्ति सर्वोपायैर्धनधान्यादिसंरक्षणं तदनुबन्धि संरक्षणानुबन्धि,'उसण्णदोसे'त्ति प्रायोऽविरतत्वेन हिंसानृतादत्तादीनामन्यतमो दोषः,'बहुदोसे'त्ति हिंसादिषु ४ बहुषु सर्वेष्वपि दोषः, 'आमरणंतदोसे'त्ति कालशौकरिकादेरिव या हिंसाप्रवृत्तिर्मृतिं यावत् सैव दोषः आमरणान्तदोषः 'चउप्पडोयारे'त्ति चतुर्षु भेद १ लक्षण २ आलम्बन ३ अनुप्रेक्षा ४ लक्षणेषु पदार्थेषु प्रत्यवतारः—समवतारो विचारणीयत्वेन यस्य तच्चतुष्प्रत्यवतारं, चतुर्विधशब्दस्यैव पर्यायोऽयं वाच्यः। (धर्म) ध्यानसूत्रे 'आणाविजए'त्ति आज्ञा जिनप्रवचनं तस्या विचयो—निर्णयो यत्र तदाज्ञाविचयं, प्राकृतत्वाच्चाणाविजयेत्ति१,'अवायविजए'त्ति रागादिजन्या अपाया-अनर्थाः२'विवाय'त्ति विपाकः—कर्मफलं ३ संस्थानानि—लोकद्वीपसमुद्राद्याकृतयः 'पुहुत्तवियक्कसवियारे'त्ति पृथक्त्वेन एकद्रव्यमाश्रितानामुत्पादादिपर्यायाणां भेदेन वितर्को—विकल्पः पूर्वगतश्रुतालम्बनो नानानयानुसरणलक्षणो यत्र तत् पृथक्त्ववितर्कं, तथा विचारः—

अर्थाद् व्यञ्जने व्यञ्जनादर्थे मनःप्रभृतियोगानां चान्यस्मादन्यस्मिन् विचरणं सह विचारेण यत्तत् सविचारि १, 'एगत्तवियक्क'त्ति एकत्वेन–अभेदेनोत्पादादिपर्यायाणामन्यतमैकपर्यायालम्बनतयेत्यर्थो वितर्कः–पूर्वगतश्रुताश्रयो व्यञ्जनरूपोऽर्थरूपो वा यस्य तदेकत्ववितर्कं, तथा न विद्यते विचारोऽर्थव्यञ्जनयोरितरस्मादितरत्र तथा मनःप्रभृतीनां योगानामन्यस्मादन्यत्र यस्य तदविचारीति २ 'सुहुमकिरिए अणियट्टि'त्ति सूक्ष्मा क्रिया यत्र निरुद्धवाङ्मनोयोगत्वे सत्यर्द्धनिरुद्धकाययोगत्वात् तत् सूक्ष्मक्रियं, न निवर्त्तत इत्यनिवर्त्ति वर्द्धमानपरिणामत्वाद्, एतच्च निर्वाणगमनकाले केवलिन एव स्यादिति ३ 'समुच्छिण्णकिरिए अप्पडिवाइ'त्ति समुच्छिन्ना क्रिया–कायिक्यादिका शैलेशीकरणे निरुद्धयोगत्वेन यस्मिंस्तत्तथा अप्रतिपाति–अनुपरतस्वभावं ४ 'अव्वहे'त्ति देवाद्युपसर्गजनितं भयं चलनं वा व्यथा तदभावोऽव्यथं १, 'असम्मोहे'त्ति देवादिकृतमायाजनितस्य सूक्ष्मपदार्थविषयस्य च सम्मोहस्य मूढताया निषेधोऽसम्मोहः, २ 'विवेगे'त्ति देहाद् आत्मनः आत्मनो वा सर्वसंयोगानां विवेचनं-पृथक्करणं विवेकः ३ 'विउस्सग्गे'त्ति व्युत्सर्गो–निःसङ्गता देहोपधित्यागः ४ 'अणंतवत्तियाणुप्पेहे'त्ति भवसन्तानस्यानन्तवृत्तितानुचिंतनं १ 'विप्परिणामाणुप्पेह'त्ति वस्तूनां प्रतिक्षणं नानापरिणामगमनानुचिन्तनं २ 'असुभाणुप्पेह'त्ति संसाराशुभत्वानुचिन्तनं, 'अवायाणुप्पेह'त्ति अपायानां–प्राणातिपाताद्याश्रवद्वारजानर्थानामनुप्रेक्षा–अनुचिन्तनमपायानुप्रेक्षा ४। उत्सर्गसूत्रे 'संसारविउस्स'त्ति (सू. ८०४) नारकायुष्कादिहेतूनां मिथ्यादृष्टित्वादीनां त्यागः, 'कम्मविउस्स'त्ति ज्ञानावरणादिकर्मबन्धहेतूनां ज्ञानप्रत्यनीकत्वादीनां त्याग इति ॥ २५ शते सप्तमः ॥

'पवए'त्ति (सू. ८०५) प्लवकः–उत्प्लवनकारी 'पवमाणे'त्ति प्लवमानः–उत्प्लुतिं कुर्वन्, 'अज्झवसाणनिव्वत्तिए'त्ति उत्प्लो-

तव्यं मयेत्येवंरूपाध्यवसायनिर्वर्त्तितेन 'करणोवाएणं'त्ति उत्प्लवनलक्षणं यत् करणं-क्रिया सैव उपायः—स्थानान्तरप्राप्तौ हेतुः करणोपायस्तेन 'सेयकाले'त्ति एष्यति काले; विहरतीति योगः, किं कृत्वेत्याह-'तं ठाणं'ति यत्र स्थाने स्थितः तत् स्थानं विप्रहाय-त्यक्त्वा प्लवनतः 'पुरिमं'ति पुरोवर्त्ति स्थानमुपसम्पद्य-प्राप्य विहरतीति, 'एवमेव तेऽवि जीव'त्ति, 'तं भवं'ति मनुष्यादिभवं 'पुरिमं'ति प्राप्तव्यं नारकभवमित्यर्थः, 'अज्झवसाणे'त्ति अध्यवसानं-जीवपरिणामो योगश्च-मनःप्रभृतिव्यापारस्ताभ्यां निर्वर्त्तितो यस्स तथा, तत्करणोपायेन मिथ्यात्वादिकर्मबन्धहेतुनेति ॥ २५ शतेऽष्टमः ॥

॥ एवं ९, १०, ११, १२ सङ्ख्याका उद्देशकाः ॥ (सू. ८०६)

इति श्रीतपागच्छनायकश्रीलक्ष्मीसागरसूरिशिष्यश्रीसुमतिसाधुसूरिशिष्यश्रीहेमविमलसूरिविजयराज्ये शतार्थिश्रीजिनमाणिक्यगणिशिष्यश्रीअनन्तहंसगणिशिष्यश्रीदानशेखरगणिसमुद्धृतभगवतीलघुवृत्तौ पञ्चविंशतितमशतकविवरणं सम्पूर्णम् ॥

अथ षड्विंशतितममारभ्यते—एकादशोद्देशकमितषड्विंशतितमे शते प्रत्युद्देशद्वारनिरूपणाय स्थानगाथामाह—'जीवा य'त्ति (*१०८) जीवाः प्रत्युद्देशकं बन्धवक्तव्यतायाः स्थानं १ तथा लेश्या २ पाक्षिका ३ दृष्टयः ४ ज्ञानं ५ अज्ञानं ६ संज्ञा ७ वेदः ८ कषायाः ९ योगः १० उपयोगश्च ११ बन्धवक्तव्यतास्थानं एवमेकादश स्थानानि इति गाथार्थः॥ 'बंधी'ति (सू. ८१०) बद्धवान् 'बंधइ'त्ति वर्त्तमाने बंधिस्सइत्ति अनागते, बद्धवानित्येतत्पदलब्धाश्चत्वारो भङ्गाः, न बन्धीत्येतत्पदलभ्यास्त्विह न स्युः, अतीतकालेऽबन्धकस्य जीवस्यासम्भवात्, तत्र बद्धवान् बध्नाति भंत्स्यति चेत्येष प्रथमोऽभव्यमाश्रित्य, बद्धवान् बध्नाति न भंत्स्यतीति द्वितीयः प्राप्तव्यक्षपकत्वं भव्यविशेषमाश्रित्य, बद्धवान्न बध्नाति भंत्स्यतीत्येष तृतीयो मोहोपशमे वर्त्तमानं भव्यमाश्रित्य, ततः प्रतिपतितस्य तस्य पापकर्मणोऽवश्यं बद्धवान् बध्नाति न भंत्स्यतीति चतुर्थः क्षीणमोहमाश्रित्येति, लेश्याद्वारे—सलेश्यजीवस्य चत्वारोऽपि स्युः, यस्मात् शुक्ललेश्यस्य पापकर्मणोऽबन्धकत्वमप्यस्तीति, कृष्णलेश्यादिपञ्चकयुक्तस्य त्वाद्यमेव भङ्गद्वयं, तस्य हि वर्त्तमानकालिको मोहलक्षणपापकर्मण उपशमः क्षयो वा नास्तीति अन्त्यद्वयाभावः, द्वितीयस्तु तस्य सम्भवति, कृष्णादिलेश्यावतः कालान्तरे क्षपकत्वप्राप्तौ न भंत्स्यतीत्येतस्य सम्भवादिति, अलेश्योऽयोगिकेवली तस्य च चतुर्थ एव, लेश्याभावे बन्धकत्वाभावादिति। पाक्षिकद्वारे—कृष्णपाक्षिकस्याद्यमेव भङ्गद्वयं, वर्त्तमाने बन्धाभावस्य तस्याभावादिति, शुक्लपाक्षिकस्य तु चत्वारोऽपि, स हि बद्धवान् बध्नाति भन्त्स्यतीति प्रश्नसमयापेक्षया अनन्तरे भविष्यति समये १ तथा बद्धवान् बध्नाति न भन्त्स्यति क्षपकत्वप्राप्तौ २ तथा बद्धवान् न बध्नाति उपशमे भन्त्स्यति च तत्प्रतिपाते ३ तथा बद्धवान् न बध्नाति न भन्त्स्यति च क्षपकत्वे इति ४। अत आह—'चउभंगो भाणियव्वो'त्ति ननु यदि कृष्णपाक्षिकस्य न भन्त्स्यतीत्यस्य सम्भवात् द्वितीयो भङ्गक इष्टस्तदा शुक्लपाक्षिकस्या-

बन्धकत्वस्यावश्यं सम्भवात् कथं प्रथमभङ्गक इति, अत्रोच्यते, पृच्छानन्तरे भविष्यत्कालेऽबन्धकत्वस्याभावाद्, उक्तं च वृद्धैरिह
'बंधिस्सइ बीयभंगो जुज्जइ जइ कण्हपक्खियाईणं। ता सुक्कपक्खियाणं पढमो भंगो कहं गेज्झो ? ॥१॥' उच्यते-पुच्छाणंतरकालं
पइ पढमो सुक्कपक्खियाईणं। इयरेसिं अविसिट्ठं कालं पइ बीय भंगो'त्ति ॥१॥" दृष्टिद्वारे (सू. ८११) सम्यग्दृष्टेश्चत्वारोऽपि भङ्गाः
शुक्लपाक्षिकस्येव भावनीयाः, मिथ्यादृग् मिश्रदृष्टीनामाद्यौ द्वावेव, वर्त्तमानकाले मोहस्य बन्धभावेनान्त्यद्वयाभावात्, अत आह-
'मिच्छे'त्ति ज्ञानद्वारे-'केवलनाणीणं चरमभंगो'त्ति वर्त्तमाने एष्यकाले च बन्धाभावात्, 'अन्नाणीणं पढमबीयं'ति अज्ञाने
मोहस्य क्षयोपशमनाभावात् २ संज्ञाद्वारे 'पढमबीए'त्ति आहारादिसंज्ञोपयोगकाले क्षपकत्वोपशमकत्वाभावात्, 'नो सण्णोवउ-
त्ताणं चत्तारि'त्ति नोसंज्ञोपयुक्ता आहारादिषु गृद्धिवर्जिताः तेषु चत्वारोऽपि क्षपणोपशमसम्भवादिति। वेदद्वारे-'सवेयगाणं
पढमबीय'त्ति वेदोदये हि क्षपणोपशमौ न स्यातामित्याद्यद्वयं 'अवेयगाणं चत्तारि' इति स्वकीये वेदे उपशान्ते बध्नाति भ-
न्त्स्यति च, मोहं यावत् सूक्ष्मसम्परायो न स्यात्, प्रतिपतितो वा भन्त्स्यति इति प्रथमः, तथा वेदे क्षीणे बध्नाति सूक्ष्मसम्परा-
यावस्थायां च न भन्त्स्यति एवं द्वितीयः, तथोपशान्तवेदः सूक्ष्मसम्परायादौ न बध्नाति, प्रपतितस्तु भन्त्स्यतीति तृतीयः, तथा
क्षीणे वेदे सूक्ष्मसम्परायादिषु न बध्नाति, न चोत्तरकालं भन्त्स्यत्येवं चतुर्थः, बद्धवानिति च सर्वत्र प्रतीतममेवेतिकृत्वा न प्रद-
र्शितमिति, कषायद्वारे-'सकसाईणं चत्तारि'त्ति तत्राद्योऽभव्यस्य, प्राप्तव्यमोहक्षयस्य, तृतीयः उपशमकसूक्ष्मसम्परायस्य, एवं
लोभकषायिणोऽपि वाच्यं 'कोहकसाईणं पढमबीय'त्ति इहाभव्यस्य प्रथमो द्वितीयो भव्यविशेषस्य, तृतीयचतुर्थौ त्विह न स्तः,
वर्त्तमानेऽबन्धकत्वस्याभावात् 'अकसाईणं'ति 'बन्धी न बन्धइ बन्धिस्सइ'त्ति उपशमकमाश्रित्य 'बंधी न बंधइ न बंधिस्सइ'त्ति

क्षपकमाश्रित्येति योगद्वारे 'सजोगिस्स चउभंगो'त्ति अभव्यभव्योपशमकक्षपकाणां चत्वारोऽपि स्युः, 'अजोगिस्स चरमो'त्ति बध्यमानभन्त्स्यमानत्वयोस्तस्याभावादिति ॥ 'नेरइएणं' (सू. ८१२) इत्यादौ 'पढमबीय'त्ति नारकत्वादौ श्रेणीद्वयाभावात् प्रथमद्वितीयावेव, एवं सलेश्यादिपदविशेषितं नारकत्वं वाच्यं, एवमसुरकुमारादिपदमपि 'मणुस्स'त्ति या जीवस्य सामान्यस्य सलेश्यादिपदविशेषितस्य चतुर्भङ्ग्यादिवक्तव्यता सा तथैव निरवशेषा वाच्या, जीवमनुष्ययोः समानधर्मत्वादिति, तदेवं २५ दण्डकाः पापकर्माश्रित्योक्ताः, एवं (सू. ८१३) ज्ञानावरणीयमप्याश्रित्य २५ दण्डका वाच्याः, 'जीवाणं भंते!' इत्यादि समस्तं प्राग्वद् भावनीयं, पुनर्विशेषमाह—'नवरं'ति पापकर्मदण्डके जीवपदे मनुष्यपदे च यत् सकषायिपदं लोभकषायिपदं च तत्र सूक्ष्मसम्परायस्य मोहाबन्धकत्वे चत्वारोऽपि भङ्गा उक्ताः, इह त्वाद्यावेव वाच्यौ, अवीतरागस्य ज्ञानावरणीयबन्धकत्वादिति, एवं दर्शनावरणीयदण्डकाः, वेदनीयदण्डके प्रथमे भङ्गेऽभव्यो द्वितीये भव्यो यो निर्वास्यति, तृतीयो न सम्भवति, वेदनीयं अबद्ध्वा पुनस्तद्बन्धनस्यासम्भवात्, चतुर्थे त्वयोगी, 'सलेसेवि एवं चेव तइयविहूणा भंग'त्ति इह तृतीयस्याभावः प्रागुक्तयुक्त्या ज्ञेयः, चतुर्थः पुनरिहाभ्युपेतोऽपि सम्यगावगम्यते, यतो बन्धी न बंधइ न बंधिस्सइ इत्येतदयोगिन एव सम्भवति, स च सलेश्यो न स्यात्, केचित्पुनराहुः—अयोगिताप्रथमसमये घण्टालालान्यायेन परमशुक्ललेश्योऽस्तीति सलेश्यस्य चतुर्थभङ्गः सम्भवति. तत्त्वं बहुश्रुतगम्यमिति, कृष्णलेश्यादिपदकेऽयोगित्वस्याभावादाद्यावेव, शुक्ललेश्ये जीवे सलेश्यभाविता भङ्गा वाच्याः, एतदेवाह—'सुक्कलेस्से'त्ति अलेश्यः शैलेशीगतः सिद्धश्च, तस्य च बद्धवान् न बध्नाति न भन्त्स्यतीत्येक एव, 'अलेस्से'त्ति चरमः 'कण्हपक्खिए पढमबीए'त्ति कृष्णपाक्षिकस्यायोगित्वाभावात्, 'सुक्कपक्खिए तइयविहूण'त्ति शुक्लपाक्षिको यस्मादयोग्यपि स्यादतस्तृतीयविहीनाः

शेपास्तस्य स्युः, 'एवं सम्मद्दिट्ठीस्सवि'त्ति तस्याप्ययोगित्वासम्भवेन बन्धासम्भवात्, मिथ्यादृग्मिश्रदृष्ट्योश्चायोगित्वाभावेन वेदनीयाबन्धकत्वं नास्तीत्याद्यावेव स्यातां, अत एवाह—'मिच्छादिट्ठी'त्यादि। ज्ञानिनः केवलिनश्चायोगित्वेऽन्तिमोऽस्ति आभिनिबोधिकादिष्वयोगित्वाभावे चरमो न, अत आह—'नाणिस्से'ति एवं सर्वत्र यत्रायोगित्वं सम्भवति तत्र तृतीयविहीना यत्र तु तन्नास्ति तत्राद्यौ द्वावेवेति भाव्यं। आयुष्कर्मदण्डके (सू. ८१४) 'चउभंगो'त्ति तत्र प्रथमोऽभव्यस्य, द्वितीयो यश्चरमशरीरो भविष्यति तस्य, तृतीयस्तूपशमकस्य, स ह्यायुर्बद्धवान् पूर्वं, उपशमकाले न बध्नाति, तत्पतितस्तु भंत्स्यति, चतुर्थस्तु क्षपकस्य, स ह्यायुर्न बद्धवान् न बध्नाति, न च भंत्स्यतीति 'सलेसे' इह यावत्करणात् कृष्णालेश्यादिग्रहस्तत्र यो न निर्वास्यति तस्य प्रथमः यस्तु चरमशरीरतयोत्पत्स्यते तस्य द्वितीयः, अबन्धकाले तृतीयः, चरमशरीरस्य चतुर्थः, एवमन्यत्रापि 'अलेसे चरमो'त्ति अलेश्यः शैलेशीगतः सिद्धश्च, तस्य वर्त्तमानभविष्यत्कालयोरायुषोऽबन्धकत्वाच्चरमो भङ्गः, कृष्णपाक्षिकस्य प्रथमः तृतीयश्च सम्भवति, तत्र प्रथमः प्रतीत एव, तृतीयस्त्वायुष्काबन्धकाले न बध्नात्येव, उत्तरकाले तु तद्भन्त्स्यतीत्येवं स्यात्, द्वितीयचतुर्थौ तु तस्य नाभ्युपगम्येते, कृष्णपाक्षिकत्वे सति सर्वथा तदभंत्स्यमानताया अभाव इति विवक्षणात्, शुक्लपाक्षिकस्य सम्यग्दृष्टेश्च चत्वारः, तत्र बद्धवान् प्राग् बध्नाति च बन्धकाले भंत्स्यति चाबन्धकालस्योपरि इत्येकः, बद्धवान् बध्नाति न भन्त्स्यति चरमशरीरत्वे इति द्वितीयः, तथा बद्धवान् न बध्नाति अबन्धकाले उपशमावस्थायां वा भंत्स्यति च पुनर्बन्धकाले पतितो वेति तृतीयः, चतुर्थस्तु क्षपकस्येति, मिथ्यादृष्टिस्तु द्वितीयभङ्गे न भन्त्स्यति चरमशरीरप्राप्तौ, तृतीये न बध्नात्यबन्धकाले, चतुर्थे न बध्नाति अबन्धकाले न भन्त्स्यति चरमशरीरप्राप्ताविति, 'सम्मामिच्छे'त्ति सम्यग्मिथ्यादृष्टिरायुर्न बध्नाति, चरमशरीरत्वे कश्चिन्न भन्त्स्यति इतिकृत्वाऽन्त्यावेवेति, ज्ञानिनां

चत्वारः प्रागबद्धाव्याः, मनःपर्यायज्ञानिनो द्वितीयवर्जाः, तत्रासौ प्रागायुर्बद्धवान् इदानीं तु देवायुर्बध्नाति ततो मनुष्यायुर्भन्त्स्यतीति प्रथमः बद्धवान् बध्नाति भंत्स्यतीति सम्भवति, अवश्यं देवत्वे मनुष्यायुषो बन्धनादितिकृत्वा द्वितीयो नास्ति, तृतीय उपशमकस्य, स हि न बध्नाति प्रतिपतितश्च भन्त्स्यति, क्षपकस्य चतुर्थः,'केवलनाणे चरमो'त्ति केवली हि आयुर्न बध्नाति न च भन्त्स्यति इतिकृत्वा, नोसंज्ञोपयुक्तस्य भङ्गत्रयं, द्वितीयवर्जं मनःपर्यववद् भाव्यं 'अवेदए'त्ति अवेदकोऽकषायी च क्षपक उपशमको वा तयोश्च वर्त्तमानबन्धो नास्ति आयुषः, उपशमकश्च प्रतिपतितो भन्त्स्यति, क्षपकस्तु नैव भन्त्स्यतीतिकृत्वा तयोस्तृतीयचतुर्थौ, 'सेसेसु'त्ति शेषपदेषु उक्तव्यतिरिक्तेषु अज्ञान १ मत्यज्ञानादि ३ संज्ञोपयुक्ताहारादिसंज्ञोपयुक्तसवेद १ स्त्रीवेदादि ३ सकषाय१-क्रोधादिकषाय ४ सयोगि १ मनोयोग्यादि ३ साकारोपयुक्तानाकारोपयुक्तलक्षणेषु चत्वार एवेति। नारकदण्डके 'चत्तारि भंग'त्ति तत्र नारक आयुर्बद्धवान् बध्नाति बन्धकाले भन्त्स्यति भवान्तरे इत्येकः १ प्राप्तव्यसिद्धिकस्य द्वितीयः, बन्धकालाभावं भाविबन्धकालं वाऽपेक्ष्य तृतीयः, बद्धपरभविकायुषोऽनन्तरं प्राप्तव्यचरमभवस्य चतुर्थः, एवं सर्वत्र, विशेषमाह–'नवरं'ति लेश्यापदे कृष्णलेश्येषु नारकेषु प्रथमतृतीयौ, तथाहि–कृष्णलेश्यो नारको बद्धवान् बध्नाति भन्त्स्यति चेति प्रथमः प्रतीत एव, द्वितीयस्तु नास्ति, यतः कृष्णलेश्यो नारकस्तिर्यक्षूत्पद्यते मनुष्येषु च चरमशरीरेषु, कृष्णलेश्यो हि पञ्चमनरकपृथ्व्यादिषु स्यात्, तत उद्वृत्तश्च न सिद्ध्यति, तदेवमसौ नारकस्तिर्यगाद्यायुर्बद्धा पुनर्भन्त्स्यति, अचरमशरीरत्वादिति, तथा कृष्णलेश्यानारक आयुष्काबन्धकाले तन्न बध्नाति, बन्धकाले तु भन्त्स्यतीति तृतीयः, चतुर्थस्तु तस्य नास्ति, आयुरबन्धकत्वस्याभावादिति, तथा कृष्णपाक्षिकनारकस्य प्रथमः प्रतीत एव, द्वितीयो नास्ति, यतः कृष्णपाक्षिको नारक आयुर्बद्ध्वा न पुनर्भन्त्स्यतीत्येतन्नास्ति तस्य चर-

मभवाभावात्, तृतीयस्तु स्यात्, चतुर्थोऽपि नोक्तयुक्तेरेवेति, 'सम्मामिच्छत्ते तइयचउत्थ'त्ति मिश्रदृष्टेरायुषो बन्धाभावात्। असुरकुमारदण्डके 'कण्हलेसे चत्तारि भंग'त्ति नारकदण्डके कृष्णलेश्यनारकस्य प्रथमतृतीयावुक्तावसुरकुमारस्य तु कृष्णलेश्यस्यापि चत्वार एव, तस्य हि मनुष्यगत्यवाप्तौ सिद्धिसम्भवेन द्वितीयचतुर्थयोरपि भावादिति, पृथ्वीकायदण्डके 'कण्हपक्खिए पढमतइयभंग'त्ति इह युक्तिः प्राग्वद्वाच्या, तेजोलेश्यापदे तृतीयो भङ्गः, कथं ?, कश्चिद्देवस्तेजोलेश्यः पृथ्वीकायेषूत्पन्नः, स पर्याप्तावस्थायां तेजोलेश्याद्धायां चापगतायामायुर्बध्नाति, तस्मात्तेजोलेश्यः पृथ्वीकाय आयुर्बद्धवान् देवत्वे न बध्नाति तेजोलेश्यावस्थायां भन्त्स्यति तस्यामपगतायामित्येवं तृतीयः, 'एवं आउकाइयवणस्सइकाइयाणवि'त्ति उक्तन्यायेन कृष्णपाक्षिकेषु प्रथमतृतीयभङ्गौ तेजोलेश्यायां च तृतीयभङ्गसम्भवः, 'तेउकाइए'त्ति तेजस्कायिकवायुकायिकानां सर्वत्र, एकादशस्वपि स्थानकेष्वित्यर्थः, प्रथमतृतीयभङ्गौ स्यातां, तत उद्वृत्तानामनन्तरं मनुष्येष्वनुत्पत्त्या सिद्धिगमनाभावेन द्वितीयचतुर्थासम्भवात्, मनुष्येष्वनुत्पत्तिश्च तेषां—'सत्तममहिनेरइया तेऊ वाऊ असंखनरतिरिया। मुत्तूण सेसजीवा उप्पज्जंति य नरभवंमि ॥१॥' इति वचनादिति, 'बेंदिए'त्यादि, विकलेन्द्रियाणां सर्वत्र प्रथमतृतीयभङ्गौ, यतस्तत उद्वृत्तानामानन्तर्येण सत्यपि मानुषत्वे निर्वाणाभावस्तस्मादवश्यं पुनस्तेषामायुषो बन्ध इति, यदुक्तं विकलेन्द्रियाणां सर्वत्र प्रथमतृतीयभङ्गौ तदपवादमाह—'नवरं सम्म'त्ति सम्यक्त्वे ज्ञाने आभिनिबोधिके श्रुते च विकलेन्द्रियाणां तृतीय एव, यतस्सम्यक्त्वादीनि तेषां सास्वादनभावेनापर्याप्तकावस्थायामेव, तेषु चापगतेष्वायुषो बन्ध इत्यतः पूर्वभवे बद्धवन्तः सम्यक्त्वाद्यवस्थायां न बध्नन्ति तदनन्तरं च भन्त्स्यंतीति तृतीयः, 'पंचेंदियतिरिक्खे'-त्यादि, पञ्चेन्द्रियतिरश्चां कृष्णपाक्षिकपदे प्रथमतृतीयौ, कृष्णपाक्षिको हि आयुर्बद्ध्वाऽबद्ध्वा वा तद्बन्धकोऽनन्तरमेव न स्यात्, तस्य

सिद्धिगमनायोग्यत्वादिति, 'सम्मामिच्छत्ते तइयचउत्थे'त्ति मिश्रदृष्टेरायुषो बन्धाभावात् तृतीयचतुर्थावेव, भावितं चैतत्प्रागेव, 'सम्मत्ते'त्ति पञ्चेन्द्रियतिरश्चां सम्यक्त्वादिषु पञ्चसु द्वितीयवर्जा भङ्गाः स्युः, कथं ?, यदा सम्यग्दृष्ट्यादिः पञ्चेन्द्रियतिर्यङ् आयुर्बध्नाति तदा देवेष्वेव, स च पुनरपि भंत्स्यतीति न द्वितीयसम्भवः, प्रथमतृतीयौ तु प्रतीतावेव, चतुर्थः पुनरेवं—यदा मनुष्येषु बद्धायुरसौ सम्यक्त्वादि प्रतिपद्यते, अनन्तरं च प्राप्तव्यचरमभवस्तदेति, 'मणुस्साणं जहा जीवाणं'ति, अथ विशेषमाह—'नवरं'ति सम्यक्त्वसामान्ये ज्ञानादिषु पञ्चसु पदेषु मनुजा द्वितीयविहीनाः, भावना चेह पञ्चेन्द्रियतिर्यक्सूत्रवद् ज्ञेया ॥२६ शते प्रथमः॥

प्रथमोद्देशे जीवादिद्वारैकादशप्रतिबद्धैर्नवभिः पापकर्मादिप्रकरणैर्जीवादीनि पञ्चविंशतिर्जीवस्थानानि उक्तानि, द्वितीयेऽपि तथैव तानि चतुर्विंशतिः उच्यन्ते, 'अणंतरोववन्नएणं'ति (सू.८१५) इहाद्यावेव भङ्गौ, अनन्तरोत्पन्ननारकस्य मोहलक्षणपापकर्माबन्धकत्वासम्भवात्, तद्धि सूक्ष्मसम्परायादिषु स्यात्, तानि च तस्य न सन्ति, 'सव्वत्थ'त्ति लेश्यादिपदेषु, एतेषु सामान्यनारकादीनां सम्भवन्त्यपि यानि पदान्यनन्तरोत्पन्ननारकादीनामपर्याप्तत्वेन न सन्ति तानि तेषां न प्रष्टव्यानि इति दर्शयन्नाह—'नवरं'ति, तत्र च सम्यग्मिथ्यात्वाद्युक्तत्रयं यद्यपि नारकाणामस्ति तथाऽपीहानन्तरोत्पन्नतया तेषां तन्नास्तीति न प्रष्टव्यं, एवमुत्तरत्रापि, आयुःकर्मदण्डके 'मणुस्साणं सव्वत्थ तइयचउत्थ'त्ति यतोऽनन्तरोत्पन्नो मनुष्यो नायुर्बध्नाति, भन्त्स्यति पुनः, चरमशरीरस्त्वसौ न बध्नाति न भन्त्स्यतीति, 'कण्हपक्खिएसु तइओ'त्ति कृष्णपाक्षिकत्वेन भन्त्स्यतीत्येतस्य पदस्यासम्भवात् तृतीय एव, 'सव्वेसिं नाणत्ताइं ताइं चेव'त्ति सर्वेषां नारकादिजीवानां यानि पापकर्मदण्डके उक्तानि नानात्वानि तान्येवायुर्दण्डकेऽपीति ॥ २६ शते द्वितीयः ॥

तृतीये परम्परोपपन्नका उच्यन्ते—'जहेव पढमो उद्देसओ'त्ति (सू. ८१६) जीवनारकादिविषयः, केवलं तत्र जीवनारकादीनि पञ्चविंशतिपदान्युक्तानि इह तु नारकादीनि चतुर्विंशतिरेव, एतदाह—'नेरइयाइओ'त्ति नारकादयोऽत्र वाच्या इत्यर्थः, 'तहेव नवदण्डकसंगहिओ'त्ति पापकर्मज्ञानावरणादिविषयका ये नव दण्डकाः प्रागुक्तास्तैः संगृहीतो युक्तो य उद्देशकस्स तथा ॥ २६ शते तृतीयः ॥

एवं चतुर्थादय एकादशान्ताः नवरं 'अणंतरोगाढे'त्ति (सू. ८१७) उत्पत्तिसमयापेक्षया अनन्तरावगाढत्वमवसेयं, अन्यथा अनन्तरोत्पन्नानन्तरावगाढयोर्निर्विशेषता स्याद्, उक्ता चासौ जहेवाणंतरोववन्नएणमित्यादिना, एवं परम्परावगाढोऽपि, 'अणंतराहारए'त्ति आहारकत्वप्रथमसमयवर्ती, परम्पराहारकस्त्वाहारकत्वस्य द्वितीयादिसमयवर्ती, 'अणंतरपज्जत्तए'त्ति पर्याप्तकत्वप्रथमसमयवर्ती, स च पर्याप्तिसिद्धावपि तत उत्तरकालमेव पापकर्मादिबन्धलक्षणकार्यकारी स्यादित्येवमस्यानन्तरोपपन्नकवद्व्यपदिश्यते—'एवं जहेवऽणंतरोववन्नएणं' तथा 'चरमे णं भंते नेरइए'त्ति इह चरमो यस्तं भवं न प्राप्स्यति, 'एवं जहेव'त्ति इह च यद्यप्यविशेषेणातिदेशः कृतः तथापि विशेषो ज्ञेयः, चरमोद्देशकः परम्परोपपन्नकोद्देशकवदित्याद्य इत्युक्तं. परम्परोद्देशकश्च प्रथमोद्देशकवत्, तत्र च मनुष्यपदे आयुष्कापेक्षया सामान्यतश्चत्वारो भङ्गाः प्रोक्ताः, तेषु च चरममनुष्यायुःकर्मबन्धमाश्रित्य चतुर्थ एव घटते, यतो यश्चरमोऽसावायुर्बद्धवान् न बध्नाति न च भन्त्स्यतीति, अन्यथा चरमत्वमेव न स्यात्, इत्येवमन्यत्रापि विशेषो ज्ञेयः, अचरमो यस्तं भवं पुनः प्राप्स्यति, तत्राचरमोद्देशके 'नेरइया असुराई' इत्यादिगाथोक्तनारकादिपञ्चेन्द्रियतिर्यगन्तेषु पदेषु पापकर्माश्रित्य आद्यौ द्वौ भङ्गौ, मनुष्याणां तु चरमभङ्गवर्जास्त्रयः, यतश्चतुर्थश्चरमस्येति, एतदेव दर्शयति—'अचर-

मे णं भंते! मणूसे'त्ति 'वीसस्तु पदेसु'त्ति तानि चैतानि–जीव १ सलेश्य २ शुक्ललेश्य ३ शुक्लपाक्षिक ४ सम्यग्दृष्टि ५-ज्ञानि ६ मतिज्ञानादिचतुष्टय १० नोसंज्ञोपयुक्ता ११ वेदक १२ सकषाय १३ लोभकषायि १४ सयोगि १५ मनोयोग्यादित्रय १८ साकारोपयुक्ता १९ नाकारोपयुक्त २० लक्षणानि, एतेषु च सामान्येन भङ्गकचतुष्कसम्भवेऽप्यचरमत्वात् मनुष्यपदे चतुर्थो नास्ति, चरमस्यैव तद्भावादिति, 'अलेस्से' इत्यादि, अलेश्यादयस्त्रयश्चरमा एव स्युरितिकृत्वेह न प्रष्टव्याः, ज्ञानावरणीयदण्डकोऽप्येवं, नवरं विशेषोऽयं–पापकर्मदण्डके सकषायिलोभकषायिषु आद्यास्त्रयो भङ्गा उक्ताः, इह त्वाद्यौ द्वावेव, न तृतीयः, यत एते ज्ञानावरणीयमबद्ध्वा पुनर्बन्धका न स्युः, कषायिणां सदैव ज्ञानावरणबन्धकत्वात्, चतुर्थस्त्वचरमत्वादेव न स्यादिति, 'वेयणिज्जे सव्वत्थवि पढमबीय'त्ति तृतीयचतुर्थयोरसम्भवाद्, एतयोर्हि प्रथमः प्रागुक्तयुक्तेर्न सम्भवति, द्वितीयस्तु अयोगित्व एव स्यादिति, आयुर्दण्डके 'अचरमे णं भंते! नेरइए'त्ति 'पढमतइयभंग'त्ति तत्र प्रथमः प्रतीत एव, द्वितीयस्त्वचरमत्वान्नास्ति अचरमस्य ह्यायुर्बन्धोऽवश्यं भविष्यति, अन्यथा अचरमत्वमेव न स्याद्, एवं न चतुर्थोऽपि, तृतीये तु न बध्नात्यायुः, तद्बन्धकाले पुनर्भन्त्स्यति, अचरमत्वादिति, शेषपदानां तु भावना पूर्वोक्तानुसारेण कर्त्तव्येति, 'बंधिसयं'ति प्रत्युद्देशकं बंधीतिशब्देनोपलक्षितं शतं बन्धिशतं ॥ षड्विंशं शतं वृत्तितः सम्पूर्णम् ॥



अथ सप्तविंशमारभ्यते–'जीवे णं'ति (सू. ८१८) ननु बन्धस्य करणस्य च को विशेषः?, उच्यते, न कश्चित्, तर्हि किमिति भेदेनोपन्यासः?, उच्यते, येयं जीवस्य कर्मबन्धक्रिया सा जीवकर्तृका, न त्वीश्वरादिकृतेत्यस्यार्थस्योपदर्शनार्थं, अथवा

बन्धः सामान्यः करणं त्ववश्यं विपाकदायकत्वेन निष्पादनं निधत्तादिस्वरूपमिति, 'करिंसुगसयं'ति 'करिंसु' इत्यनेन शब्देन युक्तं शतं प्राकृतत्वात् 'करिंसुयसयं'ति ॥ सप्तविंशं शतं वृत्तितः सम्पूर्णम् ॥



अथाष्टाविंशं व्याख्यायते—'कहिं समज्जिणिंसु'त्ति (सू. ८१९) कस्यां गतौ वर्त्तमानाः समर्जितवन्तो ?—गृहीतवन्तः, 'समायरिंसु'त्ति कस्यां समाचरितवन्तः पापकर्महेतुसमाचरणेन, तद्विपाकानुभवनेनेति वृद्धाः। 'सव्वेऽवि ताव तिरिक्खजोणिएसु होज्ज'त्ति, इह तिर्यग्योनिभ्यः, अन्ये नारकादयस्तिर्यग्भ्य आगत्योत्पन्नाः कदाचिन्नभवेयुस्ततस्ते सर्वेऽपि तिर्यग्योनिकेष्वभूवन्निति व्यपदिश्यते, अयमभिप्रायो—ये विवक्षितसमये नारकादयोऽभूवंस्तेऽल्पत्वेन सर्वेऽपि सिद्धिगमनेन तिर्यग्गतिप्रवेशेन च निर्लेपतयोद्वृत्ताः, ततश्च तिर्यग्गतेरनन्तत्वेनानिर्लेपनीयत्वात् तत उद्वृत्य तिर्यग्भ्यस्तत्स्थानेषु नारकादित्वेनोत्पन्नाः ततस्ते तिर्यग्गतौ नरकगत्यादिहेतुभूतं पापकर्म समर्जितवन्त इत्युच्यत इत्येकः, 'अहवा तिरिक्खजोणिएसु नेरइएसु होज्ज'त्ति विवक्षितसमये ये मनुष्यदेवा अभूवंस्ते निर्लेपतया तथैवोद्वृत्ताः तत्स्थानेषु च तिर्यग्नारकेभ्य आगत्योत्पन्नास्ते नैवं व्यपदिश्यन्ते—तिर्यग्नैरयिकेष्वभवन् एते, ये च यत्राभूवंस्ते तत्रैव कर्मोपार्जितवन्त इत्यर्थादुच्यते इति द्वितीयः, 'अहवा तिरिक्खजोणिएसु य मणुएसु य होज्ज'त्ति विवक्षितसमये ये नैरयिका देवास्ते तथैव निर्लेपतयोद्वृत्तास्तत्स्थानेषु च तिर्यग्मनुष्येभ्य आगत्योत्पन्नास्ते नैवं व्यपदिश्यन्ते—तिर्यग्मनुष्येष्वभूवन्, तत्रैव कर्मोपार्जितवन्त इति सामर्थ्यगम्यमिति तृतीयः, तदेवमनया भावनयाऽष्टावेते भङ्गाः, तत्रैकस्तिर्यग्गत्यैव १ अन्ये तु तिर्यग्नैरयिकाभ्यां २ तिर्यग्मनुष्याभ्यां ३ तिर्यग्देवाभ्या ४ मिति त्रयो द्विकसंयोगाः, तथा तिर्य-

ग्मनुष्यनारकै ५ स्तिर्यग्नारकदेवै ६ स्तिर्यग्मनुष्यदेवै ७ रिति त्रयस्त्रिकसंयोगाः, एकस्तु चतुष्कसंयोग ८ इति, 'एवं सव्वत्थ'त्ति सलेश्यादिपदेषु ९ दण्डकाः स्युः प्रागुक्तपापकर्मादिभेदेनेति ॥ २८ शते प्रथमः ॥

'अणंतरोववण्णगाणं'ति (सू. ८२०) द्वितीयः, तत्र च 'अणंतरेसु जे परिहरियव्वा ते जहा बंधिसए तहा इहंपि'त्ति अनन्तरोपपन्ननारकादिषु यानि सम्यग्मिथ्यात्वमनोयोगवाग्योगादीनि पदानि 'परिहरियव्व'त्ति असम्भवान्न प्रष्टव्यानि तानि यथा बन्धिशते तथेहापीति, ननु प्रथमभङ्गे सर्वे तिर्यग्भ्य उत्पन्नाः कथं भवन्ति, आनतादिदेवानां तीर्थकरादिमनुष्यशेषाणां च तेभ्य आगतानामनुत्पत्तेः, एवं द्वितीयादिभङ्गेष्वपि भाव्यं, सत्यं, किन्तु बाहुल्यमाश्रित्यैते भङ्गा ग्राह्याः, इदं च वृद्धवचसा दर्शयिष्यामः, 'कम्मसमज्जिणणसयं'ति कर्मसमर्जनलक्षणार्थं वाच्यं शतं कर्मसमर्जनशतं ॥ अष्टाविंशं शतं वृत्तितः सम्पूर्णं ॥



'समायं'ति (सू. ८२१) समकं बहवो जीवाः युगपदित्यर्थः, 'पट्ठविंसु'त्ति प्रस्थापितवन्तः–प्रथमतया वेदयितुमारब्धवन्तः, तथा समकमेव 'निट्ठविंसु'त्ति निष्ठापितवन्तो–निष्ठां नीतवन्त इत्येकः, तथा समकं प्रस्थापितवन्तो 'विसमं'ति विषमं यथा स्यात्, विषमतयेत्यर्थः, निष्ठापितवन्त इति द्वितीयः, एवमन्यौ द्वौ, 'अत्थेगइया समाउया'इत्यादि चतुर्भङ्गी, तत्र 'समाउय'त्ति समायुषः, उदयापेक्षया समकालायुष्कोदया इत्यर्थः, 'समोववण्णग'त्ति विवक्षितायुषः क्षये समकमेव भवान्तरे उत्पन्नाः समोपपन्नकाः, ये चेदृशास्ते समकमेव प्रस्थापितवन्तः समकमेव च निष्ठापितवन्तः, नन्वायुः कर्मैवाश्रित्यैवमुपपन्नं स्यात्, ननु पापं कर्मेति, तद्धि नायुष्कोदयापेक्षं प्रस्थाप्यते निष्ठाप्यते वा, नैवं, यतो भवापेक्षः कर्मणामुदयः क्षयश्चेष्यते, उक्तं च—"उदयक्खय-

खओवसमे''त्यादि, अत आह—'तत्थ णं जे ते समाउया समोववण्णया ते णं पावं कम्मं समायं पट्ठविंसु समायं निट्ठविंसु'त्ति प्रथमः, तथा 'तत्थ णं जे ते समाउया विसमोववण्णग'त्ति समकालायुष्कोदया विषमतया परभवे उत्पन्ना मरणकालवैषम्यात् 'ते समायं पट्ठविंसु'त्ति आयुष्कविशेषोदयसम्पाद्यत्वात् पापकर्मवेदनविशेषस्य 'विसमायं'ति मरणकालवैषम्यात् पापकर्मवेदनविशेषस्य विषमतया निष्ठासम्भवादिति द्वितीयः, तथा 'विसमाउया समोववण्णग'त्ति विषमकालायुष्कोदयाः समकालभवान्तरोत्पत्तयः 'ते णं पावं कम्मं विसमाउयं पट्ठविंसु समाउयं निट्ठविंसु'त्ति तृतीयः, चतुर्थः सुज्ञान एव, इह चैतान् भङ्गान् प्राक्तनशतभङ्गांश्चाश्रित्य वृद्धैरुक्तम्—''पट्ठवणसये किहणु हु ? समाउउववण्णएसु चउभंगो। किह व समज्जिणणसए गमणिज्जा अत्थओ भंगा ? ॥१॥ पट्ठवणसए भंगा पुच्छा भंगाणुलोमओ वच्चा।'' यथा पृच्छाभङ्गाः समकप्रस्थापनादयो न बध्यते तथेह समायुष्कादयोऽन्यत्रान्यथा व्याख्याता अपि व्याख्येया इत्यर्थः, 'कम्मसमज्जिणणसए बाहुल्लाओ समाजुज्जा इति ॥ २९ शते प्रथमः ॥

'अनंतरोववण्णगाण'मिति (सू. ८२३) द्वितीयः, तत्र चान्तरोपपन्नका द्विधा, समाउया समोववन्नत्ति अनन्तरोपपन्नानां सम एव आयुरुदयः स्यात्, तद्वैषम्येऽनन्तरोपपन्नत्वमेव न स्याद्, आयुःप्रथमसमयवर्त्तित्वात्तेषां, 'समोववण्णग'त्ति मरणानन्तरं परभवोत्पत्तिमाश्रित्य, ते च मरणकाले भूतपूर्वगत्याऽनन्तरोपपन्नका उच्यन्त इति 'समाउया विसमोववण्ण'त्ति विषमोपपन्नत्वमिहापि मरणवैषम्यादिति, तृतीयचतुर्थौ भङ्गावनन्तरोपपन्नेषु न सम्भवतोऽनन्तरोपपन्नत्वादेवेति द्वितीयः, एवं शेषा अपि, 'नवरं अणंतरोद्देसगाणं चउण्हवि'त्ति अनन्तरोपपन्नकानन्तरावगाढानन्तराहारकानन्तरपर्याप्तकोद्देशकानां 'कम्मपट्ठवणसयं'ति कर्मप्रस्थापनाद्यर्थवाच्यं शतं कर्मप्रस्थापनशतं। एकोनत्रिंशं शतं वृत्तितस्सम्पूर्णम् ॥



अथ त्रिंशमारभ्यते–'समोसरण'त्ति (सू. ८२४) समवसरन्ति नानापरिणामा जीवाः कथञ्चित्तुल्यतया येषु मतेषु तानि समवसरणानि, 'किरियावाइ'त्ति क्रिया कर्त्तारं विना न सम्भवति, सा चात्मसमवायिनीति ये वदन्ति ते क्रियावादिनः, ते चाशीत्यधिकशतं स्थानान्तरादवसेयाः, अन्ये त्वाहुः–क्रियैव प्रधाना, किं ज्ञानेन? एवमन्यत्रापि, 'अकिरियावाई'ति अक्रियां–क्रियाया अभावं, नहि कस्यचिदप्यनवस्थितस्य पदार्थस्य क्रिया सम्भवति, तद्भावे चानवस्थितेरभावादिति, इदं ये वदन्ति तेऽक्रियावादिनः, तथा चाहुरेके–"क्षणिकाः सर्वसंस्कारा, अस्थितानां कुतः क्रिया?। भूतिर्येषां क्रिया सैव, कारकं सैव चोच्यते ॥१॥" इत्यादि, अन्ये त्वाहुः–अक्रियावादिनो ये ब्रुवते–किं क्रियया?, चित्तशुद्धिरेव कार्या, ते च बौद्धाः, अन्ये तु व्याख्यान्ति–अक्रियां–जीवादिः पदार्थो नास्ति इत्यादिकां वदितुं शीलं येषां ते अक्रियावादिनः, ते चात्मादिपदार्थनास्तित्वप्रतिपत्तिलक्षणाश्चतुरशीतिविकल्पाः स्थानान्तरादवसेयाः, 'अन्नाणियवाइ'त्ति अज्ञानिकवादिनः, ते चाज्ञानमेव श्रेयः असञ्चिन्त्यकृतकर्मबन्धवैफल्यात्, तथा ज्ञानं न कस्यापि क्वचिदपि वस्तुन्यस्ति, प्रमाणानामसम्पूर्णवस्तुविषयत्वादिति येऽभ्युपगतवन्तः, ते सप्तषष्टिसङ्ख्याः स्थानान्तरादवसेयाः, 'वेणइयवाइ'त्ति वैनयिकवादिनः, विनय एव वैनयिकं तदेव यैः स्वर्गादिहेतुतया वदन्ति इत्येवंशीलास्ते वैनयिकवादिनः, एते चानवधृतलिङ्गाचारशास्त्रविनयप्रतिपत्तिलक्षणा द्वात्रिंशद्विधाः स्थानान्तरादवसेयाः, अत्रार्थे "अत्थित्ति किरियवाई वयंति नत्थित्ति-ऽकिरियवाईओ। अन्नाणिय अन्नाणं वेणइया विणयवायंति ॥१॥" एते च सर्वेऽप्यन्यत्र यद्यपि मिथ्यादृष्टय उक्ताः तथापीहाद्याः सम्यग्दृष्टयो ग्राह्याः, सम्यकस्थितवादिनामेव तेषां समाश्रयणादिति। 'जीवा णं'ति तत्र जीवाश्चतुर्विधा अपि तथा स्वभावात् 'अलेस्सा णं'ति अलेश्याः अयोगिनः सिद्धाश्च, ते च क्रियावादिन एव, क्रियावादहेतुभूतयथावस्थितद्रव्यपर्यायरूपार्थपरिच्छेदयुक्त-

त्वाद्, इह च यानि सम्यग्दृष्टिस्थानानि अलेश्यत्वसम्यग्दर्शननोसंज्ञोपयुक्तत्वावेदत्वादीनि तानि नियमात् क्रियावादे क्षिप्यन्ते, मिथ्यादृष्टिस्थानानि तु मिथ्यात्वाज्ञानादीनि शेषसमयसमवसरणत्रये, 'सम्मामिच्छादिट्ठी णं'ति सम्यग्मिथ्यादृष्टयो हि साधारणपरिणामत्वात् नो आस्तिकाः नापि नास्तिकाः, किन्तु अज्ञानविनयवादिन एव स्युरिति । 'पुढविकाइया ण'मित्यादौ 'नो किरियावाइ'त्ति मिथ्यादृष्टित्वात् तेषां, अज्ञानिका अक्रियावादिनश्च ते स्युः, वादाभावेऽपि तद्वादयोग्यजीवपरिणामसद्भावाद्, वैनयिकवादिनस्तु ते न स्युः, तथाविधपरिणामाभावादिति, 'पुढविकाइयाणं जं अत्थी'त्यादि, पृथ्वीकायिकानां यदस्ति सलेश्यकृष्णनीलकापोततेजोलेश्याकृष्णपाक्षिकत्वादि तत्र सर्वत्रापि मध्यमं समवसरणद्वयं वाच्यमिति, 'एवं जाव चउरिंदियाणं'मित्यादि, ननु द्वीन्द्रियादीनां सास्वादनभावेन सम्यक्त्वं ज्ञानं चेष्यते तत्र क्रियावादित्वं युक्तं तत्स्वभावत्वात् इत्याशङ्क्याह–'सम्मत्तनाणेहिं' क्रियावादविनयवादौ हि विशिष्टतरे सम्यक्त्वादिपरिणामे स्यातां, न सास्वादनरूपे इति भावः । 'जं अत्थि तं भाणियव्वं'ति पञ्चेन्द्रियतिरश्चामलेश्याकषायित्वादि न प्रष्टव्यमसम्भवादिति भावः । जीवादिषु पञ्चविंशतिपदेषु यत्रत्र समवसरणमस्ति तत्तत्रोक्तम्, अथ तेष्वेवायुर्बन्धनिरूपणायाह–'किरिए'त्यादि, 'मणुस्साउयं पकरेंति देवाउयंपि पकरेंति'त्ति यदुक्तं तत्र ये देवा नारका वा क्रियावादिनस्ते मनुष्यायुः प्रकुर्वन्ति, ये तु मनुष्याः पञ्चेन्द्रियतिर्यञ्चो वा ते देवायुरिति, 'कण्हलेसा णं भंते ! जीवा'इत्यादौ 'मणुस्साउयं पकरेंति'त्ति यदुक्तं तन्नारकासुरकुमारादीनाश्रित्य ज्ञेयं, यतो ये सम्यग्दृष्टयो नराः पञ्चेन्द्रियतिर्यञ्चश्च ते मनुष्यायुर्न बध्नन्त्येव, वैमानिकायुर्बन्धकत्वात्तेषामिति, 'अलेस्सा णं भंते ! जीवा किरियावाइ'त्ति अलेश्याः सिद्धा अयोगिनश्च, ते चायुश्चतुष्कं न बध्नन्ति, सम्यग्दृष्टिपदे 'जहा अलेस'त्ति सर्वायूंषि न बध्नंतीत्यर्थः ॥ नारकदण्डके

'किरियावाइयाणं'ति (सू. ८२५) यन्नैरयिकायुर्देवायुश्च न प्रकुर्वन्ति क्रियावादिनारकास्तन्नारकभवानुभावादेव, यच्च तिर्यगायुर्न प्रकुर्वन्ति तत् क्रियावादानुभावादिति ज्ञेयं, अक्रियावादादिसमवसरणत्रये तु नारकाणां सर्वपदेषु तिर्यङ्मनुष्यायुषी एव स्यातां; सम्यग्मिथ्यात्वे तु विशेषोऽस्ति इति तमाह–'नवरं सम्मे'त्यादि, सम्यग्मिथ्यादृष्टिनारकाणां द्वे एवान्तिमे समवसरणे, अतस्तेषां चायुर्बन्धो नास्ति, गुणस्थानकस्वभावाद्, अतस्ते तयोर्न किञ्चिदप्यायुः प्रकुर्वन्ति, 'पुढविकाए' इत्यादौ 'दुविहमाउयं'ति नरायुस्तिर्यगायुश्चेति, 'तेउलेस्साए न किंपि पकरेंति' अपर्याप्तकावस्थायामेव पृथ्वीकायिकानां तद्भावात् तद्विगम एव चायुषो बन्धादिति 'सम्मत्तनाणेसु ण एक्कंपि आउयं पकरेंति' द्वीन्द्रियादीनां सम्यक्त्वज्ञानकालात्यय एवायुर्बन्धः स्याद्, अल्पत्वात् कालस्येति, नैकमप्यायुर्बध्नन्ति तयोस्ते इति, पञ्चेन्द्रियतिर्यग्योनिकदण्डके 'कण्हलेसाणं'ति यदा पञ्चेन्द्रियतिर्यञ्चः सम्यग्दृष्टयः कृष्णलेश्यापरिणताः स्युस्तदाऽऽयुकरेकमपि न बध्नंति, सम्यग्दृशां वैमानिकायुर्बन्धकत्वेन तेजोलेश्यादित्रय एव बन्धनादिति, 'तेउलेस्सा जहा सलेस्स'त्ति अनेन च क्रियावादिनो वैमानिकायुरेव इतरे तु त्रयश्चतुर्विधमप्यायुः प्रकुर्युरित्यलं, सलेश्यानामेवंविधस्वरूपतयोक्तत्वाद्, इह तु यदनभिमतं तन्निषेधनायाह–'नवरं अकिरियावाइ'त्ति, शेषं तु प्रतीतार्थत्वान्न व्याख्यातमिति ॥ त्रिंशत्तमशते प्रथमः ॥

एवं द्वितीयादय एकादशान्ता उद्देशका व्याख्येयाः, नवरं द्वितीयोद्देशके 'इमं सलेसेणं'ति (सू. ८२६) सलेश्यभव्यत्वस्येदं लक्षणं–क्रियावादी शुक्लपाक्षिकः सम्यग्मिथ्यादृष्टिश्च भव्य एव स्यात्, नाभव्यः, शेषास्तु भव्या अभव्याश्चेति, अलेश्यसम्यग्दृष्टिज्ञान्यवेदाकषाय्ययोगिनां भव्यत्वं प्रतीतमेवेति नोक्तमिति, तृतीयोद्देशके तु 'तियदंडगसंगहिओ' इति, इह दण्डकत्रयं

नैरयिकादिपदेषु क्रियावाद्यादिप्ररूपणादण्डकः १ आयुर्बन्धदण्डकः २ भव्याभव्यदण्डक ३ श्चेति, एकादशोद्देशके तु 'अलेस्सो केवली अजोगी य हवइ'त्ति, अचरमाणामलेश्यत्वादीनामसम्भवादिति ॥ त्रिंशत्तमशतं वृत्तितस्सम्पूर्णम् ॥

अथ चतुष्टयसाधर्म्याच्चतुर्युग्मवक्तव्यतारूपमष्टाविंशत्युद्देशकयुक्तमेकत्रिंशं शतं व्याख्यायते, तदादिसूत्रम्–'रायगिहे'त्यादि, 'खुड्डगजुम्म'त्ति (सू. ८२९) युग्मानि–वक्ष्यमाणराशिविशेषाः ते च महान्तोऽपि सन्त्यतः क्षुल्लशब्दविशेषिताः, तत्र चत्वारोऽष्टौ द्वादशेति सङ्ख्यावान् राशिः क्षुल्लककृतयुग्मोऽभिधीयते, एवं त्रिसप्तैकादशादिको राशिः क्षुल्लकः त्र्योजः, द्विषट्प्रभृतिकः क्षुल्लकद्वापरः, एकपञ्चप्रभृतिकः कल्योज इति, 'जहा वक्कंतीए'त्ति प्रज्ञापनाषष्ठपदे, अर्थतश्चैवं तत्–पञ्चेन्द्रियतिर्यग्भ्यो गर्भजमनुष्येभ्यश्च नारका उत्पद्यन्ते इति, विशेषस्तु 'अस्सण्णी खलु पढम'मिति गाथाभ्यां ज्ञेयः, 'अज्झवसाणे'त्ति 'अज्झवसाणनिव्वत्तिएणं करणोवाएणं'ति सूचितं ॥ ३१ शते प्रथमः ॥

द्वितीयस्तु कृष्णलेश्याश्रयः (सू. ८३०) सा च पञ्चमीषष्ठीसप्तमीष्वेव पृथ्वीषु स्यात् इतिकृत्वा सामान्यदण्डकत्रयं चात्र स्यादिति, 'उववाओ जहा वक्कंतीए धूमप्पभपुढविनेरइयाणं'ति इह कृष्णलेश्या प्रक्रान्ता, सा च धूमप्रभायां स्यात् इति तत्र ये जीवा उत्पद्यन्ते तेषामेवोत्पादो वाच्यः, ते चासंज्ञिसरीसृपपक्षिसिंहवर्ज्जा इति। (सू. ८३१) तृतीयस्तु नीललेश्याश्रयः, सा च तृतीयाचतुर्थीपञ्चमीष्वेव पृथ्वीषु च स्यादितिकृत्वा सामान्यदण्डकस्तद्दण्डकत्रयं चात्र स्यादिति, 'उववाओ जो वालुयप्पभाए'त्ति इह नीललेश्या प्रक्रान्ता, सा च वालुकाप्रभायां स्यादिति तत्र ये जीवा उत्पद्यन्ते तेषामुत्पादो वाच्यः, ते चासंज्ञिस-

रीसृगवर्जा इति, 'परिमाणं जाणियव्वं'ति चतुरष्टद्वादशप्रभृतिक्षुल्लककृतयुग्मादिस्वरूपं ज्ञातव्यं, चतुर्थस्तु कापोतलेश्याश्रयः, सा च प्रथमाद्वितीयातृतीयास्वेव पृथ्वीष्वेव स्यादितिकृत्वा सामान्यदण्डका इति रत्नप्रभावदुत्पादो वाच्यः, शेषं सूत्रसिद्धम् ॥ एकत्रिंशं शतं वृत्तितस्सम्पूर्णम् ॥

एकत्रिंशे शते नारकोत्पादः द्वात्रिंशे शते तेषामुद्वर्त्तनोच्यते इत्यष्टाविंशतिउद्देशकसम्बद्धमिदं व्याख्यायते, तदादिसूत्रं 'खुड्डागे'त्ति (सू. ८४२) 'उव्वट्टणा जहा वक्कंतीए'त्ति, सा चैवमर्थतः 'नरगाओ उव्वट्टा गब्भयपज्जत्तसंखजीवीसु'त्ति इति ॥ द्वात्रिंशं शतं वृत्तितः सम्पूर्णम् ॥

अथैकेन्द्रियप्ररूपणपरं त्रयस्त्रिंशं शतं द्वादशअन्तरशतयुक्तं व्याख्यायते, तदादिसूत्रम्—'कइविहा णं'ति (सू. ८४३) 'चोद्दस कम्मपयडीओ'त्ति तत्राष्टौ ज्ञानावरणादिकाः, तदन्याः षट् तद्विशेषभूताः 'सोइंदियवज्झं'ति श्रोत्रेन्द्रियं वध्यं—हननीयं यस्य तत्तथा, मतिज्ञानावरणविशेष इत्यर्थः, एवमन्यान्यपि, स्पर्शनेन्द्रियवध्यं तु तेषां नास्ति, तद्भावे एकेन्द्रियत्वहानिप्रसङ्गादिति, 'इत्थिवेयवज्झं'ति यदुदयात् स्त्रीवेदं न लभते तत् स्त्रीवेदवध्यं, एवं पुंवेदवध्यमपि, नपुंसकवेदवध्यं तु तेषां नास्ति, नपुंसकवेदवर्त्तित्वादिति, शेषं सूत्रसिद्धं, 'नवरं एवं दुपएणं भेएणं'ति अनन्तरोपपन्नकानामेकेन्द्रियाणां पर्याप्तकापर्याप्तकभेदयोरभावेन चतुर्विधभेदस्यासम्भवात् द्विपदेन भेदेनेत्युक्तं, तथा 'चरिमअचरिमउद्देसवज्जं'ति अभवसिद्धिकानामचरमत्वेन चरिम-

विभागो नास्तीतिकृत्वेति ॥ त्रयस्त्रिंशं शतं वृत्तितः सम्पूर्णम् ॥

त्रयस्त्रिंशे शते एकेन्द्रिया उक्ताः, चतुस्त्रिंशे शते च भङ्ग्यन्तरेण तानाह, तत्रास्य चावान्तरद्वादशशतोपेतस्येदमादिसूत्रं, 'कइविहे'त्यादि (सू. ८५०) इदं च लोकनाडीं प्रसार्य भाव्यं, 'एगसमइएण व'त्ति एकः समयो यत्रास्त्यसावेकसामयिकस्तेन 'विग्गहेणं'ति विग्रहेण, विग्रहो-वक्रं, गतौ च तस्य सम्भवाद् गतिरेव विग्रहस्तेन, तत्र 'उज्जुयआयगाए'त्ति यदा मरणस्थाना-पेक्षयोत्पत्तिस्थानं समश्रेण्यां स्यात् तदा ऋज्वायता श्रेणिः स्यात्, तया च गच्छत एकसामयिकी गतिः स्यात्, अत 'एगसमइएण'-मित्युच्यते, यदा तु मृतिस्थानादुत्पत्तिस्थानमेकप्रतरे विश्रेण्यां वर्त्तते तदा एकतो वक्रा श्रेणिः स्यात्, समयद्वयेन चोत्पत्तिस्थान-प्राप्तिः स्यादित्यत उच्यते-'दुहओवंकाए'त्यादि, 'एवं आउकाइएसुवि चत्तारि आलावगा' इत्येतस्य विवरणं, 'सुहुमेहिं'ति बादरतेजःकायिकसूत्रे रत्नप्रभाप्रक्रमेऽपि यदुक्तं 'जे भविए मणुस्सखेत्ते'त्ति तद् बादरतेजसामन्यत्रोत्पादासम्भवादिति, 'वीसरसु ठाणेसु'त्ति पृथ्व्यादयः पञ्च सूक्ष्मबादरभेदात् द्विधेति दश, ते च प्रत्येकमपर्याप्तकपर्याप्तकभेदाद्विंशतिरिति, इह चैकैकस्मिन् जीव-स्थाने विंशतिर्गमाः स्युः, तदेवं पूर्वान्तगमानां चत्वारि शतानि, एवं पश्चिमान्तगमानामपि, ततश्चैवं रत्नप्रभाप्रकरणे सर्वाणि षोडश शतानि गमानामिति, शर्कराप्रभाप्रकरणे बादरतेजस्कायिकसूत्रे 'दुसमइएण व'त्ति इह शर्कराप्रभापूर्वचरमान्तान् मनुष्यक्षेत्रे उत्प-द्यमानस्य समश्रेणी नास्ति इत्येगसमइएणमितीह नोक्तं 'दुसमइएण'मित्यादि तु एकस्य वक्रस्य द्वयोर्वा सम्भवादुक्तमिति, अथ सामान्येनाधःक्षेत्रमूर्ध्वक्षेत्रं चाश्रित्याह-'अपज्जत्तसुहुम'त्ति (सू. ८५१) 'अहेलोगखेत्तनालिए'त्ति अधोलोकक्षेत्रे या

त्रसनाडी सा अधोलोकत्रसनाडी तस्याः, एवमूर्ध्वलोकत्रसनाड्यपि, 'तिसमइएण व'त्ति अधोलोकक्षेत्रनाड्या बहिः पूर्वादिदिशि मृत्वा एकेन नाडीमध्ये प्रविष्टो द्वितीये समये ऊर्ध्वं गतः तत एकप्रतरे पूर्वस्यां पश्चिमायां वा यदोत्पत्तिः स्यात् तदाऽनुश्रेण्यां गत्वा तृतीयसमये उत्पद्यत इति, 'चउसमइएण व'त्ति यदा नाड्या बहिर्वायव्यादिविदिशि मृतः तदैकेन समयेन पश्चिमायामुत्तरस्यां वा गतो, द्वितीयेन नाड्यां प्रविष्टः, तृतीये ऊर्ध्वं गतः, चतुर्थे त्वनुश्रेण्यां गत्वा पूर्वादिदिश्युत्पद्यते, इदं च प्रायोवृत्तिमङ्गीकृत्योक्तं, अन्यथा पञ्चसामायिक्यपि गतिः सम्भवति, यदा अधोलोककोणादूर्ध्वलोककोण एवोत्पत्तव्यं स्यादिति, अत्र गाथाः स्युः, "सुत्ते चउसमयाओ नत्थि गईए परा विनिद्दिट्ठा। जुज्जइ य पंचसमया जीवस्स इमा गई लोए ॥१॥" जो तमतमविदिसाए समोहओ बंभलोयविदिसीए। उववज्जए गईए सो णियमा पंचसमयाए ॥ २ ॥ उज्जुयाए एगवंका दुहओवंका गई विणिद्दिट्ठा। जुज्जई य तिचउवंकावि नाम चउपंचसमयाए ॥३॥ उववायाभावाओ न पंचसमयाऽहवा न संतावि। भणिया जह चउसमया महल्लबंधा न संतावि ॥४॥"त्ति 'अपज्जत्तबायरतेउकाइया णं'ति 'दुसमइएण वा तिसमइएण वा विग्गहे णं उववज्जेज्ज'त्ति अस्येयं भावना—समयक्षेत्रादसावेकेन समयेनोर्ध्वं गतो, द्वितीयेन तु नाड्या बहिर्दिग्व्यवस्थितमुत्पत्तिस्थानमिति, तथा समयक्षेत्रादेकेनोर्ध्वं याति, द्वितीयेन तु नाड्या बहिः पूर्वादिदिशि तृतीयेन तु विदिग्व्यवस्थितमुत्पत्तिस्थानमिति, अथ लोकचरमान्तमाश्रित्याह—'अपज्जत्तसुहुमपुढविकाइए णं भंते! लोगस्स'त्ति इह च लोकचरमान्ते बादराः पृथ्वीकायाप्कायतेजोवनस्पतयो न सन्ति, सूक्ष्मास्तु पञ्चापि सन्ति, बादरा वायुकायाश्चेति पर्याप्तकापर्याप्तकभेदेन द्वादश स्थानान्यनुसर्तव्यानि, इह च लोकस्य पूर्वचरमान्तात् पूर्वचरमान्ते उत्पद्यमानस्यैकसमयादिका चतुःसमयान्ता गतिः सम्भवति, अनुश्रेणिविश्रेणिसम्भवात्, पूर्वचरमान्तात्

पुनर्दक्षिणचरमान्ते उत्पद्यमानस्य द्व्यादिसामयिक्येव गतिरनुश्रेणेरभावाद्, एवमन्यत्रापि विश्रेणिगमनमिति, एवमुत्पादमाश्रित्यैकेन्द्रियप्ररूपणा कृता, अथ तेषामेव स्थानादि दर्शयन्नाह—'कहि णं'ति यत्रास्ते बादरपृथ्वीकायस्तेन, स्वस्थानमाश्रित्येत्यर्थः, 'जहा ठाणपदे'त्ति यथा प्रज्ञापनाया द्वितीयं पदं, तच्चैवं 'तंजहा—रयणप्पभाए सक्करप्पभाए वालुयप्पभाए'इत्यादि, 'एगविह'त्ति एकप्रकार एव प्रकृतस्वस्थानादिविचारमधिकृत्योच्यते 'अविसेसमणाणत्त'न्ति अविशेषा—विशेषरहिताः, यथा पर्याप्तकास्तथेतरेऽपि, अनानात्वा—नानात्वरहिताः, येष्वेवाधारभूताकाशप्रदेशेष्वेके तेष्वेवेतरेऽपीत्यर्थः, 'सव्वलोयपरियावन्न'त्ति उपपातसमुद्घातस्वस्थानैः सर्वलोके वर्त्तन्ते इति भावना, तत्रोपपात उपपाताभिमुख्यं, समुद्घात इह मारणान्तिकादिः, स्वस्थानं तु यत्र ते आसते, समुद्घातसूत्रे 'वेउव्वियसमुग्घाए'त्ति यदुक्तं तद्वायुकायानाश्रित्येति, एकेन्द्रियानेव भङ्ग्यन्तरेण दर्शयन्नाह—'तुल्लट्ठिइ'त्ति तुल्यस्थितिकाः, समानायुष्का इत्यर्थः, 'तुल्लविसेसाहियं कम्मं पकरेंति'त्ति अन्योऽन्यापेक्षया तुल्येन विशेषेणासङ्ख्येयभागादिनाऽधिकं प्राक्कालबद्धकर्मापेक्षया समधिकं कर्म—ज्ञानावरणादि प्रकुर्वन्ति—बध्नन्ति १, तथा तुल्यस्थितयो 'वेमायविसेसाहियं'ति विमात्रः—अन्योऽन्यापेक्षया विषमपरिणामः कस्याप्यसङ्ख्येयभागरूपो यो विशेषस्तेनाधिकं प्राक्कालबद्धकर्मापेक्षया यत्तत्तथा २, तथा 'वेमायट्ठिइ'त्ति विमात्रा—विषममात्रा स्थितिः—आयुर्येषां ते विमात्रस्थितयो, विषमायुष इत्यर्थः ३, एवं चतुर्थोऽपि ४, 'समाउया समोववन्नग'त्ति समस्थितयः समकमेवोत्पन्ना इत्यर्थः, एते च तुल्यस्थितयः समोत्पन्नत्वेन मिथः सद्योगत्वात् समानमेव कर्म कुर्युः, ते च प्राक्कर्मापेक्षया समं वा हीनं वाऽधिकं वा कर्म कुर्युः, यद्यधिकं तदा विशेषाधिकमपि, तच्च मिथस्तुल्यविशेषाधिकं, नतु विशेषाधिकमेवेत्यत उच्यते तुल्यविशेषाधिकमिति १, तथा ये समायुषो विषमोपपन्नकास्ते तुल्यस्थितयो विषमो-

पपन्नत्वेन च योगवैषम्याद्विमात्रविशेषाधिकं कर्म कुर्युः २ तथा ये विषमायुषः समोपपन्नकास्ते विमात्रस्थितयः, समोपपन्नत्वेन समानयोगत्वात् तुल्यविशेषाधिकं कर्म कुर्युः ३ तथा ये विषमायुषो विषमोपपन्नकास्ते विमात्रस्थितयो विषमोपपन्नत्वाच्च योगवैषम्येण विषममात्रविशेषाधिकं कर्म कर्त्तुः ४ ॥ ३४ शते प्रथमः ॥

'दुपओ भेदो'त्ति ( सू. ८५२ ) अनन्तरोपपत्तिकैकेन्द्रियाधिकारेऽनन्तरोपपन्नानां च पर्याप्तकत्वाभावादपर्याप्तकानां सूक्ष्मा बादराश्चेति द्विपदो भेदः,'उववाएण सव्वलोए, समुग्घाएणं सव्वलोए'त्ति, कथं ?, उपपातेन उपपाताभिमुख्येनापान्तरालगतिवृत्त्येति भावः, समुद्घातेन मारणान्तिकेनेति, ते हि ताभ्यामतिबहुत्वात् सर्वलोकं व्याप्य वर्त्तन्ते, इह चैवंभूतायाः स्थापनायाः भावना कार्या, [१०] अत्र च प्रथमवक्रं यदैवैके संहरन्ति तदैव तद्वक्रदेशमन्ये पूरयन्ति, एवं द्वितीयवक्रसंहरणेऽपि, अवक्रोत्पत्तावपि प्रवाहतो भावनीयं, अनन्तरोपपन्नकत्वं चेह भाविभवापेक्षं ग्राह्यं, अपान्तराले तस्य साक्षादभावात्, मारणान्तिकसमुद्घातश्च प्राक्तनभवापेक्षया, अनन्तरोपपन्नकावस्थायां तस्यासम्भवादिति,'सठाणेणं लोगस्स असंखेज्ज'त्ति रत्नप्रभादिपृथ्वीनां विमानानां च लोकस्यासङ्ख्येयभागवर्त्तित्वात्, पृथ्व्यादीनां च पृथ्वीकायानां स्वस्थानत्वादिति, 'सठाणाइं सव्वेसिं जहा ठाणपदे तेसिं पज्जत्तगाणं बायराणं'ति इह तेषामिति पृथ्वीकायानां 'अट्ठसु पुढवीसु तंजहा रयणप्पभाए'त्ति, बादराप्कायानां तु 'सत्तसु घणोदहीसु'इत्यादि, बादरतेजस्कायिकानां तु 'अन्तोमणुस्सखेत्ते'इत्यादि, बादरवायुकायिकानां पुनः 'सत्तसु घणवायवलएसु' इति, बादरवनस्पतीनां तु 'सत्तसु घणोदहीसु'इत्यादि,'उववायसमुग्घायसठाणाइं जहा तेसिं चेव अपज्जत्तगाणं बायराणं'ति इह 'तेसिं चेव'त्ति पृथ्वीकायादीनां, तानि चैवम्–जत्थेव बायरपुढवीकाइयाणं पज्जत्ताणं ठाणा तत्थेव बादरपुढ-

विकाइयाणमपज्जत्ताणं ठाणा पण्णत्ता, उववायेणं सव्वलोए समुग्घाएणं सव्वलोए सठाणेणं लोगस्स असंखिज्जइभागे'इत्यादि, समुद्घातसूत्रे 'दोण्णि समुग्घाय'त्ति अनन्तरोत्पन्नत्वे मारणान्तिकादिसमुद्घातानामसम्भवादिति, 'अणंतरोववण्णगएगिंदिया णं भंते! किं तुल्लट्ठिइए'त्ति (सू. ८५२) इत्यादौ 'जे ते समाउया समोववण्णगा ते णं तुल्लठिइया तुल्लविसेसाहिया कम्मं पकरेंति'त्ति, ये समायुषोऽनन्तरोपपन्नकत्वपर्यायमात्रस्थितिकाः तत्परतः परम्परोपपन्नकव्यपदेशात् समोपपन्नकाः एकत्रैव समये उत्पत्तिस्थानं प्राप्तास्ते तुल्यस्थितयः, समोपपन्नकत्वेन समयोगत्वात् तुल्यविशेषाधिकं कर्म प्रकुर्वन्ति,'जे ते समाउया विसमोववण्णगा ते णं तुल्लठिइया वेमायविसेसाहियं कम्मं पकरेंति'त्ति, ये तु समायुषस्तथैव विषमोपपन्नका विग्रहगत्या समयादिभेदेनोत्पत्तिस्थानं प्राप्तास्ते तुल्यस्थितयः आयुष्कोदयवैषम्येणोत्पत्तिकालस्थानप्राप्तिवैषम्यादिग्रहेऽपि च बन्धकत्वाद्विमात्रविशेषाधिकं कर्म प्रकुर्वन्ति, विषमस्थितिकसम्बन्धि त्वंतिमभङ्गद्वयमनन्तरोत्पन्नकानां न सम्भवत्यनन्तरोत्पन्नत्वे विषमस्थितेरभावाद्, एतच्च गमनिकामात्रमेवेति, शेषं सूत्रसिद्धं, नवरं 'सेढिसयं'ति ऋज्वायतादिप्रधानं श्रेणीशतमिति ॥चतुस्त्रिंशं शतं वृत्तितः सम्पूर्णम् ॥

चतुस्त्रिंशे शते एकेन्द्रियाः श्रेणीप्रक्रमेण प्रायः प्रोक्ताः, पञ्चत्रिंशे तु त एवोच्यन्ते राशिप्रक्रमेण, इत्येवंसम्बद्धस्यास्य द्वादशावान्तरशतस्येदमादिसूत्रम्, 'कइ णं भंते!' इत्यादि (सू. ८५५) इह युग्मशब्देन राशिविशेषा उच्यन्ते, ते च क्षुल्लका अपि स्युः यथा प्रागुक्ताः, अतस्तद्व्यवच्छेदार्थं विशेषणमुच्यते, महान्ति च तानि युग्मानि च महायुग्मानि 'कडजुम्मकडजुम्म'त्ति यो राशिः सामयिकेन चतुष्कापहारेणापह्रियमाणश्चतुःपर्यवसितः स्यात् अपहारसमया अपि चतुष्कापहारेण चतुःपर्यवसिता एव असौ

राशिः कृतयुग्मकृतयुग्म इत्युच्यते, अपह्रियमाणद्रव्यापेक्षया तत्समयापेक्षया चेति द्विधा कृतयुग्मत्वाद्, एवमन्यत्रापि शब्दार्थो योज्यः, स च किल जघन्यतः षोडशात्मकः, एषां हि चतुष्कापहारतश्चतुरग्रत्वात् समयानां च चतुःसङ्ख्यत्वादिति १ 'कडजुम्मतेओग'त्ति यो राशिः प्रतिसमयं चतुष्कापहारेणापह्रियमाणस्त्रिपर्यवसानः स्यात् तत्समयाश्च चतुःपर्यवसिता एव असावपह्रियमाणापेक्षया त्र्योजः अपहारसमयापेक्षया तु कृतयुग्म एवेति कृतयुग्मत्र्योज इत्युच्यते, यथा जघन्यत एकोनविंशतिः, तत्र हि चतुष्कापहारे त्रयोऽवशिष्यंते तत्समयाश्च चत्वार एव २। एवं राशिभेदसूत्राणि तद्विवरणं च सूत्रेभ्यो ज्ञेयानि, एवं सर्वत्राप्यपहारसमयापेक्षमाद्यं पदं अपह्रियमाणद्रव्यापेक्षं तु द्वितीयमिति, इह च तृतीयादारभ्योदाहरणानि कृतयुग्मद्वापरः अष्टादशादयः ३ कृतयुग्मकल्योजः सप्तदशादयः४ त्र्योजःकृतयुग्मषोडशादयः, एषां हि चतुष्कापहारे चतुरग्रत्वात् तत्समयानां च त्रित्वादिति ५ त्र्योजत्र्योजराशौ तु पञ्चदशादयः ६ त्र्योजद्वापरे तु चतुर्दशादयः ७ त्र्योजकल्योजे तु त्रयोदशादयः ८ द्वापरकृतयुग्मेऽष्टादयः ९ द्वापरत्र्योजराशौ एकादशादयः १० द्वापरद्वापरे दशादयः ११ द्वापरकल्योजे नवादयः १२ कल्योजकृतयुग्मे चतुरादयः १३ कल्योजत्र्योजराशौ सप्तादयः १४ कल्योजद्वापरे षडादयः १५ कल्योजकल्योजे च पंचादयः १६ इति । 'कडजुम्मकडजुम्मएगिंदिय'त्ति (सू. ८५६) ये एकेन्द्रियाश्चतुष्कापहारे चतुःपर्यवसानास्ते कृतयुग्मकृतयुग्मैकेन्द्रिया इत्येवं सर्वत्रेति, 'जहा उप्पलुद्देसए'त्ति उत्पलोद्देशक एकादशशते प्रथमः, इह च यत्र क्वचित्पदे उत्पलोद्देशातिदेशः क्रियते स च तत एवावधार्यः, 'संवेहो न भण्णइ'त्ति उत्पलोद्देशक उत्पलजीवस्योत्पादो विवक्षितः, तत्र च पृथ्वीकायादिकान्तरापेक्षया संवेधसम्भवः, इह त्वेकेन्द्रियाणां कृतयुग्मविशेषणानामुत्पादोऽधिकृतस्ते च वस्तुतोऽनन्ता एवोत्पद्यन्ते, तेषां चोद्वृत्तेरसम्भवात् संवेधो न सम्भवति, यश्च षोडशादीना-

मेकेन्द्रियाणामुत्पादोऽभिहितः असौ त्रसकायेभ्यो ये तेषूत्पद्यन्ते तदपेक्ष एव, न पुनः पारमार्थिकः, अनन्तानां प्रतिसमयं तेषूत्पादादिति ॥ ३५ शते प्रथमः ॥

अथ द्वितीयः, तत्र च 'पढमसमयकडजुम्मकडजुम्मएगिंदिय'त्ति (सू. ८५७) एकेन्द्रियत्वेनोत्पत्तौ प्रथमः समयो येषां ते तथा, ते च ते कृतयुग्मकृतयुग्माश्चेति प्रथमसमयकृतयुग्मकृतयुग्मास्ते च ते एकेन्द्रियाश्चेति समासोऽतस्ते, 'सोलसखुत्तो'त्ति पोडशकृत्वः, प्रागुक्तान् पोडशराशिभेदानाश्रित्येत्यर्थः, 'नाणत्ताणि'त्ति प्रागुक्तस्य विलक्षणत्वस्थानानि ये प्रागुक्ता भावास्ते केचित्प्रथमसमयोत्पन्नानां न सम्भवन्तीतिकृत्वा, तत्रावगाहना आद्योद्देशके बादरवनस्पत्यपेक्षया महती उक्ताऽभूत् इह तु प्रथमसमयोत्पन्नत्वेन साऽल्पेति नानात्वं, एवमन्यत्रापि अन्यान्यपि स्वधियोह्यानि ॥ तृतीयोद्देशके तु 'अपढमसमयकडजुम्म'त्ति (सू. ८५८) इह अप्रथमः समयो येषां एकेन्द्रियत्वेनोत्पन्नानां द्व्यादयः समयाः समासश्च प्राग्वत्, एते च यथा सामान्येनैकेन्द्रियास्तथा स्युरित्यत एवोक्तम्—'एसो जहा पढमुद्देसो'इत्यादीनि ॥ चतुर्थे तु 'चरमसमयकडजुम्मकडजुम्मएगिंदिय'त्ति इह चरमशब्देनैकेन्द्रियाणां मरणसमयो विवक्षितः, स च परभवायुषः प्रथमसमय एव, तत्र वर्त्तमानाश्चरमसमयाः सङ्ख्यया च कृतयुग्मकृतयुग्मा ये एकेन्द्रियास्ते तथा,'एवं जहा पढमसमयउद्देसओ'त्ति यथा प्रथमसमयैकेन्द्रियोद्देशकस्तथा चरमसमयैकेन्द्रियोद्देशकोऽपि वाच्यः, तत्र हि औघिकोद्देशकापेक्षया दश नानात्वान्युक्तानि इहापि तानि तथैव, समानस्वरूपत्वात्, प्रथमसमयचरमसमयानां यः पुनरिह विशेषस्तं दर्शयितुमाह—'नवरं देवा न उववज्जंति' इत्यादि, देवोत्पादेनैकेन्द्रियेषु तेजोलेश्या स्यात्, न चेह देवोत्पादः सम्भवति इति तेजोलेश्या एकेन्द्रिया न पृच्छयन्त इति, पञ्चमे तु 'अचरमसमयकडजुम्म'त्ति नास्ति चरमसमयः उक्त-

लक्षणो येषां तेऽचरमसमयास्ते च ते कृमयुग्मकृतयुग्मैकेन्द्रियाश्चेति समासः ॥ षष्ठे तु 'पढमपढमसमयकडजुम्मएगिंदिअ'त्ति एकेन्द्रियोत्पादस्य प्रथमसमययोगाद्ये प्रथमाः प्रथमश्च समयः कृतयुग्मकृतयुग्मानुभूतेर्येषामेकेन्द्रियाणां ते प्रथमप्रथमसमयकृतयुग्मैकेन्द्रियाः॥ सप्तमे तु 'पढमअपढमसमयकडजुम्म २ एगिंदिय'त्ति प्रथमास्तथैव अप्रथमश्च समयः कृतयुग्मकृतयुग्मत्वानुभूतेर्येषामेकेन्द्रियाणां ते प्रथमाप्रथमसमयकृतयुग्मैकेन्द्रियाः,इह चैकेन्द्रियत्वोत्पादप्रथमसमयवर्त्तित्वे तेषां यद्विवक्षितसङ्ख्यानुभूतेरप्रथमसमयवर्त्तित्वं तत्प्राग्भवसम्बन्धिनीं तामाश्रित्येति ज्ञेयं,एवमुत्तरत्रापि ॥ अष्टमे तु 'पढमचरिमसमयकडजुम्म'त्ति प्रथमाश्च ते विवक्षितसङ्ख्यानुभूतेः प्रथमसमयवर्त्तित्वात् चरमसमयाश्च मरणसमयवर्त्तिनः परिशाटस्था इति प्रथमचरमसमयास्ते च ते कृतयुग्मैकेन्द्रियाश्चेति विग्रहः ॥ नवमे तु 'पढमअचरिमसमयकडजुम्मकडजुम्म'त्ति प्रथमास्तथैव अचरमसमयास्त्वेकेन्द्रियोत्पादापेक्षया चरमसमयवर्त्तिन, इह विवक्षितचरमत्वनिषेधस्य तेषु विद्यमानत्वाद्, अन्यथा हि द्वितीयोद्देशकोक्तानामवगाहनादीनां यदिह समत्वमुक्तं तन्न स्यात्, ततः कर्मधारयः, शेषं तु तथैव ॥ दशमे तु 'चरमसमयकडजुम्म'त्ति चरमाश्च ते विवक्षितसङ्ख्यानुभूतेश्चरमसमयवर्त्तित्वात् चरमसमयाश्च प्रागुक्तरूपाः, शेषं तु प्राग्वत्॥ एकादशे तु 'चरमअचरमसमय'त्ति चरमास्तथैव अचरमसमयाश्च प्रागुक्तयुक्तेरेकेन्द्रियोत्पादापेक्षया प्रथमसमयवर्त्तिनो ये ते चरमाचरमसमयास्ते च ते कृतयुग्मैकेन्द्रियाश्चेति विग्रहः, उक्तोद्देशानां स्वरूपनिर्द्धारणायाह–'पढमो तइओ पंचमगो य सरिसगमो'त्ति, कथं ?, यतः प्रथमापेक्षया द्वितीये यानि नानात्वान्यवगाहनादीनि दश स्युः न तान्येतेष्विति,'सेसा अट्ठ सरिसगमा'त्ति द्वितीयचतुर्थषष्ठादयो मिथः सदृशगमाः–प्रागुक्तेभ्यो विलक्षणा गमाः, द्वितीयसमानगमा इत्यर्थः, विशेषमाह–'नवरं चउत्थे'त्यादि । कृष्णलेश्याशते 'जहण्णेणं एक्कं समयं'ति

(सू. ८५६) जघन्यत एकसमयानन्तरं सङ्ख्यान्तरं स्यादित्यत एकं समयं कृष्णलेश्याकृतयुग्मैकेन्द्रियाः स्युः, एवं 'ठिईवि'त्ति कृष्णलेश्यावतां स्थितिः, कृष्णलेश्याकालवदवसेया इत्यर्थः ॥ पञ्चत्रिंशं शतं वृत्तितस्सम्पूर्णम् ॥

पञ्चत्रिंशशते सङ्ख्यापदैरेकेन्द्रिया उक्ताः, षट्त्रिंशे शते तैरेव द्वीन्द्रिया उच्यन्ते, एवंसम्बद्धस्येदमादिसूत्रम्—'कडजुम्मकडजुम्मबेंदियाणं'ति (सू. ८६०) 'जहण्णेणं एकं समयं'ति समयानन्तरं सङ्ख्यान्तरभावात्, एवं स्थितिरपि, इतस्सर्वं सूत्रसिद्धं आपरिसमाप्तेः, नवरं चत्वारिंशे शते 'वेयणिज्जवज्जाणं सत्तण्हं पगडीणं बंधगा वा अबंधगा व'त्ति (सू. ८६४) इह वेदनीयस्य बन्धविधिं विशेषेण वक्ष्यतीतिकृत्वा वेदनीयवर्जानामित्युक्तं, ते चोपशान्तमोहादयः सप्तानामबन्धका एव, शेषास्तु यथासम्भवं बन्धकाः स्युरिति, 'वेयणिज्जस्स बंधगा नो अबंधग'त्ति केवलित्वादारात्सर्वेऽपि संज्ञिपञ्चेन्द्रियास्ते च वेदनीयस्य बन्धका एव, नाबन्धकाः, 'मोहणिज्जस्स वेयगा व'त्ति मोहनीयस्य वेदकाः सूक्ष्मसम्परायान्ताः, अवेदकास्तूपशान्तमोहादयः, 'सेसाणं सत्तण्हवि वेयगा, नो अवेयग'त्ति ये किलोपशान्तमोहादयः संज्ञिपञ्चेन्द्रियास्ते सप्तानामपि वेदकाः,नो अवेदकाः, केवलिन एव चतसृणां वेदकाः स्युः, ते चेन्द्रियव्यापारातीतत्वेन न पञ्चेन्द्रिया इति,'सायावेयगा वा असायावेयगा व'त्ति संज्ञिपञ्चेन्द्रियाणामेवंस्वरूपत्वात्, 'मोहणिज्जउदयी वा अणुदयी व'त्ति तत्र सूक्ष्मसम्परायान्ता मोहनीयस्योदयिनः, उपशान्तमोहादयस्तु अनुदयिनः,'सेसाणं सत्तण्हवि'त्ति प्राग्वत्, नवरं वेदकत्वमनुक्रमेणोदीरणाकरणेन चोदयागतानामनुभवनं, उदयस्त्वनुक्रमागतानामिति, 'नामस्स गोयस्स य उदीरगा नो अणुदीरग'त्ति नामगोत्रयोरकषायान्ताः संज्ञिपञ्चेन्द्रिया-

सर्वेऽप्युदीरकाः, 'सेसाणं चउण्हवि उदीरगा वा अणुदीरगा व'त्ति शेषाणां षण्णामपि यथासम्भवमुदीरका अनुदीरकाश्च, यतो-ऽयमुदीरणाविधिः प्रमत्तान्तः सामान्येनाष्टानां, आवलिकावशेषायुष्कास्तु त एवायुर्वर्जसप्तानामुदीरकाः, अप्रमत्तादयस्तु चत्वारो वेदनीयायुर्वर्जानां षण्णां, तथा सूक्ष्मसम्पराय आवलिकायां स्वाद्धायाः शेषायां मोहनीयवेदनीयायुर्वर्जानां पञ्चानामपि, उपशान्त-मोहास्तूक्तरूपाणां पञ्चानामेव, क्षीणकषायाः पुनः स्वाद्धाया आवलिकायां शेषायां नामगोत्रयोरेव, संयोगिनोऽप्येतयोरेव, अयो-गिनस्त्वनुदीरका एवेति, 'संचिट्ठणा जहण्णेणं एक्कं समयं'ति कृतयुग्मकृतयुग्मसंज्ञिपञ्चेन्द्रियाणां जघन्येनावस्थितिरेकं समयं, समयानन्तरं सङ्ख्यान्तरसद्भावात्, 'उक्कोसेणं सागरोवमसयपुहुत्तं साइरेगं'ति यतः इतःपरं संज्ञिपञ्चेन्द्रिया न स्युरेवेति। 'समुग्घाया आइल्लग'त्ति संज्ञिपञ्चेन्द्रियाणामाद्याः षडेव समुद्घाताः स्युः, सप्तमस्तु केवलिनामेव, ते चानिन्द्रिया इति ॥ कृष्ण-लेश्याशते 'उक्कोसेणं तेत्तीसं सागरोवमाइं अंतोमुहुत्तमब्भहियाइं' (सू. ८६१) इदं कृष्णलेश्यामानं सप्तमपृथिव्या उत्कृष्ट-स्थितिं प्राग्भवपर्यन्तवर्तिनं च कृष्णलेश्यापरिणाममाश्रित्येति, नीललेश्याशते 'उक्कोसेणं दस सागरोवमाइं पलिओवमस्स असंखे-ज्जभागमब्भहियाइं'ति पञ्चमपृथिव्या उपरितनप्रस्तटे दशसागरोपमाणि पल्योपमासङ्ख्येयभागाधिकान्यायुः सम्भवति, नीललेश्या च तत्र स्याद् अत उक्तं—'उक्कोसेण'मित्यादि, यच्चेह प्राग्भवान्तिमान्तर्मुहूर्त्तं तत्पल्योपमासङ्ख्येयभागे प्रविष्टमिति न भेदेनोक्तं, एवमन्यत्रापि 'तिसु उद्देसएसु'त्ति प्रथमतृतीयपञ्चमेष्विति, कापोतलेश्याशते 'उक्कोसेणं तिण्णि सागरोवमाइं पलिओ-वमस्स'त्ति यदुक्तं तत्तृतीयपृथिव्या उपरितनप्रस्तटस्थितिमाश्रित्येति, तेजोलेश्याशते 'दो सागरोवमाइं'इत्यादि यदुक्तं तदीशान-देवमाश्रित्येति ज्ञेयं, पद्मलेश्याशते 'उक्कोसेणं दस सागरोवमाइं' इत्यादि तु यदुक्तं तद् ब्रह्मलोकदेवायुराश्रित्य ज्ञेयं, तत्र हि

पद्मलेश्यैतावच्चायुः स्याद् अन्तर्मुहूर्त्तं च प्राग्भवावसानवर्त्तीति, शुक्ललेश्याशते 'संचिट्ठणा ठिई य जहा कण्हलेससए'त्ति ३३ सागराणि सान्तर्मुहूर्त्तानि, शुक्लेश्यावस्थानमाश्रित्येत्यर्थः, एतच्च प्राग्भवान्त्यान्तर्मुहूर्त्तमनुत्तरायुश्चाश्रित्य ज्ञेयं, स्थितिस्तु ३३ सागराणीति, नवरं 'सुक्कलेस्साए उक्कोसेणं एकतीसं सागरोवमाइं'ति यदुक्तं तदुपरितनग्रैवेयकमाश्रित्येति ज्ञेयं, तत्र हि देवानामेतावदायुः शुक्ललेश्या च स्याद् अभव्याश्चोत्कर्षतस्तत्र देवतयोत्पद्यन्ते, नतु परतोऽपि, अन्तर्मुहूर्त्तं च प्राग्भवावसानसत्कं गण्यते ॥ एकचत्वारिंशे शते 'रासीजुम्म'त्ति (सू. ८६६) युग्मशब्दो युगलवाचकोऽप्यस्त्यतोऽसाविह राशिशब्देन विशिष्यते, ततो राशिरूपाणि युग्मानि न तु द्वितयरूपाणीति राशियुग्मानि 'रासिजुम्मकडजुम्मरइय'त्ति राशियुग्मानां भेदभूतेन कृतयुग्मेन ये प्रमितास्ते राशियुग्मकृतयुग्मास्ते च ते नैरयिकाश्च इति समासोऽतस्ते, 'अणुसमय'मित्यादि पदत्रयमेकार्थं, 'आयजसेणं'ति आत्मनः सम्बन्धि यशोहेतुत्वाद्यशः-संयमः आत्मयशस्तेन 'आयजसं उवजीवंति'त्ति आत्मयशः-आत्मसंयममुपजीवन्ति-आश्रयन्ति, विदधतीत्यर्थः, इह च सर्वेषामात्मयशसैवोत्पत्तिः, उत्पत्तौ सर्वेषामप्यविरतत्वादिति ॥

इह च शतपरिमाणमिदं-आद्यानि द्वात्रिंच्छतान्यविद्यमानावान्तरशतानि, त्रयस्त्रिंशादिषु तु सप्तसु प्रत्येकमेवान्तरशतानि द्वादश, चत्वारिंशे त्वेकविंशतिः, एकचत्वारिंशे तु नास्त्यवान्तरशतं, एषां च सर्वेषां मीलनेऽष्टत्रिंशदधिकं शतानां शतं स्याद्, एवमुद्देशकपरिमाणमपि सर्वशास्त्रमवलोक्य ज्ञेयं, तच्चैकोनविंशतिः शतानि पञ्चविंशत्यधिकानीति ।

इह शतेषु कियत्स्वपि वृत्तिकां, विहितवानहमस्मि सुशंकितः। विवृतिचूर्णिगिरां विरहाद्विहक्, कथमशङ्कमिवर्त्त्यथवा पथि ? ॥१॥ एकचत्वारिंशं शतं वृत्तितस्सम्पूर्णम् ॥

# श्रीमद्भगवतीसूत्रस्य शतकानुक्रमः

अथ भगवत्या व्याख्याप्रज्ञप्त्याः प्रमाणाभिधित्सया गाथामाह–'चुलसी'त्यादि (*१०९) चतुरशीतिः शतसहस्राणि पदानां अत्राङ्गे इति सम्बन्धः, पदानि च विशिष्टसम्प्रदायगम्यानि, प्रवराणां वरं यज्ज्ञानं तेन पश्यंतीत्येवंशीला ये ते प्रवरवरज्ञानदर्शिनस्तैः, केवलिभिरित्यर्थः, प्रज्ञप्तानीति योगः इदं सूत्रस्वरूपमुक्तं, अथार्थप्ररूपणामाह–'भावाभावमणंत'त्ति भावा–जीवादिपदार्थाः अभावाश्च त एव अथवा भावा–विधयः अभावा–निषेधाः, प्राकृतत्वाचेत्थं निर्देशः, अनन्ता–अपरिमाणाः अथवा भावैः विषयभूतानि भावाभावानन्तानि, चतुरशीतिः शतसहस्राणि प्रज्ञप्तानि, अत्र–प्रत्यक्षे पञ्चमे अङ्गे इत्यर्थः। अथान्त्यमङ्गलं सङ्घं समुद्ररूपेण स्तुवन्नाह–'तवे'त्यादि (*११०) गाथा कण्ठ्या, नवरं 'हेउसय'त्ति हेतुशतानि–इष्टानिष्टार्थसाधननिराकरणयोर्लिङ्गशतानि तान्येवेति 'नमो गोयमाईणं गणहराणं' मित्यादयो नमस्कारा ज्ञेयाः ॥

॥ इति भगवतीविशेषपदव्याख्या सम्पूर्णा ॥

भद्रं भवतु सङ्घाय, श्रीमच्छ्रीजिनशासने।
साक्षाद् भगवतीव्याख्यादेवतासुप्रसादतः ॥१॥
अज्ञेन मया गदितं समयविरुद्धं यदङ्गटीकायाम्।
सद्यः प्रसद्य शोध्यं गुरुवद्गुरुधीधनैर्गुरुभिः ॥२॥

इति श्रीअनन्तहंसशिष्यश्रीदानशेखरसूरिविहिता श्रीभगवतीविशेषव्याख्या

॥ ॐ ॥

અમદાવાદ-ઝાંપડાની પોળ-નિવાસી

શેઠ મોહનલાલ છોટાલાલ તરફથી

તેમનાં ધર્મપત્ની

માણેકબાઇએ

નવપદજીની ઓળી

જ્ઞાન પંચમી, મૌન એકાદશી, વીશ-સ્થાનક અને રોહિણીના તપ કરેલા

卐 તે નિમિત્તે કરેલા ઉજમણામાં 卐

જ્ઞાનભક્તિ નિમિત્તે આ પુસ્તક સ્થાપન કરવામાં આવેલ છે. વિક્રમ સં. ૧૯૯૫